द्वितीयवाचस्पतिमिश्रप्रणीतः

# न्यायतत्त्वालोकः





सम्पादकः
डॉ० किशोरनाथ झा
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठे
प्रवाचकः






प्रयागे
चन्द्रशेखरोद्यानस्थितेन
श्रीगङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठेन
प्रकाशितः

१९९२ ई०

Rashtriya Sanskrit Sansthan

( *Under the auspices of the Ministry of Human Resources Development, Govt. of India* )

**New Delhi**

●

**Ganganatha Jha**

**Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**

●

*General Editor*

**Dr. G. C. Tripathi**

●

No. 33

# NYĀYATATTVĀLOKA

*A Commentary on*

the Nyāyasūtras of Gautama

*by*

VĀCASPATI MIŚRA (Junior)

*Edited by*

Dr. Kishore Nath Jha




ALLAHABAD

1992

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )
नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी




—•—

त्रयस्त्रिंशं प्रसूनम्

# न्यायतत्त्वालोकः

द्वितीयवाचस्पतिमिश्रप्रणीता गौतमीयन्यायसूत्रव्याख्या

—•—

सम्पादकः
डा० किशोरनाथ झा

—•—


गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आजाद उद्यानम्
प्रयागः—२
१९९२

# FOREWORD

With a feeling of deep satisfaction we venture to present to the scholars of Indian Philosophy this maiden-edition of *Nyāyatattvāloka* authored by Vācaspati Miśra, the II (or 'Abhinava' Vācaspati Miśra), one of the most prolific writers of Mithila who flourished, for the most part, in the second half of the 15th century.

The *Nyāyatattvāloka* is a highly erudite, scholarly and yet a polished and well-balanced commentary on the *Nyāyasūtras* of Gautama which not only takes into consideration the whole exegetical tradition of the *Nyāyasūtras* upto the 15th century and throws light upon the varied meanings and the divergent opinions of the scholars regarding the interpretations of the Sūtras but which also serves a sort of bridge between the traditions of *Prācīna* and *Navya* Nyāya inasmuch as its author, although firmly established and deep-rooted in the tradition of *Prācīna Nyāya*, freely makes use of the terminology of the *Navya Nyāya* in order to express himself precisely and accurately and to bring home his point more clearly. That Vācaspati Miśra was equally at home in the field of *Navya Nyāya* as well, is proved not only by the fact that he deals in this commentary with a number of topics which are parts of *Navya Nyāya* tradition such as *Maṅgalavāda*, *Muktivāda* and *Vidhivāda* etc. but also by his authoring a commentary on the *Anumānakhaṇḍa* of the

*Tattvacintāmaṇi* of Gaṅgeśa, manuscripts of which are available in Nepal and elsewhere.

*Nyāyattvāloka* occupies a very prominent place among approximately 40 commentaries known to have been written on the Nyāyasūtras to this date. Only a person who has perfectly imbibed the long, scholarly tradition of Nyāya exegesis and then have had the leisure to rethink and ponder over the problemetic issues of the Śastra can produce such a mature and original work.

Vācaspati Miśra II is believed to have lived in the village called Sugauna near Rajnagar in Mithila region. The name of his father was Giripati and the Pāñjis of Mithila have preserved the names of his two brothers Śrīpati and Kānha as well. The long tradition of Śastric scholar-ship in his family was continued by his son Narahari who wrote a commentary on the *Ātmatattvaviveka* of Udayanācārya and his grandson Keśava who authored the famous work *Dvaitapariśiṣṭa*.

In the colophone of one of his works (*Śudracintāmaṇi*) Vācaspati Miśra II mentions himself as a Court-Pandit of Mahārajā Harihara Nārāyaṇa *alias* Bhairava Siṁha who ruled over Mithila approximately during the period 1450-1495 A. D. He also makes a mention of his patron[1] and his queen[2] as co-authors of some of his works, obviously

* cf. for example :

१. श्री वाचस्पतिधीरं सहकारितया समासाद्य ।
श्री भैरवेन्द्रनृपतिः स्वयं महादाननिर्णयं तनुते ।।

२. श्रीभैरवेन्द्रधरणीपतिधर्मपत्नी राजाधिराजपुरुषोत्तमदेवमाता ।
वाचस्पति निखिलतन्त्रविदं नियुज्य द्वैते विनिर्णयविधिं विधिवत् तनोति ।।

due to gratefulness towards them. The last work (?) of Vācaspati Miśra titled *Pitṛbhaktitaraṅgiṇī*, which, according to his own statement, he composed in his old age, was authored under the patronage of Rāmabhadradeva who had succeded Bhairava Siṁha in 1495 A. D. Vācaspati Miśra II thus seems to have enjoyed a long span of life which he very purposefully utilised for his academic endeavours and composed, as he himself says, [at least] 41 works, out of which 10 were devoted to Śāstra (i. e. Philosophy) and 31 to Smṛti or Dharmaśāstra :

शास्त्रे दश स्मृतौ त्रिशन्निबन्धा येन यौवने ।
निर्मितास्तेन चरमे वयस्येषा विनिर्ममे ॥

—पितृभक्तितरंगिणी, श्लोक ३

Vācaspati Miśra was born and brought up in a family which was renowned since ages for its traditional scholarship of Mīmāṁsā. Since the branches of Mīmāṁsā and Dharmaśāstra are closely related to each other, Vācaspatī Miśra had a natural predilection towards Dharmaśāstra. In fact, he is till now better known for his Dharmaśāstra-works like *Tīrthacintāmaṇi* (Asiatic Society, Calcutta 1911-12) and *Vivādacintāmaṇi* (Pub. *inter alia* by Venkateśvar Press, Bombay 1895, Eng. tr. by Sir Ganganatha Jha, Gaekwad Series XCIX, Baroda 1942). A number of other works on various topics of Dharmaśāstra are also available in the Manuscript Libraries of Mithila, Nepal and elsewhere.

Mithila, all through middle ages but especially during the time of Vācaspati Miśra II, was a citadel of Nyāya Philosophy. The young Vācaspati, therefore seems to have been naturally attracted towards this branch

of Philosophy and had a sound grounding in it at the feet of the then masters. The outcome of this training are the present work (*Nyāyatattvāloka*), *Anumānakhaṇḍaṭīkā* and the scholarly *Nyāyasūtroddhāra* in which he makes a commendable effort to determine the correct number and the nature of the *Sūtras* composed by Gautama. About the utility and significance of this work, the reader is referred to one of the relevant Appendices of the present work. In the opening verse of *Kṛtyadīpa*, one of his Dharmaśāstric works, Vācaspati refers to his knowledge of Mīmāṁsā and Nyāya explicitly (See Sans. Introduction p. 27, वंशे जातः कलुषरहिते कर्ममीमांसकानाम्, अन्वीक्षायां गुरुकरुणया लब्धतत्त्वावबोधः ।)

Of the 41 works of Vācaspati Miśra, some 33 are known to us by name* and the Mss. of a number of them are also available. It is a great *desideratum* to critically edit and publish them all so that the rare scholarship of this gem of Mithila comes to light and the contribution he made to the branches of Mīmāṁsā, Nyāya, Dharmaśāstra and Sāhitya is properly assessed.

The present 'critical' edition of *Nyāyatattvāloka* has been prepared mainly on the basis of three manus-

---

* न्यायतत्त्वालोकः, अनुमानखण्डटीका, न्यायसूत्रोद्धारः, शब्दनिर्णयः [मीमांसा], काव्यप्रकाशटीका कृत्यचिन्तामणिः, शुद्धिचिन्तामणिः, तीर्थचिन्तामणिः, गयाश्राद्धपद्धतिः, द्वैतनिर्णयः, सारसंग्रहः, महादाननिर्णयः, छत्रयोगोद्भूतदोषशान्तिविधिः, श्राद्धविधिः, तीर्थनिर्णयः, आचारचिन्तामणिः, आह्निकचिन्तामणिः, द्वैतचिन्तामणिः, नीतिचिन्तामणिः, व्यवहारचिन्तामणिः, विवादनिर्णयः, शुद्धिनिर्णयः, चन्दनधेनुप्रमाणम्, दत्तकविधिः, कृत्यप्रदीपः, गयापत्तिलकम्, तीर्थकल्पलता, श्राद्धकल्पः, तीर्थलता, पितृभक्तितरंगिणी, कृत्यमहार्णवः, विवादचिन्तामणिः ।

cripts procured from London (Ind. Office Lib.), Nepal and Varanasi respectively. None of the manuscripts contain the complete text of *Nyāyatattvāloka*. However, by putting all manuscripts together, a fairly complete picture of the text emerges, frought, no doubt, with a number of textual problems.

Dr. Kishora Nath Jha has tried to solve these knotty textual problems to the best of his ability and has spared neither time nor labour to reconstruct a text in as pristine a form as humanly possible. He has also travelled more than once personally to Nepal to procure the copies of the Manuscripts of this work I must record here my appreciation for the fact that he has carried out the task of editing with utmost devotion and concentration in a spirit of dedication. He deserves grateful thanks of the scholarly world.

The publication of *Nyāyatattvāloka* is being eagerly awaited by a number of scholars in India and abroad. I am sure that all of them will welcome the publication of this work and now, since the text is available in full for the first time, further researches on this work and Vācaspati Miśra shall improve the quality of the text in the times to come.

Allahabad
July 20th., 1992.

GAYA CHARAN TRIPATHI
Principal

# विषयसूची

**[प्रथमाध्यायस्य द्वितीयाह्निकम् १४१—१६१]**

**विषयाः** **पृष्ठसंख्या**

| विषयाः | पृष्ठसंख्या |
|---|---|

| विषयाः | पृष्ठसंख्या |
|---|---|
| अपसिद्धान्तलक्षणम् | ४८६ |
| उपसंहारः | ४६० |
| प्रथमपरिशिष्टम् | ४६३—५१६ |
| न्यायसूत्रपाठविमर्शः | |
| द्वितीयपरिशिष्टम् | ५२१—५५७ |
| ग्रन्थकृत्कृतलक्षणानां वर्णानुक्रमणी | |
| तृतीयपरिशिष्टम् | ५५८—५६७ |
| न्यायतत्त्वालोके समागतानि ग्रन्थान्तराणामुद्धरणानि | |
| चतुर्थपरिशिष्टम् | ५६८—५७२ |
| ग्रन्थे समुद्धृता आचार्या ग्रन्था ग्रन्थकृतश्च | |
| पञ्चमपरिशिष्टम् | ५७३—५८३ |
| न्यायसूत्राणां वर्णानुक्रमणी | |
| षष्ठपरिशिष्टम् | ५८५—६४१ |
| विशिष्टशब्दसूची | |
| शुद्धिपत्रम् | ६४२—६५० |

# औपोद्घातिकम्

( १ )

(क) प्राचीनादेव कालान्मिथिला न्यायशास्त्रस्य जननीति प्रथितं विद्यते । न केवलं सकलविद्यानां प्रदीपात्मिकायाः, सर्वेषां धर्माणामाश्रयरूपायाः, समस्तानामनुष्ठानानामुपायभूताया आन्वीक्षिक्या इहाभवदाविर्भावोऽपि तु पदार्थानां निर्वचनविवेचनादिरूपसूक्ष्मतमपरिष्करणालोचनमहीयसो नव्यन्यायस्याप्याद्यः प्रवर्तकः मैथिलपञ्जीप्रबन्धे 'परमगुरु' विरुदेन सम्मानित[1]स्तर्कतन्त्रशतपत्रसहस्ररश्मिः गङ्गेशोपाध्यायः ख्रीष्टीये त्रयोदशतमशतकपूर्वार्धे स्वजनुषेमामेव मिथिलां व्यभूषयदिति न तिरोहितं संख्यावताम् ।

अत एवास्या न्यायविद्यायाः संरक्षणसंवर्धनयोस्तत्पराः मैथिलाः स्वकीयाभिः कृतिततिभिरिमां निरन्तरं पल्लवयामासुः । इदानीं लुप्तस्वरूपाया न्यायमञ्जर्याः प्रणेता त्रिलोचनाचार्यस्तच्छिष्यस्तात्पर्यटीकाकृद्वाचस्पतिमिश्रस्तात्पर्यपरिशुद्धेरन्येषां च कुसुमाञ्जल्यादिप्रकरणग्रन्थानां प्रणेताचार्योदयनः, विवरणपञ्जिकाकृदनिरुद्धाचार्योऽन्ये च यथा प्राचीनं

---

१. यस्तर्कतन्त्रशतपत्रसहस्ररश्मि-
गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्यात्मजोऽतिविषमं कुसुमाञ्जलिं तं,
प्राकाशयत् कृतिमुदे बुधवर्धमानः ।।
इति कुसुमाञ्जलेःप्रकाशस्योपसंहारपद्यम् ।

न्यायमभिवर्द्धयन्तः यशोभाजनान्यभूवन्नेवमेव स्वकीयैरवदानैरध्यापनग्रन्थ-लेखनादिभिर्वर्धमानवटेश्वरपक्षधरशङ्करनवीनवाचस्पतियज्ञपतिमहेशठक्कुर-मधुसूदनठक्कुररुचिदत्तकेशवगोकुलनाथगिरिधरवंशधरबलदेवचित्रधरधर्मदत्त-लोकनाथगङ्गानाथयदुनाथबालकृष्णसहदेवशशिनाथरमाकान्तराधाकान्तलक्ष्मी-नाथसन्तगोपालनोलाम्बरकिशोरीकृष्णमाधवमहेशदुर्गाधरगोप्तृनाथखड्गनाथ-नन्दिनाथशर्मप्रभृतयश्च नैयायिकाः यथायथमव्यवधानेन निरन्तरं नव्यन्यायं समेधयन्तः कीर्तिमुपार्जयन्निति निःसंशोति शंसितुं शक्यम् ।

प्रबलैः प्रतिपक्षिभिः बौद्धाचार्यैः नागार्जुनासङ्गवसुबन्धुदिङ्नाग-धर्मकीर्तिशान्तरक्षितकमलशीलज्ञानश्रीमित्ररत्नकीर्तिप्रमुखैः प्रभाकरशालिक नाथनन्दीश्वरादिभिः प्राभाकरैर्मीमांसकैश्चित्सुखाचार्यश्रीहर्षमधुसूदन सरस्वती-प्रभृतिभिरद्वैतवेदान्तिभिश्च यथायथं प्रतिहन्यमानमपि शास्त्रमिदं संरक्षण-तत्पराणामेषां नैयायिकानां शक्तिनैपुण्याभ्यां सुसंस्कृतं रत्नमिव, बह्नौ विशुद्धं सुवर्णमिवाधिकतरं परिष्कृतं सत् वैशद्यमभिवृद्धिञ्चाध्यगच्छत् नाभूदंशतोऽपि ग्लानं म्लानं वेति प्रख्यातपाण्डित्यानामेतेषां कृतिततयः समक्षमेवास्माकं साक्ष्यतया विराजन्ते ।

यद्यपि नव्यन्याये पश्चाद् गोत्रकलहोऽपि समजायत मैथिलयोः वटेश्वरपक्षधरयोश्चिन्तनपार्थक्यं, गौडमैथिलयोः पक्षधररघुनाथयोः सिद्धान्त-विरोधः, गुरुशिष्ययोः सार्वभौमशिरोमण्योश्च मतभेदः प्रसिद्धः – तथापि कलहेनैतेन शास्त्रस्य विचारधारायां नाभूदवरोधोंऽशतोऽपि प्रत्युत तीव्रतैव समपद्यत ।

यज्ञपत्युपाध्यायः 'प्रभानाम्न्यां'[1] चिन्तामणिव्याख्यायां यथा स्वपूर्व-जस्य वटेश्वरस्य मतानां समर्थने कृतयत्नो दृश्यते, रघुनाथशिरोमणिर्यथा

---

१. डा० गोपिकामोहनभट्टाचार्येण विएनातः रोमनलिपौ साधु सम्पाद्य प्रकाशितेयं चिन्तामणिप्रभा ।

दीधितौ पक्षधरमिश्रस्य मतान्यपाकर्तुं बद्धपरिकरोऽवलोक्यते तथैव महेश-ठक्कुरः स्वकीये दर्पणे, मधुसूदनठक्कुरश्च नैजे कण्टकोद्धारे पक्षधरपक्ष-समर्थनाय कृतसङ्कल्पौ विचारचातुर्यैः साधु साफल्यमवाप्नुताम् । फलतः पारस्परिकी प्रतिस्पर्धोभयोरपि पक्षयोः गुणाधानं मलापनयनं चेति द्विधा संस्कारं कुर्वन्ती शास्त्रस्य परिष्काराभिवृद्ध्योर्हेतुतामेवाभजत् । अस्या एव प्रतिस्पर्धायाः सुफलमिह निर्वचने वैशद्यं, विवेचनायां सूक्ष्मतां, कल्पनायां वैपुल्यं, चिन्तनपद्धतौ वैविध्यं चास्माकं दृग्गोचरतां याति, येनैतच्छास्त्रं प्रकर्षं लभते परिणाहं च भजति ।

सौभाग्यमिदमस्माकं यत्स्वातन्त्र्यलाभानन्तरं भारतस्य विद्वांसः श्रद्धाभाजनानि डा० राहुलसांकृत्यायनमहाभागप्रभृतयः भगीरथप्रयत्नेन बौद्ध-दर्शनग्रन्थान् तिब्बतप्रान्ततः समानीय प्राकाशयन् । येषु प्रमुखाः प्रमाणवार्त्तिकं, तदीयाः व्याख्याः कर्णकगोमि-मनोरथनन्दि-प्रज्ञाकरगुप्तकृताः, ज्ञानश्रीमित्र-निबन्धावली, रत्नकीर्तिनिबन्धावली, वादन्यायोऽन्ये च । एषां प्रकाशनेन प्राचीनन्यायदर्शने समागताः पूर्वपक्षाः स्वतः परिस्फुटतां गतास्तत्रत्याः ग्रन्थग्रन्थयोऽपाकृता अभूवन्निति ग्रन्थसङ्गतेरर्थावबोधस्यानुसन्धानस्य च प्रशस्तोऽभवन्मार्गः । किञ्चाल्पपरिचितानामपरिचितचराणां च नैयायिकानां नामान्यवदानानि ग्रन्थसन्दर्भाश्च समक्षमस्माकं समागच्छन् येनानुसन्धानरतानां सुमहानभवदुपकारः । विश्वरूपवित्तोकशतानन्दभाविविक्तनरसिंहशङ्कर-प्रभृतयस्तदीयसिद्धान्ताश्च एवमेव परिचिता अभूवन् । एषु केचन भाष्यतः पूर्ववर्तिनः केचन पुनरर्वाचीनास्तस्मादित्यालोचनमपेक्षन्ते । केचनात्र भाष्यव्याख्यातारः केचन स्वतन्त्रग्रन्थलेखनपटीयांस इत्यप्यालोचनेनैव परिज्ञातुं शक्यते ।

(ख) शास्त्रञ्चैतद् द्विधा द्वैरूप्यं भजत इत्यस्य महद्वैशिष्टयम् । यथा प्राच्यनव्यभेदाभ्यामस्य द्वैरूप्यं तथैव प्रक्रियाशास्त्राध्यात्मविद्याभ्यामपि । विद्यान्तराणामुपकारकत्वेन प्रक्रियाशास्त्रमिदं स्वातन्त्र्येणाध्यात्मविद्या-पदवीमपि लभते । प्राचीनं न्यायशास्त्रं प्रमाणप्रमेयसंशयप्रयोजनादिषोडश-

पदार्थानां लक्षणपरीक्षणयोः सीमाबद्धमपि पुरुषार्थचतुष्टयस्य, तत्रापि प्रमुखस्यापवर्गस्य साधने समर्थं सदध्यात्मविद्यात्वं भजति।

पुनरिदमेव यदि न्यायवाक्यस्य पूर्वाङ्गोत्तराङ्गाश्रयादितया षोडशापि पदार्थानात्मप्रक्रियायामुपयुङ्क्ते तर्हि प्रक्रियाशास्त्रत्वं प्रख्यापयत्यात्मनः। अत्रैव साधारणासाधारणधर्माभ्यां वस्तुस्वरूपावधारणात्मकं लक्षणमुपयुज्यते। परिपूर्णेन न्यायवाक्येन पुनः प्रतिपद्यते पदार्थस्य च परीक्षा। न्यायवाक्यं चात्र पञ्चावयवात्मकं प्रसिद्धमेव। प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्च भवन्त्यवयवाः न्यायस्य। परप्रत्यायनं न्यायवाक्येनैव संभवति। तस्मात् परीक्षोपयोगित्वं भवति न्यायवाक्यस्य। उद्देशलक्षणपरीक्षात्मिकया प्रक्रियया पदार्थोऽवधार्यत इति ह्यनुभवः। यो हि वस्तूपगमे भवति शरणमस्माकमिति निर्विवादम्। अत एव 'त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चे'ति आरम्भ एव न्यायभाष्यकृद् वात्स्यायन आह। महत्त्वमस्य प्रतिपादयन्नर्थशास्त्रे कौटिल्योऽप्यगादीत्—

'धर्माधर्मौ त्रय्यामर्थानर्थौ वार्तायां, बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति प्रज्ञावाक्यक्रियावैशारद्यं च करोति—

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता' ॥ इति।**

केयमान्वीक्षिकीति जिज्ञासायां न्यायभाष्यकृदाह—'प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षागमाश्रितमनुमानम्। सा अन्वीक्षा, तया प्रवर्तत इत्यान्वीक्षिकी-न्यायविद्या न्यायशास्त्रमिति।'

यद्यपि वाक्यार्थावधारणायाधिकरणप्रणाली मीमांसाशास्त्रे निर्दिष्टास्ति। तद्यथा—

'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्' ॥ इति।

तात्पर्यनिर्णयाय पुनस्तत्रोक्तम्—

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।** इति । [बृहत्संहिता ? ]

तथाऽत्रापि परप्रत्यायनाय पूर्वोत्तरपक्षयोरुपपादनावसरे न्यायवाक्यमेवापेक्ष्यते । नान्यथा स्वपक्षस्थापनं भवितुमर्हति स्फुटमिति मीमांसाशास्त्रान्न्यायशास्त्रस्य महत्त्वमतिशेते ।

एवं न्यायमञ्जर्यां जयन्तभट्टोऽप्यमुं प्रशंसन्नकथयत्—'न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यरक्षाहेतुत्वात् । अशेषदुष्टतार्किकोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायि न्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं शास्त्रप्रतिष्ठाननिबन्धनमिति ध्रुवं विद्यास्थानमिति' ।

वैदेशिको विद्वान् डा० ओवरहैमरमहाशयस्तु न्यायशास्त्रस्याध्यात्म विद्यया सह वादविद्यात्वं प्रतिपादयति ।

**न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।**
**हेत्वागमसदाचारैर्यद्युक्तं तत्प्रगृह्यताम् ।।** इति । [भीष्मपर्व २१०।२२१]

महाभारतपद्येऽनेकत्वं न्यायतन्त्रस्य वादशास्त्राणां वैविध्यादेवोपपद्यते । न्यायतन्त्रपदमिह वादेषु बद्धपरिकराणां शास्त्राणां कृते व्यापकेऽर्थे प्रयुक्तं न तु षोडशपदार्थवादिनः गौतमीयन्यायस्यैव कृते । किञ्च वादे वादे जायते तत्त्वबोध इत्याभाणकस्यापि चरितार्थता तथैव स्याद् यदि वादशास्त्रस्य वैविध्यमावश्यकता चानुभूयेताम् ।

गौतमीयेऽस्मिन् न्यायदर्शने वादजल्पवितण्डानां पदार्थत्वेनाभ्युपगमः न्यायकुलोद्भवेषु बौद्धजैनादिदर्शनेषु वादशास्त्रीयप्रक्रियायाः समादरेण स्वीकारश्च महाविदुषोऽस्य वैदेशिकस्य मतं सर्वथा संगच्छत एव । अन्यत्र दर्शनेषु, सत्यपि वादशास्त्रप्रक्रियानुगमने, वादजल्पादीनां पदार्थतया

परिगणनं वयं नैव पश्यामः । तस्मान्न्यायदर्शनस्यैतद्वैशिष्टयमवश्यमभ्युपगन्तव्यम् ।

इयमत्र विषयपरिशुद्धिः । अपवर्गस्य चरमस्य परमस्य वा पुरुषार्थस्याधिगमायात्मसंस्कारोऽध्यात्मविधिप्रतिपत्तिस्तदुपायश्च योगशास्त्रनिर्दिष्टाचरणमावश्यकतया कर्तव्यकोटौ समायान्ति । तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैरिति [४।२।४६] न्यायसूत्रस्यात्रैव विद्यते तात्पर्यम् । आत्मसंस्कारः यमनियमाभ्यां भवितुमर्हति, अध्यात्मविधिप्रतिपत्तिस्तपःप्राणायामादियौगिकप्रक्रियया भवति । अत्रैव ज्ञानग्रहणस्य तदभ्यासस्य तद्विद्यैश्च सह संवादस्य चापेक्षा जायते । अध्यात्मविद्याशास्त्रं ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदेन विवक्षितम् तस्य ग्रहणमध्ययनधारणे । अभ्यासस्तस्य च सततं चिन्तनं श्रवणाध्ययनाभ्याम् । प्रज्ञापरिपाकार्थमत्रैवोपयुज्यते—तद्विद्यैः सह संवादः । यस्मादात्मनि प्रत्ययो भवति—यदहमुचित एव मार्गे गच्छामि न तु दिङ्मूढ इति । संशयच्छेदोऽविज्ञातार्थबोधोऽध्यवसिताभ्यनुज्ञानं चास्मात् संवादात् जायन्ते । तस्माद् दिङ्मूढत्वं स्वत अपाकृतं भवति । समाय वादः संवाद इति—न्यायभाष्यपंक्तिः स्फुटं प्रतिपादयति यत् कृतविद्यस्याध्यात्मविद्यायां निष्णातस्य समतात्मनि विद्यते न वेति परिज्ञानं संवादेनैव जायते । अत एव संवादस्य वादस्य वा महत्त्वं वरीवर्तीति न्यायशास्त्रे तस्य विशेषेण विचारः कृतः । अयमेव तद्विद्यसंवादस्तद्विद्यसम्भाषापदेन वाचस्पतिमिश्रेणाप्यभिलप्यते । तद्विद्यसंवादश्च शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोऽर्थिभिरनुसूयिभिः कर्तव्य ४।२।४८। इति न्याय सूत्रकार एवोपदिशति । गुर्वादिभिः वादं कृत्वेत्यस्माभिरुक्तमेवार्थमनुमोदयन्त इव प्रतिभान्तीत्यात्मनि निश्चयः सञ्जायते । फलतः वादजल्पवितण्डात्मिका कथा सर्वथा मोक्षस्य परम्परयोपयोगिनीति मन्तव्यम् । वादशास्त्रत्वमिदं न्यायदर्शनस्याध्यात्मविद्यात्वस्य प्रक्रियाशास्त्रत्वस्य च पूर्वोक्तयोः परिपोषकमेव विद्यते न तु व्याघातकं लेशतोऽपीत्यवधेयम् ।

किञ्च पदार्थनिर्णीतिपरेऽस्मिन् शास्त्रे वादप्रक्रिययैव सिद्धान्तस्थापनं-संभवति। अतोऽपि वादशास्त्रत्वमस्य सिद्ध्यति।

अस्मादेव हेतोः पुण्यश्लोकः म० म० डा० सर गङ्गानाथझा महाभागः[1] भारतीयं दर्शनं कुलत्रये विभज्य न्यायकुले तत्रोद्देशलक्षणपरीक्षात्मिकां पदार्थविवेचनप्रणालीमभिलपति, यत्र पूर्वोक्तरीत्या वादशास्त्रत्वं तिष्ठति। मीमांसाकुलं वाक्यार्थविधारणप्रक्रियामनुगच्छति। यत्र पूर्वोत्तरमीमांसे प्रसिद्ध्यतः। वैष्णवदर्शनान्यत्रैवान्तर्भावमर्हन्ति।

संख्यां प्रधानतया स्वीकृत्य पदार्थानां विवेचने तत्परं दर्शनं सांख्य-कुलमयमभिदधाति। यत्र सांख्ययोगशास्त्राभ्यां सह शैवशाक्तदर्शनानि समाविशन्ति।

अस्य न्यायदर्शनस्य वादशास्त्रत्वं मन्ये महद्भूषणम्। यस्य बीज-मस्माभिर्न्यायसूत्रभाष्ययोर्दृष्टं पल्लवनञ्चास्याचार्योदयनस्य न्यायपरिशिष्टा-परनाम्नि बोधसिद्धौ, तदीयव्याख्याने वर्धमानस्य प्रकाशे, शङ्करमिश्रस्य वादिविनोदे च सञ्जातमिति कोऽपि न्यायविदवगन्तुं प्रभवति। न्यायभाष्यादौ प्रावादुकमतानामुल्लेखोऽपि तदैव संगच्छते यदा वादशास्त्रत्वमस्य सुनिश्चितं भवेदित्यलं पल्लवितेन।

तस्मात् वादशास्त्रत्वेऽप्यस्य दर्शनस्य प्रक्रियाशास्त्रत्वमध्यात्म-विद्यात्वञ्चाक्षत एव तिष्ठतः।

(ग) नव्यन्यायस्य तु धारा काचिदन्यादृशी। प्रमाणचतुष्टयमवलम्ब्यैव मुख्यतः प्रचलति नव्यन्यायशास्त्रम्। सूक्ष्मेक्षिकया विवेचनायै प्रवृत्तं तत् तलप्रवेशितां विषयपरिष्कारञ्च स्वकीयया पद्धत्या विदधाति। लक्षण-प्रमाणाभ्यां वस्तुसिद्धिः, विनिगमकश्च तर्क इति मुख्यास्य सरणिः। अत्रैव लक्षणनिर्वचनावसरे परिष्कारसरणिरवतरति। यत्र सूक्ष्मेक्षिका तर्काऽऽरपुष्टा

---

१. द्र० दर्शनमितिशीर्षकं प्रथमं मिथिलेशमहेशरमेश व्याख्यानमेतदीयम्।

कल्पना च प्रमुखमासनं परिगृह्णतः । प्रसिद्धिस्तु सरण्या अस्या एतादृशी दृष्टिपथमवतरति यदस्या आविर्भावानन्तरं परवर्तिनि काले सर्वेष्वपि शास्त्रेष्वियमेव विचारसरणिः सादरमनुसृता । अलङ्कारशास्त्रं भवतु वेदान्तदर्शनं वा भवतु विषयालोचनं नव्यन्यायसरण्यैव भवितुमर्हति, भवति चेति तत्तद्ग्रन्था एव साक्ष्यं भजन्ति ।

(घ) अस्माकं गुरुचरणाः प्रो० अनन्तलालठाकुरमहाशयास्तु शास्त्रस्य प्रवृत्तिमभिलक्ष्य कालत्रये विभजन्ति शास्त्रमिदम्[1] । भगवतोऽक्षपादस्य न्यायदर्शनमेव सर्वथाधारतया परिग्राह्यम्, बौद्धाचार्यैः साकं धारावाहिकतया विरोधः, वैशेषिकदर्शनेन सहास्य न्यायदर्शनस्य च समानतन्त्रताङ्गीकारः । तत्र विश्वासोऽत एव ततः स्वमतानामुपोद्बलनं चेति प्राचीनन्यायस्य लक्षणम् । प्रमेयसूत्रव्याख्याने न्यायसम्मतं द्वादशमितं प्रमेयमभिधाय न्यायभाष्यकृदगादीत्—'अस्त्यन्यदपि प्रमेयं द्रव्यगुणकर्मसामान्यविशेषसमवायाः' इति । फलतः वैशेषिकं प्रति दौर्बल्यं वात्स्यायनस्य परिलक्ष्यते बहुत्र न्यायभाष्य इति विना भयेन वक्तुमर्हम् ।

मध्यकालिकस्य न्यायदर्शनस्याचार्यः भासर्वज्ञः न्यायसारस्य स्वोपज्ञव्याख्यां न्यायभूषणाभिधां व्यलेखीत् । बौद्धाचार्यैः साकमस्यापि वर्तते शाश्वतिकः विरोधः । न्यायदर्शनमक्षपादकृतमेवास्याप्युपजीव्यम् । किन्त्वयमत्र वैशेषिकप्रभावं न सहत इति भेदः । अयं स्पष्टमभिदधाति—'न्यायशास्त्रं तु व्याख्यातुं वयं प्रवृत्ताः । तेनास्माकं वैशेषिकतन्त्रेण विरोधो न दोषायेति[2] ।' अत एवास्य मते कर्म न भवति पृथक् पदार्थः । मोक्षस्वरूपमपि नित्यसुखाभिव्यक्तिः, यच्चाक्षपादसम्प्रदायविपरीतम् । एवमेवात्रोपमानप्रमाणनिराकरणमपि विद्यते ।

आधुनिककालिकस्य नव्यन्यायस्य प्रवर्तकस्तु गङ्गेशोपाध्यायः । अयं

---

१. द्र० मधुसूदनन्यायाचार्यस्मारकवक्तृता, १९८९ ई० ।

२. द्र० न्या० भू०, पृ० १६३ ।

हि प्रमाणमात्रमवलम्ब्य प्रकरणग्रन्थं तत्त्वचिन्तामण्यभिधं व्यरचयत् । अत्र प्रतिपक्षिषु मुख्याः प्राभाकरमीमांसकाः । न्यायवैशेषिकयोर्यत्र मतभेदस्तत्रायं न्यायमनुसरति । अन्यथा वैशेषिकैः साकमविवाद एवास्य वर्तते । इह चिन्तामणौ प्रतिपाद्यतया परिगृहीताः विषयाः उदयनस्य प्रकरणव्याख्या-ग्रन्थयोः अन्वेषिताः सन्तः समुपलभ्यन्त एव । अत एव कुसुमाञ्जलौ शक्ति-पदार्थस्य मीमांसकाभिमतस्य सयुक्तिकं निराकरणमपूर्वतो विलक्षणस्या-दृष्टस्य स्वीकृतिः मीमांसकानभिमतस्य प्रलयस्य प्रसाधनं च वयं पश्यामः । एकत्रायं स्फुटमभिलपति 'गुरुमतमेतन्न तु गुरोर्मतम्' आपाततो विसङ्गतिरत्र प्रतिभाति । किन्तु प्रथमगुरुपदं प्राभाकरं संकेतयति द्वितीयञ्च सम्प्रदायप्रवर्तकं शिक्षकम् । अनादरेऽत्र समासः । आदरे संबन्धनैकटचप्रदर्शनाय च षष्ठी विभक्तिर्व्यवहृता ग्रन्थकृता । गङ्गेशोपाध्यायः मङ्गलपद्य एवाभिदधाति— 'गुरुभिर्ज्ञात्वा गुरूणां मतम्' अथ च 'मितेन वचसा श्रीतत्त्वचिन्तामणिम्' इति । एतावता प्राभाकरसिद्धान्तं सम्यगवगत्य निरसिष्यते स्वसिद्धान्तश्च श्रीयुक्तोऽर्थात् समृद्धः करिष्यते सर्वथेति हृदयम् । यद्यपि मणिकण्ठस्य 'न्यायरत्न' ग्रन्थतः विषयभाषाभ्यां सर्वथा प्रभावितोऽयं चिन्तामणिरिति विचारचणानां धारणा तथापि स्वकीयेन मितेन वचसा प्रतिपाद्यानां प्रति-पादनमिह तदयमसाधारणं वैदुष्यं प्रदर्शयतितराम् । फलतः बौद्धाचार्याः प्राचीनमध्यकालयोर्मीमांसकाः मुख्यतोऽथ च वेदान्तिनोऽपि नवीनन्यायसमये न्यायदर्शनस्य प्रतिपक्षिण आसन् ।

(ङ) यद्यपि महाभारतं न्यायशास्त्रस्यानेकत्वं प्रतिपादयतीति प्रागत्रैवा भिहितम्, तस्मात् कतरद् ग्राह्यमिति विचिकित्सा स्वाभाविकी समुदेति तथापि आक्षपादे न्याय एव वर्तते स्वारस्यं महाभारतस्यापीत्यत्र तदीयः समुपलभ्यते कश्चन सङ्केतः । महाभारतकालिकः विश्वस्य प्रधानः शुभचिन्तकः देवर्षि-र्नारदः पञ्चावयवयुक्तस्य वाक्यस्याभिज्ञतया तत्र समुल्लिखितोऽस्ति—

'पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित्' इति । [सभापर्व ५।५। ] पञ्चावयवात्मकं न्यायवाक्यं सूत्रकृताक्षपादेन कण्ठतोऽस्ति प्रतिपादितम् ।

तस्मादिदमेवाक्षपादीयं न्यायं परिग्रहीतुं संकेतयति महाभारतमिति प्रतीमः। यतो हि दशावयववादोऽपि कदाचिन्न्यायदर्शने परिगृहीत आसीत्। अत एव न्यायभाष्यकृदुल्लिख्य तमपाकरोति। जिज्ञासा, संशयः, शक्यप्राप्तिः, प्रयोजनं, संशयव्युदासश्चेति पञ्चैते पञ्चभिः प्रतिज्ञादिभिरवयवैः सह संयुक्ताः सन्त न्यायस्य तथाकथितं दशावयवत्वं भजन्ति। त्र्यवयववादः बौद्धवैशेषिकदर्शनयोः प्रसिद्ध एवोदाहरणान्त उदाहरणादिर्वेति न तत्रापि श्रद्दधाति महाभारतमिति तर्कयामः। एवमानन्दमोक्षवादोऽपि कदाचित् कस्मिंश्चिन्न्यायसम्प्रदाये प्रचलित आसीदिति कल्पयितुं शक्यते। विना परम्परया भासर्वज्ञः नैव स्वीकुर्यादानन्दमोक्षवादं न वापाकुर्यान्न्यायभाष्यकृत्तमथ च दशावयववादमिति स्वभावसिद्धम्।

किञ्चेहाक्षपादे न्यायदर्शने सूत्रकृतैव चतुर्थाध्यायप्रथमाह्निकेऽष्टौ तत्कालप्रसिद्धानां प्रावादुकानां मतानि सन्ति समुद्धृतानि, तेषु केवलमीश्वर-वादोऽभ्युपगतः नैयायिकानामन्यानि सर्वाणि तैस्तैर्न्यायाचार्यैरुद्द्योत-करादिभिः सयुक्तिकमपाकृतान्येवेति न्यायतन्त्रस्यानेकत्वेन विना कथमेत-दुपपद्येतेति।

अपरञ्च न्यायसूत्रस्य यादृशं सुशृङ्खलं सुव्यवस्थितं च स्वरूपं समुपलभ्यते तादृशं तत् चिन्तनस्य प्रौढ्या परम्परायाः परिचयेन च विना नैव सम्भवतीति मादृशां मतिः। तस्मादाक्षपादीयमिदं न्यायशास्त्रं दृढपृष्ठ-भूमित्वेन सुदीर्घकालिकीमात्मपरम्परामासाद्यैव पञ्चस्वध्यायेषु विभक्तैः सूत्रनिचयैः सुव्यवस्थितं स्वरूपमलभतेति सिद्धयति।

किन्तु तथ्यमिदमपि यदनेकेष्वपि तेष्वक्षपादप्रवर्तितमेव न्यायशास्त्रं कालजयितामवाप्नोत्, यस्य प्रशंसां कौटिल्यः, वात्स्यायनः, जयन्तभट्टश्च स्वस्वग्रन्थेषु यथासमयमकार्षुरिति दृष्टमस्माभिः। इदमेवाक्षपादीयं न्यायदर्शनं महाभारताभिहितैः युक्तिशास्त्रसदाचारैः सर्वथा युक्तं विद्यत इतीदमेव स्वीकार्यमादरणीयञ्चेति धीधनैरवधार्यम्।

( २ )

(क) अस्य चाक्षपाददर्शनस्य व्याख्याधारापि सरणिद्वयमवलम्ब्य प्रवहति । भाष्यवार्त्तिकतात्पर्यटीकापरिशुद्धिरूपैका सरणिः, पश्चात् 'चतुर्ग्रन्थिका' नाम्ना नैयायिकैः कीर्तिता शास्त्रस्य गाम्भीर्यं परिधिपरिणाहं च विद्योतयति । न्यायतत्त्वालोककृदयं द्वतीयवाचस्पतिमिश्रोऽप्यत्र वृत्तौ प्रारम्भ एव प्रस्तावनाप्रक्रमेऽभिलपति—

'यदप्यतिपटीयसी जयति सा चतुर्ग्रन्थिका' ।। इति ।

एवं

पितुर्व्याख्यां कृत्वा मनसि भवनाथस्य कृतिनः ।
चतुर्ग्रन्थिग्रन्थानहमिह विमोक्तुं व्यवसितः ।। इति

त्रिसूत्री निबन्ध व्याख्यारम्भे शङ्करमिश्रोऽप्यगादीत् ।

अत्रैवाभयतिलकाचार्यस्यालङ्कारः (आसूत्रादा च परिशुद्धेः पञ्चप्रस्थानन्याय-टीकात्मकः) श्रीकण्ठाचार्यस्य टिप्पणकमनिरुद्धाचार्यस्य विवरणपञ्जिका तात्पर्यटीकायाष्टिप्पणीरूपा, वर्द्धमानोपाध्यायस्य न्यायनिबन्धप्रकाशश्च परिशुद्धिव्याख्यात्मकः सम्प्रदायसिद्धान्तान् समेधयन्ति प्रतिपक्षिणां मुखानि पिदधति चेति विदितमेव परिशीलितन्यायशास्त्राणाम् । अस्यामपि ख्रीष्टीय-विंशतितमायां शताब्द्यां न्यायभाष्यस्य प्रसिद्धा व्याख्याकारा अभूवन् । यशोहरवासी गौडाभिजनः म० म० फणिभूषणतर्कवागीशः, मैथिलः म० म० डा० गङ्गानाथझाशर्मा, पञ्चनदीयः सुदर्शनाचार्यश्च प्राचीनन्याये स्वकीय-मभिनिवेशं श्रद्धातिशयं च प्रादर्शयन्नेव । एषु म० म० तर्कवागीशचरणस्य व्याख्या प्रौढतमाधुनिकानुसन्धानदृष्ट्यापि विद्यते साधीयसी किन्तु वङ्गभाषा-मयीति न सर्वजनबोध्या ।

(ख) अपरस्यां सरणौ तु सूत्राणां सकलसारविवरणात्मिका वृत्तिरा-रचिता तज्ज्ञैः । अत्र शास्त्रीयसिद्धान्तानां सम्यगवबोधाय वृत्तिकृतां प्रयत्नः श्लाघनीयतां याति । सङ्गतिप्रदर्शनपूर्वकं शास्त्रस्य सिद्धान्ताः, सूत्राणामाशया

नियमेन वैशद्येन चेहातन्यन्ते । किन्तु विचारस्य गाम्भीर्यं परिणाहो वा न दृष्टिपथमवतरति, न वा शास्त्रान्तरमतनिरासाय स्वसिद्धान्तसमर्थनाय वातिरिक्तानां युक्तीनां भवति प्रदर्शनम् । आक्षेपसमाधानाभ्यां शास्त्रस्य पल्लवनायेह गजनिमीलनं विधीयते । यतो हि सारभागमात्रस्याहरणाय प्रतिज्ञाताः वृत्तिकृतः कस्मिँश्चित् सीमनि भवन्त्याबद्धाः । अमुमेव वृत्तिमधिकृत्य विष्णुधर्मोत्तरपुराणं स्पष्टमभिलपति —

**पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना ।**
**आक्षेपश्च समाधानं व्याख्या सूत्रस्य षड्विधा ।। इति ।**

इयं चोक्तिः सावधानेन वृत्तिकृतावश्यमनुगम्यत इति दृष्टम् ।

(ग) इदमिहावधेयं व्याख्या संक्षिप्ता भवतु विस्तृता वा, व्याख्याकृदुद्देश्यद्वयं मनसि निधायैवात्र प्रवर्तते । आत्मसम्प्रदायस्य गुरुपरम्परयागतस्य शास्त्रीयसिद्धान्तजातस्य संरक्षणं सम्बर्धनमग्रसारणं प्रचारणञ्चेत्येकं भवति तदुद्देश्यम् । अपरन्तु व्युत्पत्त्याधायकानां कोशव्याकरणादीनामुपकरणानां व्यवहारेण शास्त्राभिप्रायाणां वैशद्याय सम्यगवबोधाय च प्रयासः । उदाहरणतयात्र तात्पर्यटीका परिग्रहीतुं शक्या । अत्र वाचस्पतिमिश्रः वार्तिकस्याशयं विशदयन् कण्ठतोऽभिलपति यदयमात्मगुरोस्त्रिलोचनाचार्यस्योपदेशमनुसृत्य प्रत्यक्षस्य यथार्थं स्वरूपं सप्रमाणं व्याख्यातवानिति—

**त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः ।**
**यथामान यथावस्तु व्याख्यातमिदमीदृशम् ।। इति । (१।१।४)**

एतावता सम्प्रदायानुगामित्वं सिद्धान्तवैशद्याय प्रयासश्च व्याख्यातुरत्र दृष्टिपथातिथ्यं भजेते । उदयनाचार्योऽपि परिशुद्धौ समर्थयति वार्तामिमाम्— 'उद्योतकरकालो हि अमूषां (न्यायविद्यानां) यौवनम् । तच्च कालपरिपाकवशाद् गलितमिव । किं नामात्र त्रिलोचनगुरोः सकाशादुपदेशरसायनमासादितममूषां पुनर्नवीभावाय दीयत' इति (१।१।१) । अस्मादेव हेतोर्नैयायिकैकदेशिनां मतानि सम्प्रदायसंरक्षणव्रतिभिर्व्याख्यातृभिः निराक्रियन्ते समुपेक्ष्यन्ते वा, तेषां सम्प्रदायबहिर्भावात् ।

यद्यपि व्याख्येयग्रन्थस्य सिद्धान्तैः सैकमपि कदाचिद् व्याख्यातुर्वैमत्यं भवति तथापि व्याख्याकृत् मूलग्रन्थप्रतिपाद्यं साधु विद्योतयत्येव, नैव यतते तत्प्रच्छादनाय । पुनस्तत्रैव स्वाभिप्रायमाविष्कृत्य [illegible] आत्मना वैमत्यं प्रदर्शयति सयुक्तिकम् । एतावता शास्त्रीयपरिष्कारधारायां प्रवाहस्तीव्रतां व्रजति नैवावरुध्यते । यद्यपि न्यायदर्शनस्य भाष्यवार्त्तिकतात्पर्यटीकादीनामध्ययनावसरे कोऽपि दृष्टिसम्पन्नः पाठक एतादृशं पारस्परिकं वैमत्यं लक्षयितुमर्हति तथापि विषयपरिशुद्ध्यै दिग्दर्शनमस्योदाहरणमुखेनेह विधीयते ।

संशयं लक्षयन् भाष्यकृत्सूत्रमनुसृत्य कारणभेदप्रयुक्तं कार्यभेदमङ्गीकृत्य संशयस्य पाञ्चविध्यमुपापादयत् । किन्तु वार्तिकेऽस्य त्रैविध्यमङ्गीकृतम् । भाष्यकृदभिहितः कारणभेदप्रयुक्तकार्यभेदसिद्धान्तस्तु स्वीकृतः । पश्चात् तात्पर्याचार्योऽत्र वार्त्तिकमन्वगच्छदिति संशयस्य त्रैविध्यमेव सम्प्रदाये प्रसिद्धम् । भाष्यकृतस्तस्य पाञ्चविध्याभिधानं तदवदानतयैव प्रसिद्धिमवाप्नोत् । वैमत्यमधिकृत्य स्थितिरियं वार्त्तिकतात्पर्यटीकयोरपि विद्यत इत्यन्यत्र[1] प्रदर्शितम् ।

यद्यपि प्रत्येकं व्याख्याता व्याख्यावसरे प्रमाणतर्काभ्यां परिपुष्टमात्मनोऽनुभवमासाद्य व्याख्येयविषयं पल्लवयति । अत एवेह प्रज्ञाप्रतिभाभ्यां सह गुरुशिक्षा, जागरूकतोहश्च निःसन्देहमपेक्ष्यन्ते । तथापि एक एव विषयो यदि विविधैर्व्याख्यातृभिः व्याख्यायते तर्हि तत्र बुद्धिभेदप्रयुक्तं पारस्परिकं वैमत्यं भवत्येव स्वाभाविकम् । तत्र हेतुत्वेन सम्भवति चिन्तनस्य मौलिकत्वं यत्खलु प्रतिभाशिक्षाभ्यां समर्जितं सद् व्याख्याया माध्यमेनाभिव्यज्यते ।

अत्रैवोदेत्येकदेशिमतम् । यद् देशविशेषे कालविशेषे चाविर्भवदसंश्लिष्टं च मुख्यधारया कदाचिदल्पायुर्भवति कालजयित्वं न लभते ।

अस्याप्येकदेशिमतस्य प्रभेदद्वयं पश्यामः । शास्त्रस्य मुख्यधारया असंपृक्तमपि स्वकीयप्रतिभामहिम्ना भिन्नामेव शास्त्रधारां प्रवाहयति । मुख्यया

---

१. द्र० न्यायवार्त्तिकतात्पर्यटीकयोर्मतभेद इति नामा वेंकटेश्वरविश्वविद्यालयस्य शोधपत्रिकायां प्रकाशितः [पंक्तेरस्या लेखकस्य निबन्धः] ।

धारया संयुक्तमपि सिद्धान्तविशेषे स्वकीयमभिमतं मतमध्यारोपयति वेति। प्रथमकोटौ न्यायभूषणकृद् भासर्वज्ञाचार्यः समायात्यत्र। अयं हि न्यायदर्शनं वैशद्येन विवृणोति परन्तु सम्प्रदायमुपेक्षते। बौद्धाचार्यान् प्रतिपक्षितया मन्वानस्तदीयं मतजातमपाकुर्वन्नपि न्यायस्य वैशेषिकेण सह सम्बन्धं न सहते। द्वितीयकोटौ समायाति प्रौढगौडनैयायिकः सानातनिः। अस्य कथायाश्चातुर्विध्याभिधानं न्यायव्याख्यापरम्परासु बहुत्र खण्डनाय समुद्धृतमिह प्रस्तुतायां वृत्तावपि विद्यते समुल्लेखस्तस्य तथैव।

सावधानेन व्याख्याकृता व्यापिकां चतुरस्रां दृष्टिमादायैव शास्त्रं व्याख्यायते। अत एव स्वसमयप्रसिद्धानामेकदेशिनां मतैः साकं परिचयं कारयन्नयं व्याख्याकृत् सम्प्रदायसंरक्षणव्रती तत्सर्वं निरस्यति, येन सम्प्रदायसिद्धान्तस्य दृढमूलतायां कदाचिद् बाधाया आशङ्का आपद्यते। अत एव 'केचिदपरेऽन्ये' प्रभृतिपदैः, साक्षान्नामनिर्देशैस्तद् ग्रन्थसन्दर्भस्य समुल्लेखैर्वा ग्रन्थेष्वेकदेशिनः समायान्त्येव। न्यायतत्त्वालोकेऽपि 'इति न्यायलोचनकृतः, इति तरणिमिश्रा इति टीका, इति चिन्तामणिकृत' इत्यादिवाक्यान्युपलभ्यन्त एव यथायथमुपजीव्यतयैकदेशितया वा। केचित्त्वादिपदानि तु बाहुल्येन सन्ति प्रयुक्तानि। कदाचिदात्माभिप्रायसमर्थनाय कदाचिदेकदेशिताख्यापनाय वैकदेशिनः सम्प्रदायाचार्याश्च व्याख्याकृद्भिरुल्लिख्यन्त इति दृष्टम्।

अनेनैकदेशिमतोल्लेखेन बहुविषयाणामवबोधो भवति। तद्यथा विचारस्य स्वातन्त्र्यं, सातत्यं सार्वभौमिकत्वं, सम्प्रदायस्य बहुविधता व्यक्तिविशेषमतसंरक्षणं चेति परवर्तिनां चिन्तकानां समक्षं विद्योतन्ते। एतावता शास्त्रस्य लोकप्रियता पल्लवनं विख्यातिश्च सिद्ध्यन्ति।

अत्रैव सम्प्रदायसिद्धान्तस्य दृढमूलतायै विपक्षिभिरुत्क्षिप्तानां दोषधूलीनां स्वपक्षस्य बाधकप्रमाणानां परिमार्जनमपि व्याख्याकृतः कर्तव्यकोटौ समायाति। अन्यथा विपक्षिभिः प्रक्षिप्ता धूलयः संशयवारिणा आर्द्राः सत्यः पङ्कतां भजन्ति। तैराच्छन्नश्च सिद्धान्तः आत्मपरिचययोग्यतामेव जहाति,

का कथा सारल्येन तद्बोधस्य । एतस्य निदर्शनमिह तत्त्वालोके वयं पश्यामस्तथा हि—'नहि वयमप्रामाण्यं साधयामः । किन्तु त्वत्कल्पितानि प्रमाणानि त्वत्कल्पितैरेव प्रमाणैर्विचार्यमाणानि परस्परविरोधेन विलीयन्ते इत्युद्भावयाम इति कुतोऽस्मान् प्रति व्याघातविभीषिका' [पृ० १६६] ।

(घ) इदमिहावधेयमध्ययनस्य द्वौ पक्षौ प्रमुखौ विद्येते सिद्धान्तपक्ष ऐतिहासिकपक्षश्च । कः सिद्धान्तः कदा कुत्र केन किमर्थं स्वीकृतस्तस्य च कथमभूत् पल्लवनमुपेक्षा वेति एकदेशिनां मुख्यधारापतितसम्प्रदायानां च सिद्धान्तानां परिज्ञानेन विना न संभवति । तस्माद् व्याख्या समपेक्ष्यत एव सूत्रशैल्यामभिहितस्य शास्त्रस्य । अन्यथा खण्डनमण्डनक्रमे बहुविद्याश्रितं शास्त्रं दुरवबोधं स्यादेव । उभयोश्च सिद्धान्तैतिहासिकयोः पक्षयोः घनिष्ठः सम्बन्धः सन्दृश्यते । विकासपथेऽवतरतः सिद्धान्तस्य दूरगामिता देशकालाभ्यां परिच्छिद्यते । अत एव विश्वस्मिन्नपि विश्वे कोऽपि सिद्धान्तः सुदीर्घादेव-कालादात्मानं व्याप्नोति, शास्त्रधारां गभीरां च विदधाति । कदा कथं केन कस्यां परिस्थितौ विवेचनायां सूक्ष्मता समानीतेत्यस्य स्पष्टं चित्रं प्रस्तौत्यै-तिहासिकः पक्ष इत्युभयोर्वैशिष्ट्यमाकलनीयम् । यथा वात्स्यायनस्यानन्द मोक्षवाददशावयववादयोः खण्डनम्, उद्योतकरस्य हेत्वाभासस्य शताधिक प्रकारवर्णनं बौद्धमतानां निरासः वाचस्पतेः सविकल्पकनिर्विकल्पकभेद व्यपदेश'श्च विशेषेणालोचनीयतां निदर्शनताञ्चोपयन्ति '।

## ( ३ )

न्यायसूत्राणामनेकाः प्राय एकोनचत्वारिंशन्मिताः वृत्तयः श्रूयन्ते, यासु काश्चन नाम्नैव केवलं परिचिताः सन्ति, काश्चन पुनर्मातृकागारेषु विराजन्ते । काश्चेनदानीं प्रकाशिताः प्रकाश्यमानाश्च विद्यन्ते ।

(१) उदयनाचार्यतः प्राक्तनस्य प्रौढगौडनैयायिकविशेषेण सह तेनैव सादरमुल्लिखितस्य सानातनेराचार्यस्य (ख्रीष्टीयदशमशतकभवस्य) न्यायसूत्र-वृत्तिरासीदिति वयं कल्पयामः । यतो ह्यनेन प्रतिपादितं कथायाश्चातुर्विध्यं

परिशुद्धावुदयनाचार्येणान्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायेन न्यायतत्त्वालोके द्वितीयवाचस्पतिमिश्रेण वादिविनोदे शङ्करमिश्रेण नामनिर्देशपूर्वकमुल्लिखितं निराकृतञ्चेति दृष्टमस्माभिः। एवं नित्यानित्यसमजात्योः क्रमविपर्यासमधिकृत्य विचारावसरे वर्धमानोपाध्यायेनायं समुद्धृतः। तस्मात् न्यायसूत्राणां वृत्तिमवश्यमयमारचयदिति वयं विश्वसिमः। अन्यथा न संभवति परवर्तिषु व्याख्यानेषु वृत्तिषु चैवंविधः समुल्लेखः। स्वसमये नितरां विख्यातापि अस्य कृतिरिदानीं लुप्ताभवत्, नामापि नास्याः श्रूयते।

(२) न्यायदर्शनस्य पञ्चमाध्यायगतानि सूत्राण्यधिकृत्य उदयनाचार्येण प्रणीता वृत्तिः न्यायपरिशिष्टाख्या बोधसिद्धिः प्रबोधसिद्धिः बोधशुद्धिरिति विविधनामशालिनी प्रकाशितासु वृत्तिषु सर्वाभ्यः प्राचीना समुपलभ्यते। प्रकाशितेयं कलकत्ता एशियाटिकसोसाइटीतः १९३८ तमे वर्षे इति श्रूयते।

(३) रत्नकोषकारस्य तरणिमिश्रस्य मतजातमनेकेषु तत्परवर्तिषु ग्रन्थेषु समुपलभ्यते। मणिकण्ठस्य न्यायरत्ने गङ्गेशोपाध्यायस्य तत्त्वचिन्तामणौ, वर्धमानोपाध्यायस्य परिशुद्धिप्रकाशे, रुचिदत्तस्यानुमानटीकायां, द्वितीयवाचस्पतिमिश्रस्य न्यायतत्त्वालोके, केशवमिश्रतर्काचार्यस्य गौतमीयसूत्रप्रकाशे चास्य समुल्लेखो विद्यते। मैथिलोऽयं ख्रीष्टीयत्रयोदशशतकीय इति ऐतिह्यविदः। अमुमधिकृत्य प्रो० श्री अनन्तलालठाकुरमहाशयेन साधीयान् निबन्धो लिखितः, दरभंगातः कविशेखरपुष्पाञ्जलौ प्रकाशितश्च सः।

इयं च रत्नकोषनाम्नी कृतिः न्यायसूत्राणां वृत्तिरेव भवितुमर्हति न तु प्रकरणसंग्रहग्रन्थौ। यतो हि कस्याप्येकस्यैव विषयस्य साङ्गोपाङ्गविचारः प्रकरणग्रन्थे भवति, अत्र चानेकान् विषयानधिकृत्य तदीयमतानामुद्धारः। एवं सूत्राणां सारसङ्कलने मर्यादितः संग्रहग्रन्थः, अत्र तु सूत्रव्याख्यानप्रकरणविभागौ चाधिकृत्य तन्मतानामुल्लेख इत्यस्य वृत्तिकृत्त्वं सम्भाव्यते। इयमपि वृत्तिरनुपलब्धैव विद्यते। रत्नकोषमतवादार्थस्तु तन्मतसंग्रहात्मकः दरभंगास्थमिथिलासंस्कृतशोधसंस्थानतः गुरुवरेणप्रो० श्री शोभाकान्तजयदेवझामहाभागेन सम्पादितः प्रकाशितश्च।

(४) गङ्गेशोपाध्यायतः प्राक्तनोऽयमज्ञातनामधेयः **न्यायभास्करकारः** न्यायसूत्राणां वृत्तिं प्राणैषीदिति तर्क्यते । कणादतर्कवागीशः चिन्तामणे-रनुमानखण्डस्य व्याख्यायाममुं समुद्धरति । पश्चात् द्वितीयवाचस्पतिमिश्रेण न्यायतत्त्वालोके, केशवमिश्रतर्काचार्येण गौतमीयसूत्रप्रकाशे, रामभद्रसार्वभौमेन न्यायरहस्ये च समुद्धृतोऽयम् । अमुमधिकृत्य डा० प्रबालकुमारसेनमहाशयेन कलकत्ताविश्वविद्यालयस्य दर्शनविभागाध्यापकेन वैदुष्यपूर्णो निबन्धः लिखितः, जर्नल ओफ इण्डियन फिलोसोफी पत्रिकायां (१९७९) प्रकाशितश्च । परमयं न्यायभास्करः मातृकायामपि नोपलभ्यते कुत्रापि ।

(५) गङ्गेशोपाध्यायवासुदेवसार्वभौमयोरन्तरा विद्यमानोऽज्ञातनामा **न्यायलोचनकारः** ख्रीष्टीयचतुर्दशशतकीयस्तैरभुक्तः शङ्करमिश्रेण वादिविनोदे, द्वितीयवाचस्पतिमिश्रेण न्यायतत्त्वालोके, वासुदेवसार्वभौमेन शब्दमणि-परीक्षायां, केशवमिश्रतर्काचार्येण गौतमीयसूत्रप्रकाशे च समुद्धृतः क्वचिद्-गङ्गेशोपाध्यायमतं निरस्यत्यपि । अस्य न्यायलोचनं वृत्तिरेव सूत्राणां भवितुमर्हतीति मादृशां कल्पना । परमियं वृत्तिः कृतिर्वा नोपलभ्यते कुत्राप्यधुना ।

(६) वङ्गभूपालस्य पालवंशीयस्य समसामयिकेन **चक्रपाणिदत्तेन न्यायसूत्रवृत्तिः** प्रणीतेति श्रुतं प्रो०अनन्तलालठाकुरमहाशयस्य मधुसूदन-न्यायाचार्यस्मारकवक्तृतायाम् । वृत्तेरस्याः हस्तलेखस्योपलब्धौ यत्नो विधेयः ।

(७) **अन्वीक्षानयतत्त्वबोधना**म्नी वृत्तिस्तु प्रसिद्धपाण्डित्येन **वर्धमानो-पाध्यायेन** ख्रीष्टीयचतुर्दशशतकीयेन प्रणीता सर्वांशतो नोपलभ्यते । पञ्चमा-ध्यायमात्रं तस्याः, प्रयागस्थगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठतः विदुषा के० रघुनाथन् शुभोदयेन सम्पाद्य प्रकाशितम् । त्रिसूत्र्यास्तु वृत्तिरिह संस्थायां विद्यते त्वरितमेव प्रकाशयिष्यते च । बहुलोऽस्यांशस्तु लुप्त एव विद्यते । अस्य समुल्लेखस्तु द्वितीयवाचस्पतिमिश्रेण न्यायतत्त्वालोके, रामभद्रसार्वभौमेन न्यायरहस्ये च विहित इत्यस्य ख्यातौ नास्ति सन्देहः ।

(८) व्योमवतीकृतातिप्राचीनेन **व्योमशिवाचार्येण** न्यायसूत्राणामपि वृत्तिर्विरचितेति श्रूयते गुरुपरम्परया। परमस्याः सन्धानं न प्राप्यते कुत्रापि।

(९) ख्रीष्टीयपञ्चदशशतकीयेन मैथिलेन द्वितीयवाचस्पतिमिश्रेण प्राच्यनव्ययोः न्यायसम्प्रदाययोः सिद्धान्तानां विवेचनपद्धतीनां सारसङ्कलनात्मिका **न्यायतत्त्वालोका**भिधाना प्रौढतमा वृत्तिः प्रणीता।

अत्र चिन्तामणेः प्रभावः स्फुटं परिलक्ष्यते। तात्पर्यटीकातत्परिशुद्धिप्रकाशेभ्योऽपि यथायथं समाहृता विषया इति, प्राच्यनव्यन्याययोः सेतुबन्धकर्मणि स्वकीयां दक्षतां प्रकटयति ग्रन्थकारः। नव्यन्यायं कल्पनाप्रसूतमपि, विकल्पजालैर्निवेशप्रवेशैश्चाच्छन्नमपि, विषयताविषयिताप्रकारताप्रकारितावच्छेदकतावच्छेद्यतादिपारिभाषिकपदैः संकीर्णमपि, मूलेन प्राचीनन्यायेन सूत्रपरम्परया वा सर्वथा दृढं संबद्धमिति प्रदर्शयितुमिह ग्रन्थकृतो यत्नः साफल्यमवापेति दृष्टमस्माभिः। बहून् प्राचीनान् नैयायिकान् तरणिमिश्र न्यायभास्करकृत्न्यायलोचनकारवटेश्वरप्रभृतीन् निर्दिशत्यत्र वृत्तिकृत् मङ्गलवादमुक्तिवाद-विधिवादादींश्च विवेचयति नव्यन्यायविषयान् सूत्रवृत्तिव्याजेन।

अस्याः अपूर्णाः मातृकाः वाराणस्यां सरस्वतीभवनपुस्तकालये, लण्डननगरे भारतकार्यालयग्रन्थागारे, काठमाण्डूनगरे राष्ट्रियाभिलेखालये चोपलभ्यन्ते। आसां सर्वासां सङ्कलनेन ग्रन्थः परिपूर्णतामेति।

(१०) अस्मिन्नेव पञ्चदशतमे शतके दीधितिकारस्य **रघुनाथशिरोमणे**र्मातामहेन धर्मशास्त्रे लब्धप्रतिष्ठेन महामहोपाध्याय**शूलपाणिभट्टाचार्येण** न्यायदर्शनस्य पञ्चमाध्यायगतानि सूत्राण्यधिकृत्य **वृत्तिः** प्राणैषीति प्रो० श्रीअनन्तलालठाकुरमहाशयः मधुसूदनन्यायाचार्यस्मारकवक्तृतायामगादीत्।

(११) अत्रैव वक्तृतायां संलपितं यत् ख्रीष्टीय षोडशशतकीयः **श्रीमान्**नामा कश्चिन्न्यायवित् वल्लालसेनस्य समसामयिकः नैयायिकवरेण्यप्रगल्भ-

मिश्रपुत्रस्य बलभद्रमिश्रस्य गुरुः **न्यायसूत्राणां वृत्तिं** प्रणीतवानिति । **पर**मिदानीं मातृकागारेष्वपि नोपलभ्यते वृत्तिरियम् ।

(१२) **पुण्डरीकाक्षविद्यासागरस्य कृतिर्न्यायसूत्राणां वृत्तिरासीदिति** श्रूयते । यतो हि ईश्वरवादमधिकृत्य **गौतमीयसूत्रप्रकाशे**ऽस्य मतं सनामग्राहमुल्लिखितम् । किन्तु कृतेऽपि यत्ने नोपलभ्यते वृत्तिरस्येति मन्ये कालकवलिताभूत् । न्यायतत्त्वालोकेऽप्यस्मिन्नस्येश्वरवादविषयकविचारो नाम निर्देशेन विना समुद्धृतोऽस्ति ।

(१३) **जानकीनाथभट्टाचार्यचूडामणे**र्न्यायसिद्धान्तमञ्जरीकर्तु**रान्वीक्षिकीतत्त्वविवरणं** नाम न्यायसूत्रवृत्तिः प्रसिद्धास्ति विद्वत्सु । अस्याः मातृका वाराणस्यां सरस्वतीभवनपुस्तकालये विद्यते । पञ्चमाध्यायमात्रस्यैवेयं वृत्तिरिति विमर्शकाः संलपन्ति । डा० प्रबालकुमारसेनमहाशयोऽस्याः प्रकाशनाय कलकत्ताविश्वविद्यालयतः प्रयतते ।

(१४) अस्यैव तनूजन्मनः **रामभद्रसार्वभौमस्य न्यायरहस्या**भिधा वृत्तिरपि विचारबहुला सूत्रपाठावधारणे तत्परा च वर्तते । चतुर्थाध्यायपर्यन्तस्यैवेयं वृत्तिरुपलभ्यते । उपर्युक्त एव विद्वद्वरेण्योऽस्या अपि प्रकाशनाय यतमानोऽस्ति । विश्वनाथसिद्धान्तपञ्चाननस्य प्रसिद्धतमायां वृत्तावितः विषयाः समाहृता इति विमर्शकाः कथयन्ति ।

(१५) वासुदेवसार्वभौमस्य पौत्रेण शाण्डिल्यसूत्रभाष्यप्रणयनप्रसिद्धेन **स्वप्नेश्वरेण न्यायतत्त्वनिकषा**भिधा वृत्तिः प्रणीतेति दिनेशचन्द्र भट्टाचार्यमहाशयः वङ्गे नव्यन्यायचर्चा नाम्नि ग्रन्थे निर्दिशति । नेयं वृत्तिरुपलभ्यते ।

(१६) एवं **मथुरानाथभट्टाचार्यस्य** चिन्तामणेर्दीधितेश्च स्वातन्त्र्येणव्याख्यातु**र्गौतमसूत्रवृत्ति**रप्यासीदिति विमर्शका अभिदधति । किन्तु खेदस्य विषयोऽयं यदियं मातृकास्वपि नोपलभ्यते ।

(१७) सोदरपुरकटकामूलकेन शाण्डिल्यगोत्रेण मैथिलेन विश्वधरात्मजेन **केशवमिश्रतर्काचार्येण** प्रणीता न्यायसूत्रवृत्तिः **गौतमीयसूत्र**-

प्रकाशाभिधाना प्रयागस्थगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठतः दशवर्षेभ्यः प्राक् प्रकाशिता। अत्र तात्पर्यपरिशुद्ध्योर्भाव आहृतः। अयं हि वृत्तिकृत् सूत्रपाठं प्रकरणं चाधिकृत्य नितरां जागरूकोऽध्यायान्ते पद्येन प्रकरणसंख्यां प्रकरणगतसूत्रसंख्यामध्यायगतां सूत्रसंख्यां च निर्दिशति । द्वाविंशत्यधिकानि पञ्च शतानि सूत्राणि स्वीकृतान्यनेन । न्यायसूचीनिबन्धे तु अष्टाविंशत्यधिकानि पञ्चशतानि सूत्राणि संख्यातानि सन्ति । बहूनां प्राचीननैयायिकानां जयन्तन्यायभास्करकारन्यायलोचनकारतरणिमिश्रविद्यासागरसानातनिप्रभृतीनामिह समुल्लेखोऽस्ति। स्वकीये कृती तर्कताण्डवनिर्वाणमहावर्णनामिके समुद्धृते । स्वकीयां वृत्तिमधिकृत्यात्र प्रारम्भ एव भणितमनेन—

> आस्ते यद्यपि पूर्वपण्डितकृता व्याख्यैव संख्यावता-
> मानन्दाय तथापि केशवकवेर्वाचामियं गुम्फना।
> व्याख्यासौष्ठवशब्दलाघवमिथःसम्बन्धपूर्वापर-
> प्रत्यर्थप्रतिबद्धनिर्मलगुणा कुत्रान्यतो लभ्यताम् ।। इति ।

(१८) विद्यानिवासभट्टाचार्यतनूजन्मनो विश्वनाथसिद्धान्तपञ्चाननस्य न्यायसूत्रवृत्तिश्चिरादेव प्रकाशिता प्रचारिता च विश्वस्मिन्नपि विश्वे विद्वद्भिः समादृता विद्यते। अत्रापि सूत्रपाठमधिकृत्य कश्चन मतभेदोऽवलोक्यते, नायं न्यायसूचीनिबन्धे बद्धादर इति दृष्टम् । किन्तु संक्षिप्तापि व्याख्या सारबहुला संप्रदायसंरक्षणपरा च विद्यते।

(१९) मितभाषिणी नाम्नी न्यायसूत्रवृत्तिः महादेवभट्टाचार्येण प्रणीता वाराणस्यां काशिराजपुस्तकालये विद्यत इति विद्वद्वरेण्यः आर तङ्गास्वामी स्वकीयदर्शनमञ्जर्यां निगदति। अयं हि वागीश्वरभागिरथ्योः पुत्रः स्वयं प्रकाशतीर्थस्यान्तेवासी ख्रीष्टीयसप्तदशशतकीयः।

(२०) नवद्वीपनिकटस्थशान्तिपुरवासिनो ख्रीष्टीयाष्टादशशतकभवस्य नैयायिकवरेण्यस्य राधामोहनगोस्वामिनः न्यायसूत्रविवरणं पञ्चाशत्वर्षेभ्यः

प्राक् प्रकाशितमपीदानीं दुर्लभदर्शनं सञ्जातम् । नवीनशैल्या प्रणीतायामस्यां वृत्तौ सूत्राणां पाठभेदः संख्याभेदश्च दृश्येते । 'तत्त्वं तु वादरायणादिति' न्यायदर्शने चतुर्थाध्यायस्यान्तिमं सूत्रमित्यत्रैव केवलं प्रतिपादितम् । सूत्रमिदं सावतरणं निर्दिष्टमप्यत्र पूर्ववर्तिभिः पश्चाद्भवैर्वा नैयायिकैर्नाङ्गीकृतम् ।

(२१) प्रसिद्धपाण्डित्यस्य गोकुलनाथोपाध्यायस्य भागिनेयेन शिष्येण च ख्रीष्टोयाष्टादशशतकभवेन चक्षुष्मता मैथिलनैयायिकेन **वंशधरोपाध्यायेन न्यायतत्त्वपरीक्षा**नाम्नी न्यायसूत्रवृत्तिः प्राणैषि । अस्याः खण्डिते मातृके दरभंगास्थितयोः कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयमिथिलासंस्कृत-शोधसंस्थानयोः समुपलभ्येते । उभयोः सम्मेलनेन ग्रन्थः परिपूर्णो भवतीत्यस्य सम्पादनप्रकाशनयोर्धीधनैर्दत्तावधानैर्भाव्यम् ।

(२२) अज्ञातपरिचयेन दक्षिणभारतप्रान्तोयेन **भट्टवागीश्वरेण न्याय-तात्पर्यदीपिका** नाम्नी न्यायसूत्रवृत्तिः प्रणीता प्रयागस्थगङ्गानाथझा केन्द्रीयसंस्कृतविद्यापीठेन प्रकाशिता । अत्र भाष्यवाक्यान्यपि कानिचन सूत्रतया परिगृहीतानि सन्ति । अत एव सूत्रपाठविधौ नास्य प्रामाणिकत्वं वर्तते । वृत्तिरियं भाष्यवार्त्तिकयोः सारमाहृत्य प्रणीतेति स्वयं लेखकोऽभिल-पति प्रथमाध्यायस्योपक्रमोपसंहारपद्ययोः ।

अन्वीक्ष्यानुपदं भाष्यमप्यनुक्रम्य वार्त्तिकम् ।
न्यायसूत्रार्थतात्पर्यदीपिकेयं विधास्यते ।।

× × ×

इति प्रमाणादिपदार्थसार्थनिर्देश उद्देशपुरःसरोऽयम् ।
समर्थितः सम्प्रति तत्परीक्षां प्रचक्ष्महे वार्त्तिकसूत्रनेत्राः ।। इति ।

(२३) चान्द्रोपत्रिकायाः नव्यन्यायविवेचनायाः प्रणेता पूर्ववङ्गस्य इदिलपुरग्रामाभिजनश्चन्द्रनारायणभट्टाचार्यः न्यायसूत्राणामपि वृत्ति

व्यरचयदिति श्रूयते। न चोपलभ्यते वृत्तिरियम्। पण्डितराधाकृष्णशास्त्रि-कृतायां मातृकासूच्यां वृत्तिरियं नयनपथातिथिर्भवति, गौडविद्वत्सु च जनश्रुतिरस्याः विद्यते।

(२४) **शब्दशक्तिप्रकाशिकायाः व्याख्यात्रा कृष्णकान्तविद्यावागीशेन गौतमसूत्रसन्दीपनी** नाम्नी न्यायसूत्रवृत्तिरारचितेति न्यायपरिचयभूमिकायां म० म० फणिभूषणतर्कवागीशचरणोऽभिलपति। किन्तु नास्याः संकेतोऽन्यत्र विद्यते।

(२५) शक्तिवादव्याख्यातृतया लब्धप्रतिष्ठेन न्यायभाष्यस्य प्रथमतः वङ्गभाषायामनुवादकेन **हरिनाथभट्टाचार्येण** एकोनविंशतितमशताब्दोत्तरार्धभवेन प्रणीतायाः न्यायसूत्रवृत्तेर्नामैव श्रूयते न चोपलभ्यते कुत्रापीयम्।

(२६-२७) एवं यदुरामसार्वभौमस्य राखालदासन्यायरत्नस्य च गुरोर्भट्टपल्लि[भाटापाड़ा]निवासिनः एकोनविंशतितमशताब्दस्यान्तिमे चरणे विद्यमानस्य **हलधरचूडामणेः शिवरामभट्टाचार्यस्य** च **न्यायसूत्रवृत्ती** आस्तामिति श्रूयते। न चैते मातृकागारेष्वपि सन्दृश्येते।

(२८) वङ्गाभिजनेनैकोनविंशतितमख्रीष्टाब्दस्यान्तिमे चरणेऽवस्थितेन **अन्नदाचरणतर्कचूडामणिना कौमुदीनाम्नी** न्यायसूत्रवृत्तिः प्रणीता न वाद्यावधि प्रकाशमागता। अस्याः मातृकोपलब्ध्यै यत्नो विधेयः। वाराणसीमागत्य कालं यापयताऽनेन पुस्तकानि बहूनि विरचितानि धर्माचरणेषु च मनः सलग्नमकारि। अनेन न्यायसूत्रसाराभिधः पृथगपि ग्रन्थः प्रणीत इति श्रूयते। अमुमधिकृत्य 'काशी की पाण्डित्य परम्परा' नाम्नि पुस्तके आचार्य बलदेवोपाध्यायेन विवरणं पर्याप्तं प्रदत्तमिति दृश्यते।

विंशतितम्यामस्यां शताब्द्यामपि न्यायसूत्रवृत्तीनां प्रणयनं सञ्जातम्। आसु काश्चन प्रकाशमागता अपि दृश्यन्ते।

(२९) **आशुतोषतर्कभूषणेन** कृता **न्यायसूत्रवृत्तिः** कलकत्तानगर्यां प्रकाशिता।

(३०) हरप्रसादस्वामिना कृता वैदिकवृत्तिनाम्ना प्रथिता न्यायसूत्र वृत्तिः बम्बई नगर्यां प्रकाशितेति आर तङ्गास्वामी दर्शनमञ्जर्यां निगदति ।

(३१) हरिदत्तशर्मणा प्रणीता तत्त्वसुधालहरी नाम्नी वृत्तिर्न्याय-सूत्राणां लाहौरनगरतः प्रकाशितास्ति ।

(३२) मैथिलश्रोत्रियकुलभूषणेन विश्रुतयशसा महामहोपाध्यायेन **बालकृष्णमिश्रेण** प्रणीता तात्पर्यविवृतिनाम्नी अपूर्णा न्यायसूत्रवृत्तिः वाराणस्यां प्रकाशिता विराजते ।

(३३) पदवाक्यरत्नाकरव्याख्यात्रा दार्शनिकशङ्करमिश्रस्य वंशधरेण यदुनाथमिश्रेण प्रणीता न्यायसूत्रवृत्तिस्तदीयगृहे तत्पुत्रेण परिरक्ष्यत इति उपर्युक्तग्रन्थव्याख्यासम्पादकेन तद्ग्रन्थभूमिकायामसूचि ।

(३४) निम्बार्कमतानुगामिना मुकुन्ददासेन कृता काचन न्यायसूत्रवृत्तिः अवधमातृकासूच्यामुल्लिखिता ।

(३५) प्रवादकनाम्ना कृता न्यायसूत्राणां वृत्तिस्त्रिवेन्द्रम् मातृकागारे समुपलभ्यते ।

(३६) अम्बाप्रसादशास्त्रिणा कृता न्यायसूत्रवृत्तिः चौखम्बासंस्कृत-ग्रन्थमालायाः वाराणसीतः प्रकाशितास्ति ।

(३७) कैलासचन्द्रभट्टाचार्येण प्रणीता न्यायभाष्यार्थसंग्राहिका नाम्नी न्यायसूत्रवृत्तिः वङ्गाभिजनेषु प्रसिद्धा न चोपलभ्यते ।

(३८) यादवानन्देन कृता रत्नामालाख्या न्यायसूत्रवृत्तिः बड़ोदा-मातृकागारे समुपलभ्यते ।

(३९) गोलोकनाथभट्टाचार्यस्य पौत्रेण हरिनाथभट्टाचार्यस्य पुत्रेण सर्वेश्वरसार्वभौमेन प्रणीता गौतमसूत्रटीका आसीदिति दिनेशचन्द्रभट्टाचार्य महाशयः वङ्गे नव्यन्यायचर्चा नाम्नि पुस्तकेऽभिलपति । स्वल्पायुषोऽस्य कृतिरपि नाजायत कालजयिनीति खेदस्य स्थानम् ।

इह निर्दिष्टास्वेकोनचत्वारिंशन्मितासु न्यायसूत्रवृत्तिषु द्वादशमिता एव वृत्तयः सन्ति प्रकाशिताः। यासु पञ्च वृत्तयो मैथिलनैयायिकैरुदयनाचार्यवर्धमानोपाध्यायद्वितीयवाचस्पतिमिश्रकेशवमिश्रतर्काचार्यमहामहोपाध्यायबालकृष्णमिश्रमहाभागैर्निर्मितास्तिस्रः गौडाभिजनैर्विश्वनाथसिद्धान्तपञ्चाननराधामोहनगोस्वामिभट्टाचार्याशुतोषभट्टाचार्यमहाशयैः प्रणीताश्चतस्रस्तु दक्षिणपश्चिमप्रान्तभवैर्विपश्चिद्भिर्विरचिताः विद्यन्ते। अत्रापि विचाराणां गाम्भीर्येण वैपुल्येन वातिशेते द्वितीयवाचस्पतिमिश्रस्य कृतिर्न्यायतत्त्वालोकाभिधाना प्रौढतमा वृत्तिर्न्यायसूत्राणाम्।

षोडशमितास्तु वृत्तयो मातृकास्वेवोपलभ्यन्ते यासु द्वे वृत्ती जानकीनाथ भट्टाचार्यस्य न्यायतत्त्वविवरणं, तदीयतनूजन्मनः रामभद्रसार्वभौमस्य न्यायरहस्यं च कलकत्ताविश्वविद्यालयस्य दर्शनशास्त्राध्यापकेन डा॰ प्रबलकुमार सेनमहोदयेन सम्पाद्येते प्रकाश्येते चेति श्रुतम्। एकादशवृत्तयस्तु केवलं नाम्नैव सन्ति परिचिताः ग्रन्थान्तरेषूद्धरणतया लब्धास्तित्वप्रामाण्याः।

एवं न्यायसूत्रवृत्तिकृत्सु द्वाविंशतिमिताः न्यायविदः गौडाभिजनाः, दशमैथिलाः सप्त चान्यप्रान्तभवाः विद्यन्ते।

सर्वासामुपलब्धवृत्तीनां सामीक्षिकं तुलनात्मकं चाध्ययनमपेक्ष्यते, येनानुसन्धानस्य प्रगतिर्भवेत्। सूत्रपाठनिर्णये, प्रकरणनिर्धारणे, विचाराणां साम्यवैषम्यावधारणादौ च प्रकाशपातेन सह सम्प्रदायानां परिज्ञानं निश्चितं स्यात्।

यथा सनातनधर्मावलम्बिनो जनाः स्वकीयं कुलाचारजातं वैदिकाभ्यां मन्त्रकर्मभ्यां संयोज्यात्मगौरवं सन्तोषञ्चानुभवन्ति तथैव नव्यन्यायविवेचनप्रकर्षबहुलेऽपि काले ख्रीष्टीयषोडशादिशतकेषु नव्यन्यायपद्धतौ प्रवीणा अपि नैयायिकाः न्यायसूत्राणां वृत्तिप्रणयनेनात्मप्रतिष्ठाममन्यन्त इति स्फुटमवगम्यते।

फलतः न्यायदर्शनस्य द्वे अपि व्याख्याधारे निरन्तरं वृद्धिमेवावापतुरिति दृष्टम्।

( ४ )

यद्यपि प्रकरणसंग्रहग्रन्थयोरपि प्रणयनं निरन्तरमेव कृतं नैयायिकमूर्धन्यैस्तथाप्यत्र व्याख्याग्रन्थानामापेक्षिकं बाहुल्यं वयमुपलभामहे। अत्रापि केचन ग्रन्था लुप्ता इतस्ततः प्रतिपक्षिणां ग्रन्थेषु समुद्धृताः सन्त आत्मपरिचयं लभन्ते, केचन पुनरधिकं विख्याताः व्याख्यातृभिः कृतविशदस्वरूपाः विराजन्त इति। तद्यथा मिथिलाभिजनस्य वृद्धवाचस्पतिमिश्रगुरोस्त्रिलोचनाचार्यस्य श्रूयते न्यायमञ्जरी। न्यायकणिकाप्रारम्भे पद्यमेकममुमधिकृत्य वाचस्पतिमिश्रस्य विद्यते—

अज्ञानतिमिरशमनीं परदमनीं न्यायमञ्जरीं रुचिराम्।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमो गुरवे॥

न चेयमुपलभ्यते न्यायमञ्जरी। समुपलभ्यते पुनरन्या न्यायमञ्जरी महानैयायिकस्य काश्मीराभिजनस्य जयन्तभट्टस्य। अस्यास्तु भाष्यानुगामिता ग्रन्थकृता स्वयमेव ग्रन्थोपसंहारे प्रतिपादिता—

इत्येवं सूत्रकारानुगममनुसरतानुज्झता भाष्यभूमिम्
स्थाने स्थाने परेषां मतमतुलगति क्षिण्वता तार्किकाणाम्।
काञ्चिद् वाक्यार्थचर्चामपि विरचयतानुक्रमेणावतीर्णा
निर्णीताः स्वे निबन्धे निपुणमिह मया षोडशैते पदार्थाः॥

एवमुदयनाचार्यस्य त्रयः समुपलभ्यन्ते प्रकरणग्रन्थाः—आत्मतत्त्वविवेकः, न्यायकुसुमाञ्जलिर्लक्षणमाला चेति। शशधरस्य न्यायसिद्धान्तदीपः, मणिकण्ठस्य न्यायरत्नं, भासर्वज्ञाचार्यस्य न्यायसारः, वरदराजस्य तार्किकरक्षा, रघुनाथशिरोमणेः पदार्थमण्डनम्, केशवमिश्रस्य तर्कभाषा, जगदीशतर्कालङ्कारस्य शब्दशक्तिप्रकाशिका, हरिराम भट्टाचार्यस्य मुक्तिवादादिः, जानकीनाथभट्टाचार्यचूडामणेर्न्यायसिद्धान्तमञ्जरी, महेश झा शर्मणस्तर्कप्रदीपश्च विशेषेणात्रोल्लेखमर्हन्ति। सर्वे चैते प्रकरणसंग्रहग्रन्थाः व्याख्योपव्याख्यादिभिर्विभूषिताः प्रचारप्रसारयोर्विद्यमानाः प्रसिद्धिं गता इति नाविदित

( २६ )

तज्ज्ञानाम् । खण्डनखण्डखाद्यं वेदान्तप्रतिपादकमपि नैयायिकैः स्वकीय पाठ्यतया परिगृहीतं व्याख्यादिभिः सनाथीकृतञ्चेति न्यायस्यैव प्रकरणग्रन्थ इत्यस्माकं मतिः ।

प्रतिपाद्यविशेषमभिलक्ष्य प्रकरणसंग्रहग्रन्थयोः पार्थक्यं विद्वद्भिः स्वीकृतम् । प्रकरणग्रन्थे कस्यचिदेकस्य शास्त्रीयविषयस्य साङ्गोपाङ्गविवेचनं भवति । संग्रहग्रन्थे पुनः कृत्स्नस्य शास्त्रीयप्रतिपाद्यजातस्य सारसङ्कलनं सञ्जायते । तथा चानयोर्लक्षणमेवं शास्त्रेष्वभिहितम्—

**शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।**
**आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ।।**
**विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।**
**निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ।। इति ।**

( ५ )

मिथिलायामतिप्रसिद्धं नाम वाचस्पतिरितीदं बहुल्येन चिरादेवोपलभ्यते । तेष्वनेके कृतविद्याः सन्त यशोभाजोऽप्यभूवन्निति दृष्टम् । यथा वृद्धवाचस्पतिमिश्रः विविधदर्शनव्याख्याकृत् भामत्याः प्रणेता न्यायदर्शने 'तात्पर्याचार्य' विरुदेन सम्मानितोऽस्ति । अपरश्चास्माकमभिप्रेतो न्यायतत्त्वालोकस्य प्रणेताभिनवद्वितीयनवीनादिविशेषणविशिष्टः । तृतीयः पुनः पनिचोभमूलकस्य राजनमिश्रस्यौरसः, शूद्राचारविवेकग्रन्थप्रणेतुः म० म० गोंढिमिश्रस्य वैमात्रेयः, नवीनवाचस्पतिमिश्रस्य कनीयान् समसामयिकस्तदीयपुत्रसमवयस्कः । चतुर्थस्तु प्रसिद्धनैयायिकस्य यज्ञपतेः पितृव्यपुत्रः काश्यपगोत्रीयः माण्डररजौरामूलकः दूखड़िनाम्ना विख्यातः काव्यप्रदीपकृतः गोविन्दठक्कुरस्य श्वसुरः काव्यादिकौमुदीकर्तुर्देवनाथठक्कुरस्य कण्टकोद्धारकृतः मधुसूदनठक्कुरस्य च मातामहः, परमयं झोपाह्वः । पञ्चमः सर्वस्मादर्वाचीनः प्रसिद्धदार्शनिकस्य शङ्करमिश्रस्य प्रपौत्रोऽर्जुनमिश्रतनूजन्मनश्चक्रपाणिमिश्रस्य पुत्रः सोदरपुरसरिसवमूलकः शाण्डिल्यगोत्रीय इति पञ्जीप्रबन्ध-

विदाचार्यरमानाथझामहाशयः मैथिलीनिबन्धे स्वदेशपत्रिकायां (वर्ष, अङ्क ३, मार्च ४८ ई०) प्रत्यपादयत् ।

यद्यपि न्यायतत्त्वालोककर्तारमभिनववाचस्पतिमिश्रमधिकृत्य मिथिलायां नव्यन्यायस्येतिहासनाम्नि पुस्तके डा० दिनेशचन्द्रभट्टाचार्यमहाशयः, विवाद-चिन्तामणिभूमिकायां म० म० उमेशमिश्रमहाभागः, धर्मशास्त्रस्येतिहासग्रन्थे भारतरत्नं डा० पी० वी० काणेमहाभागः, मिथिलायां धर्मशास्त्रमित्यत्र शोध-प्रबन्धे डा० जयदेव गाङ्गुलीमहोदयः, मिथिलायाः धर्मशास्त्रकारा इति निबन्धे मनमोहनचक्रवर्तिमहाशयश्च वैशद्येनात्मविचारान् प्राकाशयन्निति दृष्टमस्माभिस्तथापि तत एव सारमाहृत्यावसरसङ्गत्यात्रापि तदीयः परिचयः प्रस्तूयते ।

वंशे जातः कलुषरहिते कर्ममीमांसकाना-
मान्वीक्षिक्यां गुरुकरुणाया लब्धतत्त्वावबोधः ।
श्रीमान् वाचस्पतिरहमिह प्रीतये पुण्यभाजां
नत्वा नत्वा कमलनयनं कृत्यदीपं तनोमि ।।

पद्यमिदमदसीयं कर्ममीमांसकानामवदातकुले समुद्भवेनानेन पैतृकमृक्थमिव प्राप्तं मीमांसाशास्त्रे नैपुण्यमभिव्यनक्ति । गुरुमुखतोऽधिगता चान्वीक्षिकीति तु वाच्यमेवात्र । परं कोऽस्य विद्यागुरुरासीदिति परिज्ञातुं साधनं नास्ति । शिष्यस्त्वस्य उपायप्रकाशनामकव्याख्ययोः प्रणेतुर्भिन्नः दण्डविवेककारो वर्धमानोपाध्यायः स्वकृतौ शङ्करमिश्रेण साकममुमात्मगुरुतया सादर-मुल्लिखति । वत्सगोत्रीयस्य मैथिलश्रोत्रियस्य परिवारसमौलमूलकावदातकुल-सम्भूतस्य गिरिपतिमिश्रस्य तनूजन्मा तात्कालिकमिथिलाधिपस्य ओइनिवार-वंशीयस्य भैरवसिंहस्य धर्मपत्न्या पुरुषोत्तमदेवस्य जनन्या जयादेव्या लब्ध 'निखिलतन्त्रविदि'तिविरुदः प्रख्यातपाण्डित्यस्य तत्त्वचिन्तामण्यालोक-प्रणेतुः पक्षधरमिश्रस्य, विश्वविश्रुतस्य शङ्करमिश्रस्य च समसमयभवोऽथात् ख्रीष्टीयपञ्चदशशतकस्य पूर्वार्धकालिकः यौवन एव दशदार्शनिकग्रन्थानथ च

त्रिशद्धर्मशास्त्रीयग्रन्थान् प्रणीय विद्वन्मण्डलोषु स्वकीयं वैदुष्यं प्रातिष्ठिपत्। तथा च पितृभक्तिरङ्गिण्यामात्मकृतावयमुपसंहारेऽकथयत्—

शास्त्रे दश स्मृतौ त्रिशन्निबन्धाः येन यौवने।
निर्मितास्तेन चरमे वयस्येष विनिर्ममे[1] ।। इति।

इह धर्मदर्शनयोराचारविचारयोः यथाक्रमं स्मृतिशास्त्रपदाभ्यां पार्थक्यं प्रदर्श्योभयत्रात्मनो नैपुण्यं ध्वनयति ग्रन्थकृत्। यत उभाभ्यामेवैहिकं पारलौकिकञ्च श्रेयः प्रेयः पुरुषार्थं वा प्रसाधयितुं शक्यते। तस्मादुभयत्रैव मार्गः प्रदर्शितः स्वकीयेन कृतिजातेन पश्चाद्भवेषु लोकेष्विति बुधजनोचितं कर्मास्य ग्रन्थप्रणयनं प्रशंसामर्हति।

न केवलमन्तः साक्ष्यमेवास्य पाण्डित्यस्य प्रतिष्ठोपार्जनस्य चोपलभ्यते अपि तु बहिः साक्ष्यमप्यत्र सन्दृश्यते। तथा हि श्रीहर्षस्य दार्शनिकमहाकवेर्नैयायिकैस्सह बद्धवैरिताहिनकुलायमाना प्रसिद्धा। अतः खण्डनखण्डखाद्ये नैयायिकसम्मतस्य भेदस्य खण्डनं सविशदं तैः कृतिमिति न तिरोहितं विदुषामथ च पश्चाद्भवैर्नैयायिकैरपि तदीया युक्तयः सप्रमाणमपाकृता इत्यपि विदितमेव। तत्र नैयायिकेषु गङ्गेशोपाध्यायसुतः वर्धमानः, वाचस्पतिमिश्रोऽयं शङ्करमिश्रश्च प्रधाना आसन्। यद्यपि वर्धमानोपाध्यायस्य खण्डनोद्धाराभिधाना कृतिर्नोपलभ्यते मातृकायामपि, तथापि तदीयभेदसिद्धिमूलकविचारा यत्र तत्र विद्वद्भिः स्वकृतिषूद्धृताः। वाचस्पतिमिश्रस्यास्य खण्डनोद्धारः शङ्करमिश्रस्य भेदसिद्धिस्तु मुद्रापिते स्तः समुपलभ्येते च। पुनः गौडनैयायिकेषु मूर्धन्यः वासुदेवसार्वभौमभट्टाचार्यः दीधितिकृतो रघुनाथशिरोमणेर्गुरुरद्वैतवादं समर्थयन् अमू शङ्करवाचस्पती अध्यक्षिपदिति खण्डनभूषामणौ रघुनाथभट्टाचार्य उदधरत्—

वाचस्पतिशङ्करयोः गौतमकृतशास्त्रबुद्धिगर्वितयोः।
निर्वापयामि गर्वमेकं ब्रह्मास्त्रमादाय ।। इति।

---

१. एतदीय कृतिजातस्य नाम परिचयश्च हिस्ट्री ऑफ नव्यन्याय इन मिथिला नाम्नि पुस्तके प्रो० श्री दिनेशभट्टाचार्येण साधु विहितमिति, तत एवावसेयम्।

रघुनाथशिरोमणेर्दीधितिकृतोऽन्तेवासी कणादतर्कवागीशः व्याप्तिपूर्वपक्ष-प्रकरणेऽस्य वाचस्पतेर्मतमुद्धरति । पक्षधरनाम्ना प्रसिद्धो जयदेवमिश्रः स्वकीयालोके, गौडदेशीयः प्रसिद्धनैयायिकः प्रगल्भाचार्यश्च प्रामाण्यवादस्य द्वितीयविप्रतिपत्तिव्याख्यावसरे अस्यैव वाचस्पतिमिश्रस्य मतमुल्लिख्य निरस्यतस्तस्माद् गृहे मिथिलायां, बहिर्गौडदेशे चास्य कृतेः प्रसिद्धिः प्रचारश्च जीवनकाल एवाभूतामिति सिद्ध्यति । अस्य धर्मशास्त्रविचाराणामप्येवमेव प्रसिद्धिः प्रसारश्चावलोक्यते ।

फलितार्थस्तु तदानीं बङ्गमिथिलयोर्नैयायिकेषु शिखरारूढोऽयमासीदिति निश्चीयते । पञ्जीप्रबन्धे तु महाविदुषोऽस्य 'परमगुरु' विरुदं पश्यामः । इतः पूर्वं चिन्तामणिकारं गङ्गेशमन्तरा न कोऽपि तत्र परमगुरुपदवीमलभत ।

अस्य नाम्नि द्वितीयाभिनवनवीनधर्मशास्त्रकृदित्यादिविशेषणनिवेशस्तु भामतीव्याख्यातुस्तात्पर्याचार्यात् ख्रीष्टीयनवमशतकसम्भूतात् वाचस्पतिमिश्रादस्मिन् पार्थक्यं प्रदर्शयितुमेव । नाम्नि एकत्र वृद्धेत्यपरत्राभिनवेति नवीनद्वितीयेति वा निवेश्य पार्थक्येनोभौ मैथिलाः प्राथम्येनान्ये तु गतानुगतिकतया व्यवाहरन् । यदुक्तं मनमोहनचक्रवर्तिमहाशयेनामुमभिनववाचस्पतिमिश्रमधिकृत्य केशवमिश्रस्यायं पुत्रः लक्ष्मीदासस्य गणितचिन्तामणिप्रणेतुः पितोपमन्युगोत्रीयोऽयं मैथिलब्राह्मण इति, तत् सर्वथा भ्रान्तमेव । पञ्जीप्रबन्धविरोधात्, तत्र गिरिपतिमिश्रतनुजत्वं वत्सगोत्रत्वञ्चास्य स्फुटमभिहितमस्ति ।

परमविदुषोऽस्येष्टदेवता मन्ये भगवान् विष्णुरत एव प्राचुर्येण देव्याः समाराधनतत्पराणां शाक्तसाधकानां मैथिलानां कुले गृहीतजन्मापि परमवैष्णवोऽयं ग्रन्थादौ मङ्गलं समाचरन् श्रीकृष्णं लक्ष्मीपतिं स्तौति, काव्यवैदग्ध्यं चात्मनस्तत्र विद्योतयति । तथा हि मणिकण्ठप्रणीतस्य न्यायरत्नस्य प्रकाशव्याख्यां प्रारभमाणोऽयं मङ्गलाचरणे शृङ्गाराधिष्ठातारं श्रीकृष्णमेवं प्रार्थयते—

कनककमललक्ष्मीस्पर्धिराधाकुचाग्र-
ग्रथितनयनभृङ्गस्मेरवक्त्राम्बुजश्रीः ।
नवगगनतमालश्यामलामन्दगात्रः
क्षपयतु मम कर्म क्रूरमक्रूरमित्रः ॥
भावसोत्कलिककैटभद्विषो लोचनार्धपथमेत्य निर्वृताः ।
इन्दिरानयनपालिपङ्क्तयो ह्रीभरेण मसृणाः पुनन्तु नः ॥ इति ।

+ + +

आभीरदारकमुदञ्चित् किङ्किणीक-
माताम्रपाणिचरणं पुरुषं पुराणम् ।
मञ्जीरमञ्जुमरुणाधरमम्बुजाक्ष-
मद्वैतचिन्मयमनादिमनन्तमीडे ॥

इति कृत्यमहार्णवस्य मङ्गलश्लोकः ।

प्रकृतस्य न्यायतत्त्वालोकस्य मङ्गलाचरणेऽपि भगवन्तं श्रीकृष्णमेवासौ स्तौति । तथा हि—

शतपत्रजैत्रनेत्रं रमाकलत्रं त्रिशूलिनो मित्रम् ।
अभिनवनीरदगात्रं शतशः प्रणमामि देवकीपुत्रम् ॥
स्फुरद् विद्युल्लेखा रुचिरतरसम्भेदवपुषा
समाश्लिष्टो लक्ष्म्या नवजलधरश्यामलतनुः ।
मम प्रारब्धेऽस्मिन्नखिलभवदृश्वादिपुरुषः
शृणातु प्रत्यूहं सकलसहकृत्वो मधुरिपुः ॥ इति ।

( ६ )

इहेदानीमेतदीयं न्यायतत्त्वालोकमधिकृत्य किमपि विवरणात्मकं विषयपरिचयमुपस्थाप्यते । यतो हि नेदानीं यावदयं ग्रन्थः प्रकाशतामगच्छत् । मातृका अपि खण्डिता एव विदेशयोरेवोपलभ्यन्ते ।

न्यायसूत्राणां वृत्त्यात्मकोऽयं ग्रन्थो न्यायतत्त्वालोकरचयितुः प्रौढतमा कृतिरित्यत्र नास्ति कस्यापि संशयो विमतिर्वा । इह पदार्थाः प्रायशो नव्य-

न्यायपद्धत्या वैशद्येन विवेचिताः। अत एव प्रमाणप्रकरणे गङ्गेशस्य चिन्तामणेरथ च प्रमेयप्रकरणे तात्पर्यटीकापरिशुद्धिप्रकाशादीनां प्रभावोऽत्र स्पष्टं परिलक्ष्यते। तेभ्यः सारमाहृत्यैव मन्ये वृत्तिरियं प्रणीतास्ति। नव्यन्यायस्य प्रभावप्राचुर्यादेव द्वितीयाध्यायं यावत् प्रमाणपरीक्षाप्रकरणावधि यथा विचाराणां गाम्भीर्यं परिणाहो वा न तथोत्तरार्धे प्रमेयपरीक्षावसरे इति वयमत्र स्फुटं पश्यामः। बौद्धमीमांसकवैयाकरणादीनामात्मप्रतिकूलाः सिद्धान्ताः, नैयायिकेष्वपि सम्प्रदायबहिर्भूतानां मतानि सयुक्तिकमपाकृतनि स्वकीयसम्प्रदायसिद्धान्तास्तु युक्तिप्रमाणाभ्यां परिष्कृताः दृढीकृताश्च। फलतोऽन्वर्थसंज्ञकोऽयं ग्रन्थः सकलान्यपि न्यायदर्शनस्य तत्त्वानि सम्यगालोकयति। ग्रन्थकृद् दृष्ट्या मितेन वचसा[1] कृतव्याख्यानेऽप्यस्माकं समक्षं यावदुक्तोपपन्नः विचारसुन्दरो ग्रन्थोऽयं रचयितुः किमप्यपूर्वं वैदुष्यमर्थात् विविधशास्त्रपरिशीलनकौशलं प्रकाशयत्येव।

तथा हि प्रथमसूत्रव्याख्याने चिन्तामणिप्रभावात् मङ्गलवादः प्रामाण्यस्य परतस्त्वसिद्धिस्वतस्त्वनिराकृतौ, पूर्वपक्षतया भाट्टप्राभाकरयोरिह सिद्धान्तयोरुपपादनं, बौद्धाभिमतानां साकारवादनिराकारवादस्वलक्षणवादानामपाकरणम् विविधदर्शनानां पदार्थस्वरूपसंख्ययोर्निर्देशश्च सङ्गतिप्रदर्शनपूर्वकमालोचिताः। पुनरवयवोद्देश्यविचारावसरे कार्यः नियोगो वा विध्यर्थं इति गुरुमतं निरसितम्।

द्वितीयसूत्रव्याख्यायां ख्यातिवाद आलोचितः। परमतनिरसनपूर्वकं सविस्तरं सयुक्ति च सम्प्रदायानुमतान्यथाख्यातिरुपपादिता।

तृतीयसूत्रव्याख्यायां सूत्राशयं स्फुटयता प्राभाकरसम्मता शक्तिः सप्रमाणं निराकृता। तुर्यश्च प्रकारः संसर्गाभावस्य विशिष्टाभावात्मकः परिकल्पितः सम्प्रदायाननुकूलत्वं च वीक्ष्य पुनस्त्रैविध्यं संसर्गाभावस्य समर्थय-

---

१. तथाप्यतितनीयसि स्फुटपदार्थसार्थोदये।
ममाभिनवभाषिते बुधजनाः प्रदध्वं मनः॥ इति प्रारम्भिकोक्तिरस्य।

दिति दृष्टम् । तथा चेह सम्बद्धा पङ्क्तिः—'विशिष्टाभाव उत्पादविनाशधर्मा तुर्य एव संसर्गाभावः कार्यबलात् परिकल्प्यते विशेषणाद्यभावप्रत्यासत्तिकोऽत्यन्ताभाव एव वेति' (४५ पृ०) ।

चतुर्थसूत्रव्याख्यायां 'साक्षाद्धीः प्रत्यक्ष'मिति शालिकनाथमिश्रस्य प्रत्यक्षलक्षणमुपपाद्यापाकृतमथ च चिन्तामणिमतं वैशद्येनोपपादितम् । प्रत्यक्षस्य सविकल्पकनिर्विकल्पकप्रकारौ च तात्पर्याचार्यस्यावदानतया प्रसिद्धाविह विस्तरेण विमृष्टौ, समवायस्य प्रत्यक्षत्वमुपपादितम् । तथा चात्र तत्पङ्क्तिः—'विशेषणता (सन्निकर्षः) द्वेधा, इन्द्रियविशेषणता इन्द्रियसम्बद्धविशेषणता च । आद्या शब्दाभावग्रहे, अन्त्या समवायादिग्रहे हेतुः । इयञ्चेन्द्रियसंयुक्तविशेषणतादिभेदात् पञ्चधा । ज्ञानसामान्यलक्षणे अपि प्रत्यासत्ती अत्रैवान्तर्भूते' (पृ० ४६) । वृद्धवाचस्पतिमिश्रः विषयेन्द्रिययोः सन्निकर्षं लौकिकालौकिकभेदेन द्वेधा विभज्य लौकिकस्य तस्य षट्प्रकारानलौकिस्य च तस्य प्रकारत्रयं तात्पर्यटीकायामवर्णयत् । द्वितीयवाचस्पतिमिश्रस्त्वत्र तं सन्निकर्षं सप्तधा विभज्य तेषु विशेषणतानामकं सन्निकर्षं प्रकारद्वये विभजति । द्वितीयं च तत्प्रकारं पञ्चधा पुनर्विभजति यत्र ज्ञानसामान्यलक्षणयोरन्तर्भावः क्रियते इत्येतस्य वैशिष्टयम् । एवं वैशिष्ट्यं पदार्थान्तरमयमभ्युपगच्छति । न च वैशिष्ट्यस्यापि वैशिष्टयमित्यनवस्था शङ्क्या, तस्याः युक्त्या निराकरणात् । विषयोऽयं न्यायलीलावतीतोऽत्र समाहृत इति प्रतीयते, तत्रैतद्विचारस्य प्रमुखतया दर्शनात् । किरणावलीकन्दल्योः विचारेण प्रभावितोऽयं विद्यते । अतः कन्दलीमतमपाकुर्वन्नुदयनमतं तमः स्वरूपनिरूपणे स्वीकरोति । एवं तमसः स्वरूपमधिकृत्य नानामतानामुल्लेखं विधाय तस्य द्रव्यत्वनिरासः, अभावस्य पदार्थतासिद्धिरर्थादधिकरणस्वरूपत्वस्य मीमांसकाभिमतस्य निराकृतिरथ च भाट्टानुमतस्यानुपलब्धिप्रमाणगम्यत्वस्य तत्र निषेधः, चक्षुषः प्राप्यकारित्वम्, विशेषणोपलक्षणयोश्च स्वरूपनिरूपणावसरे चिन्तामणिविचारः साधु संगृहीताः यथायथं समीक्षिताश्च ।

पञ्चमसूत्रव्याख्यावसरेऽर्थादनुमानलक्षणसमये बौद्धदार्शनिकस्य धर्म-

कीर्तेर्मतमपाकृतम् । तादात्म्यतदुत्पत्त्यन्यतरप्रयुक्त एवाविनाभावो व्याप्तिरिति निरस्य सम्प्रदायानुमतं सहचारदर्शनं तन्मूलतया निर्दिष्टम् । व्याप्ति-लक्षणावसरे प्राभाकरमतमपि निरसनायैव पूर्वपक्षतयोपपाद्य सिद्धान्तरूपेण चिन्तामणेर्लक्षणमिहाभिहितम् ।

उपमानलक्षणसूत्रस्य व्याख्याने मीमांसकाभिमतस्य सादृश्यस्याऽतिरिक्तपदार्थतां निराकृत्य उपमानस्य स्वरूपविषये मीमांसकैः साकमात्मनो मतभेदः प्रदर्शितः ।

इन्द्रियलक्षणसूत्रे शक्यार्थप्रभेदस्य रूढेर्विवेचनं साधु विहितम् । अर्थलक्षणसूत्रस्य व्याख्याने गुणगुणिनोरभेदवादः बौद्धराद्धान्तः सयुक्तिकमपाकृतः । बुद्धिलक्षणसूत्रव्याख्याने सांख्यमतं निराकृतम् । मोक्षलक्षण-सूत्रव्याख्यावसरे नैयायिकवरेण्यस्य सोन्दलोपाध्यायस्य मुरारिमिश्रस्य सौगतानामेकदण्डस्यार्थाद् वेदान्तिनोऽन्येषां च मतानि निराकर्तुमेव समुद्धृतानि, स्वकीयोऽपि सिद्धान्तः प्रदर्शितः ।

संशयलक्षणसूत्रव्याख्यायामयं वार्तिकमनुगच्छन्नस्य त्रैविध्यमुपपादयति न तु भाष्याभिहितं तत्पाञ्चविध्यं स्वीकरोति । भाष्यस्य कथामपि नावतारयति । मन्येऽनभिमतं विषयमुपेक्षते । उपलब्ध्यनुपलब्ध्यव्यवस्थातश्चेति सूत्राक्षराणि नैव व्याख्यातानि । उद्योतकर इवायमपि उपलब्ध्याद्यव्यवस्थां संशयस्य साधारणमेव कारणं मनुते न तु प्रभेदकम् ।

दृष्टान्तोदाहरणयोः बहुधा साम्येऽपि किञ्चिद्वैषम्यमपि विद्यते। दृष्टान्तः विषयो भवति, उदाहरणं तु न्यायावयवः शब्दशोऽभिलप्यते । उभयोः पार्थक्यप्रदर्शनाय न्यायतत्त्वालोककृदभिदधाति—

'यद्यपि दृष्टान्तो नोदाहरणमशब्दत्वात् तथापि तद्विषयं वचनं तथेति द्रष्टव्यम् । न च दृष्टान्तवचनस्य सामयिकत्वादव्याप्तिः, उदाहरण-

जनितायां अपि व्याप्तिधियो दृष्टान्तं विना प्रचलत्वात्तदप्रचलत्वसिद्धये तस्यावश्यकत्वात् । (द्र० १२६ पृ०)

कर्म त्रिविधं भवति सञ्चितं सञ्चीयमानं प्रारब्धफलकञ्चेति । कर्मवादे ज्ञानाग्निना द्विविधयोः कर्मणोर्नाशेऽपि प्रारब्धफलकस्य कर्मणो भोगादेव क्षय इति सिद्धान्तः । अनुग्रहवादे तु भक्त्या प्रपत्त्याराधनया वा जाते सति देवतानुग्रहे सर्वविधान्यपि कर्माणि क्षयं यान्तीति धारणागमिकानाम् ।

अत्रापवर्गसूत्रव्याख्यायां न्यायतत्त्वालोककृत् किमपि संशोधनमभिलपति, यदिष्टदेवताराधनेनापि तत्त्वज्ञानमेव सञ्जायते, पुनः कायव्यूहमासाद्य प्रारब्धकर्मणां भोगं कृत्वैवापवर्गं लभते कश्चिदिति । तस्मादिष्टदेवतानुग्रहस्यापि फलं तत्त्वज्ञानमेवेति । (द्र० १०७ पृ०)

हेतोस्त्रैविध्यमन्वयव्यतिरेकी केवलव्यतिरेकी केवलान्वयी चेति प्रसिद्धम् । अयं व्याख्यानस्य कौशलं प्रदर्शयन् कथयति—हेतुर्द्वेधा अन्वयिव्यतिरेकिभेदात् । अन्वय्यपि द्वेधा केवलान्वयी अकेवलान्वयी च । व्यतिरेक्यपि द्वेधा केवलव्यतिरेकी अकेवलव्यतिरेकी चेति । द्वितीयचतुर्थाभ्यामन्वयव्यतिरेकी निष्पाद्यत इति । (द्र० पृ० १२३)

निगमनलक्षणसूत्रव्याख्याप्रसङ्गे उपनयसूत्रघटकयोस्तथा न तथेति पदयोस्थाल्प्रत्ययार्थः प्रकारः । अस्य च प्रकारस्य निरुक्त्यवसरे—

सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते ।
भेद एव प्रकाराख्यः कैश्चिदभ्युपगम्यते ।।

इति भर्तृहरिकारिकामुल्लिख्य निर्दिष्टाभ्यां भिन्नमेव विशेषार्थकं प्रकारमयमभ्युपैति । अत्रोपोद्बलकतया चालङ्कारिकाचार्यस्य भामहस्य वृत्तिमुद्धरति । प्रकारः सामान्यभेदको विशेष इति । अस्मिन्नेव प्रकरणे सर्वथाऽपरिचितमस्माकं लुप्तं च व्याकरणस्य भागवृत्तिनामानं ग्रन्थमुल्लिखति यत्रान्यतमधर्म एव प्रकार इति प्रतिपादितम् ।

तर्कलक्षणसूत्रव्याख्याने तर्कस्य लक्षणं प्रकारं च वैशद्येन विवेचयति। उत्पत्तिस्थितिज्ञप्तिषु सञ्जायते तर्कः, तस्य पाञ्चविध्यमात्माश्रयान्योन्याश्रयचक्रकानवस्थानिष्टप्रसङ्गश्चेति विस्तरेण प्रसाधितम्। अत्रापि चिन्तामणिचिन्तनप्रतिध्वनिः स्फुटमभिलक्ष्यते।

वादलक्षणसूत्रव्याख्याने चतुर्धा कथेति प्रौढगौडनैयायिकस्य सानातनेर्मतं समुद्धृत्य निराकृतं, त्रैविध्यं च सम्प्रदायसिद्धं कथायाः सयुक्तिकमुपपादितम्।

हेत्वाभासलक्षणसूत्रव्याख्याने खण्डनोद्धारकृतः वर्धमानोपाध्यायस्य मतमुद्धरति चिन्तामणिनिर्दिष्टं च तल्लक्षणं कण्ठतोऽभिदधाति—'अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति'।

प्रथमाध्यायस्योपसंहारे स्फुटमभिलपत्ययं—यत् षोडशापि पदार्था इहोद्दिष्टाः लक्षिताश्च। उक्तः फलाभिसंबन्धश्छलमोक्षौ च परीक्षिताविति। एवं द्वितीयाध्यायान्ते कथयति—

**उपदेशातिदेशाभ्यां पदार्थास्तु चतुर्दश।**
**परीक्षिता इहाध्याये प्रमेयच्छलभेदिनः॥** इति।

तृतीयाद्यध्यायान्ते नैवं किमपि पद्यं लिखितमुपलभ्यते। तस्मात् प्रमाणविचारे यादृशी रुचिर्व्याख्यातुरस्य न तथा प्रमेयादिविचार इति नव्यन्यायप्रभाव स्तस्मिन् प्रभवति।

द्वितीयाध्यायावतरण एवाष्टधा क्रमोऽत्र निर्दिष्टः। शाब्दः, आर्थः, पाठकः, स्थानिकः प्रावृत्तिकः, ऐच्छिकः, आङ्किकः, प्राधानिकश्चेति। अत्र श्रुत्यर्थपाठस्थानमुख्यप्रवृत्याख्यानकाश्च षडेव सन्ति मीमांसायां प्रसिद्धाः क्रमाः। ऐच्छिकाङ्किकौ द्वौ चेहाधिक्येन स्वीकृतौ। मूलमनयोरनुसन्धेयं तद्विद्भिः।

प्रमेया च तुलाप्रामाण्यवदिति (२।१।१६) सूत्रव्याख्यायां सम्यगालोचितो विभक्त्यर्थः। अत एव कर्तृत्वं कर्मत्वं करणत्वं सम्प्रदानत्वम-

पादानत्वमधिकरणत्वं सम्बन्धश्च साधु परिष्कृताः। धातूनां सकर्मकत्वा-कर्मकत्वनिर्णयोऽपि स्फुटं प्रदर्शितः।

**साध्यत्वादवयविनि सन्देहः** (२।१।३३)

इति सूत्रव्याख्याने चन्द्राचार्यानुमतं स्वत्वं निरूप्य तत्र पूर्वपक्षतयाष्टमं पदार्थ-त्वमाशङ्कितम् प्रमाणेन तन्निराकृतमपि।

विधिर्विधायक (२।१।६०) इति सूत्रव्याख्याने विस्तरेण मीमांसा-सिद्धान्तः विध्यर्थो विवेचितः।

आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्चेति सूत्रस्य (२।२।१) अथ च ते विभक्त्यन्ताः पदमिति सूत्रस्य च (२।२।५६) व्याख्याने वैयाकरणाभिमतः स्फोटवाद. विस्तरेणोपपाद्य सयुक्तिकमपाकृतः।

गङ्गेशोपाध्यायतः प्राचीनतमो नैयायिकः न्यायलोचनकारोऽल्पपरि-चितो विदुषामिहोल्लिखितस्तन्मतं चोपपादितम्।

व्यक्त्याकृतिजातयस्तु पदार्थं इति (२।२।६४) सूत्रव्याख्यायां समस्त एव शब्दखण्डविचारः सविशदमुपस्थापितः। अत एवान्विताभिधानाभिहिता-न्वयवादावनूद्य निराकृतौ, वैयाकरणस्य समासशक्तिवादो मीमांसकस्य-जातिशक्तिवादश्चापाकृतौ।

वृत्ताविह स्थलत्रये विद्यते ग्रन्थपातः मङ्गल-विचारावसरे प्रथमतः ग्रन्थपातः (पृ० ५) नवम्यां पङ्क्तौ सम्भवति। यतो हि विप्रतिपत्तिस्वरूपं खण्डनीयप्रथमद्वितीयतृतीयकल्पानां च स्वरूपमिह नैव पश्यामः। पञ्चमा-ध्यायान्ते तत्प्रारम्भे च स्फुटं ग्रन्थपातः। २।१।४०-४१ सूत्रयोरन्तराले अप्रासङ्गिकीं वार्तां विद्याविद्ययोर्विवरणस्वरूपां सविस्तरां सविशदां च पश्यामः। मन्ये मूलग्रन्थे पृथक् पत्रे लिखितस्य क्रोडपत्रात्मकविचारस्य प्रतिलिपिकृता प्रमादादिह संग्रहः कृतः।

एकस्यामेव मातृकायां २।२।१२ तमसूत्रस्य व्याख्यानद्वयमिहो पलब्धम्। ३।१।१८ तमसूत्रस्य वृत्तिरपि मातृकाद्वये प्रकारद्वयं भजति।

मदीयमतिमान्द्यादेकस्या व्याख्यायाः प्रामाणिकत्वनिश्चयायासमर्थेन मया द्वावपि पाठौ समाविष्टाविह । कतरः पाठः साधीयानित्यत्र पाठकाः विद्वांस एव प्रमाणम् ।

ग्रन्थकृदिह वृत्तिप्रणयनव्याजेन यथायथं प्राचीनन्यायेन सह नव्य-न्यायस्य सामञ्जस्यं समन्वयं स्थापयति । अत एवात्र नव्यन्यायस्य विचार-प्रौढिं प्राचीनन्यायस्य सिद्धान्तसंग्रहञ्च साधु विहितवान् ग्रन्थकृत् । शास्त्र'या-स्यैतदेव शास्त्रीयं महत्त्वं यत्सत्यपि बहुपल्लवने व्याख्यादिभिस्तन्मूलस्याप्य-भिषिञ्चनं वृत्तिप्रणयनव्याजेन तदा विहितं यदा नव्यन्यायस्यासीच्चरम उत्कर्ष इति ।

तथा हि ४।१।१० सूत्रवृत्तौ क्त्वाप्रत्ययार्थमादाय स्वातन्त्र्येण शब्द खण्डविचारः, ४।१।४३ सूत्रवृत्तौ भेदसिद्धयै युक्तिप्रमाणाभ्यां प्रयासः। ४।२।२३ सूत्रवृत्तौ बौद्धानामाक्षेपपरिहारपूर्वकं परमाणोः सिद्धिः, ४।२।४३। सूत्रवृत्तौ मोक्षोपायमधिकृत्य च विचारस्य गाम्भीर्यमिह लोचनगोचरतां यान्ति ।

ईश्वरवादविचारावसरे तात्पर्याचार्यमयमनुगच्छति, वार्त्तिकमतं तस्माद् भिन्नं न हि स्पृशत्यपि । पश्चान्नव्यमतेनापि तत्प्रकरणस्थानि सूत्राणि विवृतानि । यन्मतं विद्यासागरस्येति केशवमिश्रस्य गौतमीयसूत्रप्रकाशतोऽ-वगम्यते । स्फुटमेवं सम्पूर्णेष्वपि ग्रन्थेषु यथावसरं विचारपल्लवनं विद्यत एवेति दिक् प्रदर्शितम् ।

इह समुद्धृतेषु ग्रन्थकृत्सु न्यायचार्येषु च प्रमुखास्तावत् तात्पर्याचार्यः वृद्धावचस्पतिमिश्रः, जयन्तभट्टः, आचार्यः (उदयनाचार्यः) रत्नकोषकार-स्तरणिमिश्रो, न्यायभास्करकृत्, न्यायलोचनकारः, शिवादित्यमिश्रः, सोन्द-लोपाध्यायः,. सानातनिः, चिन्तामणिकृत् (गङ्गेशोपाध्यायः), मुरारिमिश्रः, चिन्तामणेर्दर्पणकृत् वटेश्वरोपाध्यायः, वामनः, भर्तृहरिः, स्वायम्भुवः सुबन्धुः, दिङ्नागः, धर्मकीर्तिः, प्रज्ञाकरः, माध्यमिकः, वैभाषिकोऽन्ये च । एतेषां मतानीह स्वमतोपाद्वलनार्थं तन्निराकरणार्थं वा समुद्धृतानि ।

वृत्तिकृदिह सूत्राण्यधिकृत्य विचारस्वातन्त्र्यं पुष्णाति नानुगच्छति न्यायसूचीनिबन्धमिति वीक्ष्यात्र प्रथमपरिशिष्टे न्यायसूत्रपाठसमीक्षा प्रस्तुता । परिशिष्टेऽस्मिन्नुपस्थापितेन विचारेण स्फुटमवगन्तुं शक्यते वृद्धवाचस्पतिमिश्रप्रणीतस्य न्यायसूचीनिबन्धस्यानुव्रजनं वृत्तिकृद्भिर्न कृत-मिति । किन्तु म० म० फणिभूषणतर्कवागीशमहाशयः म० म० गङ्गानाथझा महाशयश्च न्यायसूचीनिबन्धं सर्वथानुगच्छतः । मैथिलानां सूत्रपाठः यदि न्यायतत्त्वालोकान्वीक्षानयतत्त्वबोधगौतमीयसूत्रप्रकाशन्यायतत्त्वपरीक्षादिभि र्मैथिलनैयायिकप्रणीताभिर्वृत्तिभिरवधारयितुं शक्यस्तर्हि दाक्षिणात्यानां सूत्रपाठः चन्निभट्टकृततार्किकरक्षाव्याख्यातो न्यायतात्पर्यदीपिकातोऽवधारयितुं शक्यः । अत्र यथामति यथोपलब्धसाधनेन विषयप्रवर्तनं परिशिष्टेऽस्मिन् कृतं विदुषां ध्यानाकर्षणाय । द्वितीये परिशिष्टे वृत्ताविह निसर्गतः समा-गतानां पारिभाषिकपदलक्षणानां वर्णानुक्रमेण संग्रहः कृतः । तृतीयचतुर्थ-पञ्चमषष्ठपरिशिष्टेषु ग्रन्थान्तराणामुद्धरणानि, न्यायसूत्राणां वर्णानुक्रमणी, समुद्धृतानां ग्रन्थानां ग्रन्थकाराणां च सूची, विशिष्टशब्दसूची च यथायथं समावेशिताः । अवश्यमेतानि परिशिष्टानि शोधरतानां जिज्ञासूनां साधारण-पाठकानां चोपकाराय भवेयुः ।

मदीयमतिमान्द्यादनवधानात् कार्यान्तरव्यासङ्गाद्वा मुद्रणाशुद्धिर्यत्र तत्र सञ्जातेति शुद्धिपत्रं प्रदत्तं तदवलोकनीयं सुधीभिः पाठकैरिति सप्रश्रयं विनिवेदयामि । क्षन्तव्यश्चैष जनो यतो हि अत्रैव ग्रन्थारम्भे ग्रन्थकृता-भिहितं—'को न मुह्यति वचः पथे चरन्' ।

( ७ )

इदानीमस्याः वृत्तेः न्यायतत्त्वालोकाख्यायाः मातृकापरिचयः प्रस्तूयते ।

एका मातृका कागजाधारे वङ्गाक्षरे लिखिता १८२ पत्रमिता तृतीया-ध्यायद्वितीयाह्निकस्य द्विचत्वारिंशत्तमसूत्रव्याख्यापर्यन्ता भारतकार्यालय-पुस्तकालये [इण्डिया ऑफिस लाइब्रेरी] लण्डन नगरे सुरक्षितास्ति । प्रति-पत्रमिह दशैकादश वा पंक्तयो विलसन्ति प्रतिपंक्ति च षट्चत्वारिंशदक्षराणि ।

१ पत्रतः १२० तमपत्रं यावत् स्थूलाक्षरेषु दशपंक्तिषु लिखितम्, १२१ तम पत्रतः १२६ तमपत्रं यावत् सूक्ष्माक्षरेषु लिखितम्, पुनः १२७ तः १८१ तम पत्रं यावत् यथायथं दशैकादशपंक्तिषु स्थूलाक्षरेषु लिखितम् । तस्मान्मन्येऽनेकैः प्रतिलिपिकारैरियं मातृका लेखयित्वा सुरक्षिता । अत्र १६४ पत्राणि यावदादितो द्वितीयाध्यायान्ता वृत्तिर्यथाक्रममविच्छिन्ना प्रचलति । १६७-६८ पत्रयोर्विकीर्णतास्ति । यथामति तत्र सूत्रानुसारं व्यवस्था विहिता । १६५ पत्रतः १८१ पत्रं यावत् तृतीयाध्यायस्यादित आरभ्य द्वितीयाह्निकस्य द्विचत्वारिंशत्तमसूत्राणां वृत्तिर्विद्यते । आकृतेरस्या ज्ञानं नास्ति मम । एतस्याः माइक्रो फिल्मरूपेण संग्रहं विधाय मया स्वकीयं कार्यं प्रसाधितम् । नास्त्यत्र प्रतिलिपिकारस्य प्रतिलिपिकालस्य वा संकेतः, ग्रन्थस्यापूर्णत्वात् मध्ये खण्डितत्वाच्च । तत्रत्यमातृकासूच्यामस्याः मातृकासंख्या आइ० ओ० एल० २०५, इगलिङ् १८६८ इति लिखितास्ति । मुखपृष्ठे च नागरीलिपौ न्यायतत्त्वालोकः ६००० इति लिखितमस्ति ।

द्वितीया मातृका नेपालदेशस्य काठमाण्डूनगरे राष्ट्रियाभिलेखालये समुपलब्धा । इयं १२७ पत्रमिता तृतीयाध्यायस्यारम्भतः पञ्चमाध्यायस्योपान्त्यं यावत् सूत्राणां वृत्तिरत्र वर्तते । इयं मातृका ५०७ मिते लक्ष्मणसंवत्सरे भीठीग्रामे [मधुवनीजनपदस्यानतिदूरे मिथिलायां] करणठक्कुरहरिशङ्करेणार्थादितन्नामकसम्पन्नकायस्थेन तालपत्रेषु मैथिलीलिपौ लिखिता । मतानुज्ञालक्षणान्तेयं विद्यते, पञ्चमाध्यायस्योपसंहारभागोऽत्र नास्ति । वैशाखस्य सोमवासरः पौर्णमासीतिथिश्चेह समुपल्लिखिते स्तः । अस्या विवरणमेवं तत्रत्य सूचीपत्रे मातृकामुखपृष्ठे च प्रदत्तम्—१-१११३, विभागसंख्या ३३, पत्रसंख्या १२७ [३४+५५+३८] न्यायतत्त्वालोकः, न्यायदर्शनम् अभिनववाचस्पतिमिश्रप्रणीतम् । प्रतिपत्रं पञ्चपंक्तयः प्रतिपंक्ति सप्तत्यक्षराणि चात्र विराजन्ते । वेष्टनसंख्या ए, ५६५ इति विवृतं तत्राथ चाकृतिः ३६.६ × ४.६ इति निर्दिष्टा पञ्चसप्तत्यधिकशतत्रयं यावत् प्राक् काले लिखितैषा मातृका यतो ह्यधुना ८८२ लक्ष्मण संवत् प्रचलति ।

तृतीया मातृकैतावन्मात्रसामग्रीका नवतिपत्रमिता तालपत्रेषु मैथिलाक्षरे लिखिता पूर्वतन्या मातृकायाः पञ्चाशद्वर्षज्येष्ठा मधुवनीजनपदस्यैवापरस्यां दिशि किञ्चिद्दूरे काकोग्रामे केनचित् कायस्थेन लिखिता काठमाण्डूनगरस्य तस्मिन्नेवाभिलेखागारे सुरक्षितास्ति ।

चतुर्थीमातृकाप्रतिलिपिः प्रथमाध्यायमात्रपर्याप्ता खण्डिता च मध्यान्तयोस्तत्रापि, सौभाग्याद् गुरुप्रसादाद् वा आसादिता मया । राजसाही-महाविद्यालयस्य संस्कृतप्राध्यापकेन नैयायिकमूर्धन्येन मातृकाध्ययनव्रतिना प्रत्नविदा प्रो० दिनेशचन्द्रभट्टाचार्येण वाराणसेयसरस्वतीभवनमातृकातः स्वयं प्रतिलिपिः कृतेयम् । प्रतिलिपिरियमादितः नवमपत्रं यावदुपलभ्यते पुनः ५३ पत्रतः ८३ पत्रं यावदस्ति । प्रथमखण्डे प्रथमसूत्रवृत्तिर्मध्ये त्रुटयति द्वितीयखण्डस्तु दशमसूत्रतः द्वितीयाह्निकस्य द्वितीयसूत्रमध्यं यावत्प्रचलति । शताब्दया अस्याश्चत्वारिंशत्तमे वर्षे तेन महाभागेन प्रतिलिपिः स्वयं कृतेति तदीयं हस्ताक्षरं नाम च साक्ष्यं भजतः । सरस्वतीभवनमातृकासंख्या तत्प्रतिलिपिमुखपृष्ठे १४ न्यायवैशेषिक इति उल्लिखितास्ति । अस्मिन्नुपरते मातृकेयं कलिकातास्थसंस्कृतपुस्तकभण्डार सञ्चालकस्य प० श्रीश्यामाप्रसाद भट्टाचार्यस्य हस्तगताभूत् । तेनास्माकं गुरुचरणेभ्यः सदुपयोगाय प्रदत्ता, एते च सत्प्रेरणया सह मह्यं प्रादुरित्यस्या इतिवृत्तम् । अत्र ग्रन्थे टिप्पण्या वाराणसी मातृकया दिनेशभट्टाचार्यमातृकया च पृ० १५, १४५, अस्या एव परिग्रहः कार्यः । प्रमादान्नामद्वयेन निर्देशः ।

अस्य न्यायतत्त्वालोकस्य सम्पादनप्रकाशनयोर्लालसां मयि वीक्ष्य गुरुचरणाः प्रो० श्री अनन्तलालठाकुरमहाभागा मामत्र प्रेरयामासुः । पुनश्चास्माकं कल्याणमित्रैः विद्वद्वरेण्यैः डा० गयाचरणत्रिपाठिमहाभागैः विद्यापीठस्यास्य प्राचार्यैः साकमस्य ग्रन्थस्य सम्पादनप्रकाशनयोजनामधि कृत्य कृतायां वार्तायां एतैरपि द्विगुणितोत्साहेन संवर्धितोऽहं प्रवृत्तो यस्याः मम-प्रवृत्तेरद्य साफल्येन सहावसानं वीक्ष्याहं वाग्देवीचरणकमलौ स्मारं स्मारं तत्र सभक्ति प्रणतः नितरां प्रसन्नोऽस्मि । तस्या अनुग्रहेण विना नैतादृशस्य

ग्रन्थस्य सम्पादनगौरवं कोऽपि लब्धुमर्हति । गुरुचरणाः प्रो० ठाकुरमहाभागा अवश्यमस्य प्रकाशितं स्वरूपं वीक्ष्य प्रसन्नाः सन्तः शुभाशीर्वादपटीयांसश्च मयि भवेयुरिति मनसि वर्तते विश्वासः ।

प्राचीनग्रन्थानां सम्पादनप्रकाशनयोः सततं संलग्नाः पुण्यश्लोका महामहोपाध्याय डा० गङ्गानाथझा महाभागाः दिवि विद्यमाना अपि शुभाशीराशिभिर्मामनुग्रहीष्यन्तीति विद्यते मम विश्वासः । यतो हि तेषामपि मनोऽनुकूलमिदं कर्मत्यस्यास्मात् विद्यापीठात् प्रकाशनमपि किमप्यनितरसाधारणमौचित्यं बिभर्ति । एतैः साकं मयि ज्ञानदीपस्य प्रज्वालकानपि गुरुचरणान् प्रति सभक्ति प्रणतोऽहं तान् सर्वान् मनसा सभाजयामि स्मरामि च यैः यथाकथञ्चिदप्युपकृतोऽस्मीति ।

सर्वासां मातृकाणां संग्रहे समुपयोगे चासाधारणं साहाय्यमाचरतां विद्यापीठस्यास्य प्राचार्यमहाभागानां विपश्चिदपश्चिमानां भृशमधमर्णः सन्नहं तदीयां हार्दिकीं कृतज्ञतां सनति सहर्षञ्च विज्ञापयामि ।

स्मराम्यहमत्र प्राशासनिकीं विविधविधां बाधां काठमाण्डूयात्रायां समुपस्थितां कथमेते चातुर्येण सहापाकुर्वन्निति, कथञ्चाहं कृतार्थ आत्मसंकल्पसिद्धौ सफलश्चाभवमिति । विशेषज्ञैः साकं विमर्शार्थं मयि सदौदार्यमावहन्तः मदीयां प्रार्थनां स्वीकृत्य समपेक्षितं धनराशिमवकाशं च यथासमयं प्रदाय मामुत्साहितवन्त इत्यहमेतेषां गुणमुग्धतां व्रजामि कल्याणं च कामये भगवद्भ्यः परमेश्वरेभ्यः ।

सन्त्यत्र संस्मरणीयाः काठमाण्डूकार्यालयाधिकारिणः, लण्डननगरीय भारतकार्यालयपुस्तकालयाध्यक्षाः, दिवङ्गताः दिनेशभट्टाचार्यमहाभागाः, श्यामापदभट्टाचार्यः, येषां प्रत्यक्षं परोक्षं वोपकारो लब्धो मया । विद्यापीठस्य प्राध्यापकः डा० बनमाली विस्वाल, डा० रामकिशोरझा, शोधच्छात्रौ श्रीचन्द्र शेखरतिवारी श्री रामनारायण दूबे च ममास्मिन्ननुष्ठाने यथासमयं प्रूफ संशोधनपरिशिष्टनिर्माणादिकर्मणि साहाय्यमाचरन् यथाशक्तीति ममाशीर्वाद-

भाजनानि भवन्ति । सुहृद् पण्डितश्रीजीवेश्वरझा मातृकासंग्रहाध्यक्षोऽपि धन्यवादपात्रं मम भवति माइक्रोफिल्म सुलभं कर्तुं सदोद्यतः । शाकुन्तल-मुद्रणाधिकारी श्री उपेन्द्र त्रिपाठी धैर्येण मम संशोधनं स्वीकृत्य मुद्रापितवान् ग्रन्थमिममिति ममाशीर्वादभाजनं विद्यते । अन्ते विविधविधास्त्रुटयः सन्त्यत्र विद्यमाना इति जानन्नहं विदुषां समक्षं क्षमां याचे । अस्यैव ग्रन्थकृतः पद्यं स्मरामि च—

यथाकथञ्चिदिह किञ्चिदवद्यं
स्यात् क्वचित्तदभिदोषकरं च ।
संसरतपुरुषतामनतीतः
को न मुह्यति वचःपथे चरन् ।।

इति

प्रयागः, पूर्णिमा मार्गशीर्षस्य
१९९१ ई०

विदुषामाश्रवः
**किशोरनाथ झा शर्मा**

द्वितीयवाचस्पतिमिश्रप्रणीतः

# न्यायतत्त्वालोकः

## [ मङ्गलाचरणम् ]

ओं नमो भगवते वासुदेवाय

**शतपत्रजैत्रनेत्रं रमाकलत्रं त्रिशूलिनो मित्रम् ।**
**अभिनवनीरदगात्रं शतशः प्रणमामि देवकीपुत्रम् ॥१॥**

**स्फुरद् विद्युल्लेखारुचिरतरसम्भेदवपुषा**
**समाश्लिष्टो लक्ष्म्या नवजलधरश्यामलतनुः ।**
**मम प्रारब्धेऽस्मिन्नखिलभवदश्वादिपुरुषः ।**
**श्रृणातु प्रत्यूहं सकलसहकृत्वो मधुरिपुः ॥२॥**

**[1]यद्प्यतिपटीयसी जयति सा *चतुर्ग्रन्थिका*[2]**
**तथा यदपि *भास्करो*[3] यदपि [4]*तत्त्वबोधो*ऽधिकः ।**
**तथाप्यतितनीयसि स्फुटपदार्थसार्थोदये**
**ममाभिनवभाषिते बुधजनाः प्रदध्वं मनः ॥३॥**

---

१. 'यदप्यति' इत्यस्य स्थाने 'यद्यपि' इति पाठः मातृकायां वर्तते ।

२. न्यायभाष्यवार्त्तिकतात्पर्यटीकापरिशुद्धिरूपाश्चत्वारो ग्रन्थाः चतुर्ग्रन्थिकापदेनेह व्यवहृताः ।

३. भास्कराचार्यस्य न्यायभास्करो नाम ग्रन्थः तदानीं प्रसिद्धोऽतिप्रौढश्चाधुना लोपं गतः ।

४. तत्त्वबोधेन अन्वीक्षानयतत्त्वबोधस्य ग्रहणं वर्धमानप्रणीतस्य । अस्मादेव विद्यापीठात् प्रकाशितः पञ्चमोऽध्यायोऽस्य त्रिसूत्रीप्रकरणमारम्भिकं प्रकाशयिष्यते चेति संकल्पः ।

धीरसंगममवाप्य मादृशै-
रल्पधीभिरपि यन्निबध्यते ।
तन्न चित्रमतिमञ्जुपटीरे
काननेऽप्यसुरभिः सुरभिर्यत् ॥४॥

यत्कथञ्चिदिह किञ्चिदवद्यं
स्यात् क्वचित्तदभिदोषकरं च ।
संसरत् पुरुषतामनतीतः
को न मुह्यति वचः पथे चरन् ॥५॥

## [ अवतरणम् ]

अथात्राऽऽत्मा वा[ रे ]द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयी'त्यादि [ बृ० उ० २।४।५। ] श्रुत्यात्मविषयकप्रतिपत्तिचतुष्टय[1]स्येष्टसाधनत्वे बोधिते, इष्टाकाङ्क्षायां च'[न] स पुनरावर्तते' [ निरालम्बोपनिषद् ३३ ] इत्यर्थवादेनापुनरावृत्तेर्मोक्षस्योपस्थितौ, यथोक्तप्रतिपत्तिचतुष्टयस्य[1] विध्यर्थवादैकवाक्यतया मोक्षसाधनतावगमे, मोक्षमाणप्रवृत्तिप्राप्तौ, श्रवणमननयोर्नानोपायसंभवे, सकलानुष्ठानाशक्यतयाविनिगमे चानध्यवसायात् प्रवृत्तिविष्टम्भे, तदध्यवसायार्थं—

'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि'[रिति

गुणविधिना वेदानुमानयोस्तदुपायत्वविधानाद्, 'अथ स होवाच एतद्वै तदक्षरं गार्गि ! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्ग[मरसमगन्धमचक्षुष्कमश्रोत्र]मस्पर्शमवागमनोऽतेजस्कमप्राणममुखमनामागोत्रमजर-

---

१. श्रवणं मननं निदिध्यासनं साक्षात्कारश्चेति प्रतिपत्तिचतुष्टयं भामती प्रसिद्धम् ।

ममरमभयममृतमरजोऽशब्दमप्रवृतमयममात्रमृतमपूर्णमनपरमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नोति कश्चनेत्यादि [बृ० उ० ३।८।८] श्रुतिभ्यः सत्यात्मश्रवणे विधिबोधितद्वितीयप्रतिपत्तये निरञ्जनत्वादिश्रुतिसंजाताश्रद्धामलक्षालनाय च मननार्थानुसरणे इतरभिन्नात्मानुमितेर्व्याप्तिपक्षधर्मतासम्वेदनसाध्यत्वेऽपि, तस्यात्र प्रावादुक प्रवादनिरासक्षमात्मपञ्चावयवसाध्यतया साङ्गोपाङ्गं न्यायस्वरूप निरूपणाय षोडशपदार्थव्युत्पादनप्राप्तौ, तत्रापि षोडशपदार्थनिरूपणस्य निरस्तसमस्तदोषानुषङ्गस्वस्वलक्षणसाध्यतया लक्षणदोषनिरासस्य च लक्षणमन्तरेणासंभवितया लक्षणस्य च धर्मिज्ञानसाध्यस्य तत्साधकोद्देशसाध्यतया उद्देशलक्षणपरीक्षात्मकप्रवृत्तित्रित्वे व्यवस्थिते यथोक्तहेतुहेतुमद्भावसङ्गत्या उद्देशलक्षणपरीक्षाणां पौर्वापर्ये सिद्धे इति निग्रहस्थानविपाकलक्षणानामभ्यर्हिततमप्रमाणादिपरीक्षाविषयकशिष्यबुभुत्सौत्कट्येन प्रतिबन्धे अथ तत्पर्याप्तावसरतः करणादर्थतश्चरमभाव इति सर्वमभिसन्धाय दुःखपङ्कमग्नान् संसारिण उद्दिधीर्षन्नक्षपादो महामुनिस्तदुपशमस्य परम्परोपायभूतामान्वीक्षिकीं प्रणिनाय ।

## [ मङ्गलवादः ]

तत्राविगीता[त]लौकिकशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमपि प्रारीप्सितसमाप्तावुभयप्रत्यूहपरिपन्थिमङ्गलं स्वतःसिद्धविघ्नवैधूर्य [वता] भगवता न व्यधायि वैयर्थ्यात् । विहितमपि वा न न्यबन्धि । न ह्युपनिबन्धोऽपि तत्र तन्त्रमिति तत एव ।

ननु प्रारीप्सितसमाप्तावुभयतो[1] व्यभिचारात् फलान्तरस्य चाभावादकारणतयैव न कृतमिति चेन्न । अन्वयव्यभिचारो हि न कारणतापरिपन्थी, कारणमात्रोच्छेदापत्तेः । व्यतिरेकव्यभिचारोऽपि

१. °तमप्राप्ताव्° इति मातृकायां लभ्यते ।

सन्दिग्धः, प्रमत्ताद्यनुष्ठितसमाप्तावपि प्राग्भवीयमङ्गलस्यैव कारणत्वसंभवात्।

तथा च मङ्गलस्य समाप्तिरूपेष्टसाधनतामवगमयन्ती श्रुतिस्तु व्यभिचारसंशयेन प्रतिबध्यते। तत्संशयोऽपि योग्यतासंशयमादाय, शाब्दधीसामग्रीसत्त्वात्। तदुक्तमागममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषायेति। तच्चेदमारब्धकर्माङ्गं कर्मार्थितया शिष्टैः [ सतत् ]पूर्वं क्रियमाणत्वात् दर्शे प्रयाजवत्।

ननु विघ्नसंशये तन्नाशार्थिनः प्रवृत्तिरेव न स्यादिति चेन्न, समाप्त्यर्थिन एव तत्र प्रवृत्तेः। द्वारसंशयश्च न प्रवृत्तिप्रतिबन्धकः, प्रवृत्तिमात्रोच्छेदापत्तेः। भाविन्यर्थे प्रमाणाभावात्।

ननु दुरितमधिकारिविशेषणमिति तत्संशये कथं प्रवृत्तिर्वैदिकाधिकारनिश्चयादेव प्रवृत्तेरिति चेन्न। प्रधानाधिकारिण एवाङ्गेऽधिकारात्। प्रधाने च कर्मणि तत्समाप्तिकामनाधिकारिविशेषणम्। सा तु निश्चितैव।

नन्विदं निर्विघ्नं परिसमाप्यतामिति कामनाश्रवणात् कथं ध्वंसनीयसंशये तद्ध्वंसार्थिनः प्रवृत्तिरिति चेत् सत्यम्। अस्तु तावदेवं, तथापि शङ्कितानिष्टवारणार्थमपि प्रवर्तन्ते परीक्षकाः। प्रवृत्तिविषयोपायताज्ञानस्यैव प्रवर्तकत्वात्।

नन्वेवं मङ्गलस्य दुरितध्वंसकरणकसमाप्तिकामनाकार्यत्वे स्वतः सिद्धदुरिताभाववतो मङ्गलाकरणे नित्यवदनुष्ठानं शिष्टानां भज्येतेति चेत् न, अविघ्नज्ञानवतामेव नित्यवदनुष्ठानादिति *सम्प्रदायः*।

*अन्ये* तु मङ्गलं प्रधानम् अदृष्टद्वारा प्रारब्धसमाप्तिः, फलं कारीरीवत्। न च प्रधानत्वेऽन्यथापि करणप्रसङ्गः, नियतकालीनशिष्टाचारेन फलवत् कर्मारीप्समानस्तत्समाप्तिकामो मङ्गलमाचरेदित्यनुमितश्रुत्या तस्यारम्भसमवाय [समय] एव कर्तव्यताबोधनाद् दर्शारम्भ आरम्भणीयवदित्याहुः।

*अपरे* तु मङ्गलं प्रधानमेव । किन्तु तस्यारब्धनिर्वाहकत्वं विघ्नसंसर्गाभावद्वारा, तथैव प्रतिबन्धकाभावस्य कारणत्वात् । स चाभावः सतो विघ्नस्य ध्वंसोऽनागतस्यानुत्पादः । विघ्नकारणनाश-मुखेन तत्प्रागभावस्यापि साध्यत्वात् । यदधीनमग्रिमकाले यस्य सत्त्वं तदेव तज्जन्यं न तु प्रागसत्त्वे सति, गौरवात् । तावति समये विघ्ना-नुत्पादश्च न साक्षान्मङ्गलजन्य इत्यदृष्टद्वारा तथा । एवञ्च ध्वस्त-विघ्नेनापि कृतं मङ्गलं सफलमेव । तत्रापि विघ्नप्रागभावजननादित्या-हुरितरे ।

अत्र पूर्वपक्षः । [1]न तावदाद्यः । प्रमत्ताद्यनुष्ठितस्थले व्यभि-चारात् । अकारणत्वे मङ्गलस्य श्रुत्यापि तत्कारणत्वस्य बोधयितु-मशक्यत्वात् । न च तत्रापि [2]प्राग्भवीयम्, जन्मान्तरीयग्रन्थादिक-मुद्दिश्य शिष्टैस्तदकरणात् । न चैहिकबाधे जन्मान्तरीयमेव फलं स्यात् पुत्रेष्टिवदिति वाच्यम् । तत्र हि ऐहिकासाधारणं पुत्रमात्रं फल-माह श्रुतिः । अत्र च प्रत्यक्षा श्रुतिर्नास्त्येव किन्तु आचारानुमेया । आचारश्च प्रारीप्सितसमाप्तिकामनयेति । श्रुतिरपि प्रारीप्सितसमाप्ति कामो गणेशं स्तुवीतेत्यादिकानुमेया । तथा च न जन्मान्तरीयफल-सम्भावनापि । तस्मात् समाप्तौ फले व्यभिचारान्न तदङ्गम् । अत एव न द्वितीयोऽपि ।। दृष्टेनैवोपपत्तावदृष्टकल्पनायां प्रमाणाभावात् । विहितप्रधानजन्यातिशयत्वान्मङ्गलजन्यादृष्टस्यापि कीर्तनाद्यविनाश्यि-तस्य सहकारिग्रामादीपकतया फलावश्यंभावापत्तेश्चेति । अत एव [न] तृतीयोऽपि, विघ्नानुत्पादस्य व्यापारत्वे मानाभावाच्च । न च संसर्गतावत्त्वेन हेतुत्वात् तथा । अत्यन्ताभावस्यापि व्यापारत्वापत्ते-रिति ।

---

१. अत्र पूर्वपक्षे विप्रतिपत्तिवाक्यमनवलोक्य ग्रन्थपातस्य संशयो भवति । यतो हि खण्डनीयानामाद्यद्वितीयतृतीयकल्पानां स्वरूपस्यादर्शनम् ।

२. प्रागुत्तरीयम् इति पाठः ।

अत्र *चिन्तामणिकृतः* प्रारब्धे समाप्तौ मङ्गलं नाङ्गम्, न वा प्रधानम्, अहेतुत्वात्। किन्तु विघ्नध्वंसोऽस्य फलम्। तत्र चैतत् प्रधानमेव। इह कर्मणि विघ्नो मे मा भूदिति कामनया शिष्टाचारात्। इदं मे निर्विघ्नं समाप्यतामिति कामनयापि तदनुष्ठानेन 'अगृहीतविशेषण' न्यायेन अहं स्वर्गी स्यामित्यत्र स्वर्ग इव विघ्नाभाव एव फलं विशेष्यस्य मङ्गलासाध्यत्वात्। अतो नान्वयव्यभिचारस्तत्रापि विघ्नध्वंसोत्पादात् समाप्त्यभावस्तु प्राचीनविघ्नभूयस्त्वात् मङ्गलानन्तरोत्पन्नविघ्नात् लोकावगतकारणाभावाद् वा। एवं व्यतिरेकव्यभिचारोऽपि न। समाप्तौ मङ्गलस्याकारणत्वात्। तद्धेतोश्च दुरितसंसर्गाभावस्य तत्रापि सत्वात्। तदेकदेशस्थदुरितध्वंसो मङ्गलजन्यः। स च न मङ्गलं विनेति न तत्र फलेन मङ्गलस्य व्यभिचारः।

न च विघ्नात्यन्ताभावसम्भावनया तीर्थिकस्यापि मङ्गलाननुष्ठानापत्तिः। तथापि तत्सत्त्वशङ्कामादाय मङ्गलाचरणात्। शङ्कितानिष्टवारणार्थमपि प्रामाणिकप्रवृत्तिदर्शनात्। अन्यथानुपस्थितपरिपन्थिभिः पार्थिवैर्द्विरदयूथपतयो नाद्रियेरन्। यावद्विघ्नशंकं तदाचरणाध्यवसायोऽपि।

मङ्गलत्वं तु विघ्नान्यत्वे सति विघ्नोत्सारणासाधारणकारणत्वम्। गङ्गास्नानादि तु न फलं, तस्य स्वर्गादिजनकत्वेन साधारण्यात्। शिष्टस्तात्पर्यविषये सकलवेदप्रामाण्याभ्युपगन्ता। तदाचारश्च वेदानिषिद्धो लौकिकान्यश्च स्वमूलवेदानुमाने लिङ्गम्। अतो नानु [भान] परम्परा। एवं मङ्गलवत् कारीर्यपि प्रत्यग्रावग्रहविघातमात्रफला न तु वृष्टिफला व्यभिचारादेव। न च वैजात्यादेव न व्यभिचारः, अन्योन्याश्रयात्। वैजात्यमादाय कारणत्वं तदादाय च वैजात्यमिति।

न चादौ वृष्टिनिष्ठकार्यतानिरूपितकारणतावच्छेदकत्वमेव गृह्यते। अत्र च न व्यभिचारः परिपन्थी, तृणारण्यादिवत्। न च तद्

क्षणार्थं वैजात्यमेव कल्प्यत इति वाच्यम्। तत्र यथा वह्न्यभाववति स्तोमे वह्न्यन्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकशालित्वाद् वह्नौ तृणस्य कारणत्वं गृह्यते तथात्र ग्राहकस्य कस्यचिदप्यभावात् अन्वयव्यतिरेकयोरत्रासंभवात् विधेश्चेष्टसाधनताशकत्वादिति।

## [ अधिकारिनिर्णयः ]

तत्र शास्त्रस्य वचनरूपतया परार्थत्वात् विपा[क]स्य [विषयस्य] च[विषयविशेषा]नुपादानान्निर्दिष्टोपायानभिज्ञं जगदेवोद्देश्यम्।

ननु कथमेवं शूद्रादेरनधिकारात्। तथा हि 'तं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेनेत्यादि' [बृ० उ० ४।४।२२] श्रुत्या मोक्षजनिकानामात्मप्रतिपत्तीनां ब्राह्मणाधिकारित्वावगतौ अर्थादन्याधिकारनिरासात् 'राजसूयेन यजेत राजा स्वाराज्यकाम' इति श्रुत्या राजसूये भूपक्षत्रियाधिकारावगतब्राह्मणाद्यधिकारनिरासात्। यदि तु रागातिशयादुपनिषद्भ्य आत्मानं श्रुत्वा तन्मननं शूद्रः कुर्यादपि तदापि नात्मसाक्षात्कारं न वा मोक्षमासादयेत्। अनधिकारकृतत्वेन तयोः [तस्य] पशुत्वात्। किन्तु जुगुप्सन्निपतेत् संस्कारद्वारा जन्मान्तरतो मोदयेत्तु तदुपयुज्यते। 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे' ति [बृह० ४।४।२] श्रुतेः।

यद्यपि तज्जन्यफलाश्रयत्वयोग्यत्वरूपाधिकार उपाय एव न तु तत्फले तस्याविधेयत्वात्। तथापि यत्फलोपनयनद्वारा देशनाकर्मणि पुरुषं प्रवर्तयति तेन फलेनाधिकारो निरूप्यते। तादृशं च फलमिहापवर्गः।

यद्यपि शास्त्रमाहात्म्येन देशितं तथापि मननदेशिते साक्षात्प्रवृत्तेरसंभवादुपायभूते शास्त्रे देशनान्वयः। अन्यथा देशनायाः प्रवर्तकतैव न स्यात्। हिंसाया निषेधे तदुपयोग्येन निषेधान्वयवत्। तत्र च फले प्रतिपत्तिचतुष्टयसाध्ये शूद्रस्यानधिकारो अध्ययननिषेधेनाद्यप्रवृत्तिबाधात्।

अथ शूद्रो मोक्षाधिकारी मननभागित्वाद् ब्राह्मणवदिति चेन्न, न ह्यनेनाधिकार उत्पद्यते किन्तु तज् ज्ञाप्यते। स च नास्तीति कथमनेनापि ज्ञाप्यतामसत्त्वात् ह्रदेऽग्निवत्। *तदुक्तम्*[१]—'इदमप्यनुमानमागमाविरोधेन प्रतिसन्धीयमानमर्थनिश्चायक'मिति।

ननु चाबाधिततत्त्वज्ञानं यदङ्गं तदा सामान्यतस्तदपि संभवति। आप्तोपदेशादिना नात्रागमबाध इत्याकारेण विशेषतोऽपि। अन्यथा शूद्रस्य धर्मानुष्ठानमेव न स्यात्। आगमबाधाभावस्यागमार्थनिरूपणाधीननिरूपणतया तेनानिश्चयात्।

वस्तुतस्तु तन्नाङ्गम्। तृतीयलिङ्गपरामर्शे सति तद्विलम्बेनानुमितिविलम्बाभावात्। परामर्शस्य चरमकारणत्वादिति। किन्तु परार्थानुमानस्थले परामर्शोत्पत्तावेव कथञ्चिदुपयोग इति ब्रूम इति चेत् अस्तु तावदेवम्। तथापि प्रतिसन्धीयमानमपि मननलक्षणमनुमानमागमाविरोधेन पारमार्थिकेनार्थनिश्चायकम्। स चात्र नास्ति, प्रत्यक्षश्रुतिविरोधात्। तस्मादत्र ब्राह्मण एवाधिक्रियते। तस्य च मुमुक्षुता, इहामुत्रभोगवैराग्यम्, नित्यानित्यवस्तुविवेकः, शमदमादिसंपत्तिश्चेति सा[ध]नचतुष्टयं[२] मोक्षोपधानेऽङ्गमिति कथं शूद्रादयो व्युत्पाद्यन्तां वैयर्थ्यादिति।

सत्यमेतत्। करुणार्द्रान्तःकरणतया मुनिरनधिकारेणाप्युपदिशति चिकित्सापराङ्मुखानिव *चरका*दिरिति सर्वं सुस्थम्।

न चानधिकृतान् शूद्रादीन् व्युत्पादयन् मुनिः प्रत्यवेयात्। तस्य क्षीणदोषतया तदनुत्पादात्। उत्पादेऽपि वा तपःप्रभावेण तदपगमात्।

---

१. उदयनाचार्येण परिशुद्धौ १।१।१। इत्यर्थः।

२. वेदान्ते शाङ्करभाष्ये प्रतिपादितम्।

तत्र नहि कश्चिन्निरुपधेयेनापि निःप्रयोजनेनापि अनुक्ततदुभय-संबन्धे प्रवर्तेत इति तदर्थं तत्त्रितयं शास्त्रादौ वक्तव्यम्। तदुक्तम्—

सिद्धार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते।
शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः॥

[श्लोकवार्त्तिकम् ।१।७।]

यावत्प्रयोजनेनास्य संबन्धो नाभिधीयते।
असंबन्धाभिधायित्वाद् भवेत्तावदसङ्गतिः॥

[श्लोकवार्त्तिकम् १।२०] इति।

प्रयोजनेनाभिधेयसंबन्धप्रतिपादनाय अपवर्गोपयोगिपदार्थ-विभागोद्देशकमाद्यसूत्रम्—

**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्क-निर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः। १।१।१। इति।**

## [संबन्धविषयप्रयोजनकथनोपक्रमः]

अत्र तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रम्। पञ्चम्या च तस्य हेतुतोच्यते। करणव्युत्पत्तिबलाज्जन्यतयोपस्थितस्य तत्त्वज्ञानस्य व्यापारतापि लभ्यते इति शास्त्रस्य प्रमाणादिपदार्थतत्त्वज्ञानद्वारा निःश्रेयसहेतुता प्रेक्षावत्प्रवृत्त्यर्थं दर्शिता। एवं च व्यापार-व्यापारिणोः कार्यकारणभावः, व्यापारवता शास्त्रेण व्यापारविषयस्य प्रमाणादेः प्रतिपाद्यप्रतिपादकभावः, व्यापारविषयेण प्रमाणादिना व्यापारस्य तत्त्वज्ञानस्य विषयविषयिभावः, व्यापारेण तत्त्वज्ञानेन व्यापारफलस्य निःश्रेयसस्य कार्यकारणभावः, व्यापारविषयफलयो-र्हेतुहेतुमद्भावः संबन्धः सूचितो नान्तरीयकत्वात्। न ह्यतद्धेतुक-

स्तद्व्यापारः, नाप्यतत्कर्म तद् व्यापारविषयः, नाप्यतद् व्यापारविषय श्च तत्कर्म, नाप्यतद् फलजनकस्तद्व्यापारविषय इति ।

ननु शास्त्रान्निःश्रेयसाधिगम इत्ययुक्तम् । मननादिप्रणालिकयान्यथासिद्धेरिति चेत् न, तत्तद्व्याप्येतरसकलसमवधाने कार्ये भावाभावानुविधेयभावाभावत्वरूपस्य तत्साधनत्वस्य शास्त्रेऽपि सत्त्वात् तस्यैव च पञ्चम्याभिधानात् । न चाधिगमपदाधिक्यं निःश्रेयसे सति पटादिवन्न तत्प्राप्त्यर्थं प्रयत्नान्तरापेक्षेति तात्पर्यकत्वात् ।

नन्वाद्यसूत्रात् प्रयोजनज्ञाने सति शास्त्रे प्रवृत्तिः । तत्र प्रवृत्तौ च प्रयोजनज्ञानमित्याद्यसूत्रस्यापि शास्त्रान्तर्गतत्वादित्यन्योन्याश्रय इति चेत् न, गर्जितादिव श्रुतात् प्रयोजनज्ञाने सति पुनः प्रथमसूत्रादावेव प्रयोजनज्ञानाधीना प्रयोजनत्वसाध्या प्रवृत्तिरित्यभ्युपगमात् ।

ननु मुनेराप्तत्वानिश्चयात् शास्त्रे प्रवृत्तिरेव न स्यात् । तस्या इष्टोपायतानिश्चयसाध्यत्वादिति चेन्न लाघवादिष्टोपायताज्ञानस्यैव प्रवर्तकत्वात्, न तु निश्चयत्वमपि तत्र तन्त्रम्, गौरवात् ।

## [ परतः प्रामाण्यवादस्थापनोपक्रमः ]

नन्वेतच्छास्त्रमशक्यानुष्ठानोपायोपदेशकत्वादप्रमाणम् । तथा हि प्रमाणादीनां [तत्त्वं] प्रतिपादयच्छास्त्रं निःश्रेयसेन संबध्यते इत्ययुक्तम् । तद्धि उपधायककार्यधर्मप्रमात्वावधारणाधीनम् । तच्च स्वतः परतो वा ? आद्येऽपि आत्मना आत्मव्यवसायेन ज्ञाततालिङ्गेन वा त्रितयसाधारणं तु स्वतस्त्वम् । अप्रमात्वग्रहासाधारणहेत्वन्यसविषयकज्ञानग्राहकयावन्निश्चेयत्वम् ।

नन्वस्तु स्वेन—तथा हि तद्वति तत्प्रकारकज्ञानत्वमेव प्रमात्वमिह निरूप्यम्, निष्कम्पव्यवहारहेतुत्वात् लाघवाच्च । तच्च ज्ञानग्राहकसामग्रीग्राह्यमेव । विशेष्ये तद्धर्मवत्त्वस्य ज्ञानस्य च तद्धर्मप्रकारकत्व-

स्य स्वप्रकाशतया स्वग्राह्यत्वात्। ज्ञानस्य विषयनिरूप्यतया धर्म-धर्मिवत्तद्वैशिष्ट्यस्यापि भानात्। व्यवसायरूपप्रत्यासत्तेस्तुल्य-त्वात्।

न चान्वयव्यवसायस्य यावद्व्यवसायविषयविषयकत्वे भ्रमं जानन्नपि भ्रान्तः स्यात्? बाधानवतारे तस्येष्टत्वात्। तदवतारे तस्यैव प्रतिबन्धकत्वादिति चेन्न, अन्वयव्यवसायानन्तरं व्यवसायस्य प्रामाण्ये अर्थस्य तद्वत्त्वे च संशयस्यानुभाविकतया तयोस्तदविषय-त्वात्।

अत एव च व्यवसायस्यापि न यावत् स्वव्यवसायनिरूप्यता किन्तु प्रकारप्रकारिनिरूप्यता। तावतैव निरूपणसंभवात्।

नाप्यपरौ तद्धि मानसं ज्ञातताकारणकं च। उभयमपि ज्ञान-मित्येव गृह्णीयान्न तु तस्याभासव्यावर्त्तं रूपं व्यभिचरेत्। न ह्यन्वय-व्यवसायोऽनुमितिश्च व्यवसायविषययाथार्थ्येन जन्येते। येन जनक-तयापि तद् गमयेत्।

नापि परतः। स हि न शब्दः, असार्वत्रिकत्वात्। न चास्तु समर्थप्रवृत्तिजनकत्वं लिङ्गम्। तच्च वह्निधियो दाहसमर्थविषयक प्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वमेवमेषामपीति वाच्यम् प्रामाण्यप्रसिद्धिं विना व्याप्तेरग्रहात्।

अथ प्रमा नास्तीति निषेधस्याप्रमात्वेन प्रमानिषेधो अप्रमया निषेधानवगमादिति प्रमानिषेधायास्य प्रमात्वाभ्युपगमे क्व प्रमा-सामान्यनिषेधः। एवं प्रमा निर्विषया इत्येतस्या अपि प्रमाया निर्विषयत्वे कुतः प्रमानिर्विषयत्वसिद्धिः। सविषयत्वे तु क्व प्रमामात्रस्य निर्विष-यत्वमित्येवंरूपव्याघातभयेन काचित् प्रमेत्यवगत्यैवाभ्युपेयम्। तथा च सामान्यतः साध्यप्रसिद्ध्या वह्निधियोऽपि प्रामाण्यं प्रवृत्तिसामर्थ्या-

दिना व्यतिरेकिणानुमेयं प्रामाण्यप्रसिद्धिस्थलस्य विशिष्यानिर्णयात्[1] तत्र हेतोः सत्त्वासत्त्वानवधारणान् नान्वयित्वासाधारणत्वे इति चेत्, न। परकर्तृकप्रामाण्यनिषेधरूपस्य व्याघातस्याप्तानुमानस्थलेऽसम्भवेन साध्याप्रसिद्ध्या स्वार्थं प्रामाण्यानुमित्यनापत्तेः। स्वयं प्रामाण्यनिषेधस्य तद्धीपूर्वकत्वात्। प्रामाण्यज्ञानं विना व्याघातस्याप्यज्ञानाच्चेति।

अत्र *प्राञ्चः* प्राग्भवीयसंस्कारात् प्रामाण्यमात्रं स्मृतं वह्निज्ञानादौ साध्यमानं पक्षधर्मताबलाद् वह्निधीप्रामाण्यं भूत्वा सिद्ध्यति। प्राथमिकप्रामाण्यधियोऽनन्यगतिकत्वादित्याहुः।

ननु प्रामाण्यं तद्वति तत्प्रकारकत्वम्। तच्चाननुगतम्। तत्पदार्थाननुगमात्। न च घटत्ववति घटत्वप्रकारकत्वं घटधियः प्रामाण्यं तदेव स्मर्तव्यम्। एवं हि सति पक्षधर्मताबलादित्यस्य वैयर्थ्यापत्तेः। उक्तस्यैव प्रामाण्यस्य आप्तानुमाने साध्यत्वात्। न च तद्वतीत्याकारेणैव प्रामाण्यमत्र साध्यते। पक्षधर्मताबलात्तु घटत्ववतीत्याकारेण सिद्ध्यतीति वाच्यम्। अनुगतप्रामाण्यासंभवेनानुगतशब्दादपि प्रत्येकविश्रान्तप्रामाण्यस्यैवोपस्थित्युपगमादित्याशयात्।

*नव्यास्तु* प्रथममप्रामाण्याभाव एव प्रामाण्यं केवलव्यतिरेकिणा साध्यम्। अत एव निष्कम्पप्रवृत्त्युपपत्तेः। स एव वा सिद्ध्यन् तद्वति तत्प्रकारकत्वं प्रामाण्यमादाय सिद्ध्यति। पक्षधर्मताबलात् तद[न]न्तरमर्थाद्वा सिद्ध्यति। तथा हि अयं वह्नित्वेनानुभवो न वह्नित्वाभाववति वह्नित्वप्रकारको दाहसमर्थविषयकत्वप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वाद् यन्नैवं तन्नैवम्। यथा वह्न्यप्रमा। वह्न्यप्रमायां ह्यप्रामाण्यं तथाभूतं प्रवृत्त्यसामर्थ्यव्याप्यतया गृहीतमतो व्यापकाभावाद् व्याप्याभावः पक्षे सिद्ध्यति व्यतिरेकव्याप्तिबलात्।

---

१. निश्चयात्।

ननु व्यतिरेकिणि साध्याभावस्य ज्ञानं तन्त्रं तत्त्वे न वा। आद्ये तदाभासोच्छेदोऽन्त्ये साध्यप्रसिद्धिरावश्यकीति चेन्न, यद् व्यापकतया हि यदभावो गृहीतस्तदभावानुभावादनुगताननतिप्रसक्ताद् व्याप्याभावः पक्षे सिद्ध्यतीति नाभावसाध्यके साध्यप्रसिद्धेरुपयोगो न वा भेदाभासोच्छेदः। भावसाध्यके तु तदभावस्य व्याप्तिग्रहोऽङ्गमभावश्च भावनिरूप्य इति, तत्र तदुपयोगः।

ननु साध्यप्रसिद्धिं विना साध्यविशेषणकानुमितिः कथम्? प्रथमं न कथञ्चित्, किन्तु व्यतिरेकिव्याप्तिप्रतियोगिज्ञानयोरभावानुमितिसामग्र्याः सत्त्वादादौ तद्विशेष्यिका, ततस्तेनैव हेतुना तद् विशेषणकेति। न च घटादौ साध्यवति हेत्वसत्त्वादसाधारण्यम्। अप्रामाण्याभाववत्त्वस्य साध्यत्वात् अनुकूलतर्के सति असाधारण्यस्यादोषत्वाद् वा। न चापेक्षाज्ञाननिर्विकल्पकयोस्तत् तदा तयोरसत्पक्षत्वादित्यातिष्ठन्ते।

*अतिनव्यास्तु* अयं वह्नित्वेनानुभवो वह्नित्ववद् विशेष्यको न वेति संशयानन्तरम्, अयं वह्नित्वेनानुभवो वह्नित्ववद् विशेष्यको दाहसमर्थविशेष्यकत्वात् तप्तायःपिण्डे वह्निरस्तीति ज्ञानवदित्यन्वयिना व्यतिरेकिणा वा साधने पक्षधर्मताबलात् प्रामाण्यसिद्धिरिति संगिरन्ते।

एतच्च प्रामाण्यज्ञानं निष्कम्पप्रवृत्तावुपयोगि। तथा हि अप्रामाण्यशङ्काशून्यार्थिज्ञानाधीना निष्कम्पप्रवृत्तिः। तच्चाभ्यस्तस्थले प्रथममेव ज्ञानमनभ्यस्तस्थले प्राथमिकेऽप्रामाण्यशङ्कया तत्प्रामाण्येऽनुमितेतत्समानविषयकमनुमित्यन्तरजम्।

तथा च प्रवृत्तिविशेषहेतौ अर्थविषयके अप्रामाण्यशङ्काशून्ये ज्ञाने अप्रामाण्यशङ्कोत्पत्तिप्रतिबन्धकतया प्रामाण्यज्ञानमुपयुज्यते।

एवं च सर्वत्रागृहीतप्रामाण्यमेव ज्ञानं प्रवर्तकमस्यान्वये न तु गृहीतप्रामाण्यम्, चिरातीतत्वादिति सारम्।

एवमुत्पद्यतेऽपि प्रमा परत एव न तु ज्ञानमात्रसामग्रीतः। अन्यथा प्रमाविशिष्टसामग्रीकतया अप्रमाया अपि प्रमात्वापत्तेः। अथाधिकदोषानुप्रवेशात् सा, तर्हि अधिकगुणानुप्रवेशात् प्रमापीति कथं न परतः। न च दोषाभावादेव प्रमेत्यागन्तुकभावानपेक्षसामग्रीकतया न स्वतस्त्वक्षतिरिति वाच्यम् विनिगमनकाभावात् गुणाभावादेवाप्रमा[त्वा]पत्तेः। एवञ्च प्रमाऽप्रमयोर्वैचित्र्यात् गुणदोषजन्यत्वमभ्युपेयम्। न च यमजवैधर्म्यवत् कारणव्यक्तिभेदप्रयुक्तमेव कार्यवैचित्र्यमिति वाच्यम् विजातीयकार्यस्य विजातीयकारणजन्यतया व्यक्तिभेदेनानन्यथासिद्धेः। अन्यथा कार्यवैजात्यस्याकस्मिकतापत्तेः। व्यक्तिभेदस्य तत्रातन्त्रत्वात्। तस्मात् जन्यप्रमा अप्रमाकारणविजातीयकारणजन्या अप्रमाविजातीयकार्यत्वात् घटवत्। न चेश्वरप्रमाव्यवच्छेदकतया पक्षेतरान्यत् प्रमान्यत्वमुपाधिः। उक्तमुक्तहेतोः साध्यव्याप्यतया तद्व्यापकतयोपाधेः साध्याव्यापकत्वात्।

न च विपर्ययस्य धर्मिणि प्रमाभूतस्य गुणजन्यतया धर्मांशेऽपि प्रमात्वापत्तिः। भूयोरव (?) [भूयोऽवयवेन्द्रिय°] सन्निकर्षादेर्गुणस्य तवा[पि] तथात्वादेवं दोषेऽपीति। स चायं गुणो महावयवद्रव्यप्रत्यक्षे भूयोऽवयवेन्द्रियसन्निकर्षः। यदि चैकतन्तुकोऽपि पटो भवति तदा महावयवसन्निकर्षः अनुमितौ लिङ्गप्रमाणाभ्यां वक्तुर्वाक्यार्थः प्रमा। उपमितौ सादृश्यवैसादृश्यविशेषप्रमा। न च लिङ्गे सति लिङ्गारोपजनितानुमितौ भ्रान्तप्रतारककीराद्युच्चरितशब्दजन्यायां च संवादिन्यां प्रतीतौ लिङ्गप्रमाया वाक्यार्थप्रमायश्च गुणस्याभाव इति वाच्यम्। तत्रापीश्वरतदुभयप्रमाया गुणत्वात्। तस्याः कार्यमात्रे हेतुत्वात्। संशयविपर्ययोत्तरप्रमायां विशेषत्वेन विशेषदर्शनमपि गुणः। अथ करचरणचिबुकादय एव तद्धेतवो भवन्तु। न चाननुगमः, ग्राह्यनान्तरीयकत्वेन तेषामनुगमादिति चेत्, ग्राह्यनान्तरीयकत्वेन वास्तवेनानुगमो भवेत् वैज्ञानिकेन वा? वक्त्रकोदरा-

दाविन्द्रियसन्निकृष्टे हस्तादिभ्रमात् पुरुषनिश्चयानापत्तेः । नापरः ग्राह्यनान्तरीयकत्वेन विनानुगमो भवेत् वैज्ञानिके तद्धर्मज्ञानानन्तरं पुनस्तद्धर्मेन्द्रियसन्निकर्षापेक्षायां मानाभावात् । स च ग्राह्यनान्तरीयकत्वेन ज्ञानं यः सन्निकर्षो जनयति स एव पुरुषादिप्रत्यक्षविशेषे हेतुः । एवं विशेषदर्शनहेतुत्वेन करादिसन्निकर्षाणामनुगतानां कारणत्वं, तथा चास्तु विशेषदर्शनानामेव तत्, बाधकाभावे सति प्रथमोपस्थितत्वात् ।

किञ्चैवं व्याप्यविषयकव्यापकप्रत्यक्षनियमे अनुमिताविव पुरुषप्रत्यक्षेऽपि प्रामाण्यसंशयो न स्यात् करादिमति पुरुषज्ञानत्वस्यानुव्यवसायेन निश्चयात् ।

नन्वेवं संशयोत्तरं व्याप्यज्ञाने सत्यनुमितिः स्यात् न तु तयैव सामग्र्या प्रत्यक्षमिति सन्दिग्धप्रमितित्सितधर्मिणि व्याप्यत्वज्ञानस्यानुमितिं प्रत्यन्तरङ्गत्वात् । अन्यथा लिङ्गानां धारावाहिकतापत्तेः ।

वस्तुतस्तु पुरोवर्तिनिष्ठतया विशेषनान्तरीयकतया च यज्ज्ञानद्वयं तदेवात्र विशेषदर्शनं[1] न त्वधिकं गौरवात् । अनुवृत्तौ तृतीयलिङ्गपरामर्शस्य गौरवेणानुमित्यजनकत्वाच्चेति चेन्न, पुरुषं पश्यामीत्यबाधितार्थव्यवसायबलादत्र व्याप्यत्वधीसहितधर्मीन्द्रियसन्निकर्षस्य प्रत्यक्षसामग्रीत्वात् । तत्र धर्मीन्द्रियसन्निकर्षे सत्यपि वह्निमनुमिनोमीत्यन्वयव्यवसायबलादनुमितिकारणस्यैव नवत्वकल्पनात् कार्यानुरोधित्वात् कल्पनायाः, तृतीयलिङ्गपरामर्शो हेतुर्मन्मते अतो नानुमितिसङ्कर इति *प्राञ्चः* ।

*चिन्तामणिकृतस्तु* शाब्दप्रमायां वक्तुर्यथार्थवाक्यार्थज्ञानं न

---

१. अत्र दिनेशभट्टाचार्यस्य मातृका समाप्तिं याति ।

गुणः गौरवात् किन्तु श्रोतुर्यथार्थयोग्यतादिज्ञानमेव लाघवादावश्यकत्वाच्चेत्याहुः।

एवं च प्रमात्वे स्वग्राहकप्रामाण्यमपि तथा। न च प्रमाणादीनामानन्त्यात् अशक्यज्ञानत्वं प्रमाणत्वादिना [सं] गृहीतानां शक्यज्ञानत्वात्।

## [ न्यायशास्त्रस्य स्वरूपप्रदर्शनम् ]

ननु तेषां शक्यज्ञानत्वेऽपि प्रमाणादितत्त्वज्ञानजन्यप्रयोजन प्रतिज्ञानवत् प्रमाणादीनां शास्त्राभिधेयत्वेनाप्रतिज्ञानाथितानि शास्त्राभिधेयानि। अतो न तद्द्वारा शास्त्रस्य निःश्रेयसेन सङ्गतिरिति चेन्न शिष्याकाङ्क्षाक्रमेण हि शास्त्रप्रवृत्तिः। ते च निःश्रेयसार्थिनस्तद्गतो न स्वत इति ज्ञाने सत्यन्तेन तु किं वक्ष्यामीति? तत्र चाद्यसूत्रेणोत्तरम्। ततः कथमित्यपेक्षायां द्वितीयसूत्रम्। ततश्च के कति किं लक्षणाः प्रमाणापेक्षायामुद्देशविभागलक्षणानीति। ततः कथमित्यपेक्षायां द्वितीयाध्यायादि।

इह करणव्युत्पत्त्या तत्त्वज्ञानपदेन शास्त्रमुच्यते। तच्च प्रमाणादिवाचकपदसमूहविशेषः। पदं पुनः सङ्केतवद् वर्णः। एकार्थावच्छिन्नस्तत्समूहो वाक्यम्। तदेव च स्वल्पाक्षरत्वादिविशेषितं सूत्रम्। सूत्रजन्यप्रतीतिसाक्षाज्जन्यप्रतीतिजनकः सूत्रसमूहः प्रकरणम्। एकार्थावच्छिन्नस्तत्समूह आह्निकम्। तादृशस्तत्समूहोऽध्यायः, पञ्चाध्यायी शास्त्रम्।

## [ पदार्थानामुद्देशः ]

तत्रापवर्गानुकूलतत्त्वज्ञानविषयाः षोडश पदार्थाः शास्त्रार्थः। तल्लक्षणं प्रथमाध्यायार्थः। उद्देशविभागौ तु लक्षणतात्पर्यकावेवेति न तत् प्रतीकस्याध्यायबहिर्भावः। न च पञ्चमसङ्कर इति नियतस्थान

विशेषणलक्षणान्यत्वे विशेषणात् । न च छलपरीक्षायाः प्रथमानर्थत्वापातः, तद्भिन्नत्वेनापि विशेषणात् । तत्रापि सपरिकरस्य न्यायलक्षणं प्रथमाह्निकार्थः । प्रयोजनाभिधेयसंबन्धप्रतिपादनैकार्थतया प्रथमद्वितीयसूत्राभ्यामेकं प्रकरणम् । शास्त्रार्थप्रयोजनाभिधेयसंबन्धस्तदर्थः । ततः प्रमाणप्रकरणादि ।

यद्यपि प्रमाणादयः पदार्था आलोकसिद्धा एव तथाप्यप्रतिपन्नविप्रतिपन्नसन्दिग्धान् प्रति शास्त्रारम्भः । निःश्रेयसं पुनः समानाधिकरणदुःखासहवृत्तिदुःखध्वंसः ।

ननु चावेद्यो दुःखाभावो मूर्च्छादशायामिवापुरुषार्थः । तदुक्तम्—

दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥

इति चेन्न इष्यमाणतामात्रनिबन्धनत्वात् पुरुषार्थतायाः । दुःखार्तानां मरणेऽपि प्रवृत्तिदर्शनाच्च ।

## [ प्रामाण्यमधिकृत्य विविधदार्शनिकमतालोचनम् ]

ननु ज्ञानावच्छेदकस्य तज्जनकत्वमेव प्रत्यक्षविषयत्वम् । तच्च वास्तवे क्षणिकपरमाणौ स्वलक्षणम् । न तु गोत्वादावतद्व्यावृत्तिरूपे सामान्ये, अलीकत्वात् । न च सामान्यस्वलक्षणाभ्यामन्यत् प्रमेयमतो विषयासङ्करादर्थघटितं प्रामाण्यं नानुमानस्य सामान्यधर्ममात्रग्राहिणो गोचर इति क्व परतः प्रामाण्यवाद इति चेन्न अनुमानस्यापि सामान्यरूपेण स्वलक्षणविषयकत्वात् ।

ननु प्रमासाधकतमत्वं प्रमाणत्वं, तच्च स्वसाध्यजातीयक्रियारहिते व्याप्रियमाणत्वम्, यथा छिन्ने व्याप्रियमाणस्य परापातवतो [परशोरतो] न प्रामाण्यव्यतिरेक्यनन्तरं तेनैव तत्रैव तद्विशिष्टानुमितिरिति

चेन्न फलाव्यभिचारिव्यापारवत्त्वस्य साधकतमार्थत्वात् । छिन्ने छिदानुत्पत्तिस्तु प्रागभावविरहात् ।

*सौत्रान्तिकास्तु* विषयसमानाकारं ज्ञानं प्रमा । अथाकार एव बुद्धिगतो बुद्धिं तदीयतया व्यवस्थापयत् प्रमाणम् । यदाह—'अर्थं सारूप्यमप्यस्य प्रामाण्यं तद्वशेनार्थव्यवस्थितेरिति' । न चात्र (?) तद्करणफलाभावविरोधः घटमृदोरिव तादात्म्येऽपि तद्वत् । तथा चाकाराकारिणोरभेदे प्रमाणासंप्लवे रूपवतः प्रामाण्यमित्याहुः ।

तन्न, अभेदे जन्यजनकभावाभावात् घटमृदोश्च भेदादेव।

निराकारवादिनो *वैभाषिकास्तु* प्रमायाः प्रकाशात्मतया येनार्थः प्रकाश्यते तदेव प्रमाणं प्रकाशश्चैतन्यं तस्यैव यश्चेतयते । चेतयितृत्वं च ज्ञानस्यैव तदतिरिक्तस्य आशुक्रियाकारिणः स्थिरस्यानुपपत्तेः । इन्द्रियादिजन्यस्योभयसिद्धत्वात् । तस्माद् विज्ञानवृत्त्यैव प्रकाशकत्वं प्रमाणत्वम् । अन्यस्य भेदेन प्रकाशसंबन्धानुपपत्तेः । व्यापारव्यापारिणोश्चाभेद एव संयोगपरशुवत् । तस्य च स्वप्रकाशकत्वे ज्ञानभेदाभेदयोः क्वान्यूनानतिरिक्तविषयत्वरूपः संप्लव इत्याहुः ।

तन्न, अभेदे जन्यजनकभावानुपपत्तेः । प्रमासाधकतमत्वं तु प्रमाणत्वम् । प्रमा च य······तृकृतस्य तादृशोऽनुभवः । साधकतमत्वं तूक्तमेव ।

ननु प्रमाणप्रमातृप्रमेयप्रमितिलक्षणचतुर्वर्गे प्रमितिजनने प्रमितिरन्तरङ्गत्वात् तदर्थवत्त्वावधारण एव कुतः कृत्यत्वे किमिति करणप्रामाण्यं प्रस्तूयत इति चेत् न, अलौकिके विषये अग्निहोत्रादिजन्य वायुकज्ञानानां करणाविसंवादादेव तद्द्वारा प्रकृते त्रिवर्गापेक्षया करणस्यैवाभ्यर्हितत्वात् ।

## [ विभिन्नदर्शनेषु पदार्थस्वरूपम् ]

ननु प्रमाणादिषोडशपदार्थतत्त्वज्ञानेऽपि पदार्थान्तरेणात्मनो भेदाभेदसन्देहान्नापवर्गः ।

तथा हि *वेदान्तिनां* ब्रह्मैकं, *सांख्यानां* संक्षेपेण प्रकृतिपुरुषौ विस्तरेण पञ्चविंशतिः पदार्थाः। *तौतातितानां* जातिद्रव्यगुणक्रिया-भेदाच्चत्वारः पदार्थाः।

धामधर्माधारप्रदेशविशेषाः पञ्च पदार्थाः *मीमांसकैकदेशिनाम्*। धर्मी पृथिव्यप्तेजोवायुतमोमन आत्मशब्दभेदादष्टधा। धर्मस्त्रिविधो गुणजातिनञर्थभेदात्। आधारस्त्रिविधः आकाशकालदिग्भेदात्। आधारवर्तिनो भागाः प्रदेशाः। गुणादिवर्तिनो भावाः विशेषाः।

पशुपाशतत्त्वच्छेदतन्मूलेश्वरभेदात् पञ्च पदार्थाः *पाशुपतानाम्*। पञ्चस्कन्धाः *सौगतानाम्*। तत्र गन्धरूपरसस्पर्शशब्दाः रूपस्कन्धः। सविकल्पकं ज्ञानं संज्ञास्कन्धः, समनन्तरप्रत्ययः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्कं ज्ञानं विज्ञानस्कन्धः तदुक्तम्—

रूपं संज्ञा च संस्कारो वेदनानुभवस्तथा।
इति बौद्धाः शरीरेषु मन्यन्ते स्कन्धपञ्चकम्॥

जीवाजीवाश्रवसंवरनिर्जर[बन्ध]मोक्षाः सप्त पदार्थाः *दिग-म्बराणाम्*। तत्र जीवश्चेतनस्तदन्योऽजीवः। आश्रव इतीन्द्रियाणि कर्माणि वा आश्रवन्तीत्याश्रवा। स्रोतोभिर्विरतैरयं जीवो धर्मा-धर्माभ्यां पूर्यते। संवरणं संवरः [समाधिः] जीवाजीवयोरभेदा-भिमानः। तेन ह्ययं संवृतो स सर्वज्ञ इति समाधिर्वा। निर्जरणं निर्जरः तपश्चरणम्। तेन ह्यशेषधर्माधर्मौ निर्जीर्यते। तत्त मल-पङ्कधारणास्नानमौनवीरासना[न्य]नुतिष्ठन्तो जलतप्तशिलारोहणकेश-लुञ्चनादिरूपं तपः। बन्धनं बन्धः, स चाष्टविधः। ज्ञानावरणीय दिगम्बरसिद्धान्तेन मोक्ष इति ज्ञानम्, दर्शनावरणीयमन्यतो मोक्ष इति ज्ञानम्। मोहनीयम् मोक्षहेत्वनध्यवसायः। तथान्तरायिकं तत्रैव विघ्नरूपमित्यादि धर्माधर्मावेव बन्धः। मोक्षो द्विविधः स्थितिरूर्ध्व-गति[श्च]। तत्र निरावरणस्याव्यावृत्तसुखदशास्थितिः सेयमपरा

मुक्तिः । तदुपायो खेचरत्वमूर्द्ध्वगतिः । अजीवपदमाश्रवाद् व्यतिरिक्तपरम्, गोवृषन्यायादिति चेन्न पदार्थानां सतां षोडश अन्तर्भावयिष्यमाणत्वात् । अत्र च प्रयोजनाभिधेयप्रतिपादनपरादेवाद्यसूत्रादुद्देशोऽपि लभ्यते । तत्परत्वेऽपि सूत्रप्रतिपादनपरत्वात् ।

ननूपसर्जनत्वेन प्रतिपादने प्राधान्येन जिज्ञासा न स्यात् । प्राधान्येन च प्रतिपादने वाक्यभेद इति चेन्न उपसर्जनतयापि प्रतिपादनं तस्य तल्लक्षणजिज्ञासूनां प्राधान्येनैव जिज्ञासोत्थानात् । तथैव दर्शनात् लक्षणत्वादिविषयकलक्षणजिज्ञासाजनकप्रतिपाद्यधर्म्युक्तेश्चोद्देशत्वात् ।

## [ सूत्रनिर्दिष्टपदार्थविग्रहः ]

अत्र च सर्वपदार्थप्राधान्यप्रतिपादनाय द्वन्द्वः समासः । इतरथा तदप्राप्तेः । निर्देशे यथावचनं विग्रह इति *भाष्यम्।* अस्यार्थः निर्देशे विभागसूत्रादौ यदेव वचनभेदोपादानप्रयोजकं प्रमाणादौ परस्परं नैरपेक्ष्यादि तदेवात्रापि द्रष्टव्यम् । तेन प्रमाणानि च प्रमेयं च संशयाश्च प्रयोजनं च दृष्टान्तौ च सिद्धान्ताश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलानि च जातयश्च निग्रहस्थानानि चेति ।

छलादिषु फलसाधनत्वमेकैकस्यैवेत्येकवचनमिति *भास्करः ।*

## [ द्वन्द्वसमासघटकसाहित्यपदार्थविचारः ]

ननु वचनभेदे द्वन्द्वः समासो नास्ति । तस्य युगपदधिकरणवचनत्वात् । यानाधिकान [यानधिकरणान् प्रति] पदप्रवृत्तिस्तेऽधिकरणपदार्थाः । तेषां यौगपद्यमि[तरेतरयोगः]तर साहित्यं द्वन्द्वे प्रतीयते । तथा च नित्यसमासत्वेन वाक्यमेव नास्ति कुतो वचनभेदः । अथ प्रदर्शनमस्ति समासार्थसाहित्योपस्थापकद्विवचनबहुवचनाभ्यामेव न तु वचनान्तरेण तदर्थानुपस्थापनादित्यत्र सर्वत्र बहुवचनान्ततैव युक्ता ।

न च द्वन्द्वे साहित्यप्रतीतिरसिद्धा । तथा हि धवखदिरौ छिन्धीत्यत्र प्रत्युक्तं [प्रत्ययोक्तं] द्वित्वं प्रकृत्यर्थेनान्वेति प्रकृत्यर्थश्च प्रत्येकं न द्वन्द्वाय योग्यम् एकैकत्वादन्यथा धवद्वयधीश्च खदिरद्वयधीश्च स्यादतो द्वित्वान्वययोग्यो नानात्मकः प्रकृत्यर्थो वाच्यः। स च न साहित्यलक्षणां विनेति साहित्येन रूपेणोभयस्थितये लक्षणा । सा च प्रत्ययानां समभिव्याहृतप्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तेर्धवखदिराविस्यत्रोभयोः प्रकृतित्वादुभयत्रापि तन्त्रेण द्वित्वं विभक्तिरुपस्थापयतीति पदद्वयेऽपि । एवं च धवौ च खदिरौ चेति विग्रहः । एकपदलक्षणयैव द्वित्वान्वयोपपत्तौ प्राधान्यादाद्यपद एवमित्येके ।

अत्र च धवौ च खदिरश्चेति विग्रहः । विभक्तिसान्निध्यादन्त्यपद एवमित्यन्ये।

अत्र च धवश्च खदिरौ चेति विग्रहः। शक्तिस्तु न कल्प्यते अन्यलभ्यत्वात् । अन्यथैव पदादेवोभयार्थोपस्थितिसंभवादपरपदं प्रतियोगिविशेषक[ण] तया अर्थिताभिधानवत् सार्थकम् ।

उच्यते, एकस्थलारूढपदद्वयात् द्वन्द्वपदात् शक्त्या स्वार्थयोरेकदा स्मृतिवतस्तदर्थं न साहित्यलक्षणा न वा द्वित्वान्वयार्थं सोऽपि हि साकाङ्क्षोपस्थितयोर्योग्ययोर्द्वयोरेव भवति न तु योग्यतावच्छेदक रूपेणोपस्थितेस्तत्र तन्त्रं, गौरवात् ।

न चान्वयप्रयोजकरूपे स्वलक्षणा योग्यता । सा चेह नास्त्येवेति वाच्यम् अनाप्तोक्तौ पयसा सिञ्चतीत्यादौ तत्सद्धे त्वन्वयानवगमात् तस्यायोग्यतात्वात् । किन्तु बाधकमानाभावः सा [?] चेहास्त्येव । चक्रदण्डावित्यादितोऽभिन्ने विरूपैकशेषे नाना नार्थे युक्त इत्यादौ स्वरूपैकशेषे समाहारे चानन्यगतितया तदनुपगमः । साहित्यं तु फलानुकूलव्यापारसंबन्धतौल्यप्राधान्येन च समस्तपदार्थोपस्थापकतैव युगपदधिकरणवाचितापि न तु सहितवत् कृता, अतो न व्याकरणविरोध इति । हि यतः पदत्वमित्यपेक्षायां निर्देशे यथावचनं शब्द इतश्चात्र विग्रह इति भाष्यार्थ इत्येके ।

निर्देशे यथा यदनन्तरं वचनं विभक्तिश्च तत्पदमादायात्र विग्रह इति चैतदर्थ *इत्यपरे*।

अत्र प्रमाणादीनां तत्त्वमित्यन्वयः। तत्त्वस्य नित्यसापेक्षत्वात्, शैषिकी चेयं षष्ठी। कारणानामविवक्षा शेषः। यो यद्व्यक्तिधर्मः स तस्य तत्त्वम्। तत्त्वस्य ज्ञानं निःश्रेयसस्यावगम इति कर्मणि षष्ठ्यौ। तत्त्वज्ञानं यथार्थज्ञानं तत्प्रमाणादीनामित्यन्वय *इत्यन्ये*। निःश्रेयसं चादृष्टमत्रात्यन्तिकदुःखाभावरूपम्। आत्मादिपदसमभिव्याहारात् उत्तरसूत्रे तद्व्युत्पादनाच्च।

अत्र चेतरे निःश्रेयसे पक्षाद्युपनायकागमानुमानसहकारिणा कारणाभावेन कार्याभावानुमानमेव प्रमाणम्। तत्रात्मनो जन्माभावे[ न लिङ्गे ] नात्यन्तिकदुःखाभावानुमाने पक्षसिद्धावयमात्मापहतपाप्मा अजरोऽमृत्युरित्याद्यागमोऽनुमानमिच्छादिसूत्रसमुत्थं [समर्थयतीत्याहुः]।

न चात्र पदार्थस्यान्यतोऽनुपस्थितेर्नात्मपदव्युत्पत्तिः। तथा च कथमस्याः प्रतिपादकत्वम्, अन्यत उपस्थितौ वा किमनेनेति वाच्यम् योऽपहतपाप्मा पापध्वंसवान् अयमात्मेत्यागमस्यैव प्रसिद्धपदसामानाधिकरण्येन ह्युपपादकत्वात्। जन्माभावस्य लिङ्गस्य सिद्धौ—

आत्मानं चेद्विजानीयादहमस्मीति पूरुषम्।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥

[ बृ० उ० ४।४।१२। ]

इत्यागमः। तन्निवृत्तौ मोहादिनिवृत्तिकथनस्यैवानुमानं तु मिथ्याज्ञानाभावः। तत्रापि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

[मुण्डक उप० २।२।८]

इत्यागमः। अनुमानं तु तत्त्वज्ञानसम्पत्। तत्रापि—'आत्मा वा

अरे श्रोतव्य' इत्यागमः। अनुमानं तु उपायाभ्यासप्रकर्षः, क्रमश्चात्र प्रयोजनप्राप्त एव।

प्रमाणाधीना सर्वसिद्धिरित्यादौ प्रमाणमुद्दिष्टम्, ततः प्राधान्यादात्मादिप्रमेयम्। तस्यापि न्यायगम्यत्वात् तस्य च संशयिते प्रवृत्तेरनन्तरं संशय इत्यादिः।

## [अभावोद्देशनिरासः]

ननूपयोगविशेषात् प्रातिस्विकपदेन तावद् विशेषवदभावविशेषा अपि कुतो नोद्दिष्टा इति चेन्न अवश्याभिधेयभावपक्ष [पक्ष] वाचिकशब्दैरेव लब्धत्वात्। न च वैपरीत्यमेवास्तु, अभावपदैः सार्धं भावानामुपस्थानासम्भवात्।

न च संशयादीनां प्रमाणप्रमेययोर्यथायथमन्तर्भावात् पृथङ्निर्देशो व्यर्थः? मननद्वारा आन्वीक्षिक्या निःश्रेयसोपयोगः। तच्च न कथमेतदित्यश्रद्धामलक्षालनं विना। तच्च न संशयाद्युपकरणक न्यायानुसन्धानं विनेति, तेन तेन रूपेण संशयादिप्रतिपादनात्।

न च संशयो न न्यायाङ्गम्, असंशयिते श्रुतेऽप्यात्मनि यमनन [नियमनाव] बोधनादिति वाच्यम्, अनुमितिमात्राहेतुत्वेऽपि जिज्ञासितार्थानुमितौ जिज्ञासाजननद्वारा तदुपयोगात्।

सन्दिग्धेऽपि प्रयोजनज्ञानं विना न न्यायावतार इत्यनन्तरं सकलव्यवहारव्यापकत्वाच्च पृथगुद्दिष्टं प्रयोजनम्। तत्र साध्येऽस्य सत इष्यमाणत्वं प्रयोजनत्वं न तु धर्मार्थादित्वम् अनभ्युपगमात् असन्धीय [मान] त्वाच्च। तच्च[1] मुख्यगौणभेदात् द्वेधा। अत्राभिमतसाधनत्वेनेच्छाविषयो निरुपधीच्छाविषयो मुख्यम्। तत्राद्यं बहुधा, अन्त्यं द्वेधा। दुःखाभावसुखभेदात्।

स चायं न्यायोऽबाधितत्वादिसम्पन्नः प्रमाणम्। न तु बाधितविषयादिः प्रत्यक्षबाधितवद्भूतलौष्ण्यानुमानवत्।

---

१. प्रयोजनम्।

## [ बाधस्य पृथक् पदार्थतानिराकरणम् ]

ननु बाधो न पृथग्दोषः रूपत्रयासंपत्तौ तस्या एव दोषत्वात्। तत्संपत्तौ तस्यानवकाशादिति चेन्न गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यत्र रूपत्रयसंपत्तावपि बाधादेव गन्धासिद्धेः। न च तदा पक्ष इव विपक्षे वृत्तेर्व्यभिचारो दोषः। साध्यवद्भिन्न-साध्याभाववतो विवक्षि[त]त्वात्। साध्यवतोऽन्यस्य वा विज्ञेयम्। गौः सास्नावती गोत्वादित्यत्र व्यापकत्वाविशेषात्। प्रसिद्धयैव साध्यया सेद्धव्यम् न त्वपूर्वया। यदि न साध्यबाधो दोषः। अपि च पक्षे व्यभिचारोऽपि तदोच्येत यदि साध्याभावधियः प्रमात्वं निश्चीयेत। न च तस्यानिश्चयोऽपि सन्देहविषयैव दूषकता। पक्षे तस्य तत्त्वेऽनुमानमानोच्छेदापत्तेः। अतो व्यभिचारस्य ज्ञानायोद्भावनाय चोप-जीव्यत्वाद् बाधः पृथक्।

ननु प्रमाणमात्रदोषत्वेन साधारणत्वान्नायं हेत्वाभास इति चेत् न, स्वरूपसतस्तथात्वेऽपि ज्ञायमानस्यास्य हेत्वाभासत्वात् तस्या-साधारणत्वादेव।

*दिङ्नागेन* तु अश्रावणः शब्दः कृतकत्वादिति प्रत्यक्षबाधित-मुदाहृतम्। शब्दे श्रोत्रग्राह्यतायाः निषेधे [न] मानान्तरासंभवे बाह्या पलाप एव पर्यवसाने [न] प्रत्यक्षबाधसम्भवादिति।

तन्न। अश्रावण इति समस्तनञा श्रावणत्वनिषेधबोधनात् तस्य चातीन्द्रियत्वात्।

न च भिन्न एवायमशब्दः शब्दमेव निषेधतीति वाच्यम् सविशेषे विधिनिषेधयोर्विशेषणान्वयस्यौत्सर्गिकत्वात्। यथा 'लोहि-तोष्णीषा ऋत्विजः प्रचरन्ति' 'न जीर्णमलवद्वासाः स्नातकः स्यात्' इति। अत्र सोष्णीषा ऋत्विजः प्रचरन्तीत्यनेन उष्णीष-विशिष्टानामृत्विजां क्रत्वर्थतया वाससश्च प्राप्तत्वात् लौहित्यस्यैव विधेः जीर्णताया मलवत्ताया एव निषेधात्। न च स्वातन्त्र्येणैव

प्रकारानवच्छिन्ननिषेधद्वयोपस्थापने बाध्यभेदापत्तेः ॥ निषेधद्वयविशिष्ट-वासो विधिरेवायमिति वाच्यम् । जीर्णमलवत्पदार्थाभ्यां समस्तवासः पदार्थान्वयः सहित इत्यादौ तस्मिन् वृत्ते पश्चान्निषेधान्वय इति विधिगन्धोऽपीत्यनन्यगतिकत्वादेव न वाक्यभेदो दोषाय। न चैत-दनुरोधादेव समस्तजीर्णादिपदेन निषेधान्वय आदाविति वाच्यम् । नहि दोषभिया शब्दा अपि स्वमहिमानमतिपतन्ति। नान्वया[दा]विति समस्त एवायम् । नञतो जीर्णाद्यन्यवासो विधिरेवायमिति वाच्यम् । विशिष्टयोस्तूदाहरणं सोमेन यजेत नैकोऽध्वनि प्रपद्येतेत्यादि । अत्र च प्रत्येकविधिगुणविध्योरभावात् विशिष्टविधिरेव परिशेषा-दिति वक्ष्यते । अत एव निषेधेऽप्येवम् । एवं मेरुः पाषाणमयः पर्वतत्वादित्यागमेन, ईश्वरो न कर्ता अशरीरत्वादित्यनुमानेन गवय-पिण्डो न गवयत्वेन निमित्तेन गवयपदवाच्यः गोसदृशत्वादित्युप-मानेन बाधितमनुमेय[°मान]म् ।

सन्दिग्धेऽपि प्रयोजनं विना न व्यवहार इत्यनन्तरं पृथगुद्दिष्टं प्रयोजनम् ।

ननु प्रयोजनं सकलव्यवहारव्यापकं न भवति, वितण्डायाः निःप्रयोजनत्वात् । स्थापनाहीनायाश्च तस्याः सर्वशून्यतावादिना साध्यमस्त्वेन परपक्षघातस्याप्यलीकत्वेन प्रयोजनत्वानङ्गीकारादिति चेन्न, तस्यापि परपक्षाघाते तु यत्प्रवृत्तस्यानायत्यापि तत्प्रयोजनस्य स्वीकारयितव्यत्वात्, उद्देश्यतालक्षणत्वात् ।

तस्य चोभयसिद्धतया सिद्धान्तादुत्कर्षादनन्तरं दृष्टान्तः । स च व्याप्यप्रयुक्तव्यापकसत्ताभ्युपेतोऽर्थः । 'प्रत्यक्ष विषयोऽर्थो दृष्टान्त' इति तु यद्भाष्यं तत्साध्यसाधनसामानाधिकरण्यस्य प्रमाणमूलक-त्वख्यापनार्थम् । प्रमेयेष्वन्तर्भवतोऽस्य पृथगभिधानं प्रत्यक्षेण व्याप्ति-ग्रहणस्योभयसामानाधिकरण्यावच्छेकधर्मग्रहनिमित्तकत्वात् । अनु-

मित्यनुकूलव्यापारत्वावसायस्य साध्यसाधनसामानाधिकरण्याधिष्ठानधीजन्यत्वादित्येके ।

तन्न । तस्योदाहरणादेरप्राप्तेः । तस्य यदेवं तदेवमित्याकारत्वात् । न च व्यापारत्वावसायस्तु कारणमपि । वह्निव्याप्यो धूम इत्यादौ तदभावात् । न चैवमनुमाननिमित्तत्वात् पक्षस्यापि पृथगभिधानप्रसङ्गः । उक्तेः प्रयोजनानुसरणं न तु प्रयोजनार्थबोधेनोक्रियतः ।

दृष्टान्तमूलकत्वादनन्तरं सिद्धान्तः । स चाभ्युपगम्यमानोऽर्थस्तदभ्युपगमो वा व्यवहारतौल्यात् । न च वस्तुनि विकल्पो भावः । सर्वेषां वस्तुनियततया विकल्पस्यापि तथात्वात् । अस्य च प्रमेयान्तर्भूतस्यापि पृथगभिधानं तत्त्वनिर्णयविजयकथाप्रवृत्त्यनुकूलत्वात् । तथा हि प्रतितन्त्रसिद्धान्तः कथायामन्तर्हितो विरोधिसिद्धान्तपरिग्रहमवधूय कथकत्वायोगात् । सर्वतन्त्रसिद्धान्तोऽपि कथोपयोगी धर्मविशेषालिङ्गितधर्मिविशेषावगम्य कथाबीजत्वात् । तदनभ्युपगमे विप्रतिपत्तिन्याययोराश्रयासिद्धत्वात् । अधिकरणसिद्धान्तोऽपि यदि ह्यनुमितिरपूर्वसाध्यं न विषयीकुर्यात् तदा निर्विषया स्यात् । पक्षसाध्यसंसर्गसमानसंवित् सभ्येषु''ऽधिकरणसिद्धान्तः । व्यक्तिसाध्यकानुमानमात्रविषयश्चायमभ्युपगमसिद्धान्तोऽपि मनस इन्द्रियतापरीक्षणात् अर्थाप्यमाणो मनस इन्द्रियताभ्युपगमोऽक्षचरणमुनेर्यथैवं रूपः । अयमपि परीक्षादिनिर्वाहकत्वात् कथाद्यनुकूल इति दिक् ।

सिद्धान्तोपजीवकत्वात्तदनन्तरमवयवाः । ते च वाक्यैकदेशाः प्रतिज्ञादयः । यद्यपि अवयवशब्दो द्रव्यसमवायिकारणं वाच्यम् तथापि न्यायैकदेशे भाक्तोऽयम् । एककार्यकरत्वं च भक्तिबीजम्, एकार्थोपस्थितिरूपैककार्यकरत्वादेकवाक्यतालाभो भक्तिफलम् ।

ननु क्षणिकाः क्रमिकाः वर्णाः कथमेकमर्थमुपस्थापयेयुः ?

इत्थम्, प्रथमं घकारानुभवस्ततस्तद्वर्णस्वरूपानुपूर्वीविशिष्टटकारानुभवः। ततो घोत्तरटत्वेन संकेततावच्छेदकरूपेण प्रतिसन्धानम् ततः संकेतस्मृतिः। एवं सर्वाणि पदानि पदार्थाश्च पृथक्-पृथक् स्मृतानि पुनरकेया स्मृत्या विषयीक्रियन्ते। ततो योग्यतादिप्रतिसन्धानाद् वाक्यार्थानुभवः। एकवाक्यत्वं च विभागसाकाङ्क्षत्वे सति एकार्थपरत्वम्। एकश्चार्थः क्वचित् क्रिया क्वचित् कारकं क्वचित् प्रातिपदिकार्थः।

तत्र क्रिया यथा 'सोमेन यजेते'ति। तथा हि न तावदयं गुणविधिः। उद्देश्यविशेषानुपस्थितौ गुणविधानाभावात्। इत एव तदुपस्थितौ उद्देश्यविधेयसोमयोः पृथग्विधाने वाक्यभेदापत्तेः। न च 'ज्योतिष्टोमेन यजेत स्वर्गकाम' इत्यतो यागस्वरूपस्योद्देश्यविशेषस्योपस्थितौ 'सोमेन यजेते'त्यस्मादुत्पत्तिबाधात्। सोमयागप्रतीतौ स किमधिकार इति जिज्ञासायां ते च 'अति[ज्योति]ष्टोमेन यजेत स्वर्गकाम' इत्यधिकारिसम्बन्धबोधकवाक्यस्योपस्थितेः। अतः सोमयज्ञार्थाभ्यां प्रत्ययार्थो भावना विशिष्यत इति विशिष्टविधिरयं सोमस्य तु क्रियात्वाद् वा भावनान्वय इति यागकरणार्थं विशिष्ट विधानेऽपि कारकस्योपसर्जनत्वात् क्रियाप्रधानम्।

*प्राञ्चस्तु* उद्देश्यविशेषानुपस्थितौ गुणविधित्वाभावात् प्रत्येकविधौ वाक्यभेदात् विशिष्टविधौ गौरवात् 'उद्भिदा यजेते'तिवत् सोमशब्दस्य कर्मनामधेयत्वेनान्वय इत्याहुः।

कारकं यथा गोदोहनं पशुकामस्य। अत्र चमसेनापः प्रणीयीतेति वाक्यादप्रणयनस्य प्राप्तत्वात् लोकप्राप्त एव च गोदोहने तत् साधनत्वं विधीयते लाघवात्। अतः साधनताविशेष्यतया कारकमेव वाक्यार्थः। गुणविधिश्चायं 'दध्ना जुहोती'तिवत्।

न[स] च यद्यपि 'दध्ना जुहोती'त्यादिकमग्निहोत्रहोमविधिप्रकरणस्थिततया तस्यैव द्रव्यविशेषं विदधद् भवति गुणविधिः।

न चाग्निहोत्रहोमान्यविधिरेवायम्, व्यक्तिवचनानां सन्निहितविशेषपरत्वात्। तथापि दध्यादीनां सिद्धत्वात् परिसंख्यानमेतत्, न तु तस्यापि विधिरिति वाच्यम्। वचनतः प्राप्ताप्राप्तविभागेन गुणविधिव्यपदेशात्।

प्रातिपदिकार्थो यथा 'यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्य' इति।

ननु सर्वत्र पदानां कार्यपरत्वम्। प्रयोज्यवृद्धव्यवहारमाश्रित्य व्युत्पत्तेः कार्यपर्यवसानात्। तत्तु लोके क्रिया वेदे क्रियायामाशुविनाशिन्यामयोग्यतया स्वर्गकामानुपपत्तेरपूर्वमिति सर्वत्र कार्यमेव वाक्यार्थ इति चेन्न कार्यार्थि[नः]तद्व्युत्पत्त्यभावात्। प्रथमं बालकस्य कार्यार्थितज्ज्ञानानुपस्थितेः। अथ घटादिकार्यविशेषान्वितविज्ञानोपस्थितेरेव घटादेरन्यलभ्यत्वप्रतिसन्धाने तत्त्यागे तदुपस्थितिरिति चेत् त्यजतां हि कार्यांशमपि अन्यलभ्यत्वात् अन्विताभिधानमेव स्वीकुरु। सिद्धार्थानामप्यनुभवस्य दुरपह्नवत्वात्। अन्यलभ्यता चान्विताभिधानमपि निकृन्ततीत्यलमतिपीडया।

ननु पदान्यतीतत्वान्न वाक्यार्थानुभवे कारणम्। अत आवश्यकी पदार्थस्मृतिरेव तथा। अत एव—

'पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥'

[प्रमाणवार्त्तिकम् ३५८]

इति [कीर्ति]रिति चेन्न पदानामतीतत्वेऽपि वर्तमानायास्तत्स्मृतेरेव कारणत्वात् तदवच्छेदकत्वाच्च पदानां पदार्थस्मृतेश्च तत्त्वे घटः कर्मत्वमानयनं भावनेत्यादावपि घटमानयेत्यत्रेवान्वयबोधापत्तेः। किन्तु व्यापारः। इयं श्वेतोऽश्वो धावतीति धीस्तु अयं पुरो दृश्यमानः श्वेतोऽश्वत्वे सति वर्तमानधावनः ह्रेषकत्वे सति खुरविक्षेपजन्य-

तावच्छेदक इति विशेषणानि शब्दकर्तृत्वात् द्वैषकसमीपधावत्पुत्रवत् तुरगवदित्यनुमानात् । तेऽमी पञ्चावयवाः मिलित्वा न्यायतां भजमानाः विप्रतिपन्नं पुरुषं प्रतिपादयन्तीति । अतः प्रमेयाद्यन्तर्भूता अपि पृथगुद्दिष्टा इति ।

न्यायानुकूलत्वादनन्तरं तर्कः । अनुकूलता च प्रमाणविषयविभाजकता । तथा हि साध्यतदभावकोटिकसंशये तज्जन्यजिज्ञासायां च सत्यां विरोधिरूपोपस्थितौ सतोऽपि लिङ्गपरामर्शस्यानुमितिजनकत्वमन्यथा सत्प्रतिपक्षत्वाद्यदोषत्वापातादित्यनभिमतकोटावनिष्टोपदर्शनेनानियतकोटिकसंशयादिनिवृत्तिरूपानुमितिर्विषयविभागस्तर्केण क्रियते । यद्यपि शङ्का न सार्वत्रिकी तथापि यत्रैव सा तत्रैव तदुपयोगः । तन्निवृत्तिरपि पुरुषप्रयत्नाधीनानुमानस्थले द्रष्टव्या ।

ननु तर्कः साध्यव्यतिरेककोटावनिष्टोपदर्शनेन तां प्रतिषेधन् जिज्ञासां संकोचयतीति पृथगेव प्रमाणं स्यादिति चेन्न । अस्य हि साध्यव्यतिरेकनिषेधे प्रामाण्यमाशङ्क्यते । विपर्ययपर्यवसितस्य तदपर्यवसितस्य वा ? अन्त्ये नास्य तत्स्पर्शोऽपि । आद्येऽप्येतद् विपर्ययस्यानुमानतया तस्यैव तत्र मानता, लाघवादावश्यकत्वाच्च । अस्य तु तत्त्वज्ञापकतयेतिकर्तव्यतात्वमात्रम् । न च वैपरीत्यम्, तर्कः प्रमाणसहायो न प्रमाणमिति प्रत्यक्षसिद्धत्वात् । किञ्चायं प्रमारूपं प्रमाणं स्यात् लिङ्गपरामर्शवत् अप्रमारूप[ं वा] इन्द्रियादिवत् । नाद्यः, यदि शब्दस्याव्यवस्थार्थकता स्याच्छब्दस्यारोपार्थकतया तर्कस्यारोपिताव्यवस्थितसत्त्वोपाधिकारोपिताव्यवस्थितसत्त्वविषयत्वेन अनिश्च[याय]कतया अप्रमात्वात् । फलानतिरेकान्नान्त्योऽपि । न च व्याघातादिस्थले व्यभिचारात्तर्कस्येतिकर्तव्यतात्वमपि नेति वाच्यम् । द्वेधा हि निश्चयशरीरम् किञ्चिदिदमित्थमेवेति । साधारणे फलेऽस्याव्यभिचारात् ।

स चायं विरोधप्रसङ्गे सति प्रमाणमात्रसहकारी । तथा हि प्रत्यक्षस्य घटाभाववति भूतले प्रवर्तमानस्य घटसत्त्वशङ्कायां यद्यत्र

घटोऽभविष्यत् तदा भूतलमिवाद्रक्ष्यतेति विरोधिधीनिरासरूपोऽनुग्रहस्तर्केण क्रियते। एवमनुमानस्य प्रवृत्तौ शङ्कायां च यदि निर्वह्निः स्यात्तदा निर्धूमः स्यादित्यनेन शङ्का निवर्त्यते। एवमुपमानोऽपि गवयत्वप्रवृत्तिनिमित्तकतायां प्रवर्तमाने गोसादृश्यस्य तन्निमित्तत्वशङ्का गौरवलाघवा[भ्या]मप्रतीत[तत्त्वा]नां गवयव्यवहारप्रसङ्गेन च निवर्त्यते। यद्यपि गौरवलाघवे प्रसङ्गात्मकतया तत्तत्सास्नाति सिद्धौ [?] [तत्तन्नाम्ना प्रसिद्धे]। एवं शब्दोऽपि स्वर्गकामो यजेतेति पदात् भावना धात्वर्थः प्रतीयते। अतः समानपदोपात्तत्वाच्च धात्वर्थः साध्यो भवतु स्वर्गकाम इति ब्राह्मणत्वादिवदधिकारिविशेषणमात्रम्।

यद्वा भिन्नपदोपात्तः पुरुषविशेषणं स्वर्गः साध्य इति संशये धात्वर्थस्य साध्यत्वे तस्यादुःखतयोपदेष्टुराप्तत्वम्, विधेश्चेष्टोपायत्वम्, बाह्यस्य [वाक्यस्य] प्रवर्तकस्य ज्ञानजनकत्वं प्रेक्षावत्प्रवृत्तिर्न स्यात्। अङ्गस्य च साध्यत्वे सर्वमिदमुपपद्यत इति तर्केणानुगृह्यमाणः शब्दोऽपि स्वकार्ये मानम्। यदाहुः—

मीमांसासंज्ञकस्तर्कः सर्ववेदसमुद्भवः।
सोऽतो वेदो रुमाप्राप्तकाष्ठादिलवणात्मवत्॥ इति।

[तात्पर्य टीका]

कर्तृतामप्यस्याहुः—

धर्मे प्रमीयमाणा[णे] हि वेदेन करणात्मना।
इति कर्तव्यताभागं मीमांसा पूरयिष्यति॥

स चायं व्यापकप्रसञ्जनमात्रमूर्तिर्बोद्धव्यः। अनिष्टप्रसङ्गात्मकत्वात्। पूर्वप्रतीकं तु तत्सामग्री। स चायं प्रमेयादिष्वन्तर्भवन्नपि न्यायाङ्गतया पृथगुद्दिष्टः।

तर्कजन्यत्वात्तदनन्तरं निर्णयः। स च तर्कपूर्वकस्तत्त्वनिश्चयः

प्रत्यक्षादीनामपि तर्कसहायानां निर्णयफलकत्वात् । सोऽयं प्रमाण-फलभावनियमात् प्रमाणादिष्वन्तर्भवन्नपि वादावसानिकत्वेन कथान्तरस्यापि परम्परोद्देश्यतया लौकिकयात्राक्षमत्वेन च पृथगुद्दिष्टः ।

निर्णयावसानत्वात्तदनन्तरं वादः । स च नानाप्रवक्तृक उभय-पक्षस्थापनावान् निर्णयोद्देशप्रवृत्तो वचनसन्दर्भः । अत एव न पुरुषा-पराधान्निवृत्ते वादेऽव्याप्तिः । तत्रापि तदुद्देश्यत्वात् । नापि दैवा-न्निर्णयावसाने जल्पेऽतिव्याप्तिः । तस्य विजिगीषुकथात्वेन तदुद्देश्य-त्वाभावात् । अयं च प्रमेयाद्यन्तर्भूतोऽपि तत्त्वनिर्णयावसानिकत्वात् [स] फलत्वाच्च तदनन्तरं पृथगुद्दिष्टः ।

परस्परमारादफलेन फलवत्त्वात्तदनन्तरं जल्पः । स च स्वपक्ष-स्थापनपरपक्षखण्डनविषयस्वशक्तिपराशक्तिख्यापनप्रवृत्तो वचन-सन्दर्भः । विजयेन जल्पफलेन फलवत्त्वात् ।

तदनन्तरं वितण्डा । सा च जल्पान्या विजिगीषुकथा । प्रमेया-द्यन्तर्भूतयोरप्यनयोः पृथगुद्देशः परम्परया तत्त्वज्ञानोपकरणख्याप-नार्थः । तच्च तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोह-संरक्षणार्थं कण्टकशाखावरणवदिति [न्या० सू० ४।२।५०।] सूत्रे व्यक्तम् ।

कथात्रयोपयोगित्वात्तदनन्तरं हेत्वाभासाः । ते च हेतवः केन चित्साध्येन हेतुवदाभासमानाः निग्रहस्थानान्तर्भूता अपि वादे चोद-नीयत्वात् पृथगुद्दिष्टाः । यद्यपि न वादे चोदनीयत्वं पृथगभिधाननिय-तम्, उभयतो व्यभिचारात् । तथापि प्राप्ताभिधानमधिकप्रयोजनपरम् । ब्राह्मणभोजनोक्तौ [वसिष्ठ] वचस्येव । तच्च प्रयोजनं वादहेत्वा-भासयोस्तत्त्वनिर्णयतद्विघातफलत्वालोचनया हेत्वाभासानां वादे-ऽवश्यचोदनीयत्वमेव ।

ननु यदि पृथगभिधानाद् वाददेशनीयता कथं तर्हि सा न्यूना-दीनाम् ? इत्थं, पृथगभिधानसूचितस्य तत्त्वनिर्णयविघातकत्वस्य न्यूनादिसाधारणत्वात् ।

सदुत्तरापरिस्फूर्तौ छलादिनापि पराहङ्कारखण्डनेन तत्त्वाध्यवसायसंरक्षणार्थं स्ववाक्ये वर्जनार्थं परवाक्यानुयोगार्थं जात्यादिप्रश्ने तदुत्तरार्थमनन्तरं छलादि । तत्रापि प्रयोगदूषणसामान्यादादौ छलम् । उभयपक्षसाम्यात्ततो जातिः । कथावसानिकत्वात् सर्वत्र वर्जनीयतया अनन्तरं निग्रहस्थानानि । एतेषां च कथात्रयपरिकरतया अपवर्गोपयोगः ।

इयं चान्वीक्षिकी न केवलं मुमुक्षूणामुपादेया अपि तु विद्यान्तरसाध्याग्निहोत्रकृषिसामा[न्या]दि प्रयोजनार्थिनामपि प्रवर्तकेष्टोपायताज्ञाने, निष्कम्पतायाः अन्यथा अभावात् ।

तदाहुः—प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥ इति ।
[न्यायभाष्यम् १।१।१।]

एतेन विद्यामात्रार्थकत्वकथनेनान्यार्थमभ्यस्तेयमान्वीक्षिकी कदाचिदपवर्गायोपयोक्ष्यत इत्यपि दर्शितम् । प्रदीपत्वं चास्याः तत्प्रामाण्योत्पादकत्वात् । सर्वकर्मोपायत्वं च तद्व्युत्पादकविद्यातात्पर्यपरिशोधकतया । नहि 'आदित्यो वै यूप' इत्यादिश्रुतौ 'माघे परिकर्मिता भूमिः सुवर्णं फलती'ति वार्तायां 'यमो राजे'ति दण्डनीतौ चादित्यसुवर्णयमशब्दानामन्यार्थभूते न्यायादवगम्यते । अत एव सर्वधर्माणामाश्रयः । द्रव्यगुणकर्मणामभिमतानभिमतोपायताज्ञापनेन विद्याः प्रेक्षावतः प्रवर्तयन्ति । तथा द्रव्ये दध्ना जुहोतीत्यादौ, गुणे अरुणयैकहायन्या सोमं क्रीणातीत्यादौ, कर्मणि व्रीहीनवहन्तीत्यादौ विधेयताबोधार्थमेतदपेक्षणात् ।

किञ्च विधिपदसमभिव्याहारविशेषात् किमविशेषेण साध्यसाधनेतिकर्तव्यतासु प्रवर्तनम् आहोस्वित् साधनेतिकर्तव्यतामात्रे । तत्र यदि साध्यांशोऽपि प्रवर्तनागोचरस्तदा श्येनादिसाध्याया हिंसाया दैक्षपश्वालम्भवद् विहिततया सर्वाहिंसाश्रुत्या सामान्यविशेषभावा-

श्चानर्थत्वम्। यदा तु साध्यस्यासिद्धत्वान्न प्रवृत्तिविषयत्वमिति रागप्राप्तं साध्यांशमनूद्य योऽपचरितुमिच्छेत् तस्यायमिष्टोपाय इति साधनेतिकर्तव्यते एव विधीयेते तदा श्येनादिसाध्याया हिंसाया अवाहितत्वेनाहिंसाश्रुतिसंकोचाभावात् अनर्थतैव श्येनादिहिंसायाः । तदिह साध्यांशे अप्रवर्तनमान्वीक्षिकीसाध्यन्यायगम्यम् ।

ननु फलस्य साध्यत्वेन प्रयत्नगोचरत्वे यागस्यापि तथा स्यादिति चेन्न, नहि यागादीनां साक्षात् प्रयत्नविषयतां विधिराह, किन्तु इष्टोपायताम्। तथा च तदसिद्धिदशायां सिद्धे तत्साधने प्रवृत्तिः। तत्सिद्धौ तु तत्रैव। न त्वेवं फले प्रवर्तकेष्टोपायताबोधविरहाच्च अर्थावबोधे सति सामान्यविशेषन्यायावतारः। यथा पदे जुहोति, अर्के जुहोतीत्यादौ भिन्नप्रकरणाम्नातस्य होमविशेष्यस्य सद्विधिश्रुताधिकरणार्थितयानधिकरणाकाङ्क्षा । अत आहवनीये जुहोतीत्यत्राधिकरणसाकाङ्क्षिणस्तदन्यस्य होमस्याहवनीयान्वयः। न चेह तथा। तदा हि स स्याद् य[द्य]भिचारस्य साधनत्वं वेदो बोधयेत्। न चैवम् , किन्तु अभिचारसाध्यत्वबोधद्वारा प्रवर्तयतीति क्व संकोचशङ्का। न, प्रवृत्तिविषयस्य बलवदनिष्टानुबन्धं बोधयन् विधिः प्रवर्तयतीति विशेषविधौ तथा बोधयितुमुद्धुरे कथं सामान्यविशेषविरोधः। तथा 'यस्योभयं हविरार्तिमच्छेत् स इन्द्रं पञ्चशरावमोदनं निक्षिपेदि'त्यत्रोभयत्वविवक्षासंशये उभयत्वविशिष्टस्य हविषोऽनुक्तत्वात् नायं तदनुवादः किन्तु हविर्मात्रस्य । उभयत्वं त्वत्र संभवमात्रेणाकमित्येकस्यानेकस्य वा हविष आर्तावुक्ता प्रायश्चित्तमेवं यस्योभावपि अतिम्लोचेयातां तस्य पुनराधानं प्रायश्चित्तावित्यत्रोभयत्वविवक्षायाः संशये स एवाहितः पूतः आहवनीयो भवतीत्यनेन दक्षिणाग्नेरवाधानेष्टिपरमेनेष्टिजसंस्कारद्वयोपेतस्याहवनीयत्वेनाग्न्योर्युगनद्धवाहितया सहैव द्वयोरुपचार इत्यगत्योभयत्र विवक्षात्रेति ।

एवमनुष्ठानगते प्रयोजकत्वाप्रयोजकत्वे अप्यान्वीक्षिकीगम्ये । तथा हि 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र दध्यानयनप्रयोजकत्वमामिक्षायाः पात्रैकप्राथम्यात् तद्धितस्य देवतासंबन्धोपस्थापकत्वेनामिक्षायोगस्य पूर्वं प्रतीतेश्च । वाजमन्नं तच्च प्रकरणादत्रामिक्षैव तत्संबन्धेन योगतो विश्वेदेवानामेवात्र वाजिशब्देनाभिधानादामिक्षाया उपजीव्यत्वाच्च । न तु वाजिनास्यानुद्देश्यावर्जनीयोत्पत्तिकत्वात् । एवं च वाजिनापचारे वाजिहोमलोप एव चोदितद्रव्याभावात् न पुनर्दध्यानीय वाजिनान्तरकरणं वाजिनस्य तदानयनाप्रयोजकत्वादित्यपि तद् गम्यमेवेति ॥१।१।१॥

तदेवं शास्त्रकृताद्यसूत्रेण प्रयोजनाभिधेयसंबन्धोद्देशप्रदर्शनेऽप्यनवधृततदाप्तभावानामविश्वासान्न तल्लक्षणादिप्रवृत्तिरिति परीक्षार्थं द्वितीयसूत्रम्—

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः । १।१।२।**

अत्र तत्त्वज्ञानं विषयः । तदपवर्गहेतुर्नवेति संशयः । तथोक्तमेव सांशयकं द्विधा ह्यभिधेयं सम्यगसम्यग् वेति । प्रवृत्तिः फलम् । पूर्वपक्षस्तु तत्त्वज्ञानानन्तरमेवोत्पद्यतेऽपवर्गः क्रमेण वा ? नाद्यः, अभ्युपगमविरोधात् । तदूवर्गस्यानवस्थाने शास्त्रस्यातत्त्वदृक् पूर्वकत्वापाताच्च । नान्त्योऽपेक्षणीयैरेव मिथ्याधीध्वंसादिभिरन्यथासिद्धया तत्त्वज्ञानस्याकारणतापातात् । न चासद्धीध्वंसो व्यापारः *भाव्य*-विरोधिप्रमाणमात्रसाध्यत्वेन व्यभिचारितया अव्यापारत्वात् ।

राद्धान्तस्तु द्विधा निःश्रेयसम्, परापरभेदात् । तत्र परं दोषमोषलक्षणम् । तदुच्यते—'जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यत' इति । तत् साक्षादेव तत्त्वज्ञानात् । तथा हि श्रुतिभ्यः श्रुतमात्मानमन्वीक्षापरीक्षितन्यायैरवधार्य चिरनिरन्तरादरसेवितयमाद्यङ्गकसमाध्यभ्यासरूपनिदिध्यासनेन साक्षात्कृत्य तेन च मिथ्या-

धीप्रागभावासहवृत्ति समासाद्य क्लेशान् मुञ्चन् जीवन्मुक्त इत्युच्यते, तदेतदपरं निःश्रेयसम् ।

न च पारावतकुम्भीनसाजगरादिशरीरावच्छेदेन तदापि राग-द्वेषमोहाभ्युपगमात् कुतः क्लेशहानमिति वाच्यम् । तदा तेषां सत्त्वेऽप्यन्यथानुविद्धतया क्लेशत्वाभावात् । असत्त्वमेव वा त्वदुक्तमक्षिपश्च तुङ्ग [?] इत्यादि । ततश्च बीजक्लेशाभावात् अनागतादृष्टस्यानुत्पन्नाभ्युत्पन्नस्य भोगेन क्षयादनागतशरीरानुत्पादे वर्तमानतद्ध्वंसे दुःखासहवृत्तिदुःखध्वंसात्मकं परनिःश्रेयसमुत्पद्यते ।

ननु तत्त्वज्ञानादभुक्तान्यपि कर्माणि क्षीयन्ते तत्कथं तद्भोगापेक्षा ? तथा हि श्रूयते—

भिद्यते हृदयग्रन्थिश्छिद्यते कर्मबन्धनम्[1] ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

[मुण्डकमुप० ३।२।२।८।]

स्मर्यते च—ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा [गीता ४।३६। ] इति चेन्न, श्रुतिस्तावन्न तत्त्वज्ञानादभुक्तकर्मक्षयमाह । भोगद्वारापि तत्क्षयसम्भवे श्रुत्यर्थाक्षतेः । स्मृतिरपि भस्मसात् पदस्य भक्तितया यथा वह्नेः परम्परया भस्म तथा तत्त्वज्ञानात् कर्मक्षयमाह । एवं परम्पराघटकोऽपि भोग एव कल्प्यते दृष्टत्वात् । तथा च [ न ]—'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'त्यस्याः स्मृतेः सङ्कोचः । एवमेव 'आचार्यवान् पुरुषो वेद तदेवास्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' [छा० उ० ६।१४।२।] इति श्रुतेर्बाधश्च न प्रसजतीति । अस्योत्पन्नतत्त्वज्ञानस्य तावदेव चिरं विलम्बो यावन्नोत्पन्नेन कर्मणा भुज्यमानेन मोक्ष्यमाणेन च विमोक्षः । विमोक्ष्ये विमोक्ष्यते सम्पत्स्ये सम्पत्स्यते, अत्र च तकारयोर्लोपश्छान्दस

१. छिद्यन्ते सर्वसंशया इति प्रसिद्धः पाठः । अत्र तु मातृकायां तथोपलब्धः ।

इत्यौपनिषदाः । विमोक्ष्यत इत्यत्र भोगेनेति शेषः । न च शेषे भोगेनेति पदे मानाभावः, उत्पन्नतत्त्वज्ञानस्थितिप्रतिपादिकाया एतच्छ्रुतेरेव तत्त्वात् । कथमन्यथा स विलम्बेत । अथानन्तरं कैवल्येन परनिःश्रेयसेन सम्पत्स्यते सम्भत्स्यत इति तदर्थात् ।

एवं सत्याहुः—विवादाध्यासितकर्माणि भोगनाश्यानि अक्षीणं प्रायश्चित्तकर्मत्वात् देहारम्भककर्मवत् । प्रायश्चित्तपदं भोगान्यनाशकपरम् । तथा च भोगो समाहितसामग्र्यनाश्यकर्मत्वम् इत्यर्थोऽतो न कीर्तनकर्मनाशापारगमनादिनाशितकर्मभिर्व्यभिचारः । तत्त्वज्ञानस्य भोगनिरपेक्षस्य न तन्नाशकता किन्तु तद्व्यापारकस्यैवेति न स्वरूपासिद्धिः । न च भोगस्य तत्त्वधीव्यभिचारान्न तद्व्यापारता । युगपद्भोगस्य तद्व्यभिचारात्, अनुत्पन्नप्रधानस्याङ्गापूर्वस्य च सिद्धेश्चेति न तेन व्यभिचारः । उत्पन्नप्रधानस्य त्वङ्गापूर्वस्य प्रधानफलेनैव फलवत्त्वात् । अन्यथा निष्फलतया तत्राप्यप्रवृत्त्यापत्तेरिति ।

अङ्गापूर्वस्य भोगनाश्यतैवेति *भास्करः* ।

अनुत्पन्नप्रधानस्य प्रधानासिद्ध्या फलशङ्कापि न । नाशस्तु तत्त्वज्ञानमात्रेण उत्पन्नप्रधानस्यापि प्रधानेनैव नाशस्तदर्थमेतत् कल्पनात् । न चैवं निष्फलतया तत्राप्रवृत्तिः, तत्र वी[त]रागस्यैवाधिकारात् तदङ्गं यागे रागादङ्गे वे [? ति] धीति *चिन्तामणिः* । कार्यकारणभावमप्रदर्श्य कारणोच्छेदात् कार्योच्छेद इत्यस्यालाभात् । तत्प्रदर्शनार्थं मिथ्याज्ञानानामित्येको योगः । तत्र च समासोपस्थितेरितरेतरयोगस्य योग्यतया कार्यकारणभाव एवावगमात् । उत्तरोत्तर इत्यादि पर इत्येके । तन्न, अर्थतस्तल्लाभे वाक्यभेदस्यान्याय्यत्वात् । न ह्यर्थलभ्यं सूत्रकारा दर्शयन्ति । यदाहुः—

अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ इति ।

[विष्णुधर्मोत्तरपुराणम्] स्तोभोऽधिकम् ।

अत्रात्मनि तावन्मिथ्याज्ञानम् नास्त्यात्मेति । अस्तित्वं भावत्वम् नास्तित्वमभावत्वम् । तथा च कार्यापवर्गाद्याश्रयत्वविरोधः । तत्र चारोपहेतुः सारूप्यं प्रमाणगम्यत्वमेव ।

ननु सर्वत्र [न] सारूप्यज्ञानमारोपहेतुः, शङ्खेऽसरूपे पीतरूपस्यारोपादिति चेत् न, तत्रापि हि शङ्खपीतगुणौ आरोपविषयौ संसृष्टत्वभावत्वं चारोप्यम् । अत्र च न शङ्खत्वविशेषदर्शनं विरोधि संसृष्टत्वस्य केवलान्वयित्वात् । न च पीतद्रव्यशङ्खयोस्तादात्म्यमेवारोप्यते पीतद्रव्यस्यापित्तस्य तदाग्रहात् । अन्यथा परेणापि तस्य स्वयं च तत्संख्यादेर्ग्रहणसंभवात् । तद्रूपत्वगत्यान्याग्राह्येऽपि स्वग्राहकत्वकल्पनात् । द्रव्यान्तरोपरागेणैव प्रत्यये लाघवात् गुणमात्रविश्रामाच्च । एवं तिक्तो गुड इत्यादेरपि विशेषादर्शनान्तर[ज] भ्रमस्य संसृष्टत्वमेव विषयः । विशेषादर्श[न]जस्य तु विकृतारोपादेस्तादात्म्यमिति ।

सारूप्यं च द्रव्यत्वगुणत्वादिकमेव । पीतचित्रविल्वयोर्गुणगुणिनोः संसर्गे द्रव्यत्वगुणत्वादिकं सहचरितं दृष्टम् । अतोऽत्रापि तद् दृष्ट्वा दोषवशात् केवलोपस्थितयोरगृहीतसंसर्गयोः शङ्खपीतिम्नोः संसर्गमारोपयति । द्रव्यत्वादिधीस्तु प्रत्यक्षादेव । न च मस्यामनुभूयमानभाषारोपे सारूप्यज्ञानमारोप्य स्मरणरूपद्वारा सम्भवेन व्यभिचारीति वाच्यम् । तत्रापि सारूप्यज्ञानजन्यविशिष्टमाषानुभवस्यैवारोपहेतुत्वात् । आरोप्यधीस्त्वनुभवः स्मृतिर्वेत्यन्यदेतत् ।

*अन्ये* तु यत्र सारूप्यमेव दोषस्तत्रारोप्योपस्थापकतया तदुपयोगः । यत्र तु पित्तादिर्दोषस्तत्रारोप्योपस्थितिः प्रत्यक्षादेवेत्याहुः ।

एवं शरीरादावहमितिधीः मिथ्याधीः । नन्वस्ति वात्मधीरेव तथा शरीरादि तु दुःखहेतुत्वेन तस्यापि हेयत्वात् ।

न च शरीरादिनिवृत्त्यैव निर्दुःखत्वे किमात्म ०० इच्छा नेन [?] आत्महानेनापि तत्सिद्धौ तुल्ययोगक्षेमत्वात् । तदाहुः—

न तैर्विना दुःखहेतुरात्मा चेत्तेऽपि तादृशाः ।
निर्दोषं द्वयमप्येव वैराग्यं च द्वयोस्ततः ॥
[प्र० वा० १।२२७]

इति *त्रयीबाह्याः* । तन्न, आत्मनो नित्यत्वात् तद्धानस्या शक्यत्वात्, अपुरुषार्थत्वाच्च । न हि मा भूवमिति प्रवर्तते ।

नन्वेवं स्थिरात्मदर्शने तत्र खिद्यतस्तदुपकारायावद्यतः कुतोऽपवर्गः । यदाहुः—

सुखी भवेयं दुःखी वा मा भूवमिति तृष्यतः ।
यैवाहमिति धीः सैव सहजं सत्त्वदर्शनम् ॥
[ प्र० वा० १।२०२।३। ]

सत्त्व आत्मा ।

नित्यात्मदर्शिनो रागः कस्य न स्यान्मुनेरपि ।
नैरात्म्यदृष्टिरेवेयमुपादेया मुमुक्षुभिः ॥

तथा च क्षणिकात्मधीरूपा नैरात्म्यदृष्टिः तत्त्वदृष्टिरिति चेन्मैवम् । क्षणिकतयात्मनोऽनुपकार्यत्वेन तदपवर्गाय प्रवृत्त्यनुपपत्तेः । तस्या ह्यनुपकारकत्वापत्तेश्च उपकार्यान्तरवत् । न च सन्तान उपकार्यः स्थिरात्मवत् पुना रागप्रसङ्गात् ।

किं पुनः मिथ्याज्ञानं तत्राकारबाह्यत्वगोचरं ज्ञानं तदिति *सौत्रान्तिकाः* । तत्र विप्रतिपत्तिः शुक्तिगतत्वेन भासमानो रजतत्वादिराकारो रजतज्ञानवृत्तिर्न वा । तत्र हि बहीरजतत्वं निषेधता बाधकेन ज्ञानस्यैवायमाकार इति निश्चीयते पारिशेष्यात् । न च रजतीय एव सः, भेदे विषयविषयिभावेऽतिप्रसङ्गादिति । आकारमबाह्यमेव बाह्यत्वेनोल्लिखन्ती धीर्मिथ्याधीरिति । मैवं, नेदं रजतमितिवन्नाहं रजतमिति प्रत्ययात् ।

निराकारवादिनो *वैभाषिकास्तु* असदेव भासते भ्रमे । तत्र विप्रतिपत्तिः, प्रमाविषयत्वं भ्रमविषयस्य व्यापारो न वा ? तत्र पुरोवर्तिरजतत्वविषयत्वेन धियो न भ्रमत्वम्, तयोः सत्त्वात् । किन्तु तयोर्वैशिष्ट्यविषयत्वेन । तच्चासदेवेति भ्रमात् सन्मात्रमेव गोचरयति ।

यद्यपि क्वचिदवस्तुनः क्वचिद् वस्तुनः स्पर्शेऽपि निषेधकोटिर्लब्ध इति तावन्मात्रं च *वैभाषिकमतं* तथापि चेदेकत्रासद्वैशिष्ट्यविषयता तेषां व्यवस्थिता तर्हि सर्वत्रैव सा, न्यायतौल्यादिति निषेधकोटिर्नैतरथा सम्भवतीति । नेन्द्रियसंबन्धाभावेनासद्भावे मानाभावात् । न च सदुपरागाणां सदपि भासते । ग्रहणे संबन्धस्य तन्त्रत्वेन सदुपरागस्याप्रयोजकत्वात् । किन्तु सदेव तत्रापि भाति । कथं तर्हि भ्रमता, व्यधिकरणप्रकारकतया ।

नन्वस्तु अनिर्वचनीयख्यातिः । तथा हि भ्रमे तावत् सन्न भासते, प्रमात्वप्रसङ्गात् । नासत् प्राप्त्यभावात् । ततः सत्त्वासत्त्वाभ्यां तद्विषयस्यानिर्वाच्यतया अनिर्वचनीय एव तद्विषय इत्यौ*पनिषदाः* ।

तत्र विप्रतिपत्तिः भ्रमज्ञानं दुष्टत्वव्याप्यानिर्वचनीयमात्रविषय विषयकं न वा । अनिर्वचनीयत्वं च निर्वचनानां दोषत्वव्याप्यत्वम् । अत्र च भ्रमस्थले सर्वा उक्तिरसम्यगित्येतस्यात्रैवोक्तः सम्यक्त्वा सम्यक्त्वयोर्व्याघातो दोषः ।

अस्तु तर्हि अख्यातिरेव भ्रमः । तत्र विप्रतिपत्तिः, ज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्ति न वा । विधिप्रसिद्धिरिच्छात्वे भ्रमजनिताया इच्छाया *प्राभाकरै*रपि व्यधिकरणप्रकारकत्वाभ्युपगमात्, न तु धियो वक्ष्यमाणदोषात् । तथा हि विषयं विना रजताकारज्ञानाभ्युपगमे परिशेषात्तस्य स्वाकाररजतत्वग्राहित्वापत्तौ साकारापातः असतो-रजतस्य भाने मानाभावः रजतज्ञानस्य रजतस्वभावसंबन्धस्यान्यग्राहित्वे सद्विरोधः । अप्राप्तरजतभाने हेत्वभावः । न च दोषो हेतुः

तस्य प्रकृतकार्यप्रतिबन्धकमात्रत्वात्। न हि भृष्टकुटजबीजं न्यग्रोधधानायै कल्पते। ज्ञानाप्रामाण्ये अनाश्वासापातः। न च प्रवृत्तिसामर्थ्यज्ञानादाश्वासः ज्ञानत्वाविशेषेण, तत्रापि शङ्काग्रासात्। तदाहुः—

साकारपातादसतां न लाभात्
संविद्विरोधादथ हेत्वभावात्।
धियामनाश्वासभयाच्च नष्टा
यतोऽन्यथाख्यातिरतोऽयथार्था ॥

अहो बत महानेष प्रमादो धीमतामपि।
ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धनः॥

किन्तु इदमिति शुक्तिग्राही अनुभवः रजतमिति स्मरणं दोषात् प्रमुष्टतत्त्वमनयोश्च ज्ञानयोः स्वरूपतो विषयतश्च दोषजन्यभेदाग्रहो भ्रमः। तत्र स्वतन्त्रोपस्थितेष्टत्वभेदाग्रहः प्रवृत्तौ स्वतन्त्रोपस्थितानिष्टभेदाग्रहो निवृत्तौ हेतुः। इतश्चारोपहेतुतया उभयसिद्धात् प्राथमिकात् प्रवृत्त्याद्युपपत्तौ किमक्लृप्तारोपकल्पनया।

न च यत्र रङ्गरजतयोरिमे रजतरङ्गे नेमे रङ्गरजते इति चतुर्धा विपर्यस्यति, तत्रैकैकत्र स्वतन्त्रोपस्थितेष्टानिष्टभेदाग्रहाणां प्रत्येकं प्रवृत्तिनिवृत्ती स्यातामिति वाच्यम्। तत्र रङ्गरजतयो रङ्गरजतभेदग्रहाभ्युपगमात्। न चैवमन्यथाख्यातिः, दोषवशात् पुरोवर्तिनी रङ्गरजते विहाय रङ्गत्वरजतत्वाभ्यामुपस्थितानां तयोर्भेदग्रहात् अभेदस्य तयोः सत्त्वादेवैतादृशि भ्रमे मानाभावात्।

एवं सति प्रयोगः, ज्ञानत्वं न विशेष्यावृत्तिप्रकारकवृत्ति ज्ञानमात्रवृत्तिधर्मत्वात् प्रमात्ववदिति।

अत्राहुः—सत्यस्थले प्रवृत्तिमात्रं प्रतीष्टपुरोवर्तिज्ञाने हेतुतया व्यवस्थितेऽतिप्रसङ्गवारणार्थं विषयतया वैशिष्ट्यमेव कारणतावच्छेदकं कल्प्यते लाघवात् कारणताग्रहसमये ज्ञानवित्तिवेद्यतया-

अवश्यं शीघ्रोपस्थितत्वात् बाधकाभावाच्च । न तु स्वतन्त्रोपस्थितेष्ट भेदग्रहस्याभावः कारणं, तादृशभेदाग्रहत्वं च हेतुतावच्छेदकं, गौरवात् कल्पनीयोपस्थितिकत्वाच्च । न चैवं भ्रमरूपं ज्ञानान्तरमप्यास्थेय-मिति गौरवं दोषाय । न हि तदाधिक्यशङ्का तत्कल्पनापरिपन्थिनी सिद्ध्यसिद्धिव्याघातात् । यच्च युगपत् प्रवृत्तिनिवृत्तिप्रसङ्गे समाहितं तदपि न एकरङ्गरजतज्ञाना[न]न्तरं तयोरेव यमजयोर्वा विपरीत-चतुष्के अन्यथाख्यातेरतिप्रसङ्गाद् वा न भेदाग्रहादुपपत्तिरिति ।

किञ्च दोषस्य प्रवृत्तौ जनयितव्यायां न भेदाग्रहो व्यापारः । तस्य केवलाधिकरणरूपत्वेन तदसाध्यत्वात् । तद्धीरूपत्वेऽपि च तस्याः प्रमात्वेन दोषाजन्यत्वात् । न च तादृशी प्रमापि दोषजन्यैव, तस्याः क्लृप्तसामग्र्यन्तरजन्यत्वात् । तस्माद् भ्रमोऽपि सत्यमेव ज्ञानम् ।

यत्तु दोषासहकारान्न विजातीयकार्यमित्युक्तं तद्बीजेन्द्रिय साधारणस्यैकस्य ००० स्याभावादयुक्तम् । ज्ञाने रजतत्वानभ्युपगमात् विशेषणविशेष्यविषयत्वाच्च न साकारपातः ।

नापि संविद्विरोधः । विशिष्टज्ञानस्य विशेषणविशेष्यीयतया-न्यथाभानस्यापि तथात्वात् । न च हेत्वभावः, विशेषणज्ञानविशेष्येन्द्रिय सन्निकर्षतदसंसर्गाग्रहाणां भ्रमेऽपि सत्वात् ।

न च रजतप्रत्यक्षे रजतसंयोगस्य हेतुतया कथं तदभावात्त-दिति वाच्यम् । तस्य विशेष्यसन्निकर्षत्वेन हेतुतया तत्संयोगत्वेन हेतुत्वात् । यत्सामान्ये यत्सामान्यं हेतुस्तद्विशेषे तद्विशेषस्य हेतुत्वात् । विश्वासोपायश्च प्रामाण्यानुमानमेव । तत्रापि चाविश्वासे तदनुसरणमेव यावद् व्याघातम् । एवं च ज्ञानत्वं विशेष्यवृत्ति प्रकारकवृत्तिप्रवृत्ति हेतुप्रत्यक्षात्मविशेषगुणवृत्ति धर्मत्वादिच्छात्ववत् । न च द्वेषत्वे व्यभिचारः अशत्रावेव शत्रुं द्वेष्मीत्यनुभवात् तत्रापि तत्सिद्धेः । अदृष्टत्वे व्यभिचारवारणाय प्रत्यक्षेति । १।१।२।

## [ प्रमाणोद्देशलक्षणप्रकरणम् ]

एवं प्रयोजनाभिधेयसंबन्धेऽवधारितेऽपि न तावन्मात्रादुद्देश्यं तत्त्वज्ञानमपि उद्देशलक्षणपरीक्षात्मकत्रिविधशास्त्रप्रवृत्तेः। तथा हि परीक्षासाध्यं तत्त्वज्ञानं सा च लक्षणानुपपत्तिनिर्णजनरूपतया लक्षणज्ञानाधीना, लक्षणं च व्यवच्छेदकधर्मत्वेनानुमानतयाश्रयोपस्थापकलक्षणत्वाविषयकलक्षणाभिधानानुकूलजिज्ञासाजनकपदार्थाभिधानरूपोद्देशाधीनम्।

तत्राद्यसूत्रेणार्थादुद्दिष्टस्य प्रमाणस्य कानि कियन्ति वेति जिज्ञासायां क्रमसङ्गत्या वक्तव्यविशेषलक्षणानुकूलजिज्ञासाप्रयोजकधर्म्युपस्थितिजनकं विभागोद्देशसूत्रम्—

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ।१।१।३।**

अत्र च प्रमाणपदाद् योगतः प्रमाकरणत्वरूपसामान्यलक्षणलाभः। अत एव चाविभक्तप्रतीकाल्लक्ष्यलाभः। प्रवृत्त्या वान्यतरलाभः। सामान्योपस्थितौ विशेषविधिस्तु सामान्यस्य तावद् विशेषपदत्वव्युत्पत्तेर्न्यूनाधिकसंख्याव्यवच्छेदो विभागवचनफलम्।

किञ्च *मीमांसकानां बौद्धापे*क्षयाधिकस्य प्रमाणस्यार्थापत्तेरभिधानं प्रमाणाधिक्ये असत्येव। अर्थापत्तेरनुमानानतिरेकात्।

*सांख्यानां* तु तदपेक्षयाधिकस्य प्रमाणस्य शब्दस्याभिधानमाधिक्ये सत्येव, शब्दस्यातिरेकादेव।

तदिहास्माकमपि सांख्यापेक्षयाधिकस्य प्रमाणस्योपमानस्याभिधाने संशयः। किं सत्याधिक्ये पृथगभिधानमुतासतीति। सोऽयं विभागवचनेन निवर्त्यते।

मैवम्, प्रमाणलक्षणप्रवृत्तेन चतुर्णामेव लक्षणकरणात्। न्यूनाधिकसंख्याव्यवच्छेदसंशयव्यवच्छेदयोः सिद्धेः। न ह्यचतुष्ट्वे

चत्वारि लक्ष्यन्ते, न चोपमानानाधिक्ये तद् विभिद्य लक्ष्यते ।

किञ्च *बौद्धाना*मसमीकृतोऽपि विभागस्य दर्शनात् । विभागेऽपि किमयं सम्यगसम्यग् वेति संशयः स्यादेव ।

अत्राहुः—लक्षणपरीक्षाद्वारैव विभागस्य न्यूनाधिकसंख्याव्यवच्छेदतात्पर्यं कल्प्यते । न हि विभागवचनं शब्दविधयैव तद्बोधकं युक्तिशास्त्रत्वविरोधात् ।

अत्र च प्रत्यक्षशब्देन अक्षं प्रति गतमिति प्रादिसमासव्युत्पन्नेन सर्वेन्द्रियप्रत्यक्षावबोधः । इदं च प्रत्यक्षपदस्य व्युत्पत्तिमात्रं न तु प्रवृत्तिनिमित्तम् । अतो नेन्द्रियगतैर्गुणसामान्यादिभिरतिप्रसङ्गः । तच्च साक्षात्कारित्वम् । यथा मयूरत्वं जातिः प्रवृत्तिनिमित्तं, मह्यां रौतीति व्युत्पत्तिमात्रम् । एवञ्च प्रमाणतदाभाससङ्कीर्णे प्रत्यक्ष उद्दिष्टे तद्विवेकाय लक्षणमुपयोक्ष्यते ।

अस्य चेन्द्रियात्मकस्य प्रमाणस्य ग्राह्यसन्निकर्षं व्यापारो धियः फलम् । सन्निकृष्टेऽपि जले पिपासोपशमनशक्तिधीः पुनरानुमानिक्येव । तस्या अतीन्द्रियत्वात् ।

## [ शक्तिस्वरूपनिरूपणम् ]

ननु केयं शक्तिः, तत्र दाहादिकारणत्वव्यापारस्तद्विषय बुद्ध्यविषयो भावः कश्चित् । स च दाहादि कारणं तत्कारणतावच्छेदको वा ? तस्या अपि सिद्धभावातिरेक्यतीन्द्रिय इति *मीमांसकाः* ।

तत्र कारणानि स्वजन्यानुकूलादृष्टातीन्द्रियधर्मसमवायीनि न वेति संशयः । अनुकूलत्वं च कार्याभावव्याप्याभावप्रतियोगित्वम् । कारणं तदवच्छेदकोपाधिसाधारणम् । अतो नाप्रसिद्ध्यपसिद्धान्तौ । तादृशादृष्टवत्यात्मनि विधिप्रसिद्धिः । अनुकूलधर्मसिद्ध्यर्थान्तर

वारणायानुकूलेति, न तु स्थितिस्थापकवारणाय तस्यासार्वत्रिकत्वात् । अद्विष्टीभूय सिद्ध्यत्वेतदर्थम् अद्विष्टेति, न तु अदृष्टवदात्मसंयोगवारणाय तस्यासार्वत्रिकत्वात् । अतीन्द्रियीभूय [?] सिद्ध्यत्वेतदर्थमतीन्द्रियेति, न तूष्णस्पर्शादिव्यवच्छेदाय तादृशधर्माणामसार्वत्रिकत्वात् । धर्माधर्मादावैन्द्रियकस्य कारणस्य कारणतावच्छेदकस्याभावात् । किन्तु वह्निर्दाहानुकूलाद्विष्टातीन्द्रियधर्मसमवायी न वेत्यादि वह्न्यादिपक्षकविप्रतिपत्तावेतानि व्यवच्छेद्यानि ।

अत्र चादृष्टत्वं दाह्यसंयोगस्य त्विदं दाहहेतुता । यः स्पन्दो व्यधिकरणयद्गुणजन्यः संयोगसमवायिकारणकः यथा वायुवेगजन्यो वनस्पतिस्पन्दस्तदभिघातासमवायिकारणक इति व्याप्त्या अदृष्टजन्यः वह्नेः स्पन्दस्तदात्मसंयोगासमवायिकारणकः स च स्पन्दो दाह्यसंयोगहेतुः स च दाहहेतुरिति ।

पूर्वपक्षस्तु यादृस्यैकदा दाहो दृष्टस्तादृश्यैव कराग्निसंयोगे मण्यादिसमवधाने दाहाभावो दाहप्रयोजकधर्मव्यतिरेकेण विनानुपपद्यमानो मण्याद्यपकर्षमनक्षत्वादतीन्द्रियं धर्मं कल्पयति तदपकारश्च जरठीकरणम् तच्च प्रतिपक्षराहित्यमेवेति ।

सिद्धान्तस्तु प्रयोजको धर्मः कारणतावच्छेदकः कारणं वा ? आद्ये वह्नित्वादिरेव तथा । द्वितीयेऽपि प्रतिपक्षाभावादेवोपपत्ता वर्थापत्तेः क्षीणता ।

न चैवं प्रतिबन्धकवता उत्तेजितवह्निनापि दाहो न स्यादिति वाच्यम् । उत्तेजकाभावविशिष्टप्रतिबन्धकस्य योऽभावस्तस्य दाहहेतुत्वात् । तस्य च विशेषणाभावेन तत्रापि सत्त्वात् ।

ननु विशिष्टं न विशेषणविशेष्यतत्संबन्धेभ्योऽधिकमिति विशेषणादि प्रत्येकाभावहेतुत्वे त्वननुगम्य इति चेन्न, विशेषणविशेष्ययोर्हि सम्बन्धात् विशिष्टव्यवहार इति तयोः सम्बन्धाभावाद्

विशिष्टाभाव इति व्यवहारः, घटतदभावव्यवहाराविव घटसत्त्वासत्त्वाभ्याम्। यस्य च यत्र यः सम्बन्धः स एव तत्र तस्य वैशिष्ट्यम्। स च सम्बन्धाभावो विशेषणाभावात् विशेष्याभावादुभयाभावात् सर्वत्राविशिष्टः, तेषां व्यापारः कारणम्। सर्वत्र प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धो नास्तीति प्रतीतेः।

स चायं विशिष्टाभाव उत्पादविनाशधर्मा तुर्य एव संसर्गाभावः कार्यबलात् कल्प्यते। विशेषणाद्यभावप्रत्यासत्तिकोऽत्यन्ताभाव एव वा। अतो नातिप्रसङ्गः।

ननु तृणारणिमणीनामग्नौ कारणत्वादेकशक्तिमत्वमुपेयम्। कार्यैकरूप्ये कारणैकरूप[प्य]स्य तन्त्रत्वात्। न च कार्यस्यैव नानारूपता अनुपलम्भबाधात्। न च तृणं विना वह्निरिति व्यभिचारदर्शने कारणतैव ग्रहीतुमशक्या। कुतस्तन्निर्वाहायैकशक्तिमत्त्वं कारणे कार्ये वा वैजात्यं कल्प्यत इति वाच्यम्। मण्याद्यभाववति स्तोमेन तृणेन विना वह्निरिति व्यभिचारग्रहात्। वह्निनिष्ठकार्यतानिरूपितकारणतावच्छेदकरूपवत्त्वम् तृणस्य, तृणनिष्ठकारणतानिरूपितकार्यतावच्छेदकरूपवत्त्वं वह्नेर्वा अकार्यकारणव्यावृत्तं परिच्छिद्यते न तु तृणत्वेन कारणत्वं वह्नित्वेन कार्यत्वं गृह्यते। अतो व्यभिचारग्रहस्तत् प्रतिबध्नीयात्। एवं च कार्यनानात्वेऽनुपलम्भबाधात् सिद्धं कारणेष्वेवैकशक्तिमत्त्वमिति।

मैवं, तृणफूत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्ति भावहेतु ज्ञानं तु शक्तिकल्पने गौरवात् अनन्तवह्निषु जातित्रयकल्पने लाघवात्। न च जातिषु योग्यानुपलम्भबाधः तृणजन्यनानावह्नि व्यक्तिषु तृणजन्यत्वज्ञानानन्तरं मणिजन्यव्यावृत्तानुगतबुद्धेर्जाति विषयत्वात्। न च तृणजन्यत्वोपाध्या लक्षणा सा, अनुगतमतेर्बाधकं विना जात्या अलक्षणत्वात्।

अस्तु तर्हि आधेयशक्तिः। तथा हि प्रोक्षणादिभिर्व्रीह्यादिषु

कश्चिदतिशय अधीयते । कथमन्यथा तेषामेव विनियोगः । न च मन्त्र सहकारी विशेषस्तस्य चिरातीतत्वात् । न च प्रोक्षणादिध्वंसो विशेषः प्रोक्षणस्य हेतुतापत्तेः । न चैवमतिरिक्तपदार्थकल्पनादोषः । तस्य संस्कार एवान्तर्भावात् । न च प्रोक्षणविहितत्वात् पुरुषसमवेतातिशयजनकं चिकित्साया व्यभिचारात् ।

किञ्च यो यद्गतफलार्थितया क्रियते स तद्गतमेवातिशयमादधाति । यथापुत्रेष्टिपितृयज्ञौ । न चायमतिशयः प्रतिव्रीहि नाना । न च किञ्चिद् व्रीहिनाशे तत्संस्कारनाशादनुपयोगापत्तिः । संस्कारत्वेनोपयोगे नियामकत्वात् । लाघवादेक एव वा प्रत्यभिज्ञाबलेन शाखानाशे वृक्षानाशवत् किञ्चिद्व्रीहिनाशे तदनाश इति ।

उच्यते लाघवसहकृतात् धर्मिग्राहकमानात् स एक एव सिद्ध्यति न नाना पुरुषनिष्ठश्च । दृष्टद्वाराभावे सति कालान्तरभाविफलजनकतया च यद्विहितं तज्जन्योऽतिशयत्वात् यागातिशयवत् । चिकित्सादिना व्यभिचारवारणायाद्यं विशेषणम् । न च शक्तेरपि दृष्टद्वारतया स्वरूपासिद्धिः । अतीन्द्रियातिशयान्यस्य दृष्टद्वारपदार्थत्वात् । न चाप्रयोजकत्वम्, यागादीनामदृष्टजनकत्वे दृष्टद्वाराभावेऽपि कालान्तरभाविकार्यजनकतया विहितत्वस्यैव प्रयोजकत्वात् । अन्यस्यानुगमात् । यद् यद् फलार्थितया क्रियते तत् तद्गतमेव तदनुगुणमतिशयमादधाति । शत्रुवधमुद्दिश्य प्रवर्तिते श्येनयागादौ व्यभिचारात् । न चैवं प्रतिमाप्रतिष्ठादावपि पुरुष एवातिशयः सेत्स्यति । तथा च तददृष्टस्य भोगादिना नाशात् प्रतिमाया अपूज्यत्वापत्तिरिति वाच्यम् । प्रतिष्ठितं पूजयेदिति श्रुत्युक्तानुशासनबलात् प्रतिष्ठाकालीन यावदस्पृश्यास्पर्शनादिसंसर्गाभावसहितस्य प्रतिष्ठाध्वंसस्यैवापूज्यत्वप्रयोजकत्वादिति दिक् ।

किं तर्हि शक्तिपदार्थः ? कारणत्वम् । तच्च चरमध्वंसान्यवस्तुत्वम् । विशिष्य तु अ[न]न्यथासिद्धनियतपूर्ववर्तिजातीयत्वम् ।

नन्वेवं पिपाशोपशमनशक्तिस्तं प्रति स्वरूपयोग्यतारूपा कारणता । स्वरूपयोग्यता च जनकत्ववत्त्वमेव तच्चाध्यक्षमेवेति किमनुमेयमिति चेत्, तस्य जनकतावच्छेदकरूपात्मकत्वं न बुद्धमिति तदनुमेयमिति ।

अनुमानमनुमायाः कारणमनु पश्चात् मानं यत इत्यध्याहाराद्वा । तदेतद् व्युत्पत्तिमात्रम् , तात्पर्यं त्वनुमाकरण एव ।

उपमानं तु सामीप्यमानम्, सामीप्यं संज्ञासंज्ञिसंबन्धः । तथा चोपमाकरणमुपमानमिति लक्षणं सिद्ध्यति ।

शब्द्यतेऽनेनेति व्युत्पत्त्या शब्दः शाब्दज्ञानकरणमुच्यते । एतच्च मानत्रयं परामर्शात्मकमिति वक्ष्यते ।

तत्र प्रत्यक्षस्यादावुद्देशो मूलत्वेनानुमानाद्युपजीव्यतया प्राधान्यात् तत्पूर्वत्वस्य[अनुमानस्य]मानान्तरसाम्येऽपि प्राधान्यमज्ञानहेतुत्वेनाभ्यर्हिततया तदनुमानस्य [तदुपमानस्य] शक्तिग्राहकत्वेनैवोपजीव्यतया शब्दात् प्राक् तदनु प्रमाणस्य शब्दोपजीव्यसङ्केतग्रहस्य तद् ग्रहानुकूलशक्त्योपस्थितेश्च यथासम्भवं प्रत्यक्षाद्यधीनत्वाच्चरमं शब्दस्येति सर्वं चतुरस्रम् ॥१।१।३।

## [ प्रत्यक्षलक्षणसूत्रम् ]

प्रमाणसामान्यनिरूप्यत्वाद् विशेष्यस्य ज्ञातसामान्यस्य च तद्विशेषत्वेन तद्विशेषे जिज्ञासोदयाच्च पूर्वमेवाक्षिप्तादुक्ताद् वा सामान्यलक्षणानन्तरमनुयोग्यवृत्तिना प्रतियोगिवृत्तिना च धर्मेण भेदप्रतियोग्युपस्थितावेव विशेषलक्षणजन्यभेदप्रतीतिरिति तदनु विभागानन्तरं विशेषलक्षणौचित्यात् तत्रापि प्राधान्येनोद्देशक्रमसङ्गत्यादौ प्रत्यक्षलक्षणाय सूत्रम्—

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ।१।१।४।**

अत्र यत इत्यध्याहार्यमतो न वैयधिकरण्यम्। तथा च यथोक्तज्ञानकरणं प्रत्यक्षप्रमाणम् । तत्र चेन्द्रियेत्यादिलक्षणत्रयम्। तेनेन्द्रियत्वेनेन्द्रियजन्यम्, सन्निकर्षत्वेन संयोगाद्यन्यतमजन्यं ज्ञानं जन्यप्रत्यक्षम्। न च शरीरसंयुक्तं सत् साक्षात्प्रतीतिसाधनमतीन्द्रियं हीन्द्रियमित्यन्योन्याश्रयः। स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वस्य तल्लक्षणत्वात् । अर्थत्वेनार्थजन्यं लौकिकप्रत्यक्षम् । एवञ्चात्ममनःसंयोगजन्ये आत्मानुमित्यादौ नातिव्याप्तिः। तत्रात्ममनोरूपार्थेन्द्रियतत्सन्निकर्षजन्यत्वेऽपि तेषां तत्त्वेनाजनकत्वात् । अन्यथा ज्ञानमात्रस्य मनोरूपेन्द्रियजन्यतया प्रत्यक्षत्वापत्तेः। अनुगतकार्यस्यानुगतहेतुप्रयोज्यतया प्रत्यक्षत्वे इन्द्रियत्वेनेन्द्रियजन्यस्यैव तन्त्रत्वात्। न चैवममीषु फललक्षणेषु ईश्वरप्रत्यक्षाव्याप्तिः । करणलक्षणप्रकरणानुरोधेन फलतापन्नप्रत्यक्षस्यैवात्र लक्षणीयत्वात् ।

*अन्ये* तु इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्यत्र पूर्वान्वयोत्तीर्णज्ञानपदेनाविनाभावसंबन्धात् साक्षात्कारित्वस्य जातेरुपस्थानं जन्याजन्यविभागलक्षणाप्तये चैवं निर्देशः । तथा च साक्षाद्धीः प्रत्यक्षम्। सा च द्वेधा जन्याजन्यभेदात्। तत्राद्याया इन्द्रियत्वेनेन्द्रियजन्यज्ञानत्वेन ज्ञानत्वादिलक्षणम् । अन्त्यायास्त्वजन्यज्ञानत्वम् । इयञ्चालौकिक्येव । आद्यापि द्वेधा लौकिकालौकिकभेदात् । तत्रानागतगोचरसाक्षात्कारहेतुप्रत्यासत्त्यजन्यं प्रत्यक्षं लौकिकम् तज्जन्यं जन्यालौकिकम् ।

ज्ञानाकरणकज्ञानत्वं प्रत्यक्षधियो लक्षणम् । विशिष्टज्ञाने च विशेषणज्ञानं न करणं निर्व्यापारत्वात्। प्रत्यभिज्ञायाश्च न, संस्कार द्वारा पूर्वानुभवः करणम्। संस्कारजन्यत्वे स्मृतित्वापत्तेः। तस्यैव स्मृतित्वव्यवस्थापकत्वात् । तत्तास्मृतिस्तु जनिकापि न करणम् निर्व्यापारत्वात् स्मृतौ च पूर्वानुभवः संस्कारद्वारा करणम्। अनुमानादौ च सर्वत्र ज्ञानमेव करणम् । अतीतज्ञान्तादिस्थलसाधारण्यादिति *चिन्तामणिकृतः*।

विशेषलक्षणप्रयोजनं तु असामान्यलक्षणोपगृहीतस्वेतरभेदः। न च लक्षणमात्रं कालेऽतिव्याप्तमिदानीं गन्ध इत्यनुभवादिति वाच्यम्। तेषां तत्र सत्त्वेऽपि तत्समवेतत्वाभावात् प्रतीतिवैलक्षण्यात्। असमवेतानामप्यभावादिलक्षणानां स्वलक्ष्यवत् काले विशेषणताविशेषस्याभावात् प्रतीतिवैचित्र्यात्। न चाद्वितीयत्वबोधे वर्तमानपरीक्षाप्रकरणे इदानीमिति प्रत्यक्षबुद्धेः कालोपाधिविषयत्वव्यवस्थापनादिव्याप्तिशङ्कैवानुपपन्नेति वाच्यम्। प्रमाणान्तरोपनीतं कालमादायात्र शङ्कनात्।

तत्र सन्निकर्षः सप्तधा—संयोग, संयुक्तसमवाय, संयुक्तसमवेतसमवाय, समवाय, समवेतसमवाय, विशेषणता, योगजधर्मभेदात्। एषु च सम्बन्धेषु द्रव्यगुणादिगुणत्वादिशब्दशब्दत्वाद्यभावादिव्यवहितादिबुद्धय एव मानम्, असंबन्धेषु ज्ञानानुत्पत्तेः।

षष्ठी द्वेधा इन्द्रियविशेषणता इन्द्रियसंबद्धविशेषणता च। तत्राद्या शब्दाभावग्रहे अन्त्या समावायादिग्रहे हेतुः। इयञ्चेन्द्रियसंयुक्तविशेषणतादिभेदात् पञ्चधा। ज्ञानसामान्यलक्षणे अपि प्रत्यासत्ती अत्रैवान्तर्भूते।

नन्वेवं समवायेनापि चतुष्टयसंग्रहे विभागासम्यक्त्वमिति चेन्न, समवेतसमवायादेः शुद्धसमवायिकारणत्वमुपजीव्य कारणताग्रहात्, तत्र प्रकारभेद उक्तः। संबन्धविषशेणतायां तु शुद्धविशेषणताहेतुत्वं नोपजीव्यमिति विशेषात्।

यद्वा विशेषणता यथेन्द्रियेणाभावस्याध्यक्षाङ्गम्, तथा च तदधिष्ठानेनापि। समवायस्तु नाधिष्ठानेनेति विशेषात्।

ननु संयोगो नेन्द्रियप्रत्यासत्तिः, सूक्ष्मावयवावच्छेदेनावयविसंयोगेऽपि तदग्रहादिति चेत् तर्हि महावयवसंयोगोऽपि तत्र सहकार्यस्तु नत्वात्मादौ दृष्टस्य प्राह्यद्रव्यसंयोगहेतुत्वस्य त्यागः।

नन्वन्वयव्यतिरेकिणः आश्रयसंयोगादेव रूपादिग्रहोपपत्तौ न संयुक्तसमवायः प्रत्यासत्तिः । समवायाविलम्बेन तद्धीविलम्बाभावाच्चेति चेन्न रूपादीनां प्रत्यक्षत्वेन स्वसाक्षात्कारसाधनप्रत्यासत्तिसाधने परिशेषात् संयुक्तसमवायस्यैव सिद्धेः । व्यतिरेकश्चात्मादिवदन्योन्याभावमुत्था[°वमुद्रया] नेयः । एतेन संयुक्तसमवेतसमवायोऽपि व्याख्यातः । न च रूपत्वाद्यसिद्धावस्यासिद्धिः रूपादिगतसादृश्यग्रहार्थं त्वयापि तस्याभ्युपगमात् सार्वलौकिकवर्णाकारानुगतमत्या रूपत्वसिद्धेः ।

ननु न शब्दसाक्षात्कारबलात् समवायः प्रत्यासत्तिः, तदविशेषेण सर्वशब्दोपलम्भापत्तेरिति चेत्, न । शब्दस्य साक्षात्कारविषयत्वेनेन्द्रियप्रत्यासत्तिसाधने परिशेषात् समवायस्यैव तथात्वसिद्धेः । तथा चातिप्रसक्तत्वेऽपि कर्णशष्कुलीसंयोगावच्छिन्नस्य तथात्वम् । एवञ्च शब्दस्य कर्णशष्कुल्यवच्छिन्नगगनोत्पन्नस्यैव ग्राह्यत्वेन घनगर्जितादीनां श्रवणबलेन सन्तानकल्पनापि न्याय्या । तथा हि आद्यशब्देन बीचीतरङ्गवत् सर्वतो दिगेक एव शब्द आरभ्यते । एवं तेनापि यावदन्तम् ।

यद्वा दशदिग्वर्तिदशवायुसहकाराद्यनेकेनैव शब्देन कदम्बगोलकवद्दशसु दिक्षु दश शब्दा आरभ्यन्ते । तैश्च दश सन्तानाः । देशातिक्रमस्तु शीघ्रमेव तेजोवत् सहकारिवायुलाघवात् । अत्राद्यान्त्यौ शब्दावतीन्द्रियौ कर्णनिदानस्त्वाद्योऽपि वेद्य एव । एवं रूपत्वादिवत् शब्दत्वादिजातिसिद्धेस्तद्ग्राहकः समवेतसमवायोऽपि मन्तव्यः ।

ननु साधकाभावात् समवायासिद्धेर्न स प्रत्यासत्तिरिति चेत् न, जात्यादिविशिष्टबुद्धीनां तत्त्वेन विशेषणविशेष्यसंबन्धविषयत्वानुमितौ तत्सिद्धेः । न च विशेषणतया सिद्धसाधनं, लाघवादेकस्यैव संबन्धस्य सिद्धेः अभावादिविशिष्टबुद्धावपि स्वरूपसंबन्धविषयत्वान्न व्यभिचारः । न चाप्रयोजकत्वम्, गवाश्वादावपि विशिष्टबुद्ध्यापत्तेः । न चैवमभावादिविशिष्टबुद्धावपि लाघवादेव वैशिष्ट्यमपि सिद्ध्येदिति

वाच्यम्। तस्य समवायवत् सर्वसाधारण्येन घटाभाववति पटवति पटाभावधीप्रसंगात् वैशिष्ट्यसंबन्धेन पटाभावस्यापि तत्र सत्त्वात्, वैशिष्ट्यस्यैकत्वात्। न चैतत् समवायेऽपि तुल्यम्, तत्र वायौ समवायेन रूपाप्राप्तावपि विशेषणतया तदभावस्य सत्त्वेनापि प्रसंगात्। न चैवं संयोगेन पटस्यापि प्राप्ततया तत्रापि नातिप्रसंगः। वैशिष्ट्यवैशिष्ट्याभ्युपगमे आत्माश्रयानवस्थान्यतरापत्त्या तत्र तदभाव आस्थीयते। सोऽपि तत्रैव वैशिष्ट्येनैवेति दुःपरिहर आत्माश्रयादिः। न चासौ प्रामाणिकतया न दोषाय, त्वयापि वैशिष्ट्यस्य विशिष्टत्वार्थमुपेयत्वेनावश्यक्या विशेषणतयैवोपपत्तौ प्रामाणिकत्वाभावात्। न च लाघवादेकसंबन्धसिद्धौ न तयार्थान्तरं, तर्हि लाघवादेकगुणशून्यादिष्वप्येतदभ्युपगमे तद्वति तदभावधीप्रसंगः। प्रतियोगितदभावयोरेकप्रत्यासत्तिकत्वादिति।

ननु नीलः पट इत्यादिधीस्तयोस्तादात्म्यविषयैवेति न ततः समवायसिद्धिरिति चेत्, न। तथा सति अपटः पट इति वदनीयः। पट इत्यत्रापि विरोधापत्तेः, अन्धेन द्रव्यग्रहे तद्रूपग्रहापत्तेश्च।

नन्वेकान्ताभेदे सर्वमिदं दूषणम्, वयं तु भेदाभेदवादिनः। तथा च भेदमादाय प्रतिनियतेन्द्रियवेद्यता, अभेदं चादाय सामानाधिकरण्यं तस्यात्यन्तभिन्नाभिन्नाभ्यां व्यावृत्तेः। मानं तु अन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति नित्याभाववृत्त्यभाववत्त्वसाक्षाद्व्याप्यधर्मत्वादत्यन्ताभावत्ववत्। अव्याप्यवृत्तिप्रतियोगिकौ प्रागभावप्रध्वंसावपि यन्मते अव्याप्यवृत्ती तन्मते नित्याभाववृत्तिपदमदेयमेव। साक्षात्पदं घटात्यन्ताभावत्वादिव्यवच्छेदाय, संसर्गाभावत्वं सामान्यमनङ्गीकुर्वतश्चानुमानमिति न साधनविकलो दृष्टान्त इति न विरुद्धयोरवच्छेदभेदं विना अनुवृत्तेरप्रतीतेश्च। प्रकृते च नावच्छेदभेदः अनुमानस्याप्रयोजकत्वात्। पाकरक्ते घटे न श्यामोऽयमिति प्रतीतिस्तु श्यामगुणाभावमात्रविषया विशेष्यवति विशिष्टाभावस्य विशेषणाद्यभावपर्यवसायित्वात्। अत्यन्त-

भेदे विवेकः ख्यातिः स्यादिति चेत्, अस्त्येव, पटस्य नीलो वर्ण इति प्रत्ययात्।

नन्वेवमायातु समवायः, स तु प्रत्यासत्तिर्माभूत्, इन्द्रियविशेषणतया क्लृप्तया शब्दग्रहसम्भवादिति चेत् न, शब्दादीनां प्रत्यक्षत्वेनेन्द्रियसम्बन्धानुमितौ समवायं प्रतीत्यैव विशेषणताग्रहात्। प्रथमोपस्थिततया समवायस्यैव विषयत्वात्। न तु विशेषणतायाश्चरमोपस्थितत्वात्। निर्विषयभावद्वयविशेषणतायाः विशेषणताघटकसंबन्धस्यैव सर्वत्र प्रथमबुद्धिवेद्यत्वात्। तत्सिद्धं शब्दस्य समवायेनैव ग्रहो न तु विशेषणतया तया त्वभावादेरेव।

ननु विशेषणतया अभावग्रहे चक्षुःप्राप्तपृथिवीपरमाणौ च छलत्वानुपलब्धे च तथात्वात्। अत एव महति वाया [वपि] न चोद्भूतरूपाभावः प्रत्यक्षः प्रतियोगिसत्त्वे तद्ग्रहप्रसङ्गात्।

ननु विशिष्टप्रतीत्यविशेषादभावोऽपि भाववत् आश्रयसमवेत एव। तथा च समवायेनैव तद्ग्रह इति चेन्न। ध्वंसस्य समवेतत्वे आश्रयनाशात् नाशे प्रतियोग्युन्मज्जनापत्तेः। न च नाश्यत्वे भावत्वं तन्त्रम्। प्रागभावनाशापत्तेः। नन्वभावोऽपि भावात्मैव। तथा हि घटवद्भूतलभिन्नं भूतलमेव तद्बुद्धिर्वा अभावः। क्लृप्तेनोपपादकेनावश्यकेन चैतदन्यतरेणैव तद्व्यवहारोपपत्तावतिरिक्तपदार्थकल्पने गौरवात्। तथा च संयोगादिनैवाभावग्रहे न तत्र विशेषणताप्रत्यासत्तिरिति चेत् न, अभावस्य [स] प्रतियोगिकत्वेनानयोश्चातथात्वात्। न च व्यवहारः प्रतियोग्यपेक्षो न तु व्यवहार्य इति वाच्यम्। घटो नेति प्रतीत्या नञ्त्वस्यैव सप्रतियोगिकतया विषयीकरणात्।

तत्र भावत्वात्यन्ताभावत्वमभावत्वम्। स चायमभावो द्वेधा संसर्गाभावान्योन्याभावभेदात्। तत्र प्रतियोग्यारोपपूर्वकनिषेधधीविषयोऽभावः संसर्गाभावः। प्रतियोगितावच्छेदकारोपपूर्वकनिषेध-

धीविषयोऽभावोऽन्योन्याभावः । तत्राद्यस्त्रेधा प्राक्प्रध्वंसात्यन्ताभावभेदात् । तत्राद्यानाधारकनानाधारोऽभावः प्रागभावः । उत्पादी अभावः प्रध्वंसः । उत्पत्तिस्त्वाद्यक्षणसंबन्धः । क्षणस्तु कालोपाध्यवच्छेद्यावच्छेदकत्वे सति कालोपाध्यवच्छेद्यानवच्छेदकः कालोपाधिः । दण्डादयस्तु कालोपाधयः पलादिकालोपाध्यवच्छेद्यावच्छेदकाः पलाद्यवच्छिन्नस्यैव दण्डादिनावच्छेदनात् । क्षणस्तु नान्यावच्छिन्नमवच्छिनत्ति असंभवन्यूनकत्वात् । एवं दण्डादिष्ववच्छेदेऽप्यसंभव इति तद्वारणाय सत्यन्तम् । तथा च कालोपाध्यवच्छेद्यमवच्छिनत्ति कालोपाध्यवच्छेद्यं च नावच्छिनत्तीति तदा भवति यदि अवच्छेद्यमात्रमवच्छिनत्तीति । तथा चासंभवन्यूनः कालोपाधिः क्षण इति फलितार्थः । अनादिनिधनः संसर्गाभावोऽत्यन्ताभावः ।

नन्वतिरिक्ताभावसिद्धावपि तद्ग्रहो नेन्द्रियात् किन्तु योग्यानुपलब्धेरेव आवश्यकत्वादुपपादकत्वाच्च । न चाभावधीरिन्द्रियजा तदन्वयाद्यनुविधानादिति वाच्यम्, इन्द्रियप्राप्तेरुपाधित्वात् । अत्र च तदभावादाश्रयग्रह एव तदन्वयाद्युपगमात् । तस्मात् प्रतियोगिग्राहकेन्द्रियेणाश्रयग्रहे सति स्वरूपसत्येवानुपलब्धिरभावग्राहिका । तदुक्तम्—

> प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
> वस्तुतत्त्वावबोधार्थं तत्राभावप्रमाणता ॥इति ।

वायौ रूपस्याभावधीः प्राङ्नास्तिताधीश्च नां[रस]गिकीति ।

अत्राहुः — वायौ रूपाभावधीर्नानुपलब्धिलिङ्गजा तदज्ञानात् । तदोपलब्धेरतीन्द्रियतया योग्यानुपलब्ध्या तदभावस्याग्रहात्, स्वरूपसतश्च लिङ्गस्याकरणत्वाच्च । किञ्च घटवत्युपलब्धिप्राक्कालेऽनुपलब्ध्या घटस्मृतिमतः कुतो नाभावधीः घटाभावाभावादिति चेत्

हन्तैवमभावबुद्धेरनुजत्वात् साक्षात्कारितयेन्द्रियजन्यत्वमप्यायातम् । योग्यानुपलब्धिस्तत्सहकारिणी । प्राप्तिरप्ययगत्या विशेषणतैवेति ।

अथ भूतले घटो नेत्यत्र कस्याभावः ? घटस्य तत्संयोगस्य च । कोऽभावः, अत्यन्ताभावः व्याप्यवृत्तीयात्यन्ताभावस्य प्रतियोगिवैदेश्यनियमात् । कथमेवं प्रतियोगिप्रत्यासत्तिविरोधिप्रत्यासत्तिकतया कदाचित्तत्र घटस्य कदाचित्तदत्यन्ताभावस्य प्रतीतेः । प्रत्यासत्तिस्तु घटाभावस्यालिङ्गितत्वात् । किन्तु तत्र संयोगाभावोऽपि चकास्ति न तु स एव, अनुभवविरोधात् । न चैवं प्रागभावध्वंसोच्छेदः, कादाचित्काभावधियः कदाचित्प्रत्यासत्तिकेनात्यन्ताभावेनैव जननादिति वाच्यम् । अभूत् भविष्यतीति धियोरत्यन्ताभावेन समर्थयितुमशक्यत्वात् ।

ननु सूत्रे कारणमात्राद् साक्षाद्वोपलक्षणमशेषकारणाद्वा ? आद्ये व्यर्थमर्थाद्युपादानम् , अन्त्ये न्यूनता, कार्यात् कारणमात्रलाभे विशेषविधेरधिकनिषेधकत्वव्युत्पत्तेः, प्रकृते च न तथा । बाह्यालोकविषयसंयोगादीनामपि कारणत्वात् ।

यद्यपि चक्षुःसंयोगावच्छिन्नविषयेष्वालोकवत् विषयावच्छिन्ने चक्षुषि आलोकसंयोगः कारणमित्यपि सुवचमेव तथापि विषयालोकसंयोगस्यान्वयादिना कारणत्वस्यावश्यकतया तेनैवोपपत्तौ चक्षुरालोकसंयोगस्य तत्त्वे गौरवात् । न चैवं वैपरीत्यं प्रकाशस्तेनान्धकारस्तस्याग्रहणात् । विषयालोकसंबन्धस्य कारणत्वे सिद्धे परभागावच्छेदेनालोकसंबन्धेऽतिप्रसंगवारणार्थं चक्षुरवच्छिन्नप्रदेशादरणात् ।

ननु विषयालोकसंबन्धो न चाक्षुषधीकारणम् । तेन विनापि तमसश्चाक्षुषत्वात् ।

अत्र *केचित्* तमो न चाक्षुषं, तथा हि नीलं तम इत्यबाधितप्रतीत्या तमसो द्रव्यत्वे लिङ्गत्वादिना च पृथिव्यादिना भेदे सिद्धे

दशमद्रव्यतायां तस्य चालोकविरोधितया तदपेक्षाणि यत्र चक्षुर-ग्राह्यातायामैन्द्रियकत्वे चावधृते अगत्यैव तद्ग्रहाय गोचराधिष्ठानं चक्षुर्भिन्नं तमः प्रकृतिकमिन्द्रियान्तरमेषितव्यम्। तत्र चक्षुर्वद्गोल-कानुविधायीति न गोलकोपघातादावन्धकारधीः। न च रूपलौकिक-साक्षात्कारत्वेन चक्षुर्जन्यत्वमस्येति वाच्यम्, आलोकं विना चक्षुषो-ऽप्राप्तेः।

अथ नीलं तम इति भ्रमस्तु स्यात्तेजोऽभावत्वात्। तथा च नील-स्मृतौ नालोक[का]पेक्षा स्मृतित्वात् नीलारोपेऽपि तेन सह चक्षुषः स्मरणस्यैव प्रत्यासत्तित्वात्। धर्मिज्ञानेऽपि न तदपेक्षा तस्यालोका-भावरूपतया आलोकव्यंग्यत्वे नित्यमनुपलम्भप्रसङ्गात्। तेजःसत्त्वे ग्राह्याभावात् तदसत्त्वे व्यञ्जकाभावादिति चेत् स्यादेव यदि नील-धीर्भ्रमः स्यात्, नत्वेवं बाधकाभावात्। न च द्रव्यान्तरकल्पनैव बाधिका, अनन्यथासिद्धविलक्षणबुद्ध्या विलक्षणपदार्थस्यैव सिद्धेः अन्यथा पवनादिकमप्यतिरिक्तं न स्यात्। स च बुद्धिरालोकाभावे-नान्यथासिद्धेः, तस्य नीलत्वाभावादिति, तन्न। रूपलौकिकसाक्षा-त्कारत्वेन हि नीलं तम इति धीश्चाक्षुषी धर्मिग्राहकमानेन। तदर्थमेव तत्सिद्धेः। न चालोकाभावाग्र चाक्षुषी नह्यालोकापेक्षमेव चक्षुः प्रवर्तत इति परिभाषा। अन्यथा ऊष्मण्युद्भूतरूपाभावश्चाक्षुषो न स्यात्। तस्माद् यत्रालोकादृतेऽपि चाक्षुषसामग्री तत्र नालोकापेक्षा, सा चात्रापि। तथा हि विशिष्टज्ञानेऽपि विशेषणज्ञानं विशेष्यज्ञानसामग्री तयोरसंसर्गाग्रह एव भ्रमप्रमासाधारणं कारणमत्र तु विशेष्यस्या-लोकाभावस्यालोकमन्तरेणैव भानसामग्रीति नालोकापेक्षा। न चा-लोकाभावो न विशेष्यः रूपसाक्षात्कारत्वेन चक्षुर्जन्यस्य विशेष्यतायां तदसिद्धेस्तस्यैव विशेष्यत्वात्। एवं भाभावस्य विशेष्यतया नील-धियामप्यनन्यगतिकतया भ्रमत्वम्। अभावे च भावधर्मारोपो माहा-त्म्यात्। नीलारोपे च शुक्लभास्वरविरोधित्वं नियामकमवसेयम्।

ननु आलोकप्रत्ययाभावस्तमः तत्काले तस्यावश्यकत्वात् । न चाविनिगमः, आलोकवत्यपि गर्भगृहादावापाततोऽन्धकारप्रत्ययात् । न च ज्ञानाभावस्य तमस्त्वे तच्चाक्षुषत्वाभावा [वो] दोषाय इष्टत्वात् नीलं तम इत्यादिव्यवहारस्तु आलोकज्ञानाभावस्मृतनीलयोरसंसर्गाग्रहात् । नीलं तमोऽनुभवामीति नीलतमोऽसंसर्गाग्रहेऽनुभवत्वासंसर्गाग्रहादिति *प्राभाकराः ।*

तन्न, तमोबुद्धेरन्यत्रानुपक्षीणचक्षुर्जत्वेनालोकज्ञानाभावाविषयत्वात् । न च चक्षुर्निविडनिपीडनेनाग्राहके चक्षुषि तेजस्यपि सति तमोबुद्धेर्न्न सा चाक्षुषीति वाच्यम् । नेत्रहीनादीनां न किञ्चित् पश्यामीति धीर्न तु तमःप्रतीतिः । अन्यथा निमीलितनेत्रस्य गेहे तमःसंशयानुपपत्तेः । गर्भगेहे च तमोधीर्भ्रमः, तस्य चक्षुर्जन्यतया ज्ञानाभावाविषयतया परिशेषेणालोकाभावविषयस्तत्र विषयबाधात् ।

यच्चालोकाभावो ह्यारोपितं नीलरूपमेव तमो न तु तादृशारोपविषय आलोकाभावस्तदानीं प्रतियोगिज्ञानानियमेन तमोबुद्ध्यनियमापत्तेः । विधिमुखप्रत्ययाच्चेति *कन्दलीकारमतम् ।* तन्न, रूपस्य तमस्त्वे नीलिमेति प्रतीत्यापत्तेः । प्रतियोगिस्मरणस्य च सार्वत्रिकत्वात् । तेन तदभावप्रकारकज्ञानोदयात् विधिमुखप्रत्ययस्य चासिद्धत्वात् तमः प्रतीतेरप्यालोकाभावत्वप्रकारत्वात् । तस्माद् यत्रालोकाभावे वस्तुतो नैल्यारोपस्तत्तमः । न तु तदारोपविशिष्टोऽनध्यक्षतापत्तेः ।

नन्वालोकस्य कः संसर्गाभावस्तमः, न तावदत्यन्ताभावः, कादाचित्कत्वात् । नापि प्राक्प्रध्वंसान्यतरः, प्रतियोगिसमानकालत्वादिति ।

अत्राहुः— बाह्यालोकसंसर्गाभावसमुदायस्तमः । तत्किञ्चित्समुदायिव्यतिरेकादेव कादाचित्कत्वोपपत्तेः । पृथग्भूतेषु समुदायिषु नेदानीं रात्रिरितिवत् । तथा च चाक्षुषसाक्षात्कारकारणतेजोऽभावः प्रभाभिन्नप्रकाशासहचरोऽन्धकारः । सौरालोकेऽपि तादृशविशेषाभाव-

सत्त्वादतिव्याप्तिरिति तद्वारणाय प्रभेत्यादि । प्रकाशकयावत्तेजः-संसर्गाभावोऽन्धतमसं धर्मिग्राहकालोकसत्त्वे रूपादिग्राहकालोका-भावोऽन्धतमसं प्रभासत्त्वे प्रभाभिन्नप्रकाशकालोकाभावश्छाया । छाया[या]न्तु नान्धकारपदप्रयोगः तेजःसत्त्वस्य प्रतिबन्धकत्वादित्येके ।

*अन्ये* तु प्रौढप्रकाशकयावत्तेजः संसर्गाभाव एव तमः ।

छायायां तु नान्धकारपदप्रयोगस्तेजःसत्वस्य प्रतिबन्धकत्वादि-त्येके । छाया तु आलोकविशेषाभावस्तद्भिन्नेत्याहुः ।

एवञ्च विषयालोकसंबन्धो विशेष्यता न सामग्रीघटकतया कारणमन्धकारादौ तु तं विनापि सामग्रीति न तदपेक्षेति । एवमालोक-स्तदुद्भूतरूपमपि विषयग्रहकारणम् ऊष्मादिनानुद्भूतरूपेण चाक्षुषा-निर्वाहात् । एवं चक्षूरूपमपि हेतुः व्यञ्जकतेजोरूपत्वादालोकवत् । घ्राणादिरूपवारणाय तेजः पदम्, एवं विषयस्थमपि रूपं हेतुः । अन्यथा प्रत्यक्षकारणस्यावयवसन्निकर्षसत्तयोत्पत्तिलक्षण एव चाक्षुषत्वापत्तिः । एवं महत्त्वानेकद्रव्यत्वे अपि, परस्पर[रा]विनाभावात् । वस्तुतो मह-त्त्वमेव तथा लाघवात् अनेकद्रव्योत्कर्षं विनापि तूलकादौ प्रचयजन्यो-त्कृष्टपरिमाणात् प्रत्यक्षोत्कर्षदर्शनाच्च । एवमुपलब्धिफलः संस्कारः । न च तत्र मानाभावः, इन्द्रियालोकादिप्रत्यासन्नस्य चक्षुराद्यवयविनोऽ-प्रत्यक्षतया साक्षात्कारकारणम् किञ्चित् समवधानशून्यत्वानुमापनात् । तच्च लाघवात् सामान्यम् उष्मप्रभयोः स्पर्शरूपयोर्ग्रहे रूपस्पर्शयोर-प्येकार्थसमवायात् ग्रहापत्त्या न द्रव्यवृत्तिरूपादिवृत्तित्वेन चोपपत्तौ नोभयवृत्तिरूपत्वादिना परापरभावानुपपत्तेश्च तारत्वादिवन्नाना रूपादिवृत्ति उद्भवत्वम् तद् व्यतिरेकस्त्वनुद्भवत्वमिति *प्राञ्चः* ।

*चिन्तामणिकृत*स्तु शुक्लत्वादिना कारणरूपाग्निसंयोगप्रयोज्य

साध्यजातिभ्यां परापरभावानुपपत्त्या रूपवृत्त्युत्तरत्वस्यानुगमेनाकारण-तया अनुद्भवत्वमेव शुक्लत्वादिव्याप्यं नाना जातिः तद्भावस्तु प्रत्यक्षप्रयोजक एव स्पर्शादावपीत्याहुः ।

मूर्तविशेषगुणशब्दज्ञानेष्विदमिति *एके* । मूर्तविशेषगुणेष्वेवेत्य-*परे* । रूपादि चतुर्ष्वेवेति *सम्प्रदायः* । भूतविशेषगुणेष्वेवेत्य*न्ये* । एवं च महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वम् बाह्यद्रव्यप्रत्यक्षे तन्त्रमित्यपि ध्वनितम् ।

ननु नैतदेवम्, नीरूपस्यापि वायोः स्पार्शनप्रत्यक्षत्वात् । तथा हि महान् वायुः प्रत्यक्षः महत्त्वे सति उद्भूतस्पर्शवत्त्वात् घटवत् । न चाप्रयोजकत्वम्, द्रव्यस्य स्पर्शनत्वे महत्त्वसमानाधिकरणोद्भूत-स्पर्शस्यैव तन्त्रत्वात् । न चात्र साधनपक्षधर्मान्यतरावच्छिन्नसाध्य-व्यापार उद्भूतरूपवत्त्वमुपाधिः, स्पार्शनप्रत्यक्षे तस्याप्रयोजकत्वेन साध्याव्यापकत्वात् स्वव्यापारानुविधानाच्च स प्रत्यक्षः । स्पर्शलिङ्गा-ग्रहेऽपि शीतो वायुरिति प्रतीतेः । न च द्रव्यग्रहे संख्यादिग्रह नियमाद् वायौ च तदग्रहान्न तस्यापि ग्रह इति वाच्यम् । नह्ययं व्यक्तौ नियमः, पृष्ठस्थवस्त्रादौ व्यभिचारात् । तज्जातीये चेत् अत्रापि कराव-रुद्धे फूत्कारादौ तद्ग्रहात् ।

किञ्च तव बाह्यद्रव्यप्रत्यक्षे महत्त्वे सति उद्भूतरूपवत्त्वम [हेतुः] तच्चाक्षुषेऽपीदं तत्स्पर्शनेतद्द्वये सत्युद्भूतस्पर्शवत्त्वं तन्त्रं तच्चायुक्तम् सामान्यविशेषयोः प्रयोजकभेदनियमात् स्पर्शेन प्रयोजके गौरवाच्च । मम तु द्रव्यचाक्षुषत्वे महत्त्वे सत्युद्भूतरूपवत्त्वं तत्स्पार्शने उद्भूतस्पर्शवत्त्वं बाह्यद्रव्यप्रत्यक्षे द्रव्यग्राहकबहिरिन्द्रियव्यवस्थापको-द्भूतविशेषगुणवत्त्वमिति न प्रयोजकाभेदगौरवे इति ।

अत्राहुः—उद्भूतस्पर्शवत्त्वं न द्रव्यस्पार्शनत्वे तन्त्रम्, ऊष्मादेः प्रत्यक्षत्वे तत्समानयोग्यताकसंख्यादिग्रहप्रसङ्गात् । न चोष्मादिजातीये कदापि संख्या गृह्यते । तस्मादसाधारणजात्या समानजातीये यत्र द्रव्ये सत्यवधानादौ संख्यादिग्रहस्तज्जातीयं बाह्यं द्रव्यं प्रत्यक्षमिति नियमः ।

प्रत्यक्षप्रभाजातीयायां दीपादिप्रभायां संख्यादेर्ग्रहात्। ऊष्मणां तु कदापि अग्रहान्न स प्रत्यक्ष इति। तदुद्भूतस्पर्शविशेषाद् वायुरप्य प्रत्यक्षः। न च संख्यादिग्रहनियमे तदग्रहादूष्मणोऽप्रत्यक्षत्वं तद-प्रत्यक्षत्वे व्यभिचाराग्रहात्तन्नियम इति वाच्यम्। नहि पक्षावष्टम्भेन व्यभिचाराग्रहमादाय नियमः, किन्तु दृष्टान्तावष्टम्भेन। अन्यथा पक्षे व्यभिचारसंशयात् अनुमानमात्रोच्छेदापत्तेः।

ननु यैव सामग्री द्रव्यग्राहिका सैव न संख्यादिग्राहिका शाब्द द्रव्यज्ञानेऽपि तदापत्तेरतो भूयः सहचारबलात् द्रव्यतत्संख्यादिप्रत्यक्ष सामग्र्याः समाननियम इति वाच्यम्। स च यथा दोषाद् बलवद्बाधका-दपोद्यते तथा शीतो वायुरित्यन्यथानुपपत्तेरप्यपवदिष्यत इति चेन्न प्रथमप्रवृत्ते तव निरपेक्षनियमबलेन शीतादिप्रवृत्तेरेवान्यथयितव्यत्वात्। तथा हि शीतद्रव्योपनायकत्वेनानुमिते वायौ त्वगुपनीतशीतस्य मनसारोपः। दिङ्मोहवत् दोषमाहात्म्याद्विशेषादर्शनेऽपि भ्रमः। न च बहिरिन्द्रियज एव तथा, सामान्ये बाधकाभावात्, दोषमहिम्नाम-चिन्त्यत्वात्। एवं साक्षात् कृतशैत्यस्यानुमितकर्मणश्चानुमिते वायौ मनसा समारोपः शीतो वायुर्वातीति। न चैवं नीरूपत्वादात्मापि न प्रत्यक्षः, योऽहमद्राक्षं सोऽहं स्पृशामीति तत्प्रतिसन्धानात्, तत्प्रत्यक्षत्व-सिद्धेः। नियमानुरोधादेव चोष्मवाय्वादीनामप्रत्यक्षत्वे उद्भूतरूपवत्त्वे च तत्प्रयोजके व्यवस्थिते प्रयोजकाभेदगौरवे अपि न दोषावनन्य-गतिकत्वात्। तस्माद् वायुर्न स्पर्शनो नीरूपद्रव्यत्वात्। न चोद्भूत स्पर्शवत्त्वमुपाधिः। पृथिव्यादित्रिकपरमाणुद्व्यणुके स्वसाध्याव्याप्तेः। साधनावच्छिन्नसाध्यव्यापको बाह्यपरमाणुद्व्यणुके साध्याव्याप्तेः। नापि नीरूपस्थूलद्रव्यत्वावच्छिन्नसाध्यव्यापारोऽयम्। उक्तयुक्त्या उद्भूतस्पर्शस्य द्रव्यप्रत्यक्षत्वानङ्गत्वात्। स्थापनायां च सर्व एवोपा-धिर्दोषः उक्तयुक्त्या रूपवत्त्वस्यैव तत्प्रयोजकत्वव्यवस्थितेरिति।

ननूद्भूतरूपत्वं न तत्र तन्त्रम्। अतथाभूतस्यापि तेजसो हेम्नः प्रत्यक्षत्वादिति चेन्न तस्योद्भूतरूपवत्त्वात्। न चैवं स्वपर-

प्रकाशनापत्तिः अभिभवात्। न चारुण्याद्यभिभूतरूपेण हेम्नापि अरुणवह्निवत् प्रकाशापत्तिः। तत्रापि वह्निसहचारिण्याः प्रभाया एव प्रकाशकत्वात्। अन्यथा पटप्राप्तस्य वह्नेः तत्प्रकाशकत्वेन नक्तं दिवं तत्संयोगे तद्ग्रहापत्तेः न चैवं प्रदीपादिवैकल्यं तस्यास्तन्नान्तरीयकत्वात्। अञ्जक तेजोवत्। अत एवावरणाद्यनुरोधादपि दीपहेतुत्वमपास्तम्। न च पीतिमगुरुत्वाश्रयातिरिक्तं तदसिद्धमेव, पार्थिवे विरोधिद्रव्यानुपधाने सति प्रबलानलसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वावधारणात्। न चैतदपार्थिवं न वा प्रबलानलासंयोगि। तस्मात् पीतिमगुरुत्वाश्रयो ध्मायमानं कनकं पूर्वरूपविजातीयरूपोत्पत्तिप्रतिबन्धकद्रवद्द्रव्यसंयुक्तम्, प्रबलानलसंयोगिपार्थिवत्वे सति पूर्वरूपविजातीयरूपानाधारत्वात्। कल्प्यमानाग्निनिक्षिप्तपटवत्। तच्च द्रव द्रव्यं न जलं नैमित्तिकद्रवत्वात्। नापि पृथिवी तस्या अन्यदाहप्रतिबन्धकत्वेन प्रकृतासिद्धेः। तद्दाहापत्तेः। रूपवच्चेति परिशेषात् तेजः। न चैवं तस्य जलस्येव असंयोगिपार्थिवमात्रे रूपान्तरप्रतिबन्धकत्वापत्तिः। धर्मिग्राहकमानेनोपष्टम्भक एव तस्य तथात्वावधारणात्। न च तस्यैव स्वरूपान्तरप्रतिबन्धकत्वं स्वभावः कल्प्यतां लाघवात् दृष्टा[न्ता]नुरोधेन तत्प्रतिबन्धकस्य द्रवद्द्रव्यस्यैव कल्पनात् न तु अदृष्टस्य स्वभावस्येत्याचार्याः।

*नव्यास्तु* प्रबलानलसंयोगदशायां प्रत्यक्षद्रव्यत्ववत् पीतं यदि विरोधिद्रवद्द्रव्यमस्तित्वं स्यात् तदा तथाग्निसंयोगात्त्वच्छिन्नद्रवत्वं स्यात् ध्मायमानजतुवत्। न चैवं, तस्मात् पीतं द्रुतं द्रवत्वोच्छेदप्रतिबन्धकद्रवद्द्रव्यसंयुक्तं प्रबलानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधारपार्थिवत्वात् कल्प्यमानजलन्तु घृतवत्। न च क्रमशो द्रवत्वतारतम्याद्धेत्वसिद्धिः प्रत्यभिज्ञानेन द्रवत्वस्थैर्यात्। जलपरमाणौ व्यभिचारवारणाय पार्थिवपदं हेतौ न च पीते आशैथिल्यमात्रम् घृष्टमसीवत् तत्तु द्रवत्वमत आश्रयासिद्धिः। पीतं द्रुतमिति प्रतीतेर्बाधकं विना प्रमात्वात्। च द्रवत्वोच्छेदापत्तिरेव बाधिका। द्रवद्द्रव्यान्तरप्रति-

बन्धादेव तदनुच्छेदात् । यस्यान्तु बाधकाद् द्रवत्वाभावस्तच्च तैजसम् पूर्ववदित्याहुः । तस्मात् न्यूनं सूत्रे कारणाभिधानमिति ।

अत्राहुः—प्रत्यक्षलक्षणप्रवृत्तः *सूत्रकारः* कारणमपि तदेवोक्तवान् यल्लक्षणीभवनसमर्थं, न चालोकादयस्तथा, तज्जन्यत्वस्यातिव्यापकत्वात्, तज्जन्यज्ञानत्वस्य चाव्यापकत्वात् । न च यावदसाधारणं तावद्वक्तव्यम्, एकेनैवोपलक्षणसिद्धेः । इन्द्रियमनोयोग एव तर्हि कुतो नोक्तः सुखादिप्रत्यक्षाव्यापकत्वात् प्रत्यक्षज्ञानस्य तेनाव्यपदेशाच्च ।

यद्यपि सुखादिज्ञानं मानसमित्यत्र मनोऽपि व्यपदेशकमेव तथापि न तन्मनस्त्वेन तत्र व्यपदेशकमन्यथानुमित्यादावपि मानसत्वेन व्यपदेशः स्यात् किन्तु इन्द्रियत्वेन । इन्द्रियार्थौ तु चक्षुर्ज्ञानं रूपज्ञानमित्येवं स्वजन्यधियो व्यपदेशकौ । यत्र गोपुरनिविशमानातिचिरप्रोषितनृपतिहास्तिकाश्वीयादिभिन्नभिन्नविषयकाले ज्ञानानि कौतुकप्रणिहितमनसां नगरवरवर्णिनीनां क्रमेण जायन्ते । तत्रेन्द्रियमनोयोगाभेदेऽपि भिन्नविषयकज्ञानाभ्युपगमात् इन्द्रियमनोयोगो नोक्त इति *कश्चित्* । तन्न, यत्र दूरात् मन्दं गच्छति शुक्लो गौरित्यज्ञासीत् अथ प्रत्यासीदंश्चलतीति जानाति तत्रैकेनैव संयुक्तसमवायेन भिन्नभिन्नविषयकज्ञानोत्पादाभ्युपगमात् इन्द्रियार्थसन्निकर्षस्याप्यवचनापत्तेरिति ।

ननु चाव्यापकमिन्द्रियार्थसन्निकर्षोत्पन्नत्वम् चक्षुःश्रोत्रयोरप्राप्यकारित्वात् । यदाह *दिङ्नागः*—

सान्तरग्रहणं न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च ।
अधिष्ठानाद् बहिर्नाक्षं चिकित्सादिप्रयोगतः ।।
सत्यप्यत्र बहिर्भावे न शक्तिर्विषयेक्षणे ।
यदि तु स्यात्तदा पश्येदप्युन्मील्यनिमीलनात् ।। इति ।

अस्यार्थः--प्राप्तौ सत्यां ज्ञाने उत्पाद्यत्वेनाभ्युपगम्यमाने सान्तरस्य कदाचिद् दृढमूर्तान्तरितस्य ग्रहणं न स्यात्। सन्निधिव्यवधिभ्य प्राप्तौ विशेषात्।

न च तेजः संसर्गिद्रव्यतया तावति देशे बहिरालोकेन सह चक्षुष नयनारम्भात् तदुपपत्तिरिति वाच्यम् अन्धतमसे[सि]खद्योतविद्युतो र्नेदीयदवीयसोर्युगपद्ग्रहानापत्तेः। मध्ये तेजोऽन्तराभावात्। न च तासामेवारम्भः परस्पराश्रयात्। आरम्भे व्यवहितस्य प्राप्तिस्तस्यां चारम्भ इति, अस्थैर्याच्च।

किञ्च चिकित्साया गोलके विधानादिन्द्रियं तस्माद् बहिर्नास्त्येव। सत्यपि वा बहिर्भावे भूतस्य विषयग्रहणे न शक्तिः। यदि तु सामान्यात् तदोन्मीलस्य निमीलितनयनोऽपि पश्येत्। उन्मीलनेन चक्षुषो बहिर्भावात्। न च गोलकस्य चक्षुस्त्वे कुड्यादिव्यवहितस्यापि ग्रहणं स्यात्, अप्राप्त्यविशेषादिति वाच्यम्। तथोत्पादस्य ग्राहकत्वात् श्रोत्रेऽप्येवमिति। मैवं, काचादीनामच्छत्वेन नयनगत्यप्रतिबन्धकतया समोऽस्तु क्रमिकानुभवस्यैवाभ्युपगमात्। नायनरश्मेस्तु सौररश्मिवल्लाघवातिशायनवेगातिशयात् निरन्तरोत्पन्नयोरपि अनुभवनयोरेकत्वाभिमानाद् सूचीशतपत्रशतव्यतिभेदनवत् प्राप्यकारित्वे सिद्धे विप्रकर्षस्यैव यौगपद्ये बाधकत्वात्। तिर्यग्भूतेन नयनेन युगपदेव शाखाशशधरसामग्र्यावच्छेदेन संबन्धात्तदुपपत्तिरित्यप्याहुः।

अधिष्ठानोपकारोपघाताभ्यां चक्षुषोऽपि तदुभयसंभवात् चिकित्सादेरप्युपपत्तेः।

वस्तुतस्तु अधिष्ठान एव व्याधितस्भावौ न तु चक्षुषि अधिष्ठानापाटवे रश्मिर्यथावन्न निर्गच्छतीत्येव परम्। न च चक्षुषो गोलकान्यस्य गत्वा ग्राहित्वे विछिन्नमूलादपि ततोऽनुभवापत्तिः। अधिष्ठानतत्संबन्धस्यापि ग्राहकत्वात्। तस्मात् चक्षुः प्राप्यकारि करणत्वाद् वा स्यादिति। न चायस्कान्ते व्यभिचारः, तत्रापि तदधिष्ठाने तेजोद्वारा लौहप्राप्त्युपगमात्। अन्यथा

जगति लौहस्थितिर्न स्यात् मानविप्रकर्षेणेति । तच्च नयनं रूपादिषु मध्ये रूपमात्रग्राहितया तेज इति विषयाधिष्ठानसंबन्धं तेजोमयम् । अत्र प्रमाणं तु अन्धकारस्थमनन्धगोलकं साक्षात्कारकारणघटसंयोगाधिकरणतेजःप्रतियोगिकसाक्षात्कारकारणसंयोगवत् रससाक्षात्कारजनकघटसाक्षात्कारजनकत्वे सति रूपवत्वाद् बाह्यालोकवत् । अत्र तेजस्तया सिद्धये तेजः पदम् । एवमपीदृशोदासीनतेजः सिद्धार्थान्तरवारणाय साक्षात्कारकारणघटसंयोगाधिकरणेति तेजोविशेषणम् । एवमपि तादृशेन तेजसा गोलक उदासीनसंयोगनिरासाय साक्षात्कारणेति संयोगविशेषणम् । तेन घटप्राप्ततद्ग्राहकतेजः संबन्धं गोलकमिति साध्यार्थः ।

हेतौ तु त्वचा व्यभिचारवारणाय रूपवत् पदम् । शरीरेण व्यभिचारवारणाय प्रथमम् । अधिष्ठानतत्संयोगेनावश्यापेक्षणीयेन शरीरवत् संयोगस्य नान्तरीयकत्वान्यथासिद्धया तस्य साक्षात्कारकारणत्वाभावात् । उदासीनेन व्यभिचारवारणाय द्वितीयं विशेषणम् । एवमपि सहकार्यालोकेन सिद्धसाधनवारणायान्धकारस्थमिति । अंशतो बाधवारणायानन्धेति ।

शरीरस्य पक्षसमत्वाद् वैतावद्विशेषणमदेयमित्यन्ये । तत्सिद्धमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं यतः प्रमाणात् तत्प्रत्यक्षम् । अत्र च ज्ञानग्रहणं सुखदुःखव्यवच्छेदाय । न च चन्दनसुखमित्यादिसविषयकत्वप्रतीत्या सुखदुःखेऽपि ज्ञानभेदाविति वाच्यम् वह्निसमा ० ० गात्रव्यथयोर्विषयास्फुरणात् । अत्र च तत्स्फुरणं तत्रापीन्द्रियसुखमितिवन्निमित्ततामात्रेण न तु विषयतया सविषयकत्वाभावात् ।

ननु इन्द्रियसन्निकर्षजत्वादेव सुखव्यवच्छेदः । तथा हि मृगयादिजन्यआभ्यासिके चुम्बनादिजन्य आभिमानिके भाविपुत्रचिन्ताजन्यमाने [सा]वधिके सुखे इन्द्रियार्थसन्निकर्षजत्वशङ्कैव नास्ति चन्दनादिजन्ये वैषयिके चावश्यकतज्ज्ञानादेव सुखोत्पत्तौ तेन सन्निकर्षस्या-

न्यथा सिद्धिरिति चेत् न, घटनिष्ठचन्दनान्योन्याभावसाक्षात्कारे चन्दनस्य विषयत्वेऽपि चन्दनसन्निकर्षजन्यवैषयिकसुखानुत्पत्तेः । चन्दनसन्निकर्षस्यापि तद्धेतुत्वात् । योगिनां साक्षात्कारमात्रात्तद-नुत्पत्तेः विषयसन्निकर्षार्थं कायव्यूहोत्पादनाच्च ।

इह फलरूपप्रत्यक्षलक्षणे निर्विकल्पकसविकल्पकरूपविशेषद्वय [या]संग्रहेऽव्यव्यपदेश्यव्यवसायात्मकपदाभ्यां तदुपादानम् । तत्र विप्रतिपत्तिनिषेधार्थं तत्राव्यपदेश्यमिति निर्विकल्पकस्य लक्षणम् । व्यपदेश्यते व्यवच्छेद्यते अनेनेति व्यपदेशो विशेषणमुपलक्षणं च नाम-जात्यादि तत्कर्म व्यपदेश्यम् विशेष्यं तच्छून्यमव्यपदेश्यम् । तेन जात्यादिस्वरूपावगाहि न तु तद् वैशिष्ट्यावगाहीत्यर्थः ।

ननु व्यावर्तकत्वाविशेषे कथं विशेषणोपलक्षणयोर्भेदः । सत्त्वा-सत्त्वाभ्यामित्येके । तथा हि यत् स्वसत्त्वदशायां व्यवच्छिनत्ति तद् विशेषणमतादृगुपलक्षणम् । न च दन्त्यासीदित्यत्र विशेषणदन्ता-व्याप्तिः । यद्व्यावर्तकं सद् विशेष्यान्वयिनान्वीयते तद्विशेषणम्, यस्या-न्वीयते तदुपलक्षणमित्यस्य लक्षणवाक्यार्थत्वात् । एवं च सत्त्वदशायां काकजटादावपि विशेषणमेवेति । सत्त्वासत्त्वसमानाधिकरणं व्यवच्छे-दकं व्यधिकरणमुपलक्षणम् । यथा दण्डी देवदत्तो जटादिभि-स्तापस इति । विद्यमानाया अपि जटाया अत्रोपलक्षणत्वादतो भेद इत्यन्ये ।

ननु शाब्दं सामानाधिकरण्यमेकविभक्तिनिर्देश्यत्वरूपं न लक्षणम् प्रयोगस्य बहुव्यापकत्वादिति चेन्न, विवक्षितान्वयप्रतियोगिता-वच्छेदके हि सामानाधिकरण्यं संभवतीति तेन तस्योपलक्षणात् । तथा च विवक्षितान्वयप्रतियोगितावच्छेदकं व्यवच्छेदकविशेषणम् अतादृशं व्यवच्छेदकमुपलक्षणमिति लक्षणार्थः ।

एवं च काकजटादिः सन्नपि उपलक्षणमेव । तदपि गृहादौ विव-क्षितान्वयसंभवेन, तस्य तदनवच्छेदकत्वात् । न च व्यवच्छेदकपदम-

प्रयोजकम् उपरञ्जकनिवारकत्वात् । ननु लोहितः स्फटिक इत्यादौ लौहित्यादेस्तदवृत्तितया कथमन्वयप्रतियोगितावच्छेदकं स्वं ?, बौद्ध-सत्त्वात् ।

यद्वा यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयीभूतं तु वा-न्वयधीस्तद्व्यवच्छेदकं विशेषणम्, अन्यत्तु व्यवच्छेदकमुपलक्षणमिति । काकाद्यन्विततयैव ज्ञाते गेहादावन्यव्यावृत्तिधीरेव न, किन्तु तदन्वय-बोधेऽपीति, तन्न विशेषणम् । अत एव रूपवति रस इत्यादावतिव्याप्तिर[व्य]वस्था, नहि रूपाद्यन्विततयैव ज्ञाते तत्राभिमतान्वयधीः । तथा हि नहि रसविशेषणविधेस्तत्र वैशिष्ट्यबोधे तात्पर्यं किन्तु इतरव्यव-च्छेदे । तत्र नीरसव्यावृत्तिबोधे तात्पर्यविषयीभूते रूपान्वयधीर्व्यभि-चरितेति । एवमन्यत्राप्युद्देश्यविशेषणमूहनीयम् । तस्य सर्वस्याविधे-यत्वेन विधेयविरोधिव्यावृत्तिबोधितस्यानङ्गत्वात् । लोहितस्तक्षक इत्यत्र लोहितोपरञ्जकवारणाय व्यवच्छेदकपदम् । तत्र तक्षकेति विशेष्य-पदेनैवालोहितव्यावृत्तिसिद्धेरिति ।

ननु नामरहितमविकल्पकं नास्ति । सर्वेषामर्थानां नामधेयात्म-कत्वादिति *वैयाकरणाः* । तदाहुः—

न सोऽस्तु[स्ति] प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥

[वाक्यपदीयम् १।१२३]

बालमूकादिज्ञानमपि शब्दसंभिन्नार्थविषयकमेव ।

यदाहुः—आद्यः करणविन्यासः प्राणस्योर्द्ध्वं समीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ।। इति ।

आत्मन्येवात्र शब्दानुसन्धानपूर्वकत्वग्रह इत्यभिप्रायः ।

कथमन्यथा गौरयमिति सामानाधिकरण्यं स्यादिति । मैवं, शब्दार्थयोस्तादात्म्यबाधे वाग्व्युच्छेदापत्तेः । सामानाधिकरण्यं च नानुपपन्नम् शब्दानामुत्सर्गतोऽर्थपरत्वात् । सविकल्पकानां तु शब्दसंभिन्नविषयत्वमन्यथोपपन्नम् ।

तथा हि गृहीतसंकेतस्यार्थेन्द्रियसंयोगादालोचनेन शब्दसंसर्गरहितेनार्थमात्र आलोचिते तस्य चार्थस्य शब्दविशेषेण संबन्धाच्छब्दविषयके संस्कारे तद्बुद्धे ततः शब्दे स्मृते शब्दाजन्या अपि सविकल्पकाः शब्दपुरस्सरा एव जायन्ते ।

यदाहुः—

यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः ॥ इति ।

ननु तथापि ज्ञानत्वं जात्यादियोजनरहितवृत्तीत्यत्र न मानम्, व्यवहारस्य सविकल्पकादेव सिद्धेरिति चेन्न, प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यम्, जन्यविशिष्टज्ञानत्वादनुमितिवत् । न चानुमितौ विशेषणज्ञानं न हेतुः किन्तु विशेषणतावच्छेदकप्रकारकसविशेषणस्यैव ज्ञानमिति वाच्यम् विशेषणतावच्छेदकप्रकारावच्छिन्नवस्तुविषयकज्ञानपदेनोक्तत्वात् । तथा च विशिष्टधीविशेषे तद्विशेषस्य तद्विशेषणतावच्छेदकप्रकारकज्ञानस्य प्रयोजकतया तत्सामान्य प्रयोजकत्वादत्रापि विशेषणज्ञानं सिद्ध्यद् विशिष्टज्ञानसामग्रीविरहान्निर्विकल्पकं पर्यवस्यति । न च निर्विकल्पकासिद्ध्या हेतौ विशिष्टपदं व्यर्थमिति वाच्यम्, अनवस्थाभयेन क्वचिदविशिष्टज्ञानाङ्गीकारे सामान्यतो व्यभिचारज्ञाने विशेषणेन विना व्याप्तेरग्रहात् । विशिष्टज्ञानं तु न वस्तुतो विशेषणविशेष्यविषयज्ञानत्वम्, आलोचनेऽपि गतत्वात् । किन्तु विशेषणवद्विशेष्यज्ञानत्वम् । यत्र तु विशिष्टज्ञानसामग्र्येव प्रथमं तत्र न विकल्पकम् । यथा ज्ञानादौ, तथा हि ज्ञानस्य विशेषणनिरूप्यतया तत्सामग्रीसत्त्वाद् विषयविशिष्टत्वांशे सप्रकारकम् ज्ञानत्वांशेनिर्विकल्पकम् । ततो घटज्ञानमिति ज्ञानम् वर्तमानरसिद्धाकारविशेष्य-

कम् ततो घटं जानामीति स्थूलकालावलम्बनधीः अनुमिनोमीत्यादौ त्वनुमितिरिति ज्ञानाय नेयं रीतिः। नरसिंहाकारस्यानुमितित्वात्।

अथेन्द्रियार्थसन्निकर्षेण लिङ्गेन यदिन्द्रियगत्यनुमानम् तद्-व्यवच्छेदायाव्यपदेश्यपदम्।

अपदेशो हेतुः स एवाभासव्यावृत्ततया विशिष्टो व्यपदेशः तत्कर्म-लिङ्गप्रत्यायनद्वारा अनुमेयज्ञानं व्यपदेश्यम्। तदन्यदव्यपदेश्यमलिङ्ग-मिति केचिदाहुः।

लिङ्गस्य कूटानुमितावसत्त्वेनाहेतुतयान्यत्रापि तस्य परामर्शो-पक्षीणत्वात्। न च धूलीपटलदर्शनात् स्मृतव्याप्तेर्धूमस्य तत्र तादात्म्य-मारोप्यत इति, व्याप्तिविशिष्टपक्षधर्मभेदज्ञानद्वाराव्यधिकरण एव धूमो लिङ्गमिति वाच्यम्। स्मृतेर्विषयाजन्यतयानुमानवा[धात्]तज्जन्यः परामर्शो धूमस्य व्यापार इति व्यापाराभावेन तस्याकरणत्वात्। किन्तु व्याप्तिस्मृतिः करणं तृतीयलिङ्गपरामर्शो व्यापार इति। अत्र चाव्यभिचारिपदं भ्रमव्यवच्छेदकम्।

ननु यत इत्यध्याहारोपस्थितेन प्रमाणेनैव तद्व्यावृत्तेस्तद्व्यर्थ-मिति चेन्न, सिद्धे सत्यारम्भस्य नियमार्थत्वात्। नियमश्चैवं यत्प्रत्यक्ष-फलप्रामाण्यग्रहादेव प्रामाण्यग्रहः। अनुमानादौ त्वन्यथापि।

यद्वा—प्रत्यक्षाव्यभिचारेण स्वलक्षणबलेन च।
प्रसिद्धाव्यभिचारत्वात् नानुमानं परीक्ष्यत ॥ इति।

[श्लोकवार्तिकम् अनु० परि० १]

व्यभिचारश्च विषयविसम्वादो ज्ञानधर्मः। तथा च *निरुक्तम्*--"न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स" इति। [निरुक्तम् १।५]

अत्राक्षिप्तविभागस्य प्रत्यक्षसविकल्पकस्य लक्षणम् व्यवसाया-

त्मकमिति। विशिष्टो निश्चयरूपोऽवसायो ज्ञानं व्यवसायः, स एवात्मा स्वरूपं यस्य तत्तथा। तेन वैशिष्ट्यावगाहिप्रत्यक्षमित्यर्थः।

अत्र यद्यप्यव्यभिचारिपदेनैव प्रत्यक्ष प्रमात्वं संशयस्य व्युदस्तम् तथापि व्यवसायपदस्यापि तत्र सामान्यमिति द्रष्टव्यम्।

स चायं संशयः सर्वत्र मानस एव विद्युत्प्रकाशितार्थस्थले तक्षकादिव्यभिचारेणान्यत्रापि तस्य धर्मिग्रह एवोपक्षयादिति केचित्। तन्न, विस्फारिताक्षस्येव धर्मिणमालोक्य निमीलिताक्षस्यापि साक्षात् कारिसंशयापत्तेः।

ननु स्थाणुं पुरुषं वा साक्षात्करोमीत्यनुव्यवसायाभावान्न स साक्षात्कारीति वाच्यम् तदंशयोस्तत्त्वेऽपि तद्व्यञ्जकाभावात्तद- प्रतीतेः। ऊर्ध्वत्वांशे तु इदमंशवत् तदनुभवादिति।

ननु सविकल्पकं न प्रत्यक्षम् अभिलापसंसर्गयोग्यालीकजात्यादि- विषयत्वेनार्थतत्त्वाभावात् जात्यादीनामलीकत्वेनाजनकत्वादिति चेन्न, नानादेशसंबन्धिनः परमाणोरिव नानाकालसंबन्धिनो जात्या- देरप्यनलीकतया तद्विषयकाणामपि विकल्पानामनु ०० [वाद] त्वात्।

नन्वेकस्य नानाकालसंबन्धः प्रत्यभिज्ञया प्राप्तः, सैव तु नैका तदिदमंशयोः संस्कारेन्द्रियजत्वात्। परोक्षापरोक्षाभ्यां भेदादिति चेन्न, परोक्षापरोक्षयोरिच्छासिद्धेः। इन्द्रियार्थजत्वेन साक्षात्त्वस्यैव सत्त्वात्। न च संस्कारजत्वाद् वैपरीत्यम्, तत्तास्मृतेरेवात्र जनकत्वाभ्युपगमात्। तमिमं साक्षात्करोमीत्यनुव्यवसायाच्च ततोऽर्थाद् विज्ञानं प्रत्यक्षम् यत्तदोर्नित्याभिसंबन्धात्। तथा च येनार्थेन व्यपदिश्यते तत उत्पद्य- मानं ज्ञानं प्रत्यक्षम्। तेन भ्रमस्मृत्यनुमित्यादेर्व्युदासः।

यद्यप्यात्मस्मृत्यादयोऽपि व्यपदेशादात्मनो जायन्ते तथापि

तत्रात्मनोऽर्थतया न हेतुता किन्तु समवायितयेति तद्व्युदास इति *वसुबन्धुः*। तन्न, तव सर्वज्ञाव्यापनात्।

कल्पनापोढं प्रत्यक्षम्। कल्पना नाम जात्यादियोजना तयाऽपोढ' त्यक्तम्। तेन वैशिष्ट्या[न]वगाहि ज्ञानं प्रत्यक्षमिति *दिङ्नागः।* तन्न, प्रत्यक्षसविकल्पकाव्यापनात्।

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति *भगवज्जैमिनि*नयः। तन्न, भ्रमस्यापि सता पुरोवर्तिन इन्द्रियसंयोगादुत्पत्तेः।

ननु तज्ज्ञानं पुरोवर्त्यंशे प्रमेति चेत् तथापि ज्ञानमात्रेऽति व्याप्तेः। सता आत्मनेन्द्रियस्य मनसः संयोगेनोत्पत्तेः।

यज् ज्ञानं यद्विषयत्वे सविल्पकाजन्यम् सा तत्र साक्षाद्धीः। सा च प्रत्यक्षमिति मात्रंशे सर्वमेव ज्ञानं प्रत्यक्षं ज्ञानाजन्यत्वात्। अनुमित्यादेर्मेयांशे प्रत्यभिज्ञायास्तत्तांशे च ज्ञानजन्यत्वात् परोक्षत्वमेवेति *प्राभाकराः।* तन्न, प्रत्यभिज्ञायाः सर्वांशे साक्षात्त्वात्। तथैवानुव्यवसायात्। न च तदेकदेशवृत्तिप्रसवे बाधकाभावात्। न च विकल्पके जन्यतैव तत्तांशे बाधिका, परिभाषात्वात्, इन्द्रियजत्वस्य तद्व्यञ्जकस्य तत्रापि भावादिति।

अथाकारपरिणतेन्द्रियवृत्तिभेदः प्रत्यक्षमिति *वार्षगण्यः।* तत्र पञ्चानां खल्विन्द्रियाणामर्थाकारेण परिणतानामालोच[ना]मात्रात्मिकाया वृत्तेः संशयादिति साधारण्यादिति ।।१।१।४।

## [ अनुमानलक्षणसूत्रम् ]

अथोद्देशक्रमसंगत्यानुमानलक्षणाय सूत्रम्—

**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतो दृष्टं च ॥१।१।५॥**

अथेति हेतुहेतुमद्भावसूचनाय। अनुमानमिति लक्ष्य-

निर्देशः । तत्पूर्वकमिति सामान्यलक्षणम् । त्रिविधमिति विभागः । शेषाणि विशेषलक्षणानि तेषु च लक्षणयोग्यतया चतुष्कस्योपस्थितिः । अत्र चानुमानमिति सिद्धिवत् प्रमाणविशेषलक्ष्यानुवादादेव नाप्रत्यक्षं प्रमाणमिति *चार्वाक*मतमपास्तम् । नहि अनुमानाप्रामाण्ये तदधीन-प्रामाण्यं प्रत्यक्षमपि प्रमाणं घटते ।

नन्वनुमितिः प्रत्यभिज्ञानरूपं प्रत्यक्षमेव । यथा वह्नेरसन्निधाने धूमत्वेन सकलधूमव्याप्यत्वज्ञानाद् धूमविशेषस्मरणात् उपनीत-व्याप्याभेदग्रहरूपस्तृतीयलिङ्गपरामर्शस्तथा धूमत्वेन वह्निज्ञानात् धूम-विशेषे पर्वते संस्कारवशेन व्याप्तिज्ञानापेक्षात् प्रत्यक्षादेर्वह्निमदभेदग्रह इति चेत् न, विशेषणज्ञानविशेष्यसंबन्धतदुभयासंसर्गाग्रहविशेषदर्शन-विशेष्येन्द्रियसन्निकर्षाणां यथार्थप्रत्यक्षहेतूनामत्र सत्त्वेऽपि विशेषणे-न्द्रियसन्निकर्षस्य तद्धेतोरभावात् ।

अत्र च तच्छब्देन प्रत्यक्षप्रत्यवमर्शे यद्यपि स्मृतिशाब्दमित्या-दावतिव्याप्तिः, अनुमानपूर्वकानुमाने चाव्याप्तिस्तथापि तानि ते तदिति विग्रहत्रयं कृत्वा एकशेषः । तेन प्रथमे विभागसूत्रस्थप्रत्यक्षा-दीनां योग्यतया परामर्शेण नाव्याप्तिः । ते इति विग्रहे अनन्तरसूत्रस्थ-प्रत्यक्षपरामर्शेऽपि योग्यतया लिङ्गलिङ्गिनोर्व्याप्तिग्रहरूपमाद्यं प्रत्यक्षम् पक्षवृत्तिलिङ्गदर्शनं च द्वितीयमिह संबध्यते, अतो नातिव्याप्तिः । तेन लिङ्गदर्शनद्वयपूर्वको व्याप्तिविशिष्टपक्षधर्मताविषयकस्तृतीयो लिङ्ग-परामर्शोऽनुमानम् । व्यापारस्यापि करणकोटावन्तर्भावात् ।

यद्वा लक्षणपदाद् योगोपस्थितमनुमाकरणत्वमेव लक्षणम् । तत्पूर्वकत्वकथनं तु व्याप्तिज्ञानाद्यसाधारणकारणसूचनाय ।

ननु व्याप्तिस्मृतिर्व्याप्यतावच्छेदकरूपेण पक्षधर्मताज्ञानं चेत्येता-वदेवानुमितिहेतुर्लाघवात् आवश्यकत्वाच्चेत्यलं गुरुणा तृतीयलिङ्ग-परामर्शेनेति चेत् न, अयमालोको धूमो वा, उभयथापि वह्निव्याप्य इति ज्ञानस्थले तु व्याप्यतावच्छेदकस्याधूमत्वादेवानिश्चयेऽप्यनुमित्यु-त्पादात् ।

न च धूमालोकान्यतरत्वमेव व्याप्यतावच्छेदकत्वम्, तच्च निश्चितमेवेति वाच्यम् गौरवेण तस्यानवच्छेदकत्वात् ।

किञ्च यत्र व्याप्तिधूमत्वयोर्वैशिष्ट्यं युगपदेव भासते तत्र लाघवाद् व्याप्यत्वज्ञानस्यैव हेतुत्वकल्पनात् । न चैवमतिरिक्तकल्पनागौरवं, फलमुखगौरवस्यादोषत्वात् । सोऽयं तृतीयलिङ्गपरामर्शः पक्षवृत्तिहेतु व्यापकं साध्यमित्याकारो मानस एव सर्वत्र ।

अनुमितेस्तु पक्षविशेष्यकत्वं करणस्वाभाव्यात् । कथमन्यथा दण्डविशेष्यकतज्ज्ञानाज्ज्ञातविशेष्यिका धीरिति *कश्चित्* । तन्न, एवं सत्यनुमितेः साध्यविशेष्यकत्वाभावापत्तेः ।

ननु लिङ्गपरामर्शविषयः का व्याप्तिः । तत्र तादात्म्यतदुत्पत्त्यन्यतरप्रयुक्तोऽविनाभावः सेति *बौद्धाः* ।

तन्न, समानाधिकरणरूपरसव्याप्त्यव्याप्तेः । अतादात्म्यमतिव्याप्तिस्तदुत्पत्तिरिति नात्राव्याप्तिरिति *प्रज्ञाकरः* । तन्न परिभाषामात्रत्वात् । वासनातीतमेव रूपमनुमाप्यत इति तयोरेव व्याप्तिः । सा च तदुत्पत्तिरेव रससमानकालधीस्तु यो रसः स स्वसमानकालीनरूपजनकरूपजन्यः रसत्वात्, यथा संप्रतिपन्नस्तथा चायम् विवादाध्यासित इत्यनुमानेन विशेषणतया वर्तमानवह्न्यादिसिद्धिरप्येवमेव । तदुक्तम्—

> एकसामग्र्यधीनस्य रूपादेरसतो गतिः ।
> हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥

[प्र० वा० ३।६] इति *कीर्तिः* । तन्न, एवमविदुषोऽपि रसाद्रूपानुमानात् ।

कार्यकारणभावो यथा धूमादौ, संबन्धित्वम् यथा स्वस्वाम्यादौ, विरोधित्वम् यथाहिनकुलादौ, एकानुवृत्तित्वम् यथा रूपरसादाविति चतुर्धा व्याप्तिरिति *वैशेषिकाः* । तन्न, यथाश्रुतेऽतिव्याप्तेः । अविनाभावेन च विशेषणे शेषवैयर्थ्यात् ।

मात्रानिमित्तसंबन्धविरोधिसहचारिभिः ।
स्वस्वामिवध्यघाताद्यैः *सांख्यानां* सप्तधान्वयाः ॥

मात्रा स्वभावः, शेषं सुगममिति । तन्न *वैशेषिक*वद्दोषात् ।

उपाध्यभावो व्याप्ति[रिति] *प्राभाकराः ।* तन्न, यत्किञ्चिदु-पाध्यभावस्यातिव्याप्तत्वात् । प्रकृतोपाध्यभावस्य प्रकृतियोग्यमिति सिद्धिपराहृतत्वात् । यावत् साध्यव्यापकव्याप्यत्वं यावत् स्वव्यापका-व्याप्यसाध्यकत्वं वा तदर्थ इति चेत् न, आत्माश्रयात् । व्याप्तेः सकृ-द्दर्शनगम्यत्वव्याकोपाच्च ।

संबन्धमात्रं व्याप्तिः व्यभिचारिसंबन्धोऽपि केनचित् सह व्याप्तिरेव । धूमादिव्याप्तिस्तु वह्न्यादिनियतसाहित्यरूपा विशिष्यैव निर्वाच्येति *जरन्नैयायिकाः ।*

तन्न व्याप्तेरेवं लक्षणकत्वेऽपि लिङ्गपरामर्शविषयव्याप्ति-स्वरूपनिरूपणप्रस्तावेऽस्यार्थान्तरत्वात् ।

अत्राहुः—प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नयत्समाना-धिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः । पर्वतनिष्ठवह्नेर्महानसरूपवन्निष्ठा-त्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगिता वह्नित्वेनावच्छिद्यते, धूमवति वह्निर्नास्तीत्यप्रतीतेः । किन्तु पर्वतीयवह्नित्वादिना तादृशश्चा व्यापक एव ।

ननु यावद्विशेषाभावैरेव तद्व्यवहारोपपत्तौ सामान्याभावे मानाभावेनासत्तया वह्नित्वावच्छिन्नप्रतियोगिताको वह्निसामान्याभावो न महानस इति शून्यमभिधानमिति चेत् न, वायौ सकलप्रसिद्धरूपा-भावेऽवगतेऽपि रूपमत्र न वेति संशयान्यथानुपपत्त्यातिरिक्ताभावस्या-क्षेपात् । न च यावद्विशेषावधारणे संशय एव न भवतीति वाच्यम् । नहि विषयकनिश्चयस्तद्विरोधी । पर्वते पर्वतत्वे[ना]निश्चयेऽपि वह्निमत्त्वेन संशयात् । किन्तु स्वसमानप्रकारकस्तादृशश्च न विशेषा-

भावनिश्चयः । न च सामान्यरूपेण विशेषाभावेष्वेव संशयः । तेषां रूपत्वावच्छिन्नप्रतियोगित्वरूपसामान्यरूपाभावात् ।

अत्र च लक्षणे प्रथमविशेषणमव्याप्यवृत्तिप्रतियोगिकव्याप्ति संग्रहाय । न च यत्तदोरन्तर्भावादननुगमो दोषः । कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष[ण]त्वात् । तथापि व्याप्तिमात्रस्य किं लक्षणं ? वृत्तिमत्संबन्धत्वमेव । सा चेयं व्याप्तिर्भूयोदर्शनगम्या नियतसामानाधिकरण्यस्य सकृदनिश्चयत्वात् । न च भूयसां दर्शनानां क्षणिकक्रमिकाणामसाहित्यमननुगमश्च दोषः । व्यभिचारज्ञानाभावसहकृतं सहचारदर्शनं तावद् व्याप्तिग्राहकं ज्ञानं निश्चयः । शङ्का च क्वचिदुपाधिसन्देहात् क्वचिद् विशेषादर्शनसहितसाधारणधर्मदर्शनात् । तदपनोदश्च क्वचिद्विपक्षबाधकतर्कात्, क्वचिद्विरुद्धस्व क्रियारूपात्, व्याघा[ता]दनुत्पाद एव तस्याः । तथा च भूयोदर्शनजन्मानः संस्कारास्तर्कमुत्थाप्य शङ्कां निरस्यन्तो व्याप्तिप्रत्यक्ष उप युज्यन्ते इति नासाहित्यम् । यावद्धि दर्शनैर्यस्य तर्कोऽवतरति तस्य तावन्ति दर्शनानि विवक्षितानीत्यतोऽननुगमो दोषः ।

ननु कोऽयमुपाधिर्नाम यच्छङ्कां व्याप्तिज्ञानप्रतिकूलिनीयार्थो[?] तत्र व्यतिरेकी धर्म उपाधिरिति *प्राञ्चः ।* तन्न, अस्येतरभेदसाधनसामर्थ्येऽप्यनुमानविरोधिज्ञानविषयोपाधिनिरूपणावसरेऽर्थान्तरत्वात् । उपधीयते साधने साध्यसम्बन्धोऽनेनेत्युपाधिः । साध्यसंबन्धप्रयोजकस्तत्त्वं च न न्यूनाधिकवृत्तेः । तस्मिन् सत्यभवतस्तेन विना भवतश्च तदप्रयोज्यत्वात् किन्तु समनियतस्येति । तथा च साधनाव्यापकत्वे सति साध्यसमव्याप्त उपाधिः ।

विषयव्याप्तश्च उपाधिस्तु न भवति । तेनैवान्यथासिद्धेरित्येके ।

*अन्ये* तु यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वम् स उपाधिः ।

नन्वेवं स श्यामो मित्रापोषितत्वादित्यत्र शाकपाकजत्वमुपाधिर्न स्यात्। उपाधिव्यभिचारिणोऽपि साधनस्य मैत्रतनयपोषितकोकिलादौ साध्याव्यभिचारात्।

एतेन यद्व्यावृत्त्या यस्य साधनस्य साध्यं व्यावर्तते स धर्मस्तत्र हेतावुपाधिरिति साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापकतेति च निरस्तम्। शाकाहारपरिणतिजत्वेनोपाधिना विनापि मित्रापोषितकोकिलादौ साध्याव्यावृत्तेरिति चेत्, न यादृशं प्रसिद्ध्यवच्छेदकावच्छिन्नं साध्यं प्रत्युपाधिर्व्यापकस्तादृशसाध्यस्य तेन विना व्यावृत्तेरेव। इतरथा तु तस्य व्यापकतापि नेत्युपाधितापि न स्यात्। किन्त्वग्रिमलक्षणद्वये व्यभिचारोन्नयने व्यर्थविशेषणतादोष इति सारम्।

लक्षणं तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्यवसितसाध्यम्। तत्रार्द्रेन्धनाद्युपाधौ महानसत्वादिरेव तादृशो धर्मस्तदवच्छेदेनैव साध्यधूमस्य प्रसिद्धेः। पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधौ तु पक्षधर्मो द्रव्यत्वादिरेव तथा। साधनावच्छिन्नसाध्यव्यापकोपाधौ तु साधनमेव तथा। न च करका पृथिवी कठिनसंयोगवत्त्वादित्यत्रानुष्णाशीतस्पर्शवत्त्वस्य साधनव्यापकस्योपाधेरेव व्याप्तिदोष इति वाच्यम्। अस्योपाधित्वाभावात्। साध्यतदभावोभयसंबन्धिनि खलु साधनविरोधनिरासाय साध्यसंबन्धावच्छेदक उपाधिरङ्गीक्रियते। अत्र च न तथेति नोपाधिरपि। अनुमानं तु स्वरूपासिद्ध्यैव दुष्टम्। नन्वेवं विशेषणस्योपाधित्वे वह्निना स्वधर्मिणो धूमे मेये आर्द्रेन्धनप्रभवत्त्वं साधने साध्यसंबन्धितावच्छेदकमत उपाधिः स्यात्।

नन्वेवं महानसादौ साध्यव्यापकत्वात् आर्द्रेन्धनप्रभवाग्निसत्त्वं च तत्रोपाधिर्न स्यात्। साधने साध्यसंबन्धितानवच्छेदकत्वादिति चेन्न साधनविशेषणस्यान्यस्य वोपाधिलक्षणाक्रान्तस्यैव मयोपाधित्वोपगमादिति तादृशविशेषणाङ्गीकारे यथोक्तविशेषणस्य तस्यान्यस्य

वोपाधित्वेन तल्लक्षणसत्त्वस्य बीजत्वादिति ।

स चायमुपाधिर्न व्यभिचारोन्नायकतया दोषः । साधनव्यभिचारितया अस्यैव व्यभिचारस्य सुवचत्वात् । किन्तु व्यतिरेकेण सत्प्रतिपक्षोत्थापकतयेति केचित् । तन्न, सन्दिग्धोपाधेरदूषकत्वात् । तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात् सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवत् उपाध्यनुद्भावनापत्तेः । किन्तु व्यभिचारोन्नायकतयैव दोषः । न च तुल्ययोगक्षेमापत्तिः, विपक्षबाधकेन हि साध्यव्यापकत्वे निश्चित उपाधेर्दूषकताबीजचिन्ता । तथा च न तुल्ययोगक्षेमावकाशो विशेषदर्शनात् । स चायमुपाधिर्नासिद्धिः अनौपाधिकत्वस्य व्याप्तित्वाभावात् । नापि हेत्वाभासान्तरम् अतो दूषकत्वाभावात् । न ह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानम् अन्यस्य साध्यव्यापकत्वज्ञाने प्रतिबन्धकम् । किन्तु व्यभिचारोन्नायकतयाऽनर्थोत्थानबीजमात्रमसाविति सारम् ।

सोऽयं निश्चितवत् सन्दिग्धोऽपि व्यभिचारसन्देहमासञ्जयन् दोषः । व्यभिचारोन्नयनक्षमास्तूपाध्याभासा इति ।

ननु यदि लिङ्गपरामर्शोऽनुमानम् तदा लिङ्गविषयानुमितिस्तु स्यात्, करणक्रिययोरेकविषयतानियमादिति चेत्, न व्यापारानुबन्धित्वेन लिङ्गज्ञानस्यापि लिङ्गविषयत्वात् । न च नियामकमन्तरेण व्यापारानुबन्धितैव न स्यात् । यन्निरूपितव्याप्यत्वप्रकारको हि यः परामर्शः स तमनुमापयतीति नियमादि[ति] ।

त्रिविधमिति केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिणां विभागः । तत्र वृत्तिमदत्यन्ताभावाप्रतियोगी केवलान्वयी, तादृशसाध्यकमनुमानं केवलान्वयि । यथा घटोऽभिधेयो वस्तुत्वात् घटत्वाच्चेत्यादि ।

ननु शशविषाणेऽभिधेयमस्ति न वा? आद्ये तस्याप्यनली-

कत्वम्, अन्त्ये नास्य केवलान्वयित्वम्, असार्वत्रिकत्वादिति चेन्न अन्वयव्यतिरेकयोर्वस्तुन्येव निरूपणात् । नन्वेवं शशविषाणस्य वस्तुतानिषेधे वस्तुतैव सेत्स्यति, निषेधरूपव्यवहारभागित्वादिति चेन्न मया तत्र तन्निषेधात् । न तर्हि उत्तरादानादप्रतिभः स्यात् । न उत्तरादेरस्फूर्तावप्रतिपत्तेरप्रतिभात्वात् । त्वद्भाषायाश्चोत्तरान-र्हत्वादिति ।

असत्सपक्षः केवलव्यतिरेकी । यद्यप्यत्र प्रायः सपक्षोऽपि संभवति तथाप्यननुकूलतया असत्कल्प इति असदित्युक्तम् । यथा जीवच्छरीरं सात्मकं चेष्टावत्त्वात् यन्नैवं तन्नैवं यथा घट इत्यादि । अत्र च जीवदित्यैव पक्षनिर्देशः शरीरं तूदाहरणमात्रम् ।

अन्वयव्यतिरेकिसाध्योऽन्वयव्यतिरेकी । यथा शब्दो विनाशी जन्यभावत्वात् । यदेवं तदेवं यथा घटः, यन्नैवं तन्नैवं यथा गगनं, तथा चायमतथा च नायम्, तस्मात्तथेति ।

अत्रान्वयव्यतिरेकव्याप्त्योः सहोपस्थितावेवमनुमानम् । अन्यथा विभागभङ्गापत्तेरिति *केचित्* ।

*अन्ये* तु व्यतिरेकव्यभिचारशङ्कायामेव तदुपयोगः । प्रत्येकमेव सामग्र्यकल्पनात् । विभागस्तु सपक्षसहचारविपक्षव्यभिचारज्ञानपूर्व-कत्वाभिप्रायेण । तथा चात्रापि प्रायोमुख एव प्रयोगो लाघवादन्यथा-धिकनिग्रहस्थानापत्तेरित्याहुः ।

एवं तत्पूर्वकमिति सामान्यलक्षणम् त्रिविधमिति विभागं च दर्शयित्वा विभक्तानाममीषां विशेषलक्षणान्याह—पूर्ववदित्यादि । पूर्व-वदित्यत्रातिशये मतुप् अतिशयश्चातिव्याप्तिः । कथासु प्रथमप्रयोज्य-त्वात् पूर्वः पक्षः । स यस्यास्त्यतिव्याप्त्यधिकरणतया तत्पूर्ववत् पक्षव्यापकम्, तेन भागासिद्धिनिरासः । पक्षस्योपयुक्तत्वात्तदन्यः सपक्षः शेषः । तत्त्वं तु तद्वृत्ति सपक्षसदित्यर्थः । पक्षधर्मसपक्षधर्मसाहित्येन

पक्षसपक्षयोः साधारणः सामान्यो विपक्षः तत्राद्दष्टं सत्तस्यन्तात्तसिः । तत्रासदेकरूपमित्यर्थः । एवं पक्षव्यापकं सपक्षसदिति केवलान्वयिनः पक्षव्यापकं विपक्षासदिति केवलव्यतिरेकिणः पक्षव्यापकं सपक्षसद्विपक्षासदेकरूपमित्यन्वयव्यतिरेकिणः लक्षणमुक्तं भवति। सौत्रचकारादबाधितत्वासत्प्रतिपक्षितत्वे अभ्युक्ते । तेनामीषां गमकताङ्गं चतूरूपसंपत्तिः पञ्चरूपसंपत्तिश्चेत्यपि दर्शितम् ।

यद्यपि पूर्ववत्त्वादिलिङ्गधर्मस्तथापि लिङ्गतज्ज्ञानयोरभेदविवक्षया तत्परामर्शः धर्मोऽत्र द्रष्टव्यः ।

ननु निश्चितसाध्यवान् सपक्षो व्यतिरेकिण्यपि संभवत्येवान्यथा साध्याप्रसिद्धेस्तत्र व्यतिरेकव्याप्त्यवधारणमपि न स्यादिति । तस्यापि पाञ्च रूप्याद्विभागो युक्त इति चेत् न प्रयोगकाले प्रयोक्त्रा ज्ञातपाञ्चरूप्यस्य पञ्चरूपसम्पन्नत्वेन विवक्षणात् ।

यद्वा त्रिविधमिति कार्यानुमानादिति भागः । पूर्ववदित्यादि तद्विवरणम् । तथा हि कार्यापेक्षया पूर्वं कारणं तद् यस्यास्ति विषयतया तत्पूर्ववत् कारणज्ञानम् । यथा वृष्ट्यनुमाकारणं बलाहकवृद्धिज्ञानम् । एवं शेषं कार्यं तत्तद्विषयकं ज्ञानं यथोपरिवृत्तवृष्ट्यनुमानं नदीवृद्धिज्ञानम् । अनेवंभूतं सामान्यतो दृष्टम् लिङ्गानामविनाभावः सामान्यं तेन दृष्टं तृतीयान्तात्तसिः । यथा आदित्य एतद्देशापेक्षा पूर्वदिगाद्यवच्छिन्नाकाशदेशादिप्राप्तपूर्वकैतत्प्रत्ययगाद्यवच्छिन्नाकाशादिप्राप्तिमान् एतद्देशापेक्षप्राक्प्रत्यक्दिग्व्यापकत्वे सति प्राक्प्रत्यङ्मुखैतच्चाक्षुषद्रव्यत्वात् ।

तादृशमण्यादित्यादि आप्तश्चात्र संयोगः । एतद्देशोऽनुमात्राधिष्ठित देशः । तथा चानुमातृपूर्वदिङ्० संयोगान्तरमनुमित्योदकसंयुक्त इति साध्यार्थः ।

हेतावेतत्पदमनुमातृपरम् प्रत्यङ्मुखे तच्चाक्षुषद्रव्यत्वादिति कृते

पृष्ठस्थितस्थूणया व्यभिचारस्तद्वारणाय प्रागिति । एतावन्मात्रे च कृते पुरःस्थितस्थावरेण व्यभिचारस्तद्वारणाय प्रत्यगिति ।

एवमपि तादृशगुणादिभिर्व्यभिचारस्तद्वारणाय द्रव्येति । न च यश्चङ् क्रममाण एव तादृशेनानुमात्रा प्रत्यङ् मुखेनोपलभ्य प्राङ् मुखेनोपलब्धस्तत्र व्यभिचार इति वाच्यम् । प्राङ् मुखैतच्चाक्षुषविषयता पूर्वकप्रत्यङ् मुखैतच्चाक्षुषद्रव्यत्वादित्यस्य हेत्वर्थत्वात् । एवमपि प्राचीप्रतीचीस्पृशा हिमालयादिना व्यभिचारः । स हि न प्राच्यां संयुज्य प्रतीच्यां संयुज्यते किन्तु युगपदेव द्वाभ्यामिति तद्वारणाय सत्यन्तम् ।

ननु यानावस्थितनिश्चलपुरुषेण व्यभिचारः । तस्य हि न चलनं प्रत्यक्षबाधात् । तद्विना च नोत्तरदेशसंयोगः । न च तस्यैव विभागोऽपि न स्यात् कर्माभावात् । तथा च न पूर्वदेशसंयोगविनाशोऽपि तस्येति वाच्यम् । विभागस्य हि स्वजन्योत्तरदेशसंयोगविरोधि संयोगनाशकत्वेन पुरुषपूर्वदेशसंयोगस्यापि यानविभागेनैव नाशात् । न चातिप्रसंगः, स्वकार्यविरोधिसंयोगत्वेन नियमात् । न च तत्संयुक्तेयान उत्तरसंयोग इति तस्यापि संयुक्तसंयोगरूपप्राप्तिसत्त्वान्न व्यभिचार इति वाच्यम् अपसिद्धान्तादिति ।

अत्राहुः, तत्र हि [पूर्व]देशयानविभागोद्देशा[त्] पुरुषविभागवदुत्तरदेशयानसंयोगादुत्तरदेशपुरुषयोग इति क्व व्यभिचारः ।

न च कारणाकारणसंयोगादेरेव कार्याकार्यसंयोगादिजनकत्वात् प्रकृते च तदभावान्न तच्चेति[?] वाच्यम् चिद्गव[?][क्वचित् कर]-तरुसंयोगादिजन्ये कायतरुसंयोगाद्यावन्यथासिद्धप्रत्यक्षबलेन समवायीतरसंयोगादेरस्याप्यसमवायिकारणत्वकल्पनात् । कारणैकार्थप्रत्यासन्नं न समवायिकारणमित्यस्य परम्परामात्रपरत्वादिति ।

ननु संयोगमात्रं साध्यं कर्मजः संयोगविशेषो वा आर्थेन सूर्य-

व्रज्यानुमानम् संयोगमात्रस्य कर्मव्यभिचारादिति प्रकृतासिद्धिः। अन्त्ये च संयोगजसंयोगवति यानस्थे व्यभिचार इति चेतनसंयोगमात्रमेव हि साध्यमानं द्वारबाधावतारे सति कर्मजसंयोगो भूत्वा सिद्ध्यति। वस्तुतस्तु सप्तसप्तेरपि वरूथिनः संयोगज एव संयोगः साध्यते व्रज्यापि तस्य वाजिव्रज्यैवोक्तेऽपि [न] काप्यनुपपत्तिः। याननोदनाद् यानस्थे कर्म ततस्तत्र संयोगविभागाविति न किञ्चिदनुपपन्नमित्यपरे।

अथ वा त्रिविधमिति पूर्वसदृशानुमानादिविभागः। अस्यैव विवरणं पूर्ववदित्यादि। वतिरत्र व्याप्तिज्ञानानुमित्यादेर्विषयकृतां तुल्यतामाह। तेन स्वातन्त्र्येण व्याप्तिग्राहकप्रमाणविषयत्वयोग्यस्यार्थस्य वह्न्यादेर्धूमादिनानुमानं पूर्ववत्। एवं शिष्यत इति शेषोऽवशिष्टः पक्षः स यस्यास्ति ज्ञाप्यतया तत् शेषवत् परिशेषः। प्रसक्तत्तत्कोटिबाधेऽवशिष्टकोटिग्राहको व्यतिरेकी। यथा गुणत्वेनेच्छाया द्रव्याश्रितत्वसिद्धौ तत्तद्बाधकैः पृथिव्यादिनिरासे अष्टद्रव्यानाश्रितत्वसहितं गुणत्वं तदतिरिक्तद्रव्याश्रितत्वपरिच्छेदकमिति।

ननु व्यतिरेकिणि साध्यप्रसिद्धिरस्ति न वा ? आद्ये तत्र हेतोर्वृत्तावन्वयित्वमवृत्तावसाधारण्यम्। अन्त्येन व्यतिरेकनिरूपणादीति चेत् न, यद्यपि सामान्यतो दृष्टेनेच्छाया द्रव्याश्रितत्वप्रसिद्धौ तद्द्रव्यं न पृथिवी मानसगुणत्वादेवं न जलादीत्यष्टद्रव्यातिरिक्तत्वे तस्य सिद्धे तद्द्रव्यवृत्तिनि द्रव्यत्वे अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं साध्यं प्रसिद्धमेव। यथान्वयव्याप्त्यप्रतिसन्धानेऽपि अनुमितिदर्शनात् उपायस्योपायान्तरदूषकत्वाच्च तत्र व्यतिरेकिसंभवः। न चासाधारण्यं दोषः। स हि सत्प्रतिपक्षं संशयमाप्रसंजयन् दूषयेत् प्रकृते च विपक्षबाधकतर्कादुभयेषामप्यनवकाश एव।

आभ्यामन्यत् सामान्यतो दृष्टम्। यथेच्छादयः क्वचित्समवेता गुणत्वादित्यादि। अनयोश्च व्याख्यानयोस्त्रिविधमिति वचनादेव

पूर्ववदादित्वे सिद्धे पूर्ववदादिवचनादेव त्रैविध्यसिद्धौ चतुःपञ्चरूप-प्रदर्शनाय शिष्यधीवैशद्याय चोभयोपादानम् ।

यद्वा पूर्ववदादिग्रहणान्न त्रैविध्यलाभः । चकारसमुच्चय-विधान्तरशंकाया दुर्वारत्वादिति ।

नान्तरीयकार्थदर्शनं तावदनुमानमिति *दिङ्नागः।* तन्न, नान्तरीयकार्थविशेषणसमासानुपपत्तेः । विशेषणं विशेष्येण बहुलमिति [पा० सू० २।१।५७]। अत्र संबन्धिपदत्वादन्यतरपदोपादाने-नैवोभयप्राप्तावुभयोपादानस्यैतत् प्रयोजनम् । यत्र यत्रोभयो र्व्यभिचारस्तत्रैव समास इति। स चात्र नास्ति नान्तरीयकत्वस्या-र्थित्वाव्यभिचारात् पृथिवी द्रव्यमित्यत्र भवति संशयः। किं पृथिवीत्वं सामान्यं विवक्षितं पशुना यजेतेतिवत् किं वा विशेष्यं ग्रहं समार्ष्टीति-वत् व्याप्तेः । एवं द्रव्यपदेऽप्यतस्तत्र विशेषणप्रतिपत्तय उभयो-पादानम् । यच्च—

'अनुमेये च तत्तुल्ये संभावनैवास्तितां सती' इति *दिङ्नागे*, नालक्षि, तदपि न भागासिद्धातिव्याप्तेः। तत्रावधारणादतिव्याप्तिलाभ इति चेन्न तद्विधाने वाक्यभेदापत्तेः। यथाकथञ्चिदुपस्थितौ तुल्यस्या-विवक्षैव। यथा यस्योभयं हविरार्तिमार्च्छेत् स इन्दुं पञ्चशरावमोदनं निर्वपेदित्यत्रोभयत्वमविवक्षितम् तदिदं ह्यनूद्यते। न चोभयत्वविशिष्टं हविरुदितम् किन्तु हविर्मात्रम् । तथा चानुवादपक्षे उभयं न विवक्षितम्। तद्विप [व] क्षामन्ते [मन्तरेण] नार्थवादः। किन्तु वाद एवेत्यर्थभेदाद् वाक्यभेदस्तस्माल्लाघवात् पूर्वविधानाच्च हविर्मात्र-मन्वीयते । न तूभयत्वविशिष्टं हविरित्येकस्यानेकस्य वा हविष आर्त्तावुक्तं प्रायश्चित्तम् । तस्य चाद्यपुरोडाशाद्यनेकरूपतयोभयत्व-मप्यस्तीति तदप्युपात्तमिति। संबन्धादेकस्मात् प्रत्यक्षात् शेषवत् सिद्धिरनुमानम्। एकस्मात् असत्प्रतिपक्षितात् प्रत्यक्षात् दृढतर-प्रमाणावधारितात् संबन्धात् अविनाभावात् शेषसिद्धिः ।

लिङ्गसिद्धिरनुमितिर्यतस्तदनुमानमिति *सांख्याः* । तन्न, एकस्मा-दिति पदवैयर्थ्यात् । एकत्र विरुद्धाविनाभावयोरभावादिति ॥१।१।५।

## [ उपमानलक्षणसूत्रम् ]

अथोद्देशक्रमसंगत्या उपमानलक्षणाय सूत्रम्—

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ।१।१।६।**

साध्यस्य वक्ष्यमाणसंज्ञासंज्ञिसंबन्धपरिच्छेदस्य उपमितेः साधनमु-त्पादकं तेनोपमितिकरणमुपमानम् । तत्साधर्म्यवैधर्म्यान्यतरज्ञानम्, तथायमिति पिण्डप्रत्यभिज्ञाव्यापारकमिति लक्षणार्थः । एतावतैव लक्षणपूर्तौ कस्मात् पुनः साधर्म्यादिज्ञानमसाधारणमित्यत आह प्रसिद्धसाधर्म्यादिति । प्रसिद्धं साधर्म्यं यस्मात् अतिदेशवाक्यादेस्ततः । साधर्म्यग्रहणं चात्रोपलक्षणमिति वक्ष्यते ।

*केचित्तु* साध्यं साध्यतेऽनेनेति साध्यसाधनं सादृश्यप्रतियोगि गोज्ञानादि तदेवोपमानम् । तस्य व्यापाराकाङ्क्षायामुक्तं प्रसिद्धसाध-र्म्यादिति कर्मधारयोऽत्र । एवं च सविशेषणे हीति न्यायात् साधर्म्य-प्रसिद्धेर्व्यापारादिति लभ्यते । तथा च साधर्म्यप्रसिद्ध्या व्यापारेण साध्यमुपमितिरूपम् साध्यते येन तदुपमानमित्याहुः ।

तन्न, वैधर्म्योपमानाव्याप्तेः । साधर्म्यपदे चोपलक्षणपरे साध्यपदे चेदुपमितिविवक्षा तदा पूर्वभागवैयर्थ्यम् । तदविवक्षायां तु धूमवत्त्वा-त्मकदृष्टान्तसाध्याप्रसिद्धिद्वारके ऽनुमानेऽतिव्याप्तेः ।

तच्चेदं साधर्म्यं सप्तपदार्थावृत्तित्वादष्टमः पदार्थ इति *भाट्टाः* । तन्न, स्वसमानाधिकरणाभावप्रतियोगिसमानाधिकरणबहुधर्मवत्त्वे-नोपलक्षणेन कुम्भेनैव यमजजात्यादिसाधारणेन साधर्म्येणोपपत्तेः । न चैवं मेरुसर्षपयोरपि सादृश्यापत्तिः द्रव्यत्वादिनेष्टत्वात् । अत एव वाहीकोऽनुधावतीत्यत्र गोसादृश्यं वाहीकेऽप्युक्तम् ।

*केचित्तु* गगनं गगनाकारमित्यादिदर्शनादभेदेऽपि सादृश्य-मूचुः। तन्न, अभेदे अनेन सदृश इति भेदगर्भसदृशार्थानुपपत्तेः। गगनं गगनाकारमित्यादेस्तु गगनमेवैवं न त्वन्यदित्येव स्वरसात्। अत्रा-विदितगवयेन नागरेण कीदृग्गवय इत्याद्यारण्यके पृष्टे तेन च यथा गौस्तथा गवय इत्युत्तरिते श्रुतोत्तरस्य तथाभूते पिण्डे तथा गो-सादृश्यविशिष्टोऽयमित्यतिदेशवाक्यार्थानुसन्धानादयं गवयशब्दवाच्य इति संज्ञासंज्ञिसंबन्धपरिच्छेद उपमानफलम्। नचोत्तरवाक्यादेव समयपरिच्छेदः, तदा गवयत्वस्य प्रवृत्तिनिमित्तस्यानुपस्थितेः। न च गोसादृश्यमेव तत् अप्रतीतगुणामन्यव द्वारप्रसङ्गात्। नापि गवयपदादेत-दुपस्थितिः, अन्योन्याश्रयात्। नापि प्रत्यक्षमात्रात् अनुपदिष्टस्यापि तद्धी-प्रसङ्गात्। नापि शब्दतदर्थस्मृतिसहितचक्षुरादेः चक्षुरादिना सादृश्या-ज्ञाने ततोऽपि समयपरिच्छेदासिद्धेः। सादृश्यज्ञाने च निमीलिताक्षस्यापि समयपरिच्छेदात्। अतिदेशवाक्यार्थस्य स्मरणसादृश्यानुसन्धान-सहितान्मनस इति चेत् सिद्धं तर्हि सादृश्यज्ञानं मानान्तरं चक्षुरादि-वदिति जरन्तो *जयन्ताद्यः*। तन्न, वैधर्म्योपमानाव्याप्तेः।

नन्वत्र प्रवृत्तिनिमित्तजिज्ञासायां यथा गौस्तथा गवय इत्याप्त-वाक्यस्य गवयपदमप्रतीतसमयतया स्ववाच्यतोपलक्षणम्। अतो गोसदृशपदं गवयत्वानुपलम्भा[नुमा]पकमपि पश्चात् प्रत्यक्षेण गवयत्व उपस्थिते लक्षणया स्ववाच्यतासमानाधिकरणं गवयत्वमुपस्थापयतीति *केचित्*। तन्न गोसदृशो गवयपदवाच्य इति सामानाधिकरण्येन प्रत्यक्षपूर्वकालमेव वाक्यस्य पर्यवसितत्वात्। न चानुभावितान्वयमपि वाच्यम्। गवयत्वप्रत्यक्षानन्तरमनुसन्धीयमानं गवयत्वेन प्रवृत्ति-निमित्तेन गवयपदवाच्यतामनुभावयिष्यतीति वाच्यम्, वाक्यभेदापत्तेः। न च व्युत्पित्सु प्रत्याप्तावश्यकेनातिदेशवाक्यमुक्तमतो गवयत्वे दृष्टे तद्वाक्यीयगोसदृशपदमेव लक्षणया गवयत्वमुपस्थापयति यष्टि-पदमिव तत इतरपदान्यन्वयमनुभावयन्ति। अन्यथा व्युत्पत्तिपरत्वा-निर्वाहादिति वाच्यम्। एवं सति प्रवृत्तिनिवृत्तिविशेषबोधनतात्पर्यकात्

यथा गौस्तथा गवय इति वाक्यात् समयपरिच्छेदो न स्यात्, न स्याच्च करभनिन्दापराद् वैधर्म्यवाक्यात्।

ननु गोसदृशो गवय इति वाक्यं व्याप्तिपरं, तेन योगो सदृशः स गवयपदवाच्य इत्यवगतप्रतिबन्धः पिण्डप्रत्यक्षे सत्यनुमिनोति। नूनमयं गवयपदवाच्यो गोसदृशत्वात् अतिदेशवाक्यावगतपिण्डवदिति लाघवसहकृतादस्मादनुमानात् गवयत्वेन निमित्तेन गवयपदवाच्यतापरिच्छेद इति चेन्न, नहि गोसदृशं ज्ञात्वा अनेन पृष्टं स किं शब्दवाच्य इति किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति। तथा च यद्‌योगप्राथम्याभ्यां गवयत्वस्यैव व्याप्यत्वमायाति। तच्च प्रकृतानुपयोगीति। तस्मान्निमित्तभेदप्रश्नोऽयं कीदृग्गवय इति। केन निमित्तेन गवयपदं प्रवर्तत इत्यर्थः। तस्य च प्रवृत्तिनिमित्तस्य साक्षादुपदर्शयितुमशक्यत्वात् पृष्टस्तदुपलक्षणं सादृश्यमाचष्टे पश्चाच्च पिण्डे दृष्टे वाक्यार्थं स्मरतो लाघवपुरस्काराद् गवयत्वविशिष्टो धर्मी गवयपदवाच्य इति प्रवृत्तिनिमित्तविशेषपरिवृत्तिरुपमानफलम्।

ननु गवयपदं सप्रवृत्तिनिमित्तकम् पदत्वादिति सामान्यतो दृष्टेन गौरवतर्कसहकारादितराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वे निश्चिते पश्चाद् गवयपदं गवयत्वप्रवृत्तिनिमित्तकमितराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वादिति व्यतिरेकिणा समयपरिच्छेद इति चेत् न। प्रवृत्तिनिमित्तकत्वं हि न [कथमप्यनु ?] मानुमानग्राह्यम्, व्याप्तिपक्षधर्मतोपनीतादन्यस्यानुमितौ भाने मानाभावात्। कथं तर्हि? ईश्वरानुमानात्, कर्त्रैकत्वधीः, न कथमपि। तत्र हि गौरवादनेकं कर्तारमगोचरयन्ती कर्तारंचगोचरयन्ती वस्तुगत्यैकमालम्बते तृतीयप्रकाराभावात् नत्वेकत्वेन। नचैवमेकत्वप्रकारकनिश्चयाभावात् कर्त्रैकत्वे नित्यः संशयः स्यादिति वाच्यम्, अनेकत्वे प्रमाणाभावात्। परिशेषेणैकत्वप्रकारकनिश्चयात्। न च वैपरीत्यम्, एकत्वसंख्यायां द्रव्यत्वस्यैव मानत्वात्। न चेतरप्रवृत्तिनिमित्तत्व-

मनालम्बमाना अनुमितिस्तदभावं गृह्णात्विति वाच्यम् । न हि या धीर्यन्न गृह्णाति सा च तदभावं गृह्णातीति नियमः । घटतदभावाग्राहिणि पटज्ञाने व्यभिचारात् । तथाप्यप्रतीतगूनामव्यवहारप्रसङ्गेन विपर्ययपर्यवसिते नेतराप्रवृत्तिनिमित्तकत्वम् निश्चीयताम् । एतच्च त्वयापि वाच्यम् कथमन्यथोपमानादपि गवयत्वप्रवृत्तिनिमित्तनिश्चयः, सादृश्यस्यापि संभवादिति चेत् न, एवमितराप्रवृत्तिनिमित्तकत्वावधारणेऽपि सप्रवृत्तिनिमित्तकत्वावधारणाभावात् । तद्धि न सामान्यतो दृष्टजम् तस्यानावश्यकत्वात् । नापि संस्कारः, तस्यानियतोद्बोधात् । तस्माद्धर्मिणि गवयत्वे च दृष्टे इतराप्रवृत्तिनिमित्तकत्वे चावधृते साधर्म्यज्ञानमेव परिछिन्ददुपमानं प्रमाणम् । न च वैधर्म्याव्याप्तिः, अनवगतसंगतिसंज्ञासमभिव्याहृतवाक्यार्थज्ञानस्य संज्ञिविषयकतया तथा चायमिति अनुसन्धानव्यापारकस्योपमानत्वात् । वाक्यार्थश्च साधर्म्यं वैधर्म्यं चेत्यविशेषः । इह प्रभिन्नकमलोदर इत्यादि तु वैधर्म्योपमानान्तर्गतमिति केचित् । प्रसिद्धार्थपदसामानाधिकरण्यानुपपत्त्यात्र समयग्रहः । तेन नियतधर्मसामानाधिकरण्येन शब्दप्रवृत्तिनिमित्ताधीकरणमुपमानम् नियतधर्मे च साधर्म्यवैधर्म्ये एवेत्यन्ये ।

यद्वा उपमितिकरणत्वमुपमानत्वम् । उपमितित्वं तु जातिविशेषः । सामग्रीवैलक्षण्यात् साक्षात्त्ववत् प्रवृत्तिनिमित्तत्वं च शक्यत्वे [ सति ] शक्यवृत्तित्वे [ सति ] शक्यभिन्नानधिकरणत्वम् । घटादिपदे च तद्रूपादेरपि प्रवृत्तिनिमित्तता स्यादतः शक्यत्व इति । एवमप्यत्रैवाकृतेरपि प्रवृत्तिनिमित्तता स्यादतः शक्यवृत्तित्व इति । आकृतिस्तु कपालादिसंयोगरूपा न घटपदशक्यवृत्तिः ।

नन्वेवं पृथिवीत्वापरायामवयवावयविवृत्तिदधित्वादिजातौ प्रवृत्तिनिमित्ते लक्षणीये तल्लक्षणं रसविशेषेऽपि गतम् दध्यवयवस्यापि दधितया तत्र तस्यापि शक्यवृत्तित्वात् । किञ्चैवं तद्रसवतस्तन्मूलपरमाणोरपि दधित्वं स्यादिति चेत् नरसविशेषवदवयवित्वस्य दधित्वव्यञ्जकत्वात् । अन्यथा परमाणोरपि दधित्वे तेषां च कामचारेणारम्भ-

कत्वे घटादेरपि दधित्वापत्तेः। तत्रातिव्याप्तिनिरासस्तु प्रथमविशेषणादेव रसविशेषवदवयवित्वस्य प्रवृत्तिनिमित्तव्यञ्जकस्य दधिपदाशक्यत्वात्। तथापि पृथिव्यादिपदे पृथिव्यादेरपि प्रवृत्तिनिमित्तता स्यादत उक्तम्—शक्यानधिकरणम्। षष्ठीतत्पुरुषोऽत्र। पृथिव्यादयस्तु न शक्यानधिकरणमतो नातिव्याप्तिः। न च प्रमेयत्वस्य प्रमेयपदशक्यवाच्यत्वाद्यधिकरणत्वादाव्याप्तिः। तत्पदप्रकारीभूतं शक्यानधिकरणत्वस्योक्तत्वात्। व्याप्यत्वादेश्च प्रमेयपदाप्रकारत्वात्। एवमपि प्रमेयादिपदप्रवृत्तिनिमित्ते प्रमेयत्वादौ न शक्याश्रयत्वमस्ति प्रमेयत्वस्यापि प्रमेयत्वाधिकरणत्वादतो भिन्नेति। शक्यं चाभिन्नं (?) चेति समासः। प्रमेयत्वं च यद्यपि शक्यस्य प्रमेयत्वस्यानाश्रयोऽपि न भवति तथापि शक्यस्याभिन्नस्यानाश्रय एव। यस्य द्रव्याश्रयस्तत् अस्मादभिन्नमेव। तथा च यच्छक्यम् सच्छक्याश्रयं च सत् अभिन्नस्याशक्यस्य तत्प्रकारीभूतस्य नाश्रयो भवति तत्प्रवृत्तिनिमित्तमित्यर्थः। प्रकारतया शब्दशक्तिविषयत्वं वा प्रवृत्तिनिमित्तत्वम्। व्यवहितप्रतियोगिकाव्यवहितनिष्ठसादृश्यज्ञानकरणकाव्यवहितप्रतियोगिकव्यवहितनिष्ठसादृश्यधीरुपमानफलमिति *शबरः*।

तन्न, यो हि यद्वृत्तिसादृश्यप्रतियोगी स तत्प्रतियोगिकसादृश्याश्रय इति व्याप्तिज्ञाने व्यवहितो गोरेतत्प्रतियोगिकसादृश्याश्रयः एतन्निष्ठसादृश्यप्रतियोगित्वात्। यथा भ्राता भगिनी। एवं व्याप्त्यनवधारणे तु तत्प्रतीतिरसिद्धैवेति ॥१।१।६॥

## [ शब्दप्रमाणलक्षणसूत्रम् ]

अथोद्देशक्रमसंगत्या शब्दलक्षणाय सूत्रम्—

### आप्तोपदेशः शब्दः १।१।७।

अत्र शब्द इति लक्ष्यनिर्देशः, शेषं लक्षणम्। आप्तो यथार्थ उपदेशः करणव्युत्पत्त्या शब्दः, तेन यथार्थानुभवकरणम् शब्दः

प्रमाणशब्दः। यद्वा आप्तः प्रतिपत्स्यसंसर्गतत्त्वज्ञानवान् यथार्थचिख्यापयिषुः स्थानकरणादिपाटववान्। यथार्थस्तस्योपदेशः शब्दः, तेन प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणशब्द इति लक्षणार्थः। प्रयोगहेतुभूतमर्थतत्त्वज्ञानं यस्य स तज्जन्यः। नहि संसर्गतत्त्वमजानन्-जानन्नपि उपदेष्टुमनिच्छन् इच्छन्नपि वा अलसतयानुपदिशन्नाप्तो नाम। तथा च तत्त्वज्ञानान्तमाप्तनिर्वचन*मित्येके*। अथ तत्त्वज्ञान-जन्यता इत्युक्ते अपटुकरणोदीरितोऽपि घटशब्दः चिख्यापयिषाद्वारा अर्थतत्त्वज्ञानजन्यो भवति। न च प्रमाणमत उक्तम् प्रयोगहेतुभूतेति। प्रयोगः प्रकृष्टो योगः। स चोचितानुपूर्व्युच्चारणम्। तच्चात्र न तत्त्व-ज्ञानात् किन्तु वाक्यादेः चिख्यापयिषाद्वारा वर्णान्वयमेव तत्त्वज्ञान-जन्य*मित्यपरे*।

भ्रान्तप्रकारककीराद्युच्चरितसंवादिशब्दे भगवत एव वाक्यार्थ-यथार्थज्ञानं जनकमिति नाव्याप्तिः। न च स्थानकरणादिमत आप्तत्वाद-शरीरस्य भगवतो न तदिति वाच्यम्। प्रकृते कीरादिस्थानादिनैव तन्निर्वाहात्। आम्नायादिकरणाय तस्यापि शरीराभ्युपगमाच्च। तच्च यद्यप्यदृष्टाभावान्न तस्य स्वीयं तथापि भूतावेशन्यायेन कपि-लादिशरीरेणैव तस्य तद्वत्ता। शरीरैकसाध्यघटादिकार्योपभोक्तृसंसार्य-दृष्टादेव भगवतोऽपि शरीरमिति *केचित्*। तच्चार्थतत्त्वज्ञानं भगवतो-ऽपि जगत्कारणीभूतं प्रत्यक्षमेव कार्याणामुपादानगोचरापरोक्षज्ञान-जन्यत्वात्। योगिनां च योगधर्मसहकृतं न मनसा तदुत्पादनम्। न च मनसो बहिरस्वातन्त्र्यान्नैवम् योगजधर्मसहकारेण तु तत्त्वे तस्य प्रमाणान्तरतापत्तिरिति वाच्यम्। धर्मस्य निर्व्यापारत्वेनोत्प्रेक्षावत् प्रमाणत्वाभावात्। न च चक्षुरादीनामेवासौ प्रत्यासत्तिः, तेषां नियत-विषयत्वात्। तस्मात् परमाण्वादयः सामान्यज्ञानप्रत्यासत्त्यजन्य-प्रत्यक्षविषयाः प्रमेयत्वात्। न चात्र प्रत्यक्षसामग्री उपाधिः साधन-व्यापकत्वात्।

ननु वर्णाश्चिरध्वस्ताः कथमन्वयमनुभावयेयुः। न कथमपि।

नहि वर्णा नैव करणं क्रमः किन्तु पदत्वप्रकारकं तत्प्रतिसन्धानम् पदार्थस्मृतिस्तु तद्व्यापारः, न तु सैव करणं पदज्ञानकरणतात्वम् तत्कल्पनाद्युपष्टम्भविरोधात्। नापि पदार्था एव अतीतादित्वात्।

इह *केचित्* समयबलेन परोक्षप्रमाकरणं शब्द इति लक्षयित्वा कृतसंकेतां पदे पदार्थे वा? आद्ये तत्स्मारितपदैरेव क्लृप्तप्रमाणभावै-रन्वयप्रमोपपत्तेस्तत्प्रामाण्यकल्पनात्। अन्त्ये तया स्मारितानामप्यर्थानामन्वयप्रकारक[ध]र्मत्वाद्युपस्थापकाभावादन्वयप्रमैव नेति तस्याः प्रमाकरणत्वाभावात्। न च कर्मत्वविशिष्ट पदार्थे चेष्टासंकेतनात् तल्लाभोऽपीति वाच्यम् अवैभक्तिक्याः कर्मत्वाद्युपस्थितेरन्वय-बोधानङ्गत्वात्। अन्यथा गौः कर्मत्वमित्यादावपि तत्प्रसंगात्। कथं तर्हि ततो घटानयनादिव्यवहारः संशयप्रतिभयोरन्यतरस्मादि-*त्याचार्याः*।

चेष्टास्मारितसाकाङ्क्षयोग्यासन्नपदार्थानां मनसैव संसर्गाव-गमात्। कथमन्यथा निःकम्पो व्यवहार *इत्यन्ये*। प्रकृतसमयात्तच्चेष्टा सकृद्दृष्टा न किञ्चिदवगमयति। भूयोदृष्टा तु लिङ्गीभूयेति न सा पृथक् प्रमाणम्। ऐतिह्यादयस्त्वग्रेऽन्तर्भावयिष्यन्ते।

ननु पदानि तात्पर्यविषयस्मारितार्थसंसर्गज्ञानपूर्वकाणि आकांक्षादिमत्पदत्वात्। गामभ्याजेतिवदिति क्लृप्तानुमानविधयैव संसर्गज्ञानोत्पत्तौ शब्दा न पृथक् प्रमाणमिति चेत् न अर्थज्ञानं हि प्रवर्त-कम् न तु तज्ज्ञानज्ञानं गौरवात् व्यभिचाराच्च। तदप्यर्थविषयकमिति चेत् सत्यं स त्विष्टतावच्छेदकरजतत्वादिप्रकारके प्रवर्तकं च तथा। किञ्च लिङ्गविशेषणस्य योग्यतायाः संशयेऽपि शब्दतो धीदर्शनात्। लिङ्गतायां तु संदिग्धासिद्ध्या तदनुदयापत्तेः। एतेन पदार्थपक्षकमप्यनु-मानमपास्तम्। अनुमितेर्व्यापकतावच्छेदकप्रकारकतया प्रवर्तकज्ञानानु-दयात्। न चानुमित्यनन्तरं तदुदयः प्रवर्तकज्ञानस्य शब्दजन्यत्वा-सिद्धिप्रसंगात्। न चैवमेव व्याप्तिस्मृतिविलम्बेनानुमानस्य विलम्बित-

तयादौ संभृतसामग्रीकस्य शब्दस्यैव प्रवर्त्तकज्ञानजनकत्वादि[ति] संक्षेपः । १।१।७। ॥

## [ प्रमेयलक्षणप्रकरणम् ]

इहाभ्यर्हितत्वेन प्रमाणलक्षणप्रकरणं समर्थ्य तदधीनप्रवृत्तिकत्वात् प्राक् प्रमेयलक्षणप्रकरणम् । तत्र यत्तावधारणानुष्ठानाध्यवसायाय विशेषलक्षणानुकूलप्रातिस्विकधर्मेण लक्ष्यविशेषप्रदर्शनाय च विशेषलक्षणारम्भकजिज्ञासाजनकसामान्यज्ञानसाधकसामान्यलक्षणाक्षेपकं विभागोद्देशसूत्रम्—

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ।१।१।८।**

समुदिते प्रमेयत्वम्, अन्यतमाज्ञानेऽपि नापवर्गतेति दर्शयितुमुद्देशविभाजकपदयोर्वचनभेदः । तथा च संसारकारणीभूतरागजनकमिथ्याज्ञानविषयत्वं सामान्यलक्षणमनेनैव सूचितम् । तु शब्दोऽनभिमतव्यवच्छेदेन विभागस्फोरणाय । तथा च मुमुक्षुप्रतिपित्सितान्येतान्येव प्रमेयाणीति । न चोपधेयसंस्कारो [संकरो] गोवृषन्यायात् । एवं चापवर्गसाक्षात्कारणानित्यतत्त्वज्ञानविषयत्वम् । यद्वा उपाधिविभागोऽयम् । तेनापवर्गसाक्षात्कारणतत्त्वधीविषयतावच्छेदकरूपवत्त्वम् प्रमेयसामान्यलक्षणं सूचितम् । अपवर्गो मिथ्याधीध्वंसः । न त्वस्या एव सामान्यलक्षणाय तु शब्दस्तदनुपस्थापकत्वात् न्यायापेक्षणेन किन्तु शब्देन तत एव सामान्यलक्षणलाभादिति ।

वस्तुतस्तु अपवर्गसाक्षात्कारणं यः केवलात्मसाक्षात्कारस्तत्साक्षात्कारणम् । यद्वा आत्मादिद्वादशसमूहावलम्बनं तद्रूपानित्यतत्त्वधीविषयत्वं प्रमेयत्वम् । अपवर्गोऽत्रापि स एव । पूर्ववद् द्वन्द्वः समासो विग्रहः । आत्मादिपदार्थास्तु संमुग्धा अपि प्रसिद्धा एवेति नोद्देशरूपत्वासिद्धिः ।

इहापवर्गस्यापि परमप्रयोजनस्यात्माश्रयत्वेनात्मनः प्राधान्यादादौ तल्लक्षणाय सूत्रम्—

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् । १।१।१०।**

लिङ्गमिह लक्षणम्। ननु लक्षणमिति वक्तव्ये लिङ्गमिति श्लिष्टाभिधानं किमर्थम्। पक्षोपस्थापकस्याहमादिप्रत्यक्षस्य शरीरादिसम्भेदावगाहिनोऽत्रातिरिक्तात्मनि प्रमाणयितुमशक्यतया पक्षासिद्ध्युद्धाराय। तथा चामीभिरेव लिङ्गैरनुमीयमानस्यात्मन एतानि लक्षणानीति तात्पर्यम्।

नन्वत्र सूत्रे वचनभेदात् समुदितलक्षणत्वमवगम्यते। तच्चायुक्तमिति। न, ग्रहं संमार्ष्टीत्यत्र ग्रहपदेनेव लक्षणपदेन तन्त्रवृत्त्या षडुपस्थापनात्। अत्र चेच्छाप्रयत्नज्ञानान्यात्ममात्रस्य लक्षणानि, शेषं संसारिणाम्।

आर्षो विभागः। यद्यपि प्रकरणपर्यालोचनया क्षेत्रज्ञानामेव प्रमेयत्वम्। तन्मिथ्याज्ञानस्यैव संसारबीजत्वात्। अन्ततस्तु तत्त्वज्ञानस्यैव मोक्षहेतुत्वात्। तथा च द्वे ब्रह्मणी वेदितव्ये इत्यादिश्रुतेर्मोक्षधीगोचरत्वाद् भगवतोऽपि धीविषयत्वमवगम्यते, भास्करादिस्वरसाच्च। न च भगवद्प्रमेयत्वपरप्रमेयत्वप्रकाराविरोधः। तस्य सव्यमतपरत्वात्। अत एवैतदुद्योतकृतीयप्रकाशावेवमेवेति। अनुमानप्रवृत्तिश्चैवम्। इच्छा क्वचिदाश्रिता गुणत्वात् रूपादिवदिति सामान्यतो दृष्टमितरबाधकसहकृतमुपादानं गोचरयति।

न चालयविज्ञानमेव तत्। तद्धि स्थिरं वा सन्तन्यमानं वा स्यात्। अन्त्येऽपि भिन्नसन्तानं वा प्रवृत्तिविज्ञानसन्तानमध्यपतितं वा? अत्र नाद्योऽनुभवात् [ऽननुभवात्]। नहि विरुद्धज्ञानद्वयसन्तानद्वयमनुभूयते। अन्त्ये न ह्यन्यानुभूतमन्यः प्रतिसन्दधातीति प्रतिसन्धानाभावे

तत्रापि तथागतस्यानुपदेशकत्वापातः। तस्य प्रतिसन्धानसाध्यत्वात्। अस्तु तर्हि स्थिरमेव तदिति। यदि न विवादः, संज्ञामात्रभेदात्। एवं यत्नादिलिङ्गकमनुमानमूहनीयम् ॥१।१।९॥

अथापवर्गस्य दुःखाभावरूपतया दुःखनिरूप्यत्वेन दुःखादपकर्षे तस्यापि हेत्वधीनतया तद्धेत्विन्द्रियादितोऽपकर्षे तेषामपि नियतशरीरावच्छेदेन दुःखहेतुतया शरीरस्य भोगावच्छेदकतया गौरोऽहमित्यादिसंसारनिदानगोचरतया च प्राधान्यात्तेभ्यः प्राक् तल्लक्षणाय सूत्रम्—

## चेष्टेन्द्रियार्थाश्रयः शरीरम् १।१।१०।

अत्र द्वन्द्वः समासः। तत्समभिव्याहृतस्य च प्रत्येकान्वयित्वव्युत्पत्त्या चेष्टेत्यादिलक्षणत्रयम्। अत्रानित्यप्रयत्नसाक्षाज्जन्या चेष्टा तद्वदन्त्यावयवित्वेन शरीरमितरेभ्यो भिद्यते। एवमिन्द्रियाश्रयत्वेन इन्द्रियपाटवप्रयोजकधातुसामान्यादिमदन्त्यावयवित्वरूपेण। एवमर्थाश्रयत्वेन, अर्थः प्रयोजनं सुखादि तदाधारस्यावयवित्वेन। न च तस्य सुखाद्याधारतानुपपत्तिः वने सिंहनाद इतिवत् पादे च मे सुखमित्याद्यनुभवेन तस्यापि तदाधारताविशेषशालित्वात्।

यद्वा अर्था विषया गन्धादयस्तदाश्रयत्वं तत्साध्यभोगावच्छेदकान्त्यावयवित्वम्। मृतशरीरोपग्रहस्तु सर्वं एतन्मात्रजातीयत्वात्। तादृशी च जातिः समानकालीनानेकावृत्तिर्बाल्यकौमारादिभिर्नैकपुरुषीयनानाशरीरवृत्तिश्चैत्रत्वादिकेति।

न च चेष्टालक्षणे सर्गाद्यकालीनभगवच्छरीरक्रियायामव्याप्तिः। भूतावेशन्यायेन मन्वादिशरीरं प्रविशतो भगवतोऽपि तदेव शरीरम्। तच्च मानवयत्नैर्निर्वर्तितचेष्टात्मैवेति नाव्याप्तिः।

यद्वा अव्यवहितप्राक्कालवृत्तिजनकप्रयत्नसमानाधिकरणात्मसंयोगासमवायिकारणिका क्रिया चेष्टा। अत्राप्यभिध्यानाद् विशकल-

चालनेऽतिव्याप्तिवारणाय वृत्त्यन्तं प्रयत्नविशेषणम् । तत्र प्रयत्नेन मन्त्रपाठादिद्वारा अदृष्टजननात् तद्‌व्यवधानात् ज्वलनपवनक्रिययोश्चेश्वरप्रयत्नजन्ययोरपि क्षेत्रज्ञसंयोगासमवायितया न[जनकप्रयत्ने]-समानाधिकरणतज्जन्यत्वम् । घटादिक्रिययोश्चेश्वरप्रयत्नजन्यत्वेऽपि न तत्संयोगासमवायित्वम् । तस्य साधारणत्वेन कार्यवृत्तिनियामकासमवायित्वाभावात् । न च या क्रिया यदीयव्यधिकरणगुणजन्या सा च तत्संयोगासमवायिकारणिकेति व्याप्तेस्तथा । अत्रापि लाघवेन तत्संयोगजन्यत्वेनैव व्याप्त्युपगमात् । भगवच्छरीरक्रियायां तु तद्-साधारणमेव । तत एव कार्यवृत्तिनियमात् । न च प्राणादिक्रियातिव्याप्तिः, तस्याः प्राणवहनाड्यभिघातजन्यत्वादिति । शरीरादीनां मुख्यभोगरूपफलजनकत्वेन तावत्फलत्वं तज्जनकत्वं च न तदवच्छेदकशरीरत्वादिज्ञानं विना ज्ञेयमिति । शरीरत्वादिज्ञानं विना न फलत्वं ज्ञायत इति । तेभ्यः फलस्य प्रेत्यभावस्य च तद्धर्मतया तन्निरूप्यत्वेनापकर्षे अर्थादीनां दोषान्तानां भोगजननाय शरीरोपजीवनाविशेषेऽपि न शरीरसंयुक्तानामेव तेषां तत्त्वम् ।१।१।१०।

इन्द्रियाणां तु तथात्वादेभ्योऽर्थादिभ्य प्रकर्षे मनसस्त्वेवंरूपत्वेऽपि बुद्धिक्रमोन्नेयतया बुद्धितोऽपकर्षे क्रमप्राप्तत्वात् शरीरसंयोगनिरूप्यत्वाच्च । तदनन्तरमिन्द्रियलक्षणाय सूत्रम्—

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः । १।१।११ ।**

अत्रेन्द्रियाणीति सिद्धवदुपन्यासाक्षिप्तं सामान्यलक्षणम् । तद्-बाह्यमबाह्यं चेति विभागः । अभ्यासमन्तरेण बाह्यविभागलक्षणयोरनुपपत्तेः । अत्र बाह्यस्य विशेषलक्षणानुकूलविभागोद्देशाय साक्षादिदं सूत्रम् । तत्र पंकजादिपदवत् योगरूढ्या घ्राणादिपदात् घ्राणत्वादि च विशिष्टरूढात्तल्लक्ष्योपस्थितौ यथासंभवं जिघ्रतीत्यादियोगाद् विशेषलक्षणानि ।

वस्तुतस्तु तत्तत्स्वरूपोपस्थापकादेव त्वक्साधारणादुपस्थितानि गन्धोपलब्धिकरणत्वादीन्यन्यानि विशेषलक्षणानि । तेन त्वचि त्वक्त्वस्य त्वक्पदादुपस्थितावपि स्पर्शोपलब्धिकरणत्वस्याशाब्दस्यापि लक्षणत्वे न विरोधः ।

*नव्यास्तु* इन्द्रियाणीति लक्ष्यनिर्देशः । तदेव चावृत्त्या सामान्यलक्षणम् । तथा हि इदि परमैश्वर्ये इति धात्वनुसारादिन्द्र आत्मा तस्योपकरणानि विशेषगुणसाधनानीन्द्रियाणि शेषं तुल्यमित्याहुः ।

ननु पंकजादिपदेऽपि किमर्थं रूढिः, पंकजनिमतः पद्मोपस्थितेः संस्कारादेव संभवात् । तत्प्रतिबन्धादेव कुमुदाद्युपस्थितेश्च संस्कारोद्बोधकं च तात्कालिकमेव किञ्चिद्दृष्टं वेति न तद् विलम्बादपि पद्मधीविलम्ब इति चेन्नैवम्, व्युत्पन्नस्य पदज्ञानादर्थोपस्थितिसंभवात् । पदज्ञानमेव संस्कारोद्बोधकम् लाघवादुपस्थितत्वाच्चेत्यन्यत्र कल्पनात् । पद्मस्मृतावपि गृहीतसंबन्धपंकजपदज्ञानमेव तथेति पंकजपदे तत्संबन्धसिद्धिः । न च समनियतप्रयोगरूपसंबन्धेनैव पद्मस्मृतिरस्तु । स्वरूपसतोऽस्य तत्साधकत्वे अवयवमात्रव्युत्पन्नस्य कुमुदसाधारणबोधानापत्तेः । ज्ञातस्य च तत्त्वे समनियतप्रयोगज्ञानानापत्तेः । तस्मान्नियतोपस्थितिर्वृत्तिसाध्येति परिशेषादिह शक्तिसिद्धिः । न च शक्तिस्मृत्या व्यभिचारः, पदजन्यपदार्थस्मृतौ शक्त्यज्ञानात् । उद्बुद्धसंस्कारविषयतया भावेनापदार्थशक्तत्वेनैव पदस्य तद्धेतुतया शक्तिस्मृतौ पदस्यान्यथासिद्धत्वात् । न च व्यक्तिशक्ताकाशपदान्नियताकाशत्वस्मृत्या व्यभिचारः, तस्यापि विशिष्टशक्तत्वात् व्यक्तिमात्रस्मरणाद्वा ।

किञ्च रूढ्यपगमे कुमुदादौ धीप्रयोगौ स्यातामेव पद्मतौल्यात् । अथ त्वं पदे सम्बोध्यत्ववदत्रापि पद्मत्वं प्रयोगोपाधिवत्तो न कुमुदादौ धीप्रयोगाविति चेत् तत्साधारण्याः शक्तेर्ज्ञानेऽपि न तत्र धीप्रयोगाविति दुर्घटम् । त्वं पदे च शक्तिनियम एवेति विशेषः । नामग्रामादिवत् प्राचीनधीप्रयोगाभ्यामिति चेत् न, तस्यासाधुत्वेनैव वैषम्यात् ।

तस्मात् पद्मकुमुदाविति प्रतीत्यप्रतीतिनियामिका समुदाय-शक्तिरूपा रूढिशक्तिरास्थेया। न चैवं सैवास्तु सम्भवत्या अवयवशक्तेरपि त्यागायोगात्। न चैषा सम्भवत्येव स्थलपंकजे व्यभिचार इति वाच्यम्। तस्य पंकजविजातीयत्वात्। तथा च योगरूढिशक्तिभ्यां पंकजनिकर्तृपद्मं बोध्यते। अत्र च पंकजं कुमुदमित्यत्र योग्यतया योगार्थं एवान्वेतीति *प्राञ्चः*।

*नव्यास्तु* तस्य पद्मत्वावच्छिन्नतया इतरनिराकांक्षत्वेन कुमुदे तस्य लक्षणा। पुरोडाशकपालेन तुषानुपवपतीत्यत्र पुरोडाशपदेऽधिष्ठानलक्षणेव। न च पंकजवाक्ये कथं लक्षणा, तस्या वृत्तित्वेन शक्तिवत् पदधर्मत्वादिति वाच्यम्। पंकजशब्दस्य विभक्तावयवतया पंकजनिकर्तारं बोधयतो वाक्यत्वेऽपि अविभक्तावयवतया पद्मं बोधयतः पदत्वादेव।

ननु तथापि शीघ्रोपस्थितया रूढ्या अर्थिताभिधानस्य निर्व्यूढत्वात् चरमोपस्थितोपयोगे किञ्चित्करण एवेति कुतो योगरूढिरिति चेत् न, क्रियापदतदर्थयोग्यतादिज्ञानाधीनत्वेन क्रियान्वयबोधस्य विलम्बितत्वात्। रूढ्यवयवार्थयोश्चान्वयबोधस्य सामग्रीसत्त्वेन प्राथमिकत्वात्। न चात्र मण्डपपदे तद्रूढेर्योगोपहारित्वमविरोधात् नाप्युद्भित्पदवन्नानार्थत्वं समवेशात् [?] अथैवं गोपदेऽप्यस्तु गमेर्डे इत्यनुशासनादिति चेत् न, तत्र गमनकर्तृत्वाबोधात्। अस्तु तर्हि धेनुपदे योगरूढिर्गोत्वधानकर्मत्वयोस्तत उपस्थितेरिति चेत् न, अप्रत्ययस्य कर्मणि शक्तेरकल्पनात्। अन्यथा दानुभानुकृशान्वादीनामपि कर्मधीः स्यात्। तस्माद्धेनुपदस्य गोत्वविशिष्टधानकर्मणि तथा भानुकृशानुपदयोरपि जातिमात्रे तथा दानुपदस्य दानकर्तृमात्रे रूढिरेवेति दिक्।

अत्र शरीरसंयुक्तमेव सत् यत् साक्षाद्धीसाधनं द्रव्यानारम्भकं शब्दरूपान्योद्भूतविशेषगुणशून्यं च तदिन्द्रियमिति। न चानुद्भूत-

स्पर्शवायवीयशरीरातिव्याप्तिः । शरीरस्योद्भूतविशेषगुणनियमेन तस्यामानकत्वात्। तत्र दिगादिवारणाय सदन्तम्। विनश्यदवस्थ-प्रभावारणायैवकारः । शरीरार्थोभयप्राप्तेन्द्रियावयववारणाय द्रव्या-नारम्भकमिति। आत्मवारणाय चरमं विशेषणमिति। तत्रापि श्रोत्र-नक्षरचक्षुषोः संग्रहाय शब्दरूपान्येति *प्राञ्चः*।

*नव्यास्तु* साक्षात्कारकरणत्वमिन्द्रियत्वम् । तेनैव रूपेण सिद्धत्वमिति यावत् । स्मृत्यजनकज्ञानकरणमनःसंयोगाश्रयत्वम् वा विशेषणगुणवदिन्द्रियत्वं मनस्त्वमन्तरिन्द्रियत्वम् । तत्रापि असाधारणगन्धसाक्षात्कारकरणत्वं घ्राणत्वम्। सन्निकर्षस्तु न करणं व्यापारालाभात् ।

द्रव्यत्वं वा विशेषणमेवमन्यन्नेयम् । श्रोत्रगन्धाद्युपलब्धीनां क्रियात्वेन सकरणतया तस्य च संयोगित्वे च द्रव्यतया तस्य गन्ध-मात्रग्राहकद्रव्यत्वेन पार्थिवतया लक्ष्यसिद्धौ न लक्षणानामाश्रया-सिद्धिः । एवं रसनादावपि । श्रोत्रं तु व्योम भूत्वा परिशेषात् सिद्ध्यति ।

अथ किं प्रकृतिकानि तानीति जिज्ञासायामाह भूतेभ्य इति । तत्र यद्भूतप्रकृतिकत्वं यस्य युज्यते तस्य तद् द्रष्टव्यम्। बहुवचनेन च नानाप्रकृतिकत्वं दर्शयता एकाहङ्कारप्रभवत्वं साङ्ख्यमतम-पास्तम्।

स्वप्रकृतद्रव्यस्यासाधारणं गुणं गृह्णात्येवेति बाह्येषु मध्ये तमेव वा गृह्णातीति नियमश्च सूचितोऽन्तरङ्गत्वात्। न च श्रोत्रस्य नभो-व्यक्तेरभेदः, भेदव्याप्तपञ्चम्यनुपपत्तेः । विशिष्टादृष्टसहकृतस्य कर्ण-शष्कुलीपरिचायितस्य नभसः श्रोत्रत्वात् । तस्य केवलनभोभेदात्। न चैवमपि हेतुवाचिनी पञ्चम्यनुपपन्नैव श्रोत्रस्याहेतुकत्वादिति वाच्यम्, स्वभावमात्रजिज्ञासायां भूतेभ्य इति पदस्य स्वभावमात्रोप-

स्थापकतया पञ्चम्यास्तत्रातात्पर्यात्। ननु तत्कथं निःप्रयोजनां पञ्चमीं प्रायुङ्क्त, औत्सर्गिकभूतहेतुककथनेन सांख्यमतनिरासार्थम् ।१।१।११।

तत्र भूतपदार्थज्ञाने भूतेभ्य इत्यनर्थकमतः प्रसङ्गात् भूतानि दर्शयति—

**पृथिव्यापस्तेजोवायुराकाशमिति भूतानि १।१।१२।**

परस्परानपेक्षत्वव्यवहारायासमासः। इति चाधिक्यशङ्कानिरासाय। बहुवचनं सामान्यलक्षणसूचनाय। तच्च बाह्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वापरजातिमद् गुणवत्त्वमिति १।१।१२।

अर्थानामिन्द्रियनिरूप्यत्वाद् बुद्धिनिरूपकत्वाच्चानन्तरं तल्लक्षणाय सूत्रम्—

**गन्धरसरूपस्पर्शशब्दाः　　पृथिव्यादिगुणास्तदर्थाः १।१।१३।**

अत्रोद्देश्यैकवाक्यतावश्यकत्वात् तत्स्मारिता एवार्था लक्ष्याः। तदर्था इति लक्षणम्। तदितीन्द्रियमात्रपरामर्शः। शेषं विभागः। पृथिव्यादिपदमैन्द्रियकद्रव्यपरम्, गुणपदमैन्द्रियकधर्मपरम्। अत्र च द्वन्द्वः समासः। समासान्तरे तु तुल्यवत् प्राधान्यानुपस्थितेः गन्धादिसंग्रहशक्तमपि गुणपदं तत्समाहारेण तदन्यधर्मपरं गोवृषन्यायात्। पृथगुपादानं च गन्धादीनां निर्वादो [निर्विवादो] पयोगनियतेन्द्रियविषयत्वस्फोरणायेति *प्राञ्चः*।

*अर्वाञ्चस्तु* शब्दा इत्यन्तेन लक्ष्यनिर्देशः। तदर्था इति लक्षणम्, बहिरिन्द्रियविषया इत्यर्थः। लक्ष्यपदावृत्त्या विभागः। पृथिव्यादिगुणा इति विशेषलक्षणानि। पृथिवीमात्रवृत्तिवृत्तिगुणत्वावान्तरजातिमत्त्वम्। एवं द्वित्रिचतुर्द्रव्यवृत्तितया शब्दस्याकाश-

मात्रवृत्तिगुणतया लक्षणं नेयम्। ऐन्द्रियकत्वविशेषणान्न रसलक्षणस्य गुरुत्वेऽतिव्याप्तिः। समस्तपृथिव्यादित्रिकवृत्तितया न रूपलक्षणस्य द्रवत्वेऽतिव्याप्तिः। द्रवादयस्त्वर्था एव [नै ?] मित्याहुः।

*प्राचां मते* सामान्यलक्षणमनागतगोचरी[भूत]हेतुप्रत्यासत्त्य-जन्यजन्यसाक्षात्कारविषयत्वमर्थत्वम्। अथ विशेषाणामनन्तत्वात् तल्लक्षणानि न सूचितानीति लोकत एवावगन्तव्यानि। अर्थानां तु शुभाशुभसंज्ञाभिर्मिथ्यासम्यग्धीविषयीकृतानां रागवैराग्यहेतुतया संसारापवर्गप्रयोजकत्वादिहोपयोगः। तथा हि—

गौराङ्गी सुकुमाराङ्गी कामिनी गजगामिनी।
दरस्मेरसरोजान्तर्भ्रमद्भ्रमरलोचना ॥इति

हि रागः। मलमयपुद्गलास्तत्साधारणपाकजरूपस्पर्शा दारु-यन्त्रादितुल्यचङ्क्रमणा शवसाधारणपूतिपिशितमयमुखगोलका इति वैराग्यम्। एवमन्यत्रापि नेयम्।

ननु गुणातिरिक्तस्य गुणिनोऽभावात् किं पृथग् [तद्रूप ?] गुणरूपग्रहेण। तथा हि घटादयो रूपाद्यनतिरेकिणः तद्विषयक-साक्षात्काराविषयत्वात्। यद् यद्विषयकसाक्षात्काराविषयो भवति तत् तदतिरेकि। यथा सैनिकातिरेकिणी सेना, तथा चामी, तस्मा-त्तथा। न च घटाद्यप्रसिद्धिर्न तदतद्भेदसाधनम्। असत्ख्यात्याप्रसिद्धि-संभवादिति चेत् न, रूपादिवत् घटादेरपि पृथगेव सिद्धेर्बाधात् रूपादि-विषयकत्वाच्च धीविषयतया स्वरूपासिद्धेरपसिद्धान्ताच्च।

गुणगुणिनोरभेदे एकस्मिन् अष्टत्वाभावे [?] कामेऽष्टद्रव्यकोऽथैव शब्द इति व्याहन्येत। तथा हि जगत्तावत् त्रैधातुकम्, कामधात्वरूप-धातुरूपधातुभेदात्। तत्र कवलीकाराहारपर्यन्ताः कामधातवः, भक्षणा-दिविनियोगफलकप्रवृत्तिगोचरा इष्टोपायतया काम्यत्वात्। फलैक-रूपा आनन्दरूपा अरूपधातवः। एतद्द्वयभिन्ना रूप्यन्ते ध्यानेनैव

विषयीक्रियन्ते व्यवस्थाप्यन्ते ते रूपधातवः। तथा च प्रवृत्तिविषयः प्रवृत्तिफलम् तदन्यच्चेति त्रितयमेव वस्तु। तत्र कामे कामधातौ अष्टद्रव्यकोऽणुः रूपादयश्चत्वारः पृथिव्यादयश्चत्वार इत्यष्टौ द्रव्याणि वस्तूनि। तद्रूपः अशब्दरूप इति शब्दात्मकदर्शी [?] व्यवच्छेदः दृष्टान्तस्य साध्यवैकल्याच्च सेनाया योध्यस्थानत्वात् तस्य च तद्वृत्तिबहुत्वसंख्यात्मकतया तद्भेदात्। बहुत्वं च त्रित्वात्यन्ताभाववद्वृत्तिसंख्यात्वम्। नहि त्र्यादौ कदापि द्वित्वं वर्तते एकस्मिंस्तु वर्तते। न च व्यधिकरणद्वित्वस्य द्व्येकयोरप्यभावादतिव्याप्तिः। यावत्त्वस्य द्वित्वविशेषणत्वात्। योद्धॄणां विशेषणताविशेषोऽनुभवसाक्षिकः सेना एवं वनान्यपीति *कश्चित्*। तस्माद् दृष्टिस्पृष्टसमानविषयं प्रतिसन्धानमेव रूपादिमात्रविषयत्वेऽनुपपद्यमानं तदतिरिक्ते मानमिति युक्तः पृथक्तदुपग्रहः।१।१।१३।

बुद्धेरर्थादिहेतुकतया अनिरूप्यत्वाच्च मनोहेतुकत्वेऽपि तस्य बुद्धिक्रमोन्नेयतया तत्रापकर्षेऽवसरसङ्गत्या बुद्धिलक्षणाय सूत्रम्—

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् १।१।१४।**

अत्र बुद्धिरिति लक्ष्यनिर्देशः। उपलब्धिर्ज्ञानमित्यनर्थान्तरम् पर्यायो यस्या सेति लक्षणमित्येके। तन्न, तत्पर्यायस्य शब्दधर्मत्वेनार्थ [०नात्रा]लक्षणत्वात्।

*अन्ये* तु विभागोद्देशसूत्राल्लक्ष्योपस्थितिः। एतत्सूत्रात् पर्यायताधीः। तथा चेश्वरसंकेतेन बुद्ध्यादिशब्दत्रयवाच्यत्वं बुद्धित्वम्।

यद्यपि द्वादशे पिता नाम कुर्यादिति विधिवाक्ये नामत्वेन पदमात्रमेव भगवता नाम्नि स्वसंकेतितं तथापि नाम्नो विधेयस्य संख्याकाङ्क्षायां प्राथम्यादेकत्वेनैवान्वयान्नामत्रयस्यैकत्रेश्वरतात्पर्यागोचरत्वादिति।

नैतत्, तत्र हि नाम्न एकत्ववैशिष्ट्यम् न त्वेकत्वविशिष्टस्य नामत्वम् । तावतैव नामानध्यवसायनिवृत्तेः । तथा चावाचकेन वाचकेन वाक्येन वा यथैव पिता नाम करोति तथैव भगवतः संकेत इति ।

अपि च प्रवृत्तिनिमित्तानिरूपणे न वाच्यत्वग्रह इत्यावश्यकत्वादखण्डत्वेन लाघवाच्च बुद्धित्वं जातिरेव लक्षणम् । न चैवं बुद्धिरित्येतावतैव लक्षणसिद्धेः पर्यायोत्कीर्तनवैयर्थ्यं, सांख्यप्रक्रियानिरासाय सूचनीयत्वात् ।

सा चैवं, प्रमेयं चेतनाचेतनभेदात् द्वेधा । तत्र चेतनो नित्यचिदात्मकोऽनित्यधर्मानाश्रय आत्मा । अचेतनमपि प्रकृतिविकृतितदुभयरूपभेदाद् द्वेधा [त्रेधा], सुखदुःखमोहात्मकानि सत्त्वरजस्तमांसि समानि प्रकृतिः । एकादशेन्द्रियाणि पञ्च महाभूतानि च विकृतिः । बुद्ध्यहङ्कारगन्धरसरूपस्पर्शशब्दा उभयात्मकाः । तत्र प्रकृतिसाक्षाज्जन्यं महदाख्यं बुद्धितत्त्वम् । तत्साक्षाज्जन्योऽहङ्कारः तत्साक्षाज्जन्यानि गन्धादीनि पञ्चेन्द्रियाणि चैकादश गन्धादिजन्यानि भूतानि पञ्च । अत्र शब्देन सह पञ्चगुणा पृथिवी एवमुत्तरोत्तरं गन्धादिहान्या ज्ञेयम् । तत्र पुरुषोपरागव्यापारावेशांशत्रयवती बुद्धिः । घटमहं करोमीत्येवंरूपा हि सा । तत्र बुद्धावहङ्कारोपाधिकः [०रोत्पादादतात्त्विकः] पुरुषोपरागः घटमितीन्द्रियप्रणालिकया वास्तवो घटादित्वेन परिणामभेदो विषयोपरागः पुरुषांऽशोऽतात्त्विकोऽहमास्पदस्याकर्तृत्वात् । विषयांशे तात्त्विकः करोमीति व्यापारावेशः । तत्राद्योऽहं सो बुद्धिः । द्वितीयो ज्ञानमहमास्पदस्य प्रतिविम्बितस्य कृतिधीरतात्त्विकी उपलब्धिः । तदेतस्याः प्रक्रियायाः पर्यायोत्कीर्तनेन निरासः सूचितः ।

यद्यपि सांख्यानां कार्यकारणात्यन्ताभेदवादिनामप्येते शब्दाः एकार्था एव तथापि नैकप्रवृत्तिनिमित्तकाः । अन्यथा प्रयोगे कामचारः

स्यादिति। अत्र तु बाधिका कृतिचैतन्ययोः सामानाधिकरण्यधीरेव। न च सा भ्रमः, अबाधात्। न चाव्यक्तप्रतिपादकश्रुत्या बाधः, तस्या अव्यक्तपरमाणुपरत्वादिति ।१।१।१४।

बुद्धिक्रमोन्नेयत्वात् प्रवृत्तिहेतुत्वाच्चानन्तरं मनोलक्षणाय तत्स्वरूपसाधनद्वारा सूत्रम्—

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ।१।१।१५।**

चाक्षुषज्ञानवतो मैत्रस्य स्वस्वविषयसंबद्धानि त्वगादीनि स्वविषयककिञ्चिद्विकलानि तदा स्वविषयप्रत्यक्षाजनकत्वात् अप्राप्तपटवत्। न च तददृष्टमेव, तस्यात्र दृष्टोपनायकस्याविलम्बात्। न चेन्द्रियार्थप्राप्तावेव फलकल्प्यः कश्चिद् विशेषस्तथा, तस्य जातित्वेऽन्यतरकर्मजत्वाद्यवच्छेदकजातिभिः संकरप्रसंगात्। न च प्रतिव्यक्तिरेव काचिद् विलक्षणा तथा कुर्वद्रूपत्वापत्तेः। न च बुभुत्सैव तथा। तद्विलम्बस्य बुद्धिविलम्बाभावहेतुत्वात्। अबुभुत्सतोऽपि बुद्धिदर्शनात्। तथा च सिद्धं करणानन्तरं तच्च द्रव्यं परिशेषात् गन्धादिमात्राग्राहकत्वेन अपृथिव्यादित्वेन निःस्पर्शं लाघवान्निरवयवमिन्द्रियं तल्लक्षणयोगादित्यर्थः।

ननु ज्ञानकरणस्यैकत्रैकदा एकज्ञानजनकत्वरूपात् स्वभावात् व्यासंगसिद्धौ निःस्पर्शद्रव्यत्वादिना मनो विभु भवतु, इन्द्रियस्य महत्त्वनियमात्। न च सुखादिकं मूर्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वव्याप्यजातिमत् नित्यवृत्त्यनित्यविशेषगुणत्वात् शब्दवत्। स्नेहादौ व्यभिचारवारणाय नित्यवृत्त्यनित्येति विशेषगुणविशेषणम्। स्नेहादिश्च नित्यवृत्तिर्नानित्यः। आत्मवृत्तित्ववारणाय विशेषपदमिति प्रतिरोधोऽस्त्विति वाच्यम्। अनात्मवृत्तित्वेनोपहितत्वादिति। यदि हि प्राप्तमपि वस्तु मनसा स्वभावपरवशेन न ग्राह्यं तदात्मन एव तादृशस्वभावकल्पनया व्यासङ्गनिर्वाहे मनो विलुप्येत इति[न]साधु वैभववादः।

किञ्चैवं ज्ञानोन्मुखानीन्द्रियाणि ज्ञानं जनयिष्यन्त्येव । तच्च करणस्वभाववशेनैकं स्यादिति गन्धादिविषयकैकज्ञानापत्तौ पर्यवसानम् । ज्ञानमेव वा न जायेत । सर्वेषां तुल्यत्वेन सत्प्रतिपक्षवत् । तस्मात् पञ्चसु यदेकं जनयति, तत्र नियामकमास्थेयम् । तच्चाव्यापि करणमिति सिद्धमणु मनः ।

एवं च निःस्पर्शतया निरवयवस्य मनसो वैभवनिषेधेऽणुत्वपर्यवसाने निःस्पर्शपरमाणुत्वं मनोलक्षणं पर्यवसितमिति सूत्रस्य प्रकृतान्वयः ।१।१।१५।

मनोजन्यत्वान्मनसोऽपि प्रवृत्तेर्दर्शनीयत्वाच्च मनोऽनन्तरं दोषनिरूपकत्वात् ततः प्राक् प्रवृत्तिलक्षणाय सूत्रम्—

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ।१।१।१६।

अत्र प्रवृत्तिरिति अदृष्टहेतुसंसारियत्नपरं लक्ष्यनिर्देशः । आदौ सामान्यलक्षणस्याकाङ्क्षादिदमेवावृत्त्या अदृष्टजनकानित्ययत्नपरं सामान्यलक्षणम् । अन्यथा प्रवृत्तिपदमनन्वितमेव स्यात् । द्वन्द्वोत्तरवर्ति आरम्भपदस्य वागादिप्रत्येकान्वये विशेषलक्षणपरत्वात् । विभागस्तु आक्षिप्तः । वागादिविशेषलक्षणेषु तु लक्ष्योपस्थितिर्लोकात् । विशेषपरत्वेन प्रवृत्तिपदावृत्तेर्वा । तत्रादृष्टजनकानित्ययत्नत्वं सामान्यलक्षणम् वचनोत्पत्तिद्वारा अदृष्टहेतुरनित्ययत्नो वागारम्भः । आत्मधर्मोत्पादनद्वारा तादृशः प्रयत्नो बुद्ध्यारम्भः । बुद्ध्यतेऽनेनेति बुद्धिर्मनः । भोगावच्छेदकक्रियाद्वारा तादृशः प्रयत्नः शरीरारम्भः ।

*अन्ये* तु जन्महेत्वदृष्टहेतुयत्नत्वं सामान्यलक्षणमाद्यम् । स्वसमानाधिकरणसंसारजनकयत्नपरम् प्रतिपदं तत्र लक्ष्यपदं कारीर्यदृष्टं यद्यस्ति तत्रापि संसारजनकत्वादलक्ष्यम् । प्रवृत्तिपदमेवावृत्त्या विशेषपरं सत् विशेषलक्षणेष्वपि लक्ष्यपदमित्याहुः ।१।१।१६।

प्रवृत्तिनिरूप्यत्वात् तदनन्तरं प्रेत्यभावस्य च शरीरादिदोषपर्यन्तत्यागपूर्वकतत्प्राप्तिरूपतया दोषलक्षणाय सूत्रम्—

प्रवर्तनालक्षणा दोषाः ।१।१।१७।

दोषा रागद्वेषमोहाः। बहुवचनेन विभागः सूचितः। प्रवर्तनालक्षणा इति लक्षणम्। प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना। प्रवृत्तिश्चेहानन्तरोक्ता। व्यापारश्च फलगोचरः रागादीनां साधनगोचरो रागादिः।

ननु साधनरागादीनां प्रवृत्तौ जनयितव्यायां न कश्चिद् व्यापार इति तदव्याप्तिरिति चेन्न, प्रत्यक्षात्मविशेषगुणत्वस्य तदर्थत्वात्। ननु कथं तर्हि रागादिव्यापारकत्वमुक्तं व्यापारित्वेन च प्रवृत्तिजनकत्वख्यापनार्थम्। न च मोहस्य प्रवृत्तिजनकत्वानुपपत्ती रागादिनान्यथासिद्धेरिति वाच्यम्। तस्याप्यनुविधानात्। कारणतामात्रस्य दुरपह्नवत्वात्।

तत्रादृष्टजनकयत्नजनकेच्छा रागः। द्वेषत्ववान् द्वेषः, मिथ्याधीर्मोह इति विशेषलक्षणानि ।१।१।१७।

आत्मनः शरीरादिदोषपर्यन्तेन विश्लेषपूर्वकः संबन्धः प्रेत्यभाव इत्यात्मादिनिरूप्यत्वात्तदनन्तरं तल्लक्षणाय सूत्रम्—

पुनरुत्पत्तिः प्रेत्यभावः ।१।१।१८।

अत्र प्रेत्यभाव इति लक्ष्यनिर्देशः। शेषं लक्षणम्। पुनः शब्दोऽभ्यासार्थः। उत्पत्तिर्जन्म। तथा च जातस्य द्वितीयं जन्म पुनर्जन्म तच्चान्तरा मरणान्नेति मरणपूर्वकं जन्म प्रेत्यभाव इति पर्यवसितम्। तत्रात्मविशेषगुणजनकसंयोगनाश्यः स्वशरीरात्मविभागो मरणम्। आनाश्यन्तमिदानीन्तनतद्विभागव्यावृत्तये परदेहस्यात्म-

विभागव्यावृत्तये स्वपदम्। सुषुप्तावपि यो विभागो भवति सोऽपि येनात्मशरीरसंयोगेन नाश्यते स जीवनयोनियत्नजनक एवेति तत्र विभागेऽतिव्याप्तिः। न च निश्चलेऽपि शरीरे प्राणदर्शनादव्याप्तिः। तत्रापि क्वचिद्वृधनश्चयोद्गमनेन स्पर्शदर्शनाददृष्टेऽपि तदनुमानात्। न च विशिष्टादृष्टोपगृहीतशरीरात्मसंयोगस्य जीवनत्वेन तस्य च विनश्यदवस्थस्य च मरणात्मकविभागकालेऽपि सत्त्वेन युगपज्जीवनमरणापात। इति वाच्यम् जन्मानन्तरं तावद् विभागप्रागभावस्य च जीवनत्वात्। आत्मविशेषगुणविरोधिविभागनाशकात्मविशेषगुणजनकात्मशरीरसंयोगो जन्म। मुक्ताद्यतिव्याप्तिवारणाय आत्मविशेषगुणजनकेति संयोगविशेषणम्। एवमपि जीवद्दशातिव्याप्तिरतस्तद्वारणायानाशकान्तम्। सांप्रतिकः संयोगो यथाक्तं विभागं नाशयति। आद्यस्तु संयोगो न तथा। यद्यपि विभागपूर्वक आद्योऽपि संयोगस्तथापि स विभागो न विशेषगुणविरोधी। जन्मपूर्वक्षणे देहाभावेन क्षणिकविशेषगुणाभावादिति।

यद्वा आद्यविशेषगुणजनकसंयोगनाशकात्मविशेषगुणजनकसंयोगनाश्य शरीरात्मविभागपूर्वकात्मशरीरविशेषगुणजनकशरीरध्वंसाजन्यशरीरवृत्यात्मविशेषगुणजनकसंयोगनाशविभागनाशकात्मविशेषगुणजनकात्मसंयोगः प्रेत्यभावः। विभागान्तं प्राणस्य, शेषं जन्मनो लक्षणम्। तत्राद्ये शरीरेत्यादौ कृते जीवद्दशाकविभागेऽतिव्याप्तिरतस्तद्वारणाय मध्यमं विभागस्य विशेषणं, जीवद्दशायां सर्व एव शरीरात्मविभागा आत्मविशेषगुणजनकेनैव संयोगेन नाश्यन्ते। [सुषुप्ता] वपि विधारकप्रयत्नोत्पत्त्यङ्गीकारात्। एवमपि परात्मस्वदेह विभागे परात्मस्वदेहसंयोगनाश्येऽतिव्याप्तिरिति तद्वारणाय नाशकान्तं विभागविशेषणम्। अयं विभागो नात्मविशेषगुणजनकसंयोगनाशकः किन्तु परं परात्मस्वदेहसंयोगं नाशयति। न च यौवनादिशरीरान्तरसंयोगवदामुष्मिकशरीरसंयोगस्याप्यनुस्मृतत्वात् स्वरूपासिद्धिरिति वाच्यम्। यथा हि जीवने विशेषगुणोत्पत्त्यन्यथानुपपत्त्या पूर्व-

शरीरध्वंसापेक्षया तृतीयक्षणे शरीरान्तरसंयोग आस्थीयते न तथा मरणोत्तरमपि प्रमाणाभावात् । न चान्यच्छरीरमादत्ते यातनीयं स्वकर्मजमित्येव तत्र मानम् । तस्य मरणापेक्षतृतीयक्षणे देहान्तर-संयोगोत्पत्त्यसिद्धौ चतुर्थक्षणे च ज्ञानानुत्पत्त्या तद्विभागस्य पशुसंयोग-नाश्यत्वाप्रच्यवात् ।

न च जीवद्दशायां यः पूर्वदेहात्मविभागः शरीरनाशान्नश्यति तत्रातिव्याप्तिरिति वाच्यम् । तस्य तदा विनश्यदवस्थतया समवा-यित्वाभावेन विभागोदयायोगात् ।

यद्वा संयोगनाश्य इत्यस्य संयोगहेतुकनाशानर्ह इत्यर्थकत्वात् । अर्हन्तस्तु[?]चरम एव विभागः जीवद्दशाकविभागस्तु न तथा, किन्तु संयोगनाश्य एव ।

यत्तु तेन न नाश्यते तत्र स्थितिहेतुश्चरमो विभागस्तिष्ठन्नपि उत्तरशरीरसंयोगस्य व्यवधानात्तन्नाशानर्ह एव । एवं भावलक्षणेऽपि आत्मसंयोगमात्रे कृते परमात्मसंयोगेऽतिव्याप्तिः । अतस्तद्वारणाय आत्मविशेषगुणजनकेति तद्विशेषणम् । एवमपि मध्यसंयोगेऽति-व्याप्तिरतस्तद्वारणाय मध्यसंयोगस्य विशेषणम् । मध्यमास्तु संयोगा-आत्मविशेषगुणजनकप्राचीनसंयोगनाशकविभागनाशका एव । एव-मपि यः सन्धिदशोत्पन्नशरीरवृत्तौ प्रथमसंयोगेऽतिव्याप्तिरिति तद्वार-णाय वृत्त्यन्तम् । स तु संयोगः शरीरसंयोगध्वंसजन्यशरीरवृत्तिरेव । आद्यस्तु संयोगः शरीरध्वंसाजन्यशरीरवृत्तिः एवञ्चासम्भवः । शरीर-मात्रस्यैव शरीरध्वंसजन्यत्वादिति तद्वारणाय आत्मविशेषगुण-जनकेति ध्वंसविशेषणम् । जन्माव्यवहितपूर्वकालिकशरीरध्वंसानात्म-विशेषगुणजनकः । जन्मोत्तरं शरीरध्वंसस्यात्मविशेषगुणजनक एव ध्वंसस्य तु जनकता अग्निशरीरजनकताद्वारा ।

केचित्तु मध्यमदशाकशरीरसंयोगेषु अतिव्याप्तिवारणाय प्रथम-

विशेषणम् । एवमपि प्रथमशरीरवृत्तिद्वितीयसंयोगादावतिव्याप्तिरिति तद्वारणाय द्वितीयविशेषणमित्याहुः ।१।१।१८।

शरीरादीनां प्रेत्यभावान्तानां शरीरत्वादिना रूपेणोपस्थितानामेव फलत्वबोधनात् । तेनापि रूपेण ज्ञातानां निर्वेदोपयोगित्वप्रदर्शनाय फलस्यापि दुःखताख्यापनाय चानन्तरं दुःखात् प्राक् फललक्षणाय सूत्रम्—

**प्रवृत्तिदोषजनितोऽर्थः फलम् ।१।१।१९।**

अत्र जनित इत्येव फललक्षणम् । फलनिष्पत्ताविति धात्वनुसारात् । प्रवृत्त्यादिसंबन्धकथनं त्वनेनापि रूपेण निर्वेदाय । अर्थग्रहणमभिव्याप्तये । यद्यपि निर्वेदोऽपि प्रवृत्तिजनककथनेन निर्वहति दोषजत्वोत्कीर्तनं न केवलं प्रवृत्तिं प्रति दोषाणां हेतुत्वमपि तु तत्कार्ये सुखदुःखे अपि प्रति इति दर्शयितुम् । तथा च दोषजन्यत्वस्य तज्जनकत्वेन व्याप्तित्वात् जीवन्मुक्तस्य सुखःदुःखे तदजन्यत्वात् न तज्जनकम् । मादृशां तु ते तथेति विशेषो दर्शितः । जीवन्मुक्ते च रागद्वेषाभावो मोहाभावात् । तथा च दोषजनकभोगरूपफलस्य प्रवृत्तिजनितत्वं लक्षणम् । न चैवं प्रयोजनादविशेषः । तत्र दुःखस्य बहिर्भावादन्यत्रान्तर्भावात् । योगिभोगस्य तु रागाद्यजनकत्वेनाहेयत्वात्तल्लक्षणस्यात्राकरणम् । अपवर्गस्य तु फलत्वेऽप्यनर्थासम्भेदान्न हेयता दोषजन्येश्वरहेयत्वविश्रामात् । तथा च मूढभोगो मुख्यफलमिति फलितार्थः ।

*अन्ये* तु प्रवृत्तिजनितत्वं दोषजनितत्वं च प्रत्येकमेव लक्षणम् । तत्तु धर्माधर्मयोः साक्षाद् देहादीनां तु तद्द्वारेति ।

*अपरे* तु प्रवृत्तिजनितत्वं जीवन्मुक्तसुखादावप्यस्ति । न च तत्फलं रागाद्यजन्यत्वात् अतो दोषेति । तथा च प्रवृत्तिदोषाभ्यां योऽर्थो जनितस्तत्फलमित्याहुः ।१।१।१९।

मुख्यं दुःखं प्रति शरीरादीनां हेतुभावात्, गौणे तु तेषां दुःखानुषङ्गात् दुःखत्वज्ञापनं तन्निरूपणाधीनमित्यनन्तरमित्युद्देशसंगत्या दुःखलक्षणाय सूत्रम्—

**बाधनालक्षणम् दुःखम् ।१।१।२०।**

बाधना पीड़ा दुःखमेव तल्लक्षणं परिचायकं यस्य तत्तथा। दुःखमिति लक्ष्यनिर्देशः, हेयमिति तदर्थः। हेयत्वप्रयोजकरूपप्रतिपादनाय च दुःखपदेन व्यपदेशः। लोकसिद्धं च मुख्यं दुःखं परिचायकमिति नात्माश्रयः। तथा चात्मापवर्गयोरुद्देश्यत्वावश्यकत्वेन तदुभयान्यत्वे सति दुःखसंबन्धिप्रमेयत्वमेव दुःखमिह संबन्धः। तत्र शरीरावच्छेदकत्वं कारणत्वं चेन्द्रियादीनां साधनत्वम्। सुखस्याविनाभावः दुःखस्याप्ययमेव तादात्म्यं वा। नहि तदविनाभावो न तत्र बाधनेति तद्विषयां धियमुपलक्षयति। तथा चात्मापवर्गान्यत्वे सति दुःखविषय बुद्धिविषयप्रमेयत्वमेव दुःखलक्षणमिति *वाचस्पतिमिश्राः।*

*अन्ये* तु बाधनापदं दुःखपरम्। तथा च दुःखत्वयोगि दुःखमिति लक्षणं शाब्दम्। तदनुषङ्गाच्च देहादीनां हेयत्वमार्थम्। अन्यथा लक्ष्यलक्षणपदयोर्लक्षणाप्रसंगात्। अत एवाग्निमदूयत्रैतदिति[?] मुख्यदुःखपरामर्श इत्याहुः ।१।१।२०।

ननु दुःखाभावादतिरिक्तं सुखं नास्त्येव, स च काम्य एवेति, कथं सुखस्य हेयत्वोपदेश इति चेन्न, अनुभवतौल्येन विनिगमनाविरहात् सुखाभावेनैव दुःखापहस्तनप्रसंगादिति। समस्तौ [?] तु दुःखनिवृत्तिरूपत्वादपवर्गस्य तल्लक्षणाय सूत्रम्—

**तदत्यन्तविमोक्षोऽपवर्गः १।१।२१।**

तदित्युक्ताशेषदुःखपरामर्शः। आत्यन्तिकत्वमत्र समानाधि-

करणप्रतियोगिसजातीयसमानकालता, विमोक्षो ध्वंसः धात्वनुसारात् तथैव व्यवहारात्। तेन समानाधिकरणदुःखासमानकालो दुःखध्वंसो मोक्ष इति लक्षणम्।

*अन्ये* तु तदिति मुख्यदुःखपरामर्शः। शेषं समम्।

*अन्ये* त्वात्यन्तिकत्वं हि समूलोन्मूलनमिति प्रागभाव परमाद्यदुःखपदान्तरं तदिति। न चात्र यदोपान्त्यदुःखतृतीयक्षणे अत्यन्तदुःखोत्पत्तिस्तदोपान्त्यदुःखध्वंसेऽतिव्याप्तिः। प्रागभावासमान-कालपदेन तत्समानकालतानर्हत्वस्योक्तत्वात्। अनन्त्यदुःखध्वंसत्वेन तस्य तदर्हत्वात्।

*यत्तु* कालान्तं दुःखविशेषणमिति। तदसत्, सूत्रविरोधात्। न चैवं चरमदुःखध्वंसकाले तद्भोगोऽस्तीति ज्ञानसमानकाल एव मुक्त्यापत्तिर्दोषाय इष्टत्वात्। नहि साक्षात्कारो मुक्तिं विरुणद्धि, नाप्यपसिद्धान्तः, वर्तमानाप्यचिरमनुभूय इति *निबन्धाः।*

वस्तुतस्तु स्वभोगध्वंसावच्छिन्नो यथोक्तदुःखध्वंसोऽपवर्ग इति। भोगस्याप्येकविंशतिदुःखान्तर्भावात्। न चैवमवच्छेदक एवावश्यक-त्वाल्लाघवाच्च। तथा तस्याकाम्यत्वात्। नहि कश्चिद् धीध्वंसाय प्रवर्तते।

ननु मुमुक्षौ चरमदुःखान्तानि यावन्ति दुःखानि तावन्त एव तत्प्रागभावाः इतरेऽपि वा? आद्ये तावतामवश्यमुत्पत्तेरतिरिक्तानु-त्पत्तेश्च। प्रव्रज्याद्यननुष्ठानप्रसंगः उच्छृङ्खलताप्रसंगश्च। अन्त्ये तेऽपि प्रागभावा दुःखजनका एवेत्यनिर्मोक्षप्रसंग इति।

अत्र *मुरारिमिश्राः*—सन्त्यन्येपि तत्रात्मनि प्रागभावाः किन्तु मुक्त्य-नन्तरभाविसंयोगादिजनका न तु दुःखजनका दुःखप्रतियोगिकाः प्रागभावाः कथं संयोगादिजनका इति चेत्, न दुःखप्रतियोगित्वं हि

दुःखविरहकत्वम् । न चानुत्पन्नस्य दुःखस्य प्रागभावविरहात्मता संभवति निरात्मकत्वादित्याहुः ।

तन्न, नहि सर्वमुक्तिनये चरममुक्तस्य येऽवशिष्टाः प्रागभावास्ते न संयोगादिकमपि जनयितुमलम् । महाप्रलयस्य भावकार्यानाधारत्वादिति ।

*सोन्दलोपाध्यायास्तु*—य एव परदुःखस्यात्मन्यत्यन्ताभावः स एष सुखदुःखप्रागभावोऽपि । तथा च यदा ते सहकारिसंपन्ना भवन्ति तदा दुःखं जनयन्ति नो चेत् पण्डा एवेति युक्ता प्रव्रज्या । न च परदुःखात्यन्ताभावस्य स्वदुःखप्रागभावतादात्म्ये तस्य च प्रतियोग्युत्पत्तौ नष्टत्वे परदुःखात्यन्ताभावोऽपि नश्येत् ? अन्यथा विरुद्धधर्माध्यासे ततो भिद्येतैवेति वाच्यम्, परदेहावच्छेदेन नष्टस्यापि तदभावावच्छेदे नष्टत्वात् । मैवं परदुःखात्यन्ताभावस्य स्वदुःखप्रागभावरूपस्य स्वदुःखोत्पत्तिरूपनाशानन्तरमपि यस्मिन् परदुःखात्यन्ताभावस्या वश्य वाच्यत्वात् । अन्यथा परदुःखप्रसंगात् । न च यस्मिन् नष्टः परदुःखात्यन्ताभावो व्याघुट्य स्वं विशेष्टुमीष्टे अत्र नष्टत्वादेव कथं चानादिनिधनेनात्यन्ताभावेन निरोद्धव्यमपि स्वभावव्याकोपादित्यलमतिविस्तरेण ।

यथोक्तविकल्पेऽर्थे नियमे मानाभाव इति चेन्न तथापि यस्यैवंविधविकल्पावतारस्तस्य का गतिरिति । अत्राहुः, प्रागभावास्तावन्नियमा एव । ते च दुःखं जनयिष्यन्त्येव तथाप्यहमाकल्पान्तमस्मिन्नेव संसारमहार्णवे विवर्तेयमथवा समाराध्य मधुध्वंसिनमासाद्यानवद्यतत्त्वसाक्षात्कारमारादेव युगपदेव देहानिकरेण कर्माणि भुक्त्वा संसारसागरपारमासादयेयमिति विमृशन् सुखवासनानध्यासितमानसो मोक्षमाणो मोक्षायैव घटते, न पुनः सुखसाधनेषु स यातीति वैराग्यमेव नियामकमिति ।

नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिबलात् नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति *भाट्टाः*। तन्न, सुखस्यापि नित्यत्वेऽपवृक्तसंसरतोरविशेषप्रसंगात्। न चाभिज्ञानियमः अध्यात्मनोऽपि हि नित्यत्वे पूर्ववत्, अनित्यत्वे तूत्पादिभावत्वेन नाशे पुनः संसारापातः। स चोत्पन्नाभिव्यक्तिर्नाशकाभावान्न नंक्ष्यतीति वाच्यम्। शरीराद्यभावस्यैव तन्नाशकत्वात्। न च श्रुत्यप्रामाण्यापत्त्या तदवस्थानसिद्धिः, बाधेन श्रुतेरेवान्यथयितव्यत्वादिति।

ब्रह्माद्वैतसाक्षात्कारादविद्यानिवृत्तौ नित्यज्ञानसुखात्मक आत्मापवर्गे वर्तते इत्येकदण्डाः। तन्न, स्वप्रकाशज्ञानसुखात्मकब्रह्मणो नित्यत्वेन मुक्तसंसारिणोरविशेषप्रसंगात्।

आनन्दमयपरमात्मनि जीवात्मलयो मोक्षः। लयश्च लिङ्गशरीरापगमः। लिङ्गशरीरं चैकादशेन्द्रियाणि पञ्चमहाभूतानि सूक्ष्ममात्रयावस्थितानि जीवात्मनि सुखदुःखावच्छेदकानीति *त्रिदण्डाः*। तन्न, लिङ्गशरीरापगमस्य निसर्गसौन्दर्याभावेन स्वतः पुरुषार्थत्वायोगात्।

प्रकृतिपुरुषविवेके पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति *सांख्याः*। तन्न, प्रकृत्यादिप्रक्रियायां मानाभावात्।

आत्यन्तिकदुःखप्रागभावो मुक्तिः प्रतियोगिकारणधर्मव्यतिरेकमुखेन प्रागभावस्यापि साध्यत्वादिति *प्राभाकराः*। तन्न, प्रागभावस्य प्रतियोगिजनकतानियमेन मुक्तस्यापि दुःखोत्पादकापत्तेः। न चान्यवृत्तिः दुःखप्रागभावस्यान्यत्रावृत्तेः। न च निष्प्रतियोगिक एवायम्, व्याघातादिति। अग्रिमचित्तानुत्पादे पूर्वचित्तनिवृत्तिर्मुक्तिरिति *सौगताः*। तथा हि बद्धो हि मुच्यते बन्धनं च रागादय उपजनापायवन्तो न नित्य आत्मनि संभवन्ति। तदुक्तम्—

> वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोर्भयम्।
> चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः॥ इति।

अतः क्षणिकसमनन्तरप्रत्ययरूप एव स एषितव्य इति। तन्न, क्षणिकत्वे तन्निवृत्तेरयत्नसिद्धत्वात्। आत्मज्ञानस्याकाम्यत्वादशक्यत्वाच्च।

निरूपप्लवा चित्तसन्ततिरपवर्ग इत्यन्ये। तन्न, आवश्यकत्वेनोपप्लवव्यतिरेकस्यैव दुःखाभावरूपत्वेन पुरुषार्थतया चित्तसन्ततेरधिकत्वादिति ।१।१।२१।

## [ न्यायपूर्वाङ्गप्रकरणम् ]

तदेवं प्रमेयलक्षणप्रकरणानन्तरं कथमेतत् प्रमाणेन बोध्यमित्यपेक्षायां न्याये व्युत्पाद्ये तस्याङ्गनिरूप्यतया तत्पूर्वाङ्गसंशयादित्रिकलक्षणप्रकरणम्। पूर्वाङ्गता च न्यायनिष्पादकप्रथमज्ञानगोचरता। अत एवाग्रिमप्रकरणेभ्योऽस्योत्कर्षः। तत्रापि सन्दिग्धे प्रयोजनादिचिन्ता न तु प्रयोजनमनुसन्धायासंशय इति तस्य प्रयोजनादुत्कर्षः।

यद्वा प्रयोजनस्येच्छादिनिरूप्यत्वादिच्छाविशेषस्य च संशयाधीनत्वादस्य तत उत्कर्षात् उद्देशक्रमसङ्गत्यादौ संशयलक्षणाय सूत्रम्—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ।१।१।२३।**

अत्र संशय इति लक्ष्यनिर्देशः, विमर्श इति सामान्यलक्षणम्, न तु वैपरीत्यम्। उद्देशकपदेनैव लक्ष्यनिर्देशौचित्यात्। यौगिकविमर्शपदात्लक्षणलाभाच्च। तथा हि विशब्दो विरोधार्थः, मर्शशब्दो ज्ञानार्थः, योग्यतयैकधामलाभः। तेनैकस्मिन् विषये विरोधिनानाप्रकारकं ज्ञानं संशय इति लक्षणार्थः। एतच्चायं स्थाणुः पुरुषश्चेति भ्रमेऽपि गतमिति तद्वारणाय विरोधे भासमान इति पदम्। एवमपि यदि निर्धूमोऽयं सधूमः स्यात् निरग्निरपि साग्निर्भवेदिति तर्के गतमिति

तद्वारणाय तुल्यवदिति प्रकारविशेषणम् । तर्के तु निर्धूमत्वप्रकारवति सधूमत्वं प्रकारः। संशये तु स्थाणुत्वपुरुषत्वे तुल्यवत्प्रकाराविति। समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरिति तु लक्षणत्रयम् । अत्र तु प्रति लक्षणं विमर्शपदमनुवर्तनीयम्। लक्ष्योपस्थापनाय चैतदेव प्रतिलक्षणवाक्यमावर्तनीयम्। अनुवृत्तौ पूर्व एवार्थः। आवृत्तौ तु विशिष्टो मर्श इत्यर्थः। वैशिष्ट्यं च तात्पर्यविशेषान्नियतम्, न तु संशयपदावृत्त्या लक्ष्यभावः। लक्ष्यतावच्छेदकरूपेणोपस्थितेः संशयपदाशक्यत्वात्, तत्र लक्षणाप्रसंगात् । लक्ष्यतावच्छेदकं च रूपं साधारणस्योर्ध्वत्वादेः स्थाणुपुरुषसाहचर्याविशेषेऽप्यभावस्य विधितैरश्चीन्येनोत्सर्गतो ग्रहणात् विधिप्रामाण्येनैव स्थाणौ पुरुषाभावो गृहीतः, पुरुषे च स्थाणवभावो गृहीत इति परस्पराभावविशिष्टावेव स्थाणुपुरुषौ संस्कारेण नेयाविति परस्परनिषेधवदुभयविधिप्राधान्यम् प्रथमे। द्वितीये तु सजातीयविजातीयनिष्ठाभावप्रतियोगित्वमसाधारण्यमिति। सजातीयविजातीययोरुपसर्जनतया च निषेधस्य प्राधान्येनोपस्थितेः। परस्परविधिमदुभयनिषेधप्राधान्यम्। तृतीये तु शब्दो नित्योऽनित्यो न नित्यः नानित्य इत्यादिविधिप्रतिपत्तेरुभयकोट्युपस्थितौ परस्परविधिनिषेधवदुभयविधिप्राधान्यम्। एवं च समानधर्मोपपत्तेर्विमर्श इत्याद्यस्य लक्षणम्। उपपत्तिशब्दो ज्ञानार्थः। एवमन्त्ययोः विधिप्रधानकसंशयादिकं प्रति समानधर्मज्ञानादेः कारणता तृणारणिमणिवत्।

ननु समानधर्मज्ञानं संशयहेतुः, तस्य कोटिस्मरण एवोपक्षयादिति चेन्न, तुरगादौ वेगेन गच्छतस्तत्कोट्युपस्थितावपि समानधर्मग्रहाग्रहयोः संशयतदभावग्रहात्। सहचारज्ञानभूम्ना कोट्युत्कटकत्वानुत्कटकत्वदर्शनाच्च। उपलब्धीत्यादि तु साधकबाधकमानाभावोपस्थापकम्। एवं साधकबाधकमानाभावे सत्यपि न कोटिस्मृतिं विना संशय इति तदुपस्थापनाय विशेषापेक्ष इति पदम्। विशेषं स्थाणुत्वादिकमपेक्षते करणतया स्वीकरोति। ज्ञानलाभस्तु तद्गर्भायामेवापेक्षायां तात्पर्यात् । एतच्च पदद्वयं संशयासाधारणसामग्रीसद्भावकथन-

परम्, न तु लक्षणान्तर्गतम्। विभागस्तु विशेषलक्षणबलादाक्षेपलभ्यः। समान एकजातीयो धर्मो यस्य स समानधर्मा तस्योपपत्तिः। एव मनेकस्मात् सजातीयविजातीयात् विशेषको व्यावर्त्यव्यावर्तकसम्बन्धेन लक्षणयाऽनेकोऽसाधारणः। अनेको धर्मो यस्य सोऽनेकधर्मा तस्योपपत्तिरिति वाक्यार्थः।

एतेन षष्ठीतत्पुरुषमूलको धर्मग्रहात् धर्मिसंशयेऽपि प्रसंगात् दोषो निरस्तः।

ननु चासाधारणो धर्मो न संशयजनकः। अन्यत्रादृष्टतया स्वतः कोट्यनुपस्थापकत्वात्। तद्व्यतिरेकस्य च कोट्युपस्थापकत्वे तस्यैव संशयहेतुतापत्तेः। नाप्यसाधारणधर्मवत्त्वं तथा। तस्य सार्वत्रिकतया समानधर्मान्तर्भावात्। तदुक्तम्—

अन्योऽसाधारणो धर्मस्तत्त्वज्ञानस्य दृश्यते।
सर्वसाधारणी सा चेदिष्टा संशयकारणम्॥
ततः साधारणस्यैव सिद्धा संशयहेतुता।
सर्वतोऽस्य निवृत्तत्वादभावात् संशयो यदि॥
अनन्यवृत्तिरूपस्य ततोऽसाधारणस्य किम्।

विप्रतिपत्तिर्विरोधिहेतुद्वयसमुत्था एकत्र संशयकारणम्। विरुद्धहेतुद्वयसमावेशश्चासाधारण एव। स च साधारणे निवेशित इति सर्वः साधारण एवेति प्रथमलक्षणमतिव्यापकमिति चेत्।

अत्र *नव्याः* लक्ष्यतावच्छेदकस्यैव लक्षणवाक्येनाप्युक्तत्वात् नैष दोष इति। तन्न, व्याप्तिबुद्धौ लक्षणरूपसाधारणावच्छेदेनेतरभेदो भासते तदेव चेल्लक्षणतावच्छेदकं तदा पक्षतावच्छेदकधर्मावच्छेदेनेतरभेदबुद्धेर्ज्ञानत्वादनुमानवैयर्थ्यप्रसङ्गात्।

विधिरूपसमानधर्मदर्शनजत्वादिव्यङ्ग्यसंशयत्वावान्तरजातिमत्त्वं लक्षणमतो न दोष *इत्यन्ये*। तन्न, चक्षुर्जन्यत्वादिप्रयोगे जातिभिः संसर्गप्रसङ्गात्, तादृशजातेरनभ्युपगमात्। न च तत्रेदं रजततया जानामीति धीरेव चाक्षुषत्वे मानम्। अत्रापि चाक्षुषत्वस्य साधर्म्यात्मग्रहात् प्रकारांशे च व्यवस्थायास्तद्व्यञ्जिकायाः स्वभावात्तदग्रहादिति। एवं न सेत्याहुः।

यद्यपि आद्यौ साहचर्यविधयैव कोटीः स्मारयतः तथाप्याद्यः स्वसाहित्येन विधिविधया, मध्यमोव्यतिरेकेण निषेधविधया, विप्रतिपत्तिस्तु शब्दयेति विशेषविवक्षया लक्षणत्रयम्। अथ ज्ञानत्वरूपसमानधर्माध्यवसायजस्यैव प्रामाण्यसंशयेन जनितोऽर्थसंशयस्तुर्योऽस्तु, अत्रार्थघटितप्रामाण्यसंशय एवार्थसंशयो न त्वधिक इति *केचित्*। प्रामाण्यसंशयजन्योऽप्ययं कोटिस्मारकसमानधर्माध्यवसायजन्मापीति *टीकाकृतः*।

अत्राद्यौ द्वौ संशयौ सर्वेन्द्रियजौ, विप्रतिपत्तिजस्तु मानस एव। तथा हि प्रत्येकं समर्थाभ्यां विप्रतिपत्तिवाक्याभ्यां स्वस्वार्थयोः परस्परविधिनिषेधरूपयोरुपस्थाने विशेषादर्शनादिसमवधाने स्वविधेययोः कतरद् वस्तु सदिति मनसैव संशेते।

*सौगतास्तु* साधर्म्यदर्शनाद्विशेषोपलिप्सोः प्रतीतितत्संशयः। साधर्म्यदर्शनादनुमितिरपि भवतीत्युक्तं विशेषोपलिप्सोरिति। तत्र तु न विशेषोपलिप्सा किन्तु विशेषिणोऽन्वयस्यैव। अत्र च विशेषाग्रहाद् भवति विशेषजिज्ञासेति। ज्ञानलाभस्तु प्रकरणात्। न चासाधारणधर्मदर्शनजादिसंशयाव्याप्तिः। तत्रापि हि पक्षमात्रवृत्तिधर्मव्यतिरेको यथा विपक्षवैधर्म्यमानयति तथा सपक्षवैधर्म्यमपीति तयोरपि समानधर्म एवान्तर्भावात्। न च धर्मसंशयाद्धर्मिसंशयोऽतिप्रसङ्गस्तयोर्भेदादिति वाच्यम्, समानो धर्मो यस्य स समानधर्मा तस्य भावः साधर्म्यं साधर्म्येण दर्शनं साधर्म्यदर्शनं तस्मात् समानधर्मवत्तया धर्मिदर्शना-

दित्युक्तत्वादित्याहुः । तदसत्, साधर्म्यपदार्थानवबोधात् । आरोपाधिकरणेन हि कोट्यधिकरणेऽस्य सारूप्यम्, कोटिस्मृतितदारोपयोर्हेतुः । तच्चासाधारणस्थले नास्ति, किन्तु कोट्यधिकरणयोरेव पक्षवृत्तिधर्मशून्यतात्मकं साधर्म्यमस्ति । तच्च पक्षे नास्त्येवातः कथं तत् साधर्म्यं तत् संशायकं स्यात् । किन्तु असाधारणो धर्म उभयव्यावृत्ततया विपक्षादिव सपक्षादपि वैधर्म्यमासञ्जयन् संशययति । तथा चासाधारणधर्मदर्शनजादि संशयाव्याप्तिरिहापरिहार्यो दोषः ।१।१।२२।

न्यायपूर्वाङ्गत्वाविशेषेऽपि सन्दिग्धे प्रयोजनानुसरणादिच्छाविशेषजनकस्य संशयस्य इच्छाघटितप्रयोजने प्रयोजकत्वाच्च संशयानन्तरं प्रयोजनमनुसन्धाय न्यायार्थं दृष्टान्तानुसरणमिति । ततः प्रागस्योद्देश इति । तयैव सङ्गत्या प्रयोजनलक्षणाय सूत्रम्—

**यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ।१।१।२३।**

अर्थपदेनोद्धृतेनार्यमाणतया व्यापकत्वं ज्ञापयति । तेन [न] सुखाद्येव प्रयोजनम् किन्तु तदुपायोऽपीति लभ्यते । अधिकृत्य उद्दिश्य । तथा च प्रवृत्तिहेतुभूतेच्छाविषयत्वम् लक्षणमुक्तम् । यद्विषयतयेच्छायाः प्रवृत्तिहेतुत्वमिति तस्यार्थः । तेन नेच्छावच्छेदकेषु सुखत्वादिष्वव्याप्तिः ।

तच्च प्रयोजनं द्वेधा मुख्यामुख्यभेदात् । यमिति सर्वनाम्ना बुद्धिस्थवाचकेन विभागसूचनात् । तत्र जन्येच्छाजन्यजन्येच्छाविषयत्वं मुख्यत्वम्, जन्येच्छाजन्येच्छाविषयत्वं गौणत्वम् । मण्डलीकरणादेरपि गौणं प्रयोजनमस्त्येव व्यवहारतौल्यादित्येके । तन्न प्रयोजनं व्यवहारस्तु भ्रमात् । तथा चेष्टसाधनताप्रमाजन्येच्छाविषयत्वं गौणत्वमित्यपरे । अस्य तु सन्धानद्वारा न्यायप्रवर्तकतया तदुपयोगः ।१।१।२३।

सप्रयोजने न्याये ज्ञाते दृष्टान्तानुसरणमिति प्रयोजनादस्या-व्यपकर्षोऽभ्युपगमप्रयोजकतया च दृष्टान्तादभ्युपगमापकर्ष इत्युद्देश-क्रमसंगत्या दृष्टान्तलक्षणाय सूत्रम्—

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ।१।१।२४।**

अत्र दृष्टान्त इति लक्ष्यनिर्देशः, शेषं लक्षणम् । अनभ्यस्तशास्त्राः प्रतिपाद्याः लौकिकाः प्रतिपादकाः परीक्षकाः । तथा च प्रतिपाद्य-प्रतिपादकसंप्रतिपत्तिविषयत्वमुक्तम् । तच्च प्रकरणात् व्याप्यप्रयुक्त-व्यापकत्वे । तेन व्याप्यव्यापकत्वाभिमतसामानाधिकरण्यावच्छेदक-धर्मवत्त्वं दृष्टान्तत्वम् । अत्रोदाहरणसूत्रद्वयप्रदर्शनार्थो विभागः । अन्वयव्यतिरेकभेदात् । तत्र साध्यसाधनाभिमतव्याप्तिधीकारणैतदुभय सामानाधिकरण्यावच्छेदकधर्मवत्त्वमन्वयदृष्टान्तत्वम् । साध्यसाधना-भिमतधीकारणैतदुभयव्यतिरेकसामानाधिकरण्यावच्छेकधर्मवत्त्वं व्यतिरेकदृष्टान्तत्वम् । साध्यसाधनाभिमतप्रतियोगिकव्यतिरेकव्याप्ति-धीकारणतदुभयसामानाधिकरण्यावच्छेदकधर्मवत्त्वं वा ।

अथोदाहरणादेव व्याप्तिधीसिद्धेर्व्यर्थमिदमिति । तन्न, विशेषानु-पदर्शने सामान्योपस्थितेरपर्यवसानात् । सामयिकं त्विदमित्यन्ये । दृष्टान्तत्वस्य केवलान्वयित्वेनालक्ष्यतया लक्ष्यते ज्ञायतेऽनेनेति व्युत्पत्त्या लक्षणं प्रवृत्तिनिमित्तमेवोक्तम् । बुद्धिसाम्यमिति तु प्रमाणो-पदर्शनं, नहि बुद्ध्यविषयेण ज्ञानेन दृष्टान्तो गृह्यत इति *भास्करादयः ।* साध्यवैकल्याद्युद्भावनेन परनिग्रहद्वारा अन्यायोत्थितिद्वारा चास्योप-योगः ।१।१।२४।

## [न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ]

एवं न्यायपूर्वाङ्गप्रकरणं समर्थ्य दृष्टान्तोपजीवकत्वादभ्युप-

गमस्य तदनु न्यायस्याश्रयनिरूप्यत्वात् ततः प्राक् न्यायाश्रयसिद्धान्तप्रकरणम् । तत्र तत्सामान्यलक्षणाय सूत्रम्—

**तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ।१।१।२५।**

तत्र सिद्धान्त इति लक्ष्यनिर्देशः । अभ्युपगमो लक्षणम् । स तु ज्ञानविशेषः । तमेव विशेषं दर्शयत् शेषम् । तन्त्र्यन्ते व्युत्पाद्यन्ते पदार्था अनेनेति तन्त्रं प्रामाणम्, तदधिकरणमाश्रयो ज्ञापकतया येषां ते तथोक्ताः पदार्थाः । तेषामभ्युपगमो ज्ञानविशेषस्तस्य संस्थितिरित्थंभावव्यवस्था असन्देहरूपतेति यावत् । तेन प्रामाणिकत्वेनार्थनिश्चयः सिद्धान्तः । शून्यतावादिभिरपि स्वपक्षस्य काल्पनिकप्रमाणविषयत्वेन निश्चयान्न तत्सिद्धान्तो[न्तेऽ]व्याप्तिः । अन्यथा कथायामेवाप्रवेशात् ।१।१।२५।

तद्विभागाय सूत्रम्—

**सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ।१।१।२६।**

स चतुर्द्धेति प्रकरणात् । अत्र सर्वतन्त्रस्येतरत्रयोपजीव्यत्वात् प्राथम्यम् । प्रतितन्त्रग्रहे सति तदितरयोरभाव इत्युपजीव्यतयानन्तरं प्रतितन्त्रसिद्धान्तः । अनयोर्वाचनिकत्वादनन्तरं वचनोन्नेयाभिप्रायगोचरसिद्धान्तद्वये न्यायस्यात्र प्राधान्यात्तदनुषङ्गात् आदावधिकरणसिद्धान्तः । तदधीनत्वादभ्युपगमस्यान्तेऽभ्युपगमसिद्धान्तः । उपाधिविभागश्चायम् । तेन प्रतितन्त्रसिद्धान्तादेः क्वचिदभ्युपगमसिद्धान्तादिसंकरो न दोषाय ।१।१।२६।

प्रतितन्त्रपरिग्रहोपजीव्यतारूपोद्देशक्रमसंगत्यादौ सर्वतन्त्रसिद्धान्तलक्षणाय सूत्रम्—

**सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ।१।१।२७।**

सर्वस्मिन् तन्त्रे शास्त्रेऽविरुद्धो वादिभ्यामानाषद्धस्तन्त्रे विचारेऽधिकृत उपयोगी अर्थोऽर्यमाणोऽभ्युपेतः सर्वतन्त्रसिद्धान्तः । अभ्युपगमप्रधानश्चायं निर्देशः । तेन वादिप्रतिवाद्यन्यतरानभ्युपगमाविषयककथानुकूलतदन्यतराभ्युपगमः सर्वतन्त्रसिद्धान्तः । यथा प्रमाणाधीनं प्रमेयज्ञानम्, प्रतिपन्नः प्रतिपादयितेत्यादि । दृष्टान्तस्तु वादिभ्यामेवाभ्युपगतोऽयन्तु अन्यैरपीति ततोऽस्य भेदः । अत्र विषयान्तं प्रतितन्त्रादिव्यवच्छेदाय । एवमपि श्यामा एव शालयो मह्यं रोचन्ते इत्याद्यभ्युपगमेऽतिव्याप्तिवारणाय कथानुकूलेति । तादृशाश्चाभ्युपगमाः स्वपरशास्त्रितयैवेति त एवात्र लक्ष्याः । मोक्षोपयोगिविचारारम्भकत्वात् । सामान्यलक्षणेऽप्यभ्युपगमपदमीदृशाभ्युपगमपरमेव बोद्धव्यम् ।१।१।२७।

उद्देशक्रमसङ्गत्या प्रतितन्त्रलक्षणाय सूत्रम्—

**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ।१।१।२८।**

सदृशतन्त्रासिद्धस्याप्येकमात्रतन्त्रसिद्धस्य प्रतितन्त्रसिद्धान्तत्वात् समानशब्दो न सदृशार्थः किन्त्वेकपर्यायः । सिद्धिरभ्युपगमः । तत्प्रधानश्चायं निर्देशः । तेन वादिप्रतिवाद्यन्यतरानभ्युपगतविषयकस्तदन्यतराभ्युपगमः प्रतितन्त्रसिद्धान्तः । यथा *प्राभाकराणां* वर्णनित्यताभ्युपगमस्तदनित्यताभ्युपगमश्च *नैयायिकानाम्* ।१।१।२८।

उद्देशक्रमसंगत्या अधिकरणसिद्धान्तलक्षणाय सूत्रम्—

**यत् सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ।१।१।२९।**

यस्यार्थस्यानिर्दिष्टस्य सर्वज्ञत्वादेः सिद्धौ अन्यस्य प्रकरणस्य प्रक्रियमाणस्य सकर्तृकत्वादेः सिद्धिः स सर्वज्ञत्वादिविशेषः साध्यमानोऽधिकरणसिद्धान्तः। सिद्धिरप्यभ्युपगमस्तस्यैव चात्र प्राधान्यविवक्षा। तेन तादृशार्थाभ्युपगम इत्यर्थः। न ह्यनाद्यनन्तद्व्यणुकादि यावत् पक्षीकरणे तदुपादानाभिज्ञः सर्वज्ञादन्यः सेद्धुमर्हति। तेनोद्देश्यबुद्धिकारणज्ञानाविषयोद्देश्यबुद्धिविषयाभ्युपगमोऽधिकरणसिद्धान्तः। शब्दानुमानसाधारणश्चायम्। तयोरपूर्वपर्यवसानादिति।

यद्वा यस्य साधनत्वेन निर्दिष्टस्य सकर्तृकत्वादेः सिद्धौ ज्ञाने अन्यस्यानिर्दिष्टस्य प्रकरणस्य प्रक्रियमाणस्याभिप्रायमात्रविषयस्य सिद्धिः, सोऽर्थः साक्षादविक्रियमाणः पक्षधर्मताबलात् पर्यवस्यतारूपेणाभिप्रायव्याप्तेनाधिकरणसिद्धान्तः। तेन पक्षताबललभ्यार्थाभ्युपगमः सः, व्यक्तिसाधकानुमानमात्रविषयश्चायम्।१।१।२९।

उद्देशक्रमसंगत्याभ्युपगमसिद्धान्तलक्षणाय सूत्रम्—

**अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः।१।१।३०।**

अपरीक्षितस्य साक्षादसूत्रितस्याभ्युपगमात् हेतोस्तद्विशेषपरीक्षणं भवति। अन्यथा विशेषपरीक्षणमाश्रयासिद्धं स्यात्। तस्माद् विशेषपरीक्षणादवगम्यते असूत्रितमभ्युपगतं सूत्रकारेण। सोऽयमर्थापत्तिसिद्धोऽभ्युपगमसिद्धान्तः। यथा मनस इन्द्रियतापरीक्षणादसूत्रितमानसेन्द्रियताभ्युपगमोऽक्षचरणमुनेः। तेन साक्षादसूत्रितस्य समानतन्त्रोक्तस्याभ्युपगमोऽभ्युपगमसिद्धान्तः। उक्तत्रितयाद्यभ्युपगमः सः। तेन कान्त्यामिदानीं त्रिभुवनतिलको राजेत्यादेरपि विवादपक्षाभ्युपगमस्य संग्रह इत्येके। तन्न, अत्र हि मोक्षोपयोग्यभ्युपगमे आत्मसिद्धान्तो निरूप्यते, प्रकृतत्वादुपयोगित्वाच्च। स च शास्त्राश्रय एवेति नेतरेषां प्रसंगो लक्षणस्येति।१।१।३०।

## [ न्यायस्वरूपप्रकरणम् ]

सिद्धान्तोपजीवकत्वान्न्यायस्यानन्तरं न्यायप्रकरणम् । स चानुमितिकारणीभूतचरमलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यम् । नन्वेवं वह्निव्याप्यधूमवानयमिति वाक्येऽतिव्याप्तिरिति चेत्, आप्तोक्ते वा वाद्युक्ते वा ? नाद्यः, तेन साक्षात्परामर्शस्यैव जननात् । अत्र च प्रतिज्ञादिवाक्यैः स्वस्वार्थानुभवः । ततो मिलितैः पञ्चभिः पञ्चरूपसम्पन्नलिङ्गप्रयुक्तसाध्यवत् पक्षानुभवः । अत्र वाद्युक्तशब्दजत्वेनानाभ्यासे विमर्शे बाधकानवतारे पश्चात् यत्र रूपं तत्र रस इतिवत् चतूरूपविशिष्टे पञ्चमरूपवैशिष्ट्यावगाही । यद्वा आधारत्वस्पर्शितया लघुरेकस्य द्वयमितिवदस्येदमिदं च रूपमित्याकारो मानसो ऽनुभवः । ततो मानसो व्याप्तिविशिष्टपक्षधर्मताविशिष्टलिङ्गानुभवश्चरमः परामर्शो जायते । नान्त्योऽपि, कथायामाकांक्षाक्रमेणाभिधानम् । न च प्रथममुभयविशिष्टलिङ्गे सास्तीति न प्रथममेव तदभिधानमप्राप्तकालदोषात् ।

तत्राक्षिप्तसामान्यलक्षणं विभागोद्देशसूत्रम्—

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ।१।१।३२।**

अत्र चैकदेशवाचिनावयवशब्देन नित्यसापेक्षतया समुदायोऽप्युपस्थापितः । स च प्रकृते विशिष्टैकार्थप्रतिपादनपरं वाक्यमिति न्यायलक्षणमपि सूचितम् । अवयवत्वं चानुमितिकारणचरमलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यत्वम् । विभागेन न्यूनाधिकसंख्याव्यवच्छेदकेन न्यायस्य द्व्यवयवत्वं त्र्यवयवत्वं दशावयवत्वं च निराकृतम् । तत्राद्ययोर्निराकरणे प्रतिज्ञाद्यभिधानयुक्त्यैव भविष्यति ।

अन्त्ये तूच्यते । तथा हि यद्यपि संशयो भवति न्यायहेतुः ।

स च जल्पवितण्डयोर्विप्रतिपत्तिजन्मा अनुविधेयनिष्ठः साध्यविषयः स्थेयनिष्ठो वा वादिशक्त्यशक्तिविषयः। वादे तु हेत्वन्तरजोऽपि वादिनिष्ठोऽपि, स्वार्थविचारे तु स्वनिष्ठ एव। न च वादिवाक्याभ्यामनुविधेयस्य संशयस्तत्संशयात्तन्नियोगे वादिनो वाक्यारम्भ इति वाच्यम्। अनुविधेयेनादौ पक्षे पृष्टे, वादिभ्यां च स्वस्वपक्ष उपन्यस्ते, अनुविधेये सन्दिहाने, तेन च पक्षं साधयेति नियोगे, स्थापनाया आरम्भात्। एवं स्थेयादीनां जिज्ञासाप्यनुमेयप्रयोजिका। एवं प्रयोजनमपि तद्धेतुरप्रयोजनकस्यानारम्भात्। एवं शक्यप्राप्तिरपि पदतदर्थवाक्यप्रमाणतदाभासपाटवादिरूपा। एवं संशयो व्युदस्यते अनेनेति संशयव्युदासस्तर्कोऽपि हेतुः। अनेन हि एककोटिकं जिज्ञासान्तरं जनयता विशेषग्रहेण मूलेनानियतकोटिकजिज्ञासया फलेन च सह संशयो निवर्तत इति भवन्त्येतेऽपि पञ्च परिसंख्यातुमुचिताः। तथाप्येते न ज्ञाता उपयुज्यन्ते किन्तु स्वरूप[त] एवेति तदुपस्थापकवाक्यावसर एव न कुतस्तदवयवत्वचिन्ता। यद्यपि प्रयोजनं ज्ञातमेवोपयुज्यते तथापि न तत्र शब्दावश्यक इति तत्प्रतिपादकं वाक्यं नावयव इति ।१।१।३१।

इहावयवेषु प्रतिज्ञायाः प्राथम्यादादौ तल्लक्षणाय सूत्रम्—

## साध्यनिर्देशः प्रतिज्ञा ।१।१।३२।

साध्यतया स्वीक्रियमाणस्य वचनं प्रतिज्ञा। न च साध्यपदेऽतिव्याप्तिः अवयवाधिकारात्। न च निगमनोदाहरणयोरतिव्याप्तिः तथाप्युद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थधीकरणत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकत्वशाब्दज्ञानजनकवाक्यं प्रतिज्ञेति सूत्रार्थः। प्रतिज्ञाप्रतिरूपकवारणाय सत्यन्तम्। अप्रकृतानुमितिमादायासंभववारणायोद्देश्येति। वह्निमानित्युदाहरणैकदेशवारणायान्यूनेति। निगमनवारणायानतिरिक्तेति। तत्र तु लिङ्गांशोऽभिमतानुमित्यधिकः स्फुरति। यद्वा अनुमितेर्लिङ्गोपहितलिङ्गिकधीत्वादसम्भव-

स्तद्वारणायोद्देश्येति । उद्देश्यं तु साध्यविशिष्टपक्षधीमात्रमतः प्रतिज्ञा तत्समाख्येति। यद्वा सत्यन्ते सति लिङ्गाविषयकधीजनकवाक्यं प्रतिज्ञा। हेत्वादयस्तु लिङ्गविषयधीजनका एव।

*केचित्तु* उपनयान्तवारणायैवेदम्। निगमनं तु सत्यन्तेनैव वारितम्। व्याप्तिपक्षधर्मताधीपरम्पराजनकस्य तदर्थत्वात्। निगमनस्य तु बाधप्रतिरोधाभावमात्रग्राहकत्वात्। न चैवं तस्यावयवत्वमपि न स्यात्। तत्र सति भावमात्रेण तदुभयधियः परामर्शजनकत्वमभिमन्य लक्षणकरणात्। करणस्य तु फलोपधान एव प्रतिबन्धकाभावस्योपयोग।दित्याहुः।

न च विप्रतिपत्तिवाक्यादेव शब्दे नित्यत्वोपस्थितौ हेत्वभिधानमेवोचितमिति, प्रतिज्ञासाधनाङ्गमेव न भवति, दूरे तस्यावयवत्वचिन्तेति वाच्यम्। विप्रपत्तिवाक्यस्य पक्षपरिग्रहेण निराकाङ्क्षतया समयबन्धादिना व्यवहिततया हेत्वर्थमार्थम्, पुनः साध्यनिर्देशस्यौचित्यात्। किञ्च विप्रतिपत्तिवाक्यं ज्ञेयपरं प्रतिज्ञावाक्यं तु लक्षणया ज्ञानपरमन्यथा हेत्वनन्वयादिति प्रतिज्ञा आवश्यकी।

*केचित्तु* स्वसाध्ये प्रमाणं वदेत्यनुविधेयादिनियोगस्य विशिष्टविषयतया शब्दानित्यत्वमपि व्याघुट्य वाक्यमेव। न च स्वसाध्ये वस्तुतो यत्प्रमाणं तद्वदेति नियोगार्थः। वादिद्वयसाध्यके तदसंभवात्। अन्यतराभासत्वनैयत्यादित्याहुः।

तन्न, प्रतिज्ञावचनेनैव निर्वाहे तदनभिधायिनः *सौगतस्य* नियोगो करणेनेव निगृहीततया तेन सह कथानापत्तेः। तस्मादनुमितिसामग्री यथा सम्पद्यते तथा वदेति नियोगानुरोधात् प्रतिज्ञा। किन्तु पूर्वोचार्यव्यवहारानुरोधात् सामयिकी तदनुरोधादेव च प्राथमिक्यपीति *प्रभाकरोपाध्यायाः*।

शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्यान्यतरासिद्धस्य साध्यतया निर्देशेऽतिव्याप्त्या पारमार्षं लक्षणं दूषयित्वा तद्व्यावृत्तये साध्यत्वेनेष्टस्य निर्देशः प्रतिज्ञेति लक्षितं *दिङ्नागेन* ।

तदसत्, कृतकत्वोक्तेरपि प्रतिज्ञात्वात् । इयानेव विशेषो यदत्रैव न्यायेनैषा प्रतिज्ञा हेतुनिर्देशत्वात् । कृतकत्वसाध्ये तु प्रतिज्ञैवेयम् साध्यनिर्देशत्वात् । तथा चेष्टपदव्यर्थता तल्लक्षणे दोषः । एतेन 'साध्यत्वेनेप्सितः पक्षो विरुद्धार्थानिराकृत' इत्यपि तस्य लक्षणान्तरं प्रत्युक्तम् । साध्यः पक्ष इत्येतावतैव पूर्तेः विरुद्धार्थानिराकृत इत्यपि व्यर्थं, माता बन्ध्येत्यादि व्याहतार्थस्यापि प्रतिज्ञात्वात् । कथमन्यथा तत्र प्रतिज्ञाविरोधः स्यात् । यः साधयितुमिष्टः स पक्ष इति *वसुबन्धुः* । तन्न, साध्यः पक्ष इत्येतावतैव सिद्धे विशिष्टपदाधिक्यादिति ।१।१।३२।

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां हेतुविभक्त्यन्वितलिङ्गवचनमेवोचितम् । अन्यथा अनाकाङ्क्षितवचने निग्रहापत्तिः । उक्ते च हेतौ तद्गमकताजिज्ञासायामुदाहरणादेतन्नवावतार इति । ततः प्राक् प्रतिज्ञानन्तरं हेतुलक्षणाय सूत्रम्—

**उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः ।१।१।३३।**

अत्र च साधर्म्यपदसमभिव्याहारात् विशेषलक्षणमेव सौत्रम् । सामान्यलक्षणं साधर्म्यवैधर्म्याभ्यां विभागश्चाक्षेप्यः, आभ्यां विनाविशेषलक्षणस्यानवसरात् । तत्र व्यतिरेकस्यान्वयनिरूप्यत्वेन जघन्यतयादौ साधर्म्यहेतुलक्षणम् । तत्र साधर्म्यपदसमभिव्याहारात् साधर्म्यहेतुपरो हेतुशब्दो लक्ष्यनिर्देशः । स च वाक्यावयवत्वाद्वचनरूपः शेषं लक्षणम् । न चैवं साध्यसाधनमित्यनेनान्वयः । साधनेन विषयेण विषयिणो वचनस्य लक्षणात् । लक्षणा च चित्रान्वयोत्तीर्ण-

१६

गोपदे स्वामिलक्षणावत् विषयद्वारा लक्षणमिति ख्यापनं लक्षणायाः प्रयोजनम् । लौकिकलक्षणायाः प्रयोजनानुरोधित्वात् तदा क्रियत इत्युदाहरणं दृष्टान्तः । तेन तस्य वा साधर्म्यम् समानधर्मता । साध्यस्य पक्षस्य नित्यसापेक्षत्वादसमर्थसमासः, दृष्टान्तदृष्टलिङ्गवत्ता । अत्र च विषयतया हेतुतायां पञ्चमी ततः साध्यस्य सिद्ध्यर्हस्य साधनं हेतुवचनम् । अत्र च पक्षस्य लिङ्गवत्त्वोदाहरणसाधर्म्यवचनात् पक्षसत्त्वलाभः । उदाहरणसाधर्म्यस्य वचनादेव सपक्षसत्त्वलाभः । उदाहरणसाधर्म्यवचनस्य विशेषविधित्वेनानुदाहरणसाधर्म्यनिषेधकतया विपक्षासत्त्वलाभः । अबाधितत्वासत्प्रतिपक्षितत्वयोस्तु साध्यपदादेव लाभः । साधयितुमर्हस्य तदर्थत्वात् तयोश्चासत्त्वात् । एवं पञ्चरूपसंपत्तिप्रदर्शनात् हेत्वाभासनिरासः स्फुटः ।

साधर्म्यादित्यतो ह्यविशेषेण सर्वस्य धर्म्यप्राप्तावुदाहरण साधर्म्यनिषेधः । साधर्म्यस्य चावधारणगर्भत्वात् भागासिद्धिनिरासः ।

नन्वनुदाहरणत्वं यदि साध्यव्यतिरेकात् तदा केवलान्वयिन्यप्रसिद्धिः, अथ साधनव्यतिरेकात्, तर्हि स प्रसंग एव नास्ति । नहि हेतुशून्ये हेतुरिति चेत् न, उदाहरणसाधर्म्यमित्यस्य सामान्यतोऽन्वयव्याप्तिपरत्वात् । अन्वयव्यतिरेकिणि तु विशेषे सामान्यप्रकारेणैव विशेषविध्यादिमहिम्ना विपक्षासत्त्वपर्यन्ततापि । तत्र हेतुसामान्यलक्षणं साध्यविषयकसाधनविषयकधीजनकन्यायावयवत्वम् । पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा । धूमादिशब्देन ज्ञानलक्षणात् । अन्यथा लिङ्गस्याहेतुतया हेतुविभक्त्यनन्वयात् तथैवाकांक्षानिवृत्तेः ।

ननु वादिवाक्ये न लक्षणा, न वा लिङ्गपदात्तज्ज्ञानावगमः । तदा कस्यापीति चेत् न पूर्वाचार्यानुरोधान्न्यायप्रयोगे निरूढे, अत्र चापदार्थैकापत्तिभयेनानन्यगत्या ज्ञानलक्षणोपगमादिति ।

किञ्चैवमुभयवादिसिद्धलाक्षणिकत्वायां प्रतिज्ञायां का गतिः। अत्र तावद्धेतुर्द्वेधा अन्वयिव्यतिरेकिभेदात्। अन्वय्यपि द्वेधा केवलान्वयी अकेवलान्वयी च। व्यतिरेक्यपि द्वेधा केवलव्यतिरेकी अकेवलव्यतिरेकी च। तत्र द्वितीयचतुर्थाभ्यामन्वयव्यतिरेकी निष्पाद्यत इति त्रयो भेदाः।

तत्रान्वयव्यतिरेकिलक्षणे सौत्रे। तद्यथा केवलान्वयिसाध्यकसाधनवचनं केवलान्वयी हेतुः। पञ्चरूपसंपन्नलिङ्गवचनमन्वयव्यतिरेकी हेतुः। आद्ये उदाहरणं घटो बाह्यो घटत्वात् प्रमेयत्वाद्वेति। द्वितीये तु शब्दोऽनित्यः कृतकत्वादिति। अनित्यत्वकृतकत्वे तु प्रध्वंसावच्छिन्ना प्रागभावावच्छिन्ना च सत्ता, तथैवाभियुक्तव्यवहारात्। तत्र प्रतियोग्येन समानकालीनावधिकापरत्वाश्रयसमानकालीनकादाचित्कोऽभावः प्रध्वंसः। प्रतियोग्येन समानकालावधिकयावत् परत्वाश्रयसमानकालकादाचित्कोऽभावः प्रागभाव इति *प्राञ्चः।*

तन्न, अवान्तरप्रलयकाले मूर्तायामसत्तया परत्वापरत्वानुत्पादे तदोत्पन्नविनष्टप्रतियोगिकप्रागभावप्रध्वंसाव्यापनात्। चरमसंयोगविभागप्रागभावव्यापनात्। तदा जन्यमूर्ताभावात्। ध्वंसलक्षणे चरमध्वंसाव्याप्तिश्च दोषः। किन्तु अदृष्टानाधारकालानाधारोऽभावः प्रागभावः। उत्पादी अभावः प्रध्वंसः उत्पत्तिश्चाद्यक्षणसंबन्धः।

ननूत्पत्तिमत्त्वस्य स्थिरस्य स्थिरत्वादुत्पन्नेऽप्युत्पद्यत इति प्रयोगः स्यादिति चेन्न। तत्र तदोत्पत्त्यनुकूलव्यापारावेशाभावात्।

नन्वेवमपि कथं घट उत्पद्यत इति [न] संगच्छते, असत्त्वेनाकारकत्वादिति चेत्, कारणव्यापारादचिरभाविनि घटे कारकत्वोपचारात्। अयोग्यतयाख्यातार्थं विहाय धात्वर्थमात्रान्वयाद्वा। एवं घटं करोतीत्यादावपि अकारक एव द्वितीयाप्रयोगमात्रं साधु, न तु तदुपस्थापितकर्मान्वयोऽपि प्रकृत्यर्थे अयोग्यत्वात्।

*चिन्तामणिकृतस्तु* करोतीत्यादिसमभिव्याहृतानि कर्मविभक्त्यन्तानि पदानि व्याप्रियमाणस्वकारणलक्षणानि प्रयोगनियमेन तथैव व्युत्पत्तेरित्याहुः ।१।१।३३।

साधर्म्यनिरूप्यत्वात् तदनु वैधर्म्यहेतुलक्षणाय सूत्रम्—

**तथा वैधर्म्यात् ।१।१।३४।**

साध्यसाधनं हेतुरित्यनुषज्यते । वैधर्म्यसमभिव्याहारात् विशेषपरतया हेतुरिति लक्ष्यनिर्देशः, शेषं लक्षणम् । तथा च विपक्षोदाहरणान् [द्]वैधर्म्यात् साध्यसाधनवचनं व्यतिरेकिहेत्ववयव इत्यर्थः ।

अत्र विपक्षोदाहरणेनैव वैधर्म्यमित्यवधारणात् पक्षव्यापकता, वैधर्म्यमेवेत्यवधारणेन विपक्षैकदेशवृत्तिता च निरस्ता । सपक्षाभावश्च प्रदर्शितः । विपक्षोदाहरणेति विशेषोक्तेः ।

एतेन भूर्नित्या गन्धादित्यसाधारण्यात्, सर्वमनित्यं सत्त्वादित्यनुपसंहारी व्यतिरेकानिरूपणात् । अनित्ये वाङ्मनसी श्रावणत्वादिति भागासिद्धिश्च अहेतव इति दर्शितम् ।

यद्वा तथेतिगमकतौपयिकरूपं परामर्शः । तच्च विना अभावे व्यतिरेकोदाहरणव्यावृत्तिः पक्षधर्मता च । तथा च साध्याभावव्यापकाभावप्रतियोगिता दर्शिता । सा च क्वचिदन्वयेऽपि सति, यथा शब्दोऽनित्यः उत्पत्तिमत्वात्, यन्नैवं तन्नैवं यथा व्योमेति । क्वचित्तदभावे यथा केवलव्यतिरेकिणि । तत्र यद्यप्याद्यः पूर्वसूत्रेणैव संगृहीतस्तथापि अनेन रूपेण गमकत्वप्रदर्शनायानेनापि तत्संग्रहेणाविरोधः । एवं च पक्षविपक्षैकदेशवृत्तिसपक्षव्यावृत्तेषु न प्रसंगः, गमकतौपयिकरूपवत्तया निरासात् ।

ननु केवलव्यतिरेकिणानुमानं व्याप्तिपक्षधर्मताज्ञानस्य तद्धेतो-

रभावात् व्यतिरेके व्याप्तेरन्वयस्य च पक्षधर्मत्वादिति चेत्, अत्र *प्राञ्चः* निरूपाधिव्यतिरेके सहचारेणान्वयव्याप्तिरेव गृह्यते प्रतियोग्यनुयोगिभावस्य च नियामकत्वान्नातिप्रसंगः।

अथैवं व्यतिरेकिन्याये व्यतिरेकोदाहरणावयवो न युक्तः स्यात्। अन्वयव्याप्तेरुपदर्शयितव्यत्वात्। न च व्यतिरेकसाहचर्योपदेशकमेतत् व्याप्त्याकाङ्क्षायां तदुत्थानादिति चेन्न, समाधानाया एव व्याप्तेस्तेनोपदर्शितत्वात्। न चाधिक्यम् अन्वयोदाहरणे सहचारोपदर्शनवदित्याहुः।

*वृद्धतमास्तु* एवं सति न तथेत्युपनयसूत्रमसंगतं स्यात्। तस्य साध्याभावपक्षधर्मताबोधकोऽवयवो व्यतिरेकोपनय इत्यर्थकत्वात्।

तथा च व्यतिरेकिणि व्यतिरेकव्याप्तिरेव गमिका। न चाननुगमः, अनुमितिमात्रे व्याप्तिज्ञानमात्रस्य प्रयोजकत्वादिति। उदाहरणं तु जीवच्छरीरं न निरात्मकं चेष्टावत्त्वात्, यन्नैवं तन्नैवं, यथा घट इति। अत्र जीवदित्येव पक्षनिर्देशः शरीरं तूदाहरणमात्रम्।

ननु साध्याप्रसिद्धौ व्यतिरेकोदाहरणाद्यनिरूपणात् कथमनुमानम्? तद्वति हेतोः सत्त्वेऽन्वयी असत्त्वे चासाधारण इति कथं व्यतिरेकानुमानमिति चेत्, एवमस्मदादियत्नः ससमवायिकारणार्थो भावकार्यत्वादिति यत्ने समवायिकारणसिद्धौ यत्नत्वं संयोगासमवायिकारणकवृत्ति　　नित्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्वात् शब्दत्ववत्। स चासमवायिकारणं संयोगः किञ्चिदवच्छिन्नः संयोगत्वादात्ममात्रसंयोगस्य यत्नजनकत्वे अतिप्रसंगादिति यत्नासमवायिकारणसंयोगावच्छेदकत्वं सिद्धम्। तद्व्यतिरेकस्तु नैरात्म्यं घटादावनुमितं चेष्टायत्नासमवायिकारणसंयोगावच्छेदकत्वयोः स्वशरीर एव व्याप्तिग्रहादिति नैरात्म्यव्यतिरेकोऽन्वयव्याप्त्यप्रतिसन्धाने व्यतिरेकव्याप्तिस्फुरणे चेष्टावत्त्वादिना जीवन्मात्रे साध्यत इति न काप्यनुपपत्तिः।

नन्वेवमपि केवलव्यतिरेकी न सिद्धो यतोऽन्वयव्यतिरेक्येवासौ । इयानेव विशेषो यदत्रान्वयव्याप्तेर्दोषवत्त्वान्न स्फुरतीति चेत् न, नहि वयमेकैकव्यतिरेकिणमेव केवलव्यतिरेकिणमाचक्ष्महे किन्तु य एव व्यतिरेकव्याप्तिमात्रपुरस्कारेण प्रवर्तते तमेवमातिष्ठामह इति । तस्य तु अन्वयव्याप्तिरप्यस्तीत्यन्यदेतत् ।

*चिन्तामणिकृतस्तु* स्वार्थव्यतिरेकिण्यभाव एव साध्यः । स चाप्रसिद्ध एव सिद्ध्यति । यस्याभावस्य व्यापकः साधनाभावो गृहीतस्तस्याभावः पक्षे व्यापकस्य साधनाभावस्याभावेन साधनेन साध्यते । व्यापकाभाववत्तया ज्ञाते व्याप्याभावावश्यं भावात् ।

ननु साध्याभावव्यापकाभावाभावरूपसाधनवत्तया पक्षज्ञानं व्यतिरेकिणि गमकम् । न च साध्यप्रसिद्धिं विनैतादृशं ज्ञानं भवति । न च वस्तुगत्या यः साध्याभावस्तदभावरूपलिङ्गवत्तया ज्ञानं, तथा व्यतिरेक्याभासोच्छेदापत्तेरिति चेन्न, यो भावो यस्य भावस्य व्यापकत्वेन गृहीतस्तदभावेन तस्य व्यापकस्याभावः पक्षे साध्य इत्यनुगतानतिप्रसक्तस्य गमकतौपयिकत्वात् । इयानेव विशेषो यत् साध्याप्रसिद्ध्या प्रथमं न तद्विशेषानुमितिः किन्तु पक्षविशेषणिका । तदनन्तरं तु तेनैव लिङ्गेन तत्रैव पक्षे साध्यविशेषणिकेत्याहुः ।

हेतुर्विपक्षाद्विशेष इति *वसुबन्धुः* । तन्न, असाधारणस्यापि हेतुत्वापत्तेः । विपक्षादेवेत्यवधारणे पक्षैकदेशव्यावृत्तस्य धूमादेरहेतुत्वापत्तेः । विपक्षैकदेशवृत्तेर्हेतुतापत्तेः । न च यो विपक्षादेव विशेष एव व्यावृत्तैकरूप एव, सपक्षादेस्तु व्यावृत्तोऽव्यावृत्तो वेति नात्र निर्बन्ध इति वाच्यम्, भागासिद्धस्य हेतुत्वापत्तेरिति ।

*दिङ्नागस्तु*—

सपक्षे सन्नसन् द्वेधा पक्षधर्मः पुनस्त्रिधा ।
प्रत्येकमसपक्षे च सदसद्द्विविधत्वतः ॥

नित्यानित्यप्रयत्नोत्थमध्यमत्रिकशाश्वताः ।
अयत्ना नित्यानित्याश्च प्रमेयत्वादिसाधनाः ॥
प्रमेयकृतकानित्यकृतश्रावणयत्नजाः ।
अनित्ययत्नजाः स्पर्शा नित्यत्वादिषु ते नव ॥
सपक्षः खं घटो बुद्धिर्वियद्गगनमम्बरम् ।
तडिद्व्योम्नी तडित्कुम्भौ परमाणुर्वियत्तथा ॥
कुम्भो वियत्तडिद्व्योम्नी घटः कुम्भस्तडिद्घटौ ।
कुम्भो वियद् घटो बुद्धिर्विपक्षोऽस्य यथाक्रमम् ॥
तत्र यः सन् सजातीये द्वेधा चासंस्तदत्यये ।
स हेतुर्विपरीतोऽस्माद् विरुद्धोऽन्यस्त्वनिश्चितः ॥

पक्षधर्मस्त्रिधा भवति । तथा तिस्रो विधाः दर्शयति—सपक्षे सन् असन् द्वेधा चेति । द्वेधा सदसद्रूपः । असावप्यसपक्षे प्रत्येकं सदसद्द्विविधत्वतः प्रत्येकं त्रेधेति नवधा । तथा हि पक्षधर्म इति सर्वत्र ध्रुवकम् । सपक्षे सन् विपक्षे च सन्नित्याद्यः कल्पः । सपक्षे सन् विपक्षे त्वसन्निति द्वितीयः । सपक्षे सन् विपक्षे तु सदसन्निति तृतीयः । सपक्षेऽसन् विपक्षे तु सन्निति चतुर्थः । सपक्षे असन् विपक्षेऽप्यसन्निति पञ्चमः । सपक्षे असन् विपक्षे तु सदसन्निति षष्ठः । सपक्षे सदसन् विपक्षे तु सन्निति सप्तमः । सपक्षे सदसन् विपक्षे तु असन्नित्यष्टमः । सपक्षे सदसन् विपक्षेऽपि सदसन्निति नवमः प्रकारः ।

एषु यथाक्रमं साध्यान्याह—नित्यानित्येत्यादि । लिङ्गान्याह—प्रमेयेत्यादि । विवेचयति तत्रेत्यादि । एतैर्वार्त्तिकैर्हेतुतदाभासा नव सिद्धास्तेऽमी । तथा हि पक्षधर्मः सपक्षे खे सन् विपक्षे च कुम्भे सन् नित्यः शब्दः प्रमेयत्वात् । पक्षधर्मः सपक्षे घटे सन् विपक्षे वियत्यसन् अनित्यः शब्दः कृतकत्वात् । पक्षधर्मः सपक्षे बुद्धौ सन् विपक्षे तडिद्व्योम्नोः सदसन् शब्दः प्रयत्नजोऽनित्यत्वात् । पक्षधर्मः सपक्षे वियत्यसन् विपक्षे घटे सन् नित्यः शब्दः कृतकत्वात् । पक्षधर्मः सपक्षे गगने

ऽसन् विपक्षे कुम्भे चासन् नित्यः शब्दः श्रावणत्वात् । पक्षधर्मः सपक्षेऽम्बरेऽसन् विपक्षे तडिद्घटयोः सदसन् नित्यः शब्दोऽयत्नजत्वात् । पक्षधर्मः सपक्षे तडिद्व्योम्नोः सदसन् विपक्षे कुम्भे सन् अयत्नजः शब्दोऽनित्यत्वात् । पक्षधर्मः सपक्षे तडिद्कुम्भयोः सदसन् विपक्षे वियति चासन् अनित्यः शब्दोऽयत्नजत्वात् । पक्षधर्मः सपक्षे परमाणुवियतोः सदसन् विपक्षे घटबुद्ध्योः सदसन् नित्यः शब्दोऽस्पर्शत्वादिति ।

मैवं यथाश्रुते पक्षधर्मत्वालाभात् ।
'साध्यधर्मो यतो हेतुस्तदाभासश्च भूयसा' ।

प्रायेणेति तद्वचनात्तल्लाभ इति चेत् न, प्रायिकत्वेऽपि नियमेनालाभात्, भागासिद्धापरिहाराच्च । अतिव्याप्तिविवक्षायामपि केवलान्वयिव्यतिरेकिणोरलाभात् ।

ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुः । अस्यार्थः, पक्षधर्मस्तदंशेन पक्षांशेन साध्यमानेन व्याप्त इति *दिङ्नागः ।* नैतत्, भागासिद्धापरिहारात् । तस्यापि व्याप्तिपक्षधर्मताशालित्वात् । तादृगविनाभाविधर्मोपदर्शनं हेतुरि*त्यन्ये* । तत्र तादृशा साध्यवता विना न भवतीत्यर्थो[र्थे] विवक्षासत्त्वलाभोऽपि [विपक्षासत्त्वलाभेऽपि] सपक्षसत्त्वालाभात् तादृक् पक्षधर्मोऽविनाभावी व्याप्त इत्यर्थे च भागासिद्धापरिहारादिति ।

अत्र धूमादिना वह्न्यादिसाधनेऽनवच्छिन्नमूलत्वादिविशिष्टधूमवत्त्वादिति हेत्ववयवः कार्य इति *प्राञ्चः* ।

धूमस्य लिङ्गत्वाल्लिङ्गस्यैव वादिबुभुत्सितत्वाज्जल्पवितण्डयोर्यथोक्तधूमादित्येव स कार्यो मतुपो व्यर्थत्वादेवमन्यत्रापीति *शिवादित्यमिश्राः* ।१।१।३४।

हेतावुक्ते कथमस्य गमकत्वमित्यपेक्षायां व्याप्तिपक्षधर्मतयो-

रुपदर्शनप्राप्तौ व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यानुमानतया व्याप्तेः प्राथम्यात् तदुपदर्शनाय हेतोः, पश्चाद् व्याप्तस्य उपसंहार उपनय इति । ततः प्रागुदाहरणमित्युद्देशक्रमसंगत्या तल्लक्षणाय सूत्रम्—

**साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ।१।१।३५।**

अत्र साधर्म्यपदश्रवणादन्वयोदाहरण लक्षणं सौत्रम् । व्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधकन्यायावयवत्व-रूपं सामान्यलक्षणम् । तद् द्विधा अन्वयव्यतिरेकोदाहरणभेदादिति विभागश्चार्थः ।

सौत्रे तु लक्षणे साधर्म्यपदसमभिव्याहारेण विशेषपरत्वादुदाहरणमिति लक्ष्यनिर्देशः, शेषं लक्षणम् । तद् यथा साध्यः सिषाधयिषितधर्मवत्तया धर्मी, तेन साधर्म्यात् साधनरूपात् समानाद् धर्मात् । पञ्चम्या चास्य व्याप्यत्वरूपं प्रयोजकत्वमुक्तम् । तस्मात् प्रयोजकात् साधर्म्यात्तद्धर्मभावी येन धर्मेण विशिष्टः पक्षः सिषाधयिषितः स तद्धर्मः । स एव भावस्तद्वान् दृष्टान्तः साधनप्रयुक्तसाध्यधर्मवानन्वयोदाहरणमित्यर्थः ।

न च भावेति व्यर्थम्, तद्धर्माणां विधिनिषेधाभ्यां द्वैविध्यात् । अन्वयिनि विधीयमानत्वेनैव व्यतिरेकिणि निषेध्यमानत्वेनैव एक रूपेणैव साध्यसाधनयोरन्वयार्थत्वात् ।

यद्यपि दृष्टान्तो नोदाहरणमशब्दत्वात् तथापि तद्विषयं वचनं तथेति द्रष्टव्यम् । न च दृष्टान्तवचनस्य सामयिकत्वादव्याप्तिः उदाहरणजनिताया अपि व्याप्तिधियो दृष्टान्तं विना प्रचलत्वात्तदप्रचलत्वसिद्धये तस्यावश्यकत्वात् । तेन साधनप्रयुक्तसाध्यवद्दृष्टान्तवचनत्वमन्वयोदाहरणत्वमिति *सम्प्रदायः ।*

*नव्यास्तु* तदप्रचलत्वस्यापि कात्स्न्र्यसम्बन्धवाचिन उदाहरणादेरसिद्धेः सामयिकस्तथा च यस्मिन्नवयवे दृष्टान्तो वक्तुमर्हति तदवयवरूपवचनस्य लिङ्गम् । तथा च साधनत्वाभिमतवन्निष्ठनियतसाध्यत्वाभिमतसम्बन्धबोधकन्यायावयवत्वमन्वयोदाहरणत्वम् । एवं च साधनप्रयुक्तसाध्यवत्त्वाभिधानेन साधनविकलसाध्यविकलोभयविकलधर्मविकलान्यपास्तानि ।

तथा शब्दद्वारके अदूषणे, अनुपदर्शितान्वयविपरीतोपदर्शितान्वये निरस्ते, साधनस्य प्रयोजकत्वाभिधानात् साधनाभासव्युदासः । तस्य साध्याप्रयोज्यत्वात् । उदाहरणं तु यद्यत्कृतकं तत्तदनित्यमिति । अत्र सामानाधिकरण्यमात्रस्य व्यभिचारिसाधारण्यात् तद्वारणाय वीप्सा । केवलान्वयभेदानुमानादौ तु न तच्छङ्केति न वीप्सापि; सा च यत्तदोरित्येके । यदि परं न तु तर्हि वीप्सा, तस्यैव तदा प्रत्यवमर्शादि*त्यन्ये* ।

वीप्सया भूयःसु स्थानेषु साहचर्यं दर्शयन्त्या व्यभिचारो वारणीयः । तच्च व्यभिचारिसाधारणमिति । न तथापि व्यभिचारिवारणमिति निष्फलत्वात् । सा न कर्तव्येति *चिन्तामणिकृत* ।१।१।३५।

अन्वयनिरूप्यत्वात् व्यतिरेकस्यानन्तरं व्यतिरेकोदाहरणाय सूत्रम्—

## तद्विपर्ययाद्वा विपरीतम् ।१।१।३६।

तस्य साध्यस्य विपर्ययो वैधर्म्यं साध्याभाववत्स्वरूपम् । तस्माद् विपरीतम् । अतद्धर्मभावि साधनरहितमिति यावत् । वाकारो दृष्टान्त उदाहरणमिति समुच्चयार्थम् । तेन साध्याभावप्रयुक्तसाधनाभाववद्दृष्टान्तवचनं व्यतिरेकोदाहरणमित्यर्थः । तेन साध्यसाधनोभयाव्यावृत्तमाश्रयविकलं चेत्यर्थद्वारकं चतुष्टयम् । तथा नित्यः शब्दः

श्रावणत्वात् यन्नित्यं तन्न श्रावणं यथाकाशो यथा ध्वनिः, यथा शब्दत्वं, यथा खपुष्पम् । अनुपदर्शितव्यावृत्तिकं विपरीतोपदर्शित-व्यावृत्तिकं चेति शब्दद्वारकं द्वयमप्यपास्तम् । एषु षट्सु साध्याभाव-प्रयुक्तसाधनाभाववचनात् ।

*केचित्तु* वाशब्दो न दृष्टान्त उदाहरणमित्यस्योपस्थापकोऽनु-षङ्गादेव तल्लाभात्, किन्तु स्वरूपसमुच्चये । न केवलं साध्यसाधर्म्या-त्तद्धर्मभावी दृष्टान्त उदाहरणम् अपि तु तद्विपर्ययाद् विपरीतमप्यु-दाहरणमित्याहुः ।

विषयसमुच्चये वाकार इत्येके । यद्यपि केवलान्वयिव्यति-रेकिणोरुदाहरणावयवो नोभयविषयकस्तथाप्यन्वयव्यतिरेकिण्यन्वय-व्याप्त्युपदर्शने व्यतिरेकिव्यभिचारशङ्कायां व्यतिरेकव्याप्तेरप्युप-दर्शनात् तत्समुच्चयो भवत्येव । एवं व्यतिरेकव्याप्तिप्रतिसन्धाने तत्प्रतिपादनेऽप्यनुमितिदर्शनात् विकल्पोऽप्यत्र संभवतीत्याहुः ।

तथासिद्धो दृष्टान्त उदाहरणमिति *वसुबन्धुः* । यथा साध्यत्वेन पक्ष इष्टस्तथा यः साध्यसाधनवत्तया सिद्ध इति । तन्न, तद्दर्शने अव्यापकत्वात् । घटादौ दृष्टान्ते कृतकत्वानित्यत्वरूपसाधनसाध्य-वैकल्यात् प्रागभावप्रध्वंसौ हि तन्मते कृतकत्वानित्यत्वे । न चैतदुभयं घटादावस्ति स्वभावविरोधात् । एतेन द्वयोः सम्बन्ध-निदर्शनं दृष्टान्तः । निदर्श्यते अस्मिन्निति निदर्शनम् ।

साध्येनानुगमो हेतोः साध्याभावे च नास्तिता ।

इतिद्वयमप्यपास्तम् । तन्मतेन तत्रैवाव्याप्तेः ।१।१।३६।

व्याप्तिप्रदर्शकोदाहरणानन्तरं व्याप्तपक्षधर्मतोपदर्शकत्वेन तद-पेक्षित[त]या तदनुद्देश इत्युद्देश्यक्रमसंगत्या उपनयलक्षणाय सूत्रम्—

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ।१।१।३७।**

अत्रोपनय इति लक्ष्यनिर्देशः, उदाहरणापेक्षः साध्यस्योपसंहार इति सामान्यलक्षणम् । उदाहरणस्य चापेक्षा व्याप्तिज्ञानजनकतया । साध्यस्य पक्षस्योपसंहारस्तादृशहेतुसंबन्धवचनम् । अवसरत्व-प्राप्तिः प्रकरणात् । तेन व्याप्यसाध्याभावव्यापकाभावान्यतरपक्षधर्म-ताबोधको न्यायावयव उपनय इति लक्षणार्थः । आक्षिप्तविभागपूर्वकं च विशेषलक्षणद्वयम् । उपनय इत्येव चावृत्तम् । विशेषलक्षण-समभिव्याहारेण विशेषपरं लक्ष्यनिर्देशः । तत्रान्वयोपनयस्य तथेति व्यतिरेकोपनयस्य न तथेति शेषैः सहितं लक्षणद्वयम् । तत्र तथेत्यादि न शब्दग्रहणम् । दृष्टान्तवचनस्य सामयिकतया तथाभावे यथासम-भिव्याहाराभावेनान्वयानर्पकत्वात् । किन्तु व्याप्तलिङ्गवत्त्वेन साध्या-भावव्यापकाभावाभावत्वेन चेत्येतदर्थपरम् । तेन व्याप्तपक्षधर्मता-बोधकोऽवयव इत्यन्वयोपनयस्य साध्याभावव्यापकाभावाभावपक्ष-धर्मताबोधकोऽवयव इति व्यतिरेकोपनयस्य लक्षणम् । वा शब्दः स्वरूपसमुच्चये व्यवस्थितविकल्पे वोदाहरणवत् ।

न चोदाहरणान्त एव प्रयोग इति वाच्यम् । स्वप्रतिपत्त्यनु-सारेण हि तावत् परे बोधयितव्याः । स्वयं च तृतीयलिङ्गपरामर्शादनु-मितिरासादितेति परस्यापि तदुपस्थापनावश्यकत्वेऽन्यावयवाच्च तदलाभे उपनयस्यावश्यकत्वात् । तृतीयलिङ्गपरामर्शस्य तु यथानु-मितिहेतुता तथोपपादितमधस्तात् । तदनभ्युपगमेऽपि पक्षधर्मताया अप्यलाभाच्च । न च हेतुवचनादेव तल्लाभः, तस्य को हेतुरित्या-कांक्षायां प्रवृत्ततया तत्स्वरूपमात्रपरत्वात् । नन्वेवमुपनयस्य तृतीय-लिङ्गपरामर्शहेतुजनकतया न्यायतैव स्यादिति चेत् । उच्यते, यद्यपि वक्ता स्वानुमितिसामग्रीं तृतीयलिङ्गपरामर्शमनेनोपस्थापयति । गृहीततदाप्तभावाश्च तथैव प्रतियन्ति च । तथापि प्रतिवादिना वादिन

आप्तत्वानवधारणात् तस्य नास्मात् तृतीयलिङ्गपरामर्शः । किन्तु शङ्काकलङ्कितं पक्षधर्मताज्ञानमात्रमिति । नोपनयस्य प्रतिवादिनि सिद्धलिङ्गप्रतिपत्तिजनकतया न्यायता । नाप्याप्ते तथाबोधजनकत्वेन सा । न्यायस्य परम्परया परपरामर्शजनकत्वम्, अस्य तु साक्षादेवेति विशेषात् ।१।१।३७।

निगमनस्य व्याप्तपक्षधर्मलिङ्गोपजीवकत्वात् तदुपदर्शकोपनयानन्तरं तल्लक्षणाय सूत्रम्—

**हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ।१।१।३८।**

निगमनमिति लक्ष्यनिर्देशः । निगम्यन्ते प्रतिज्ञादयोऽवयवा अनेनैकस्मिन्नर्थे विशिष्टलिङ्गप्रतिपादनद्वारा अनुमेयज्ञानरूप इति निगमनम् । एवञ्चैकवाक्यत्वं दर्शितम् । हेत्वपदेशात् हेतोरस्मादिति वचनात् प्रतिज्ञायाः प्रतिज्ञार्थस्य पुनर्वचनं सिद्धतया वचनं पुनःशब्दस्य सिद्धत्वे पर्यवसानात् । अन्यथा पौनरुक्त्यात् । तेन व्याप्तपक्षधर्मलिङ्गप्रयुक्तसिद्धिकत्वेन साध्यस्य प्रतिपादकोऽवयवो निगमनमित्यर्थः ।

ननु साधनस्य द्वैविध्ये साध्यस्य द्वैविध्यात् तद्वचनस्य प्रतिज्ञायास्तदनुवादस्य निगमनस्य च द्वैविध्यं कथं न सूचितमिति चेत् न, साध्यनिर्देशः प्रतिज्ञेत्यनेन प्रतिज्ञायाः पूर्ववचनमित्यनेन सर्वसंग्रहात् अर्थलभ्यत्वात् । विधिनिषेधयोः प्रति ज्ञाने निषेधविध्योरुपसंहारे प्रतिज्ञायाः पूर्ववचनाभावादेव नातिप्रसङ्गो येन तद्वारणायापि विशेष उपनयस्य सूत्र्येत । हेत्वपदेशश्च तस्मादिति सर्वनाम्ना न तु धूमादिति विशिष्य । तेन प्रकृतव्याप्तिपक्षधर्मताविशिष्टधूमलाभः । साध्यांशस्य तु न तथा न शब्देन परामर्शः । तथा हि थालप्रत्ययस्तावत्प्रकारवाची प्रकारश्च सादृश्यं वाभेदो वा । तथा च *भर्तृहरिः*—

सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते ।
भेद एव प्रकाराख्यः कैश्चिदभ्युपगम्यते ।। [वाक्यपदीयम् ३।६२३।]

इति । न चैतद् द्वयमप्यत्रोपपद्यते, प्रकृतस्य पक्षस्यापेक्षयास्यैतदुभयाभावात् ।

ननु प्रकारो विशेषो, यथा ब्राह्मणस्य माठरत्वादिः । तथा च *वामनवृत्तिः*–प्रकारः सामान्यभेदको विशेष इति । न, नह्यत्र केनापि समं बह्निमत्त्वस्य विशेषरूपतास्ति, येन तत्प्रकारवाचिनोपस्थितमत्रान्वीयेत ।

*केचित्त्वन्य*तमो धर्म एव प्रकारः । भागवृत्तौ तथाभिधानात् । तथा चात्र वह्निमत्त्वमेव धर्मस्तथाशब्देन परामर्ष्टव्य इति न काप्यनुपपत्तिरित्याहुः ।

ननु व्याप्तिपक्षधर्मतयोश्चतुर्भिरेवावयवैः प्राप्तत्वात् किं निगमनेनेति चेत् न, व्याप्तिपक्षधर्मताज्ञानेऽपि बाधसत्प्रतिपक्षबुद्धेः साध्यार्थमित्यनुपपत्तिदर्शनादबाधितत्वादिबोधनायैतस्यावश्यकत्वादिति । ।१।१।३८।

## [ न्यायोत्तराङ्गप्रकरणम् ]

अनिरूपिते हि न्याये [न] तदुत्तराङ्गजिज्ञासोदेतीति हेतुहेतुमद्भावसङ्गत्या तदनन्तरं तदुत्तराङ्गप्रकरणम् ।

यद्यपि न्यायस्य तर्को नोत्तराङ्गम् । न्यायविषयपरिशोधकतया पूर्वाङ्गत्वात् । निर्णयस्त्वङ्गमेव न भवति । स्वोत्पत्तौ स्वस्याङ्गत्वविरोधात् । तथापि निर्णये साध्ये विशिष्टलिङ्गोपरामर्शस्तद्द्वारम् । सा च तावन्न भवति यावद् व्यभिचारशंका तर्के[ण] नापनीयेत इति भवत्यसावुत्तराङ्गम्, निर्णयस्य तु फलत्वमेवोक्तमङ्गत्वेन । तथा च न्यायोत्तराङ्गत्वमनयोरुक्तम् ।

यद्वा तृतीयलिङ्गपरामर्शस्य करणस्य व्यापारान्तराभावे तर्क

एव व्यापारो वाच्यः । करणस्य व्यापारनियमात् । कथमन्यथा परामर्शे सत्यपि पक्षे साध्यसदसद्भावशङ्काव्यग्रतया मुहूर्तमनुमितौ विलम्बन्ते । सा च शङ्का तर्केण निवर्त्यत इति पक्षे तस्योत्तराङ्गत्वम् । एवं मोक्षार्थिप्रवृत्तिलक्षणे फले जनयितव्ये तदीयन्यायस्य निर्णयोऽङ्गमिति न्यायस्य निर्णयाङ्गतावाद इति । तत्रापि तर्कस्य निर्णयहेतुत्वादादौ तल्लक्षणाय सूत्रम्—

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ।१।१।३६।**

अत्र तर्क इति लक्ष्यनिर्देशः, शेषं लक्षणाय । अत्र ऊह इति कृते ज्ञानमात्रेऽतिव्याप्तिरत उक्तम् अविज्ञाततत्त्व इति । न विज्ञातं विशेषतो ज्ञातम् तत्त्वं वास्तवं रूपं यस्य तस्मिन् । अत्राविशेषात् सामान्यज्ञानलाभे धर्मिज्ञानं तर्कहेतुसंशये हेतुर्लभ्यते । एवमपि तृतीयाविग्रहेण बहुव्रीहौ मूढज्ञानमात्रेऽतिव्याप्तिरत उक्तमर्थ इति । तथा च न तृतीयाविग्रहान्तबहुव्रीहिभ्रमसंभवः । विषयसप्तमी चानेन स्फोरिता निश्चितेऽप्यर्थे पुनर्निश्चयार्थं य ऊहः स च व्युदस्तः ।

एवमपि संशयेऽतिव्याप्तिस्तद्वारणाय कारणोपपत्तित इति । कारणं व्याप्यम् तस्योपपत्तिराहार्यारोपस्ततः । एवमपीष्टापादनेऽतिव्याप्तिरत उक्तम्—तत्त्वज्ञानार्थमिति । तत्तु न तत्त्वज्ञानार्थं भवति । तद्विपर्ययस्याती[त]त्वात् । अनेन निर्णयफलकतापि दर्शिता । एवं च संमुग्धो विषयः कारणमाहार्यारोपः आहार्यता त्वस्य ऐच्छिकत्वमात्रेण न तु प्र[ति]योग्यारोपादिवत् बाधितविषयत्वेनेति द्रष्टव्यम् । स्वरूपमनिष्टप्रसञ्जनं फलं निर्णय इति दर्शितम् ।

अत्र यद्यपि तर्क्यतेऽनेनेति व्युत्पत्त्या व्याप्यारोपोऽपि भवति तर्कस्तथापि प्रसङ्गस्यैव साक्षात् प्रमाणानुकूलतया तर्कणं तर्क इति

व्युत्पत्तिलभ्यः प्रसङ्ग एव लक्ष्यः। लक्षणं तु व्याप्यारोपत्वावच्छिन्न-कारणताप्रतियोगिककार्यताश्रयज्ञानत्वम्। भ्रान्तानुमितिं प्रति तु भ्रान्तपरामर्शस्य कारणता लिङ्गभ्रमत्वेन न तु व्याप्यारोपत्वेनेति तद्-व्युदास इति *केचित्*। तन्न, व्याप्यारोपत्वावच्छिन्नकारणताप्रतियोगि-का[नां] तर्काणां कार्यतानुगतधर्मग्रहं विना दुर्ग्रहात्। नहि दण्डत्वा-वच्छिन्नकारणतानिरूपिता घटादीनां कार्यता घटत्वमवच्छेदकम-प्रतिसन्धाय बुध्यते। तथा च तादृशकार्यतावच्छेदनार्थं तर्कत्वमेव तादृशो धर्मः परिशिष्यते। न चैतल्लक्षणवाक्यार्थं इत्यात्माश्रयः।

ननु ज्ञानत्वावान्तरजातिस्तर्कत्वम्। न च चाक्षुषादिना संकरः, तस्य सर्वत्र मानसत्वात्। प्रमायामेव मनसो बहिरस्वात-न्त्र्यादिति चेत्—न, तर्कस्याहार्यनिष्ठरूपविषयवैलक्षण्यादेवानुगतम-भ्युपपत्तौ जातौ मानाभावात्। अन्यथा घटज्ञानादावपि तदभ्युपगमः स्यात्। धर्मिणि प्रमारूपं तर्कं जनयतो मनसो बहिः स्वातन्त्र्य-प्रसङ्गात्। किञ्च रजताद्यारोपवत्तस्य सर्वेन्द्रियजतया साङ्कर्यमपि जातित्वे बाधकमेव। अस्तु वा जातिस्तथापि सैव लक्षणमावश्यक-त्वाल्लाघवाच्चेति कृतमनया कुसृष्ट्येति।

*अन्ये* तु व्याप्याभाववत्त्वप्रतियोगिकाधारताप्रतियोगिज्ञानात् व्यापकाभाववत्ताप्रतियोगिकाधारताप्रयोगिकज्ञानं तर्कः। अत्र व्याप्या-भावज्ञानात् व्यापकाभावज्ञानमनुमित्यतिव्यापकमत उक्तम्—पूर्वं विशेषणम्। तस्यार्थः, व्याप्याभावत्वप्रतियोगीया आधारता पक्षी-कृतस्य पर्वतादेः तत्प्रतियोगि तद्व्याप्यं निर्वह्नित्वादि तस्य ज्ञानात्। तेनोल्लिखिताभावस्य व्याप्यस्य ज्ञानादित्यर्थः। अभावोल्लेखश्च संशयेन। एवमपि धूमवान् निर्धूमो वायमिति संशये सति धूलीपटले धूमारोपादुत्पन्नायामनुमितावतिव्याप्तिरत उत्तरविशेषणम्। तस्यार्थः, व्यापकाभाववत्ताप्रतियोगिकी धूमवत्त्वादिप्रतियोगिकी या आधारता तत्प्रतियोगि यद्व्यापकम् निर्धूमत्वादि तस्य ज्ञानम्।

तेनानवधारितव्यतिरेकस्य व्यापकस्य ज्ञानमित्यर्थः । ततो न पूर्वोक्तानुमितावतिव्याप्तिरित्याहुः ।

तन्न, यत्र प्रातरेव प्रतीच्यां रक्ताशोकस्तवकमवलोक्य एष किसलयसमूहो वा मार्तण्डमण्डलो वेति सन्दिह्य तदनु कुतश्चिद् विशेषान् मिहिरमण्डलतया तमवधार्य आप्तोक्त्या जातमपि प्रतीचीद्वारधारणमवधीर्याभिनवहेम[लि]मण्डलमिलनेन प्राचीत्वमनुमिनोति। तत्रानुमितावतिव्याप्तिरिति ।

अत्राहुः— अव्यवस्थितताभ्युपगम्यमानकोट्युपाधिकानिष्टसत्त्वप्रतिसन्धानं तर्कः । तदुपाधिकत्वं च तस्मिन्नसत्यावश्यकत्वम् । यथा शब्दो यद्यनित्यो न स्यात् कार्यो न स्यादित्यादौ समभिव्याहृतकोटेरव्यवस्थितत्वमभ्युपगतत्वं च यदि शब्दार्थः । तदुक्तम्—अनियतकोट्युपनिपाते नियतकोटिपरिग्रहस्य यद्यर्थत्वमिति । तदेत्यनेन पूर्वस्य समभिव्याहृतमुत्तरप्राप्त्युपाधित्वमुच्यते । तदुपाधिकं च सत्त्वं स्याच्छब्देन तदुपाधिकं च सत्त्वनिष्टस्यापीत्यत उक्तमनिष्टेति । अनिष्टत्वं च [न]स्वीकार्यताविरोधि धर्मवत्त्वम् प्रमाणविरोधात् अभ्युपगमविरोधाच्च । अव्यवस्थितत्वं च व्याप्यारोपकोटेर्हीनबलत्वार्थम् । अन्यथा व्याप्यारोपव्यापकवत् बुद्ध्योः सत्प्रतिपक्षः परं स्यान्न तु व्याप्यारोपस्य पराजय इति ।

स चायं तर्कः पञ्चविधः, आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थप्रसङ्गभेदात् । अत्र स्वस्य स्वापेक्षमारोप्यानिष्टप्रसङ्ग आत्माश्रयः । स चायमुत्पत्तिस्थितिज्ञप्तिरूपद्वारभेदात् त्रेधा । तथा हि घटो यदि घटजन्यः स्यात् घटाभिन्नः स्यात् । न चैतद्विपर्ययानुमाने घटत्वस्य हेतोरसाधारणतया विपर्ययापर्यवसितत्वमस्येति वाच्यम्, विशेषदर्शने असाधारणस्यादोषत्वात् । संशयस्य सत्प्रतिपक्षस्य वा बाधादिति । स्थितौ तु यद्ययं घट एतद्घटवृत्तिः स्यात् तदा तथा

प्रमीयेत। अत एव प्रमेयत्वं स्ववृत्तित्वेन प्रमाणगोचर इति। तत्रा-त्माश्रयो न दोषः। ज्ञप्तौ तु घटो यदि तद्घटज्ञाप्य एव स्यात् तदा तदस्य ज्ञाप्यो न स्यात्। न चेष्टापत्तिः, स्वस्य स्वज्ञाप्यत्वनियमेऽनवस्थानात्।

स्वापेक्षापेक्षितत्वनिबन्धनः स्वस्यानिष्टप्रसङ्गोऽन्योन्याश्रयः। अयमप्युत्पत्त्यादौ पूर्ववदूह्यः। नचान्योन्याश्रयो[न]दोषः, आत्माश्रयस्य नियतत्वेनावश्यकत्वाल्लाघवाच्च, स एव दोषोऽस्त्विति वाच्यम्। साक्षात् स्वापेक्षाया अभावात्, परम्परया च तत्संभवे आत्माश्रयनिर्वाहार्थं प्रथमोपस्थितस्य स्वतो दूषकस्यान्योन्याश्रयस्यैव दूषकत्वकल्पनात् प्राथम्यात्।

तदपेक्षा[पेक्षा]पेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकम्। इदम-प्युत्पत्त्यादौ पूर्ववत्। अत्र च त्रिकक्षत्वमविवक्षितम् चतुःकक्षादेरपि चक्रकत्वात्। तथैव तान्त्रिकव्यवहारात्। स चायं कक्षाभेदेनानन्त-भेदः।

आपत्तिप्रयोजकीभूतरूपवदापाद्यापादनमनवस्था। उत्सर्गा-विनिगमकल्पनालाघवकल्पनागौरवप्रतिवन्द्यनौचित्यानि तु न तर्काः प्रसङ्गानात्मकत्वात्। तथा हि उत्सर्गस्तु बाधकैकापोद्यो नियमः। यथा—

> तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
> अर्थान्यथात्वहेतूत्था दोषज्ञानादपोद्यते॥ इति।

सोऽयं भूयः साहचर्यरूपो ज्ञानात्मक एव न भवति, कुतस्तर्कः स्यात्। अविनिगमस्तु युगपदुपस्थितयोः प्रमाणाभावाद-वधारणाभावः। अत्र च प्रमाणाभावो दोषो न त्वविनिगमः। लाघव-गौरवे तु स्वल्पपरिच्छेदकत्वं, स्वल्पे सम्भवति गुर्वपरिच्छेदकत्वं च

प्रमाणानां स्वभावौ, प्रमाणसहचारितामात्रे न त्वनयोस्तर्करूपदेशो-ऽपि। प्रतिबन्दिस्त्वर्थान्तरम् विरोधिपरत्वे तु तदन्तर्भूतैव । अनौचि-त्यन्तु औचित्यस्य प्रामाणिकत्वस्य विरहः प्रमाणाभावान्तर्गतः। कुतः ? न चार्थान्तरमर्थान्तरेण परिहरतः को दोषो यद्यनौचित्यं न दोषः स्यात्। तच्च प्रामाणाभावानन्तर्भावात् पृथगिति वाच्यम्, प्रथमार्थान्तरेणैव कथापर्यवसाने द्वितीयार्थान्तराभिधानस्यानवसर-पराहतत्वात्।

स चायं तर्को व्याप्तिग्राहको विषयपरिशोधकश्च । तथा हि व्यभिचारशङ्कानिरासससहितं सहचारदर्शनं तावच्छङ्कोत्पत्तिस्थाने व्याप्तिप्रत्यक्षकारणम् । तच्छङ्का च विरोधिकोटावनिष्टमुपनयता तर्केण निवर्त्यते । केवलान्वयिन्यपि साधनसमानाधिकरणाभाव-प्रतियोगिसाध्यं न वेति शङ्कास्त्येव । सा च यद्यपि व्यापकता-गोचरा समानसंवित्संवेद्यतया व्याप्यतागोचरापि । न च शब्दा-दिना व्याप्तिग्रहे व्याघातेन शङ्कामु[नु]त्पादे च तर्कस्योभयव्याप्य-कारणतेति दोषाय विरोधिशङ्कानिरासमात्रस्य कारणतापगमात्।

एवं पुरुषप्रयत्नाधीनानुमितावस्य विषयपरिशोधकतापि। तथा हि संशयाज्ञानाकोट्युपस्थितौ संशयानुसारिण्यव्यवस्थितनाना-कोटिका जिज्ञासापि ततो जायते। सा चांशतः साध्याभावविषयतया साध्यसिद्धिपरिपन्थिनीति । तत्र तर्केण कोट्यन्तरेऽनिष्टमुपनयता साऽपनीयते। यथा मधुविषमिश्रितान्नबुभुक्षा विषभक्षणसाध्योऽनिष्ट-प्रतिसन्धानेनेत्येवं परिशोधितविषये तर्केण केवलसाध्यकोटिके जिज्ञासान्तर उत्पादिते समुत्पद्यमानस्तृतीयलिङ्गपरामर्शोऽनुमितये प्रभवतीति ।१।१।३६।

निर्णयस्य सत्तर्कप्रमाणफलत्वात् तदनन्तरमुद्देश इत्युद्देशक्रम-संगत्या तल्लक्षणाय सूत्रम्—

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ।१।१।४०।**

विमृश्य विमर्शं संशयं कृत्वा स्थितस्य यतोऽर्थावधारणं स निर्णयः । विमृश्येति वचनाद्विमर्शस्य प्रयोजकता दर्शिता । सा च पक्षप्रतिपक्षोत्थापने । अत्र पक्षप्रतिपक्षयोः कर्मतया न निर्णयसाधनत्वमिति । तत्पदाभ्यां स्वार्थसम्बन्धिनौ साधनोपालम्भौ लक्ष्येते । यद्विषयसाधनोपालम्भौ तद्विषय एव निर्णयोऽपीति ज्ञापनं लक्षणायाः प्रयोजनम् । उपालम्भस्य तु विरोधिव्यवच्छेदकतामात्रेण निर्णयहेतुता द्रष्टव्या । अवधारणमर्थस्यैव भवतीति अर्थापत्त्यैवार्थे लब्धे पुनरर्थग्रहणमेकत्र वस्तुनि मिथो विरुद्धयोरन्यतरदेव वस्तुभूतमिति ज्ञापनार्थम् । अत्र निर्णयसामान्यलक्षणं प्रमात्वम् । स संशयपूर्वकोऽतत्पूर्वकश्चेति विभागश्चार्थः । अत्राद्यस्य संशयपूर्वकार्थावधारणत्वं लक्षणं सौत्रम् । सूत्रे च पक्षप्रतिपक्षाभ्यामिति प्रतीतं सामग्रीकथनपरम् । विमर्शस्तु विचारे स्वस्य, वादे शिष्यस्य, जल्पवितण्डयोरनुविधेयस्य ग्राह्यः । तस्यैव निर्णयभागितया तत्संशयस्यैव विचारप्रवर्तकत्वात् । तदभावे तु कथकशक्त्यशक्तिविषयकः स्थेयसंशयो ग्राह्य इति ।१।१।४०।

*इति श्री वाचस्पतिमिश्रविरचिते न्यायतत्त्वालोके*
*प्रथमाध्यायस्य प्रथमाह्निकम्*

---

# प्रथमाध्यायस्य द्वितीयाह्निकम्

## [ कथाप्रकरणम् ]

तदेवं प्रथमाह्निके सपरिकरे पञ्चावयवात्मके न्याये लक्षिते, विचारेऽप्राप्तकालस्यादोषतया [स्य दोषतया] तस्य विशिष्टप्रवर्तनीयत्वेऽपि कथायां तद्विया प्रवर्त्यैव विवेचनीयत्वमिति सपरिकरन्यायलक्षणपरप्रथमाह्निकानन्तरं[हेतु]हेतुमद्भावतया प्रथमेन द्वितीयस्याह्निकस्य संकर इति वाच्यम्, न्यायावयवव्यावृत्तशब्दलक्षणानाश्रयमोक्षकारणतत्त्वज्ञानविषयपदार्थलक्षणस्य प्रथमाह्निकार्थत्वात् । न्यायतदङ्गप्रतिज्ञादिलक्षणजातिनिग्रहस्थानविशेषलक्षणोभयभिन्नमोक्षकारणतत्त्वज्ञानविषयपदार्थलक्षणस्य च द्वितीयाह्निकार्थत्वात् ।

अत्र च हेत्वाभासानां साधनदूषणपरवचनसन्दर्भरूपकथैकदेशत्वेन कथायाः प्राधान्यादादौ तल्लक्षणप्रकरणम् । तत्राप्येतच्छास्त्रोद्देश्यतत्त्वज्ञानसाक्षादुपायतया वादस्य प्राधान्यादादौ तल्लक्षणाय सूत्रम्—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ।१।२।१।**

अत्रकथासामान्यलक्षणं विभागश्चाक्षेपलभ्यौ । यद्यपि कथासामान्यं [ न्य लक्षणं ] नोद्दिष्टं तथाप्येकं लक्षणीयमेव । अन्यथा वादादिलक्षणसूत्राणां पूर्वापरप्रकरणानन्तर्भूतानामेकैकसूत्रेणाप्रकरणत्वाच्छास्त्रस्य बहिर्भावापत्तेः ।

सूत्रकृता तथात्वेनानुद्देशः कथासामान्यस्यैकं प्रयोजनं नास्तीति ज्ञापनाय । यद्यपि कथामात्रे परनिग्रहस्थानप्रतिपादनमेकं

फलं ना[लभ]त्येव तथापि कृतिवैचित्र्यात् तत्फलं न सूत्रकारो-द्देश्यमित्युन्नीयते । तत्र यद्यपि कथ्यते पुरावृत्तादिकमनयेति बृहत् कथादीनामपि लाभः, तथापि शास्त्रे तदनवसराद् योगे सत्येव रूढ्या कथाशब्दस्तद्विशेषे प्रवर्तते । तथर्वाभियुक्तव्यवहारेण रूढेः कल्पनात् । तल्लक्षणं तु वादिप्रतिवाद्यन्यानभिधानावृत्तिवादिस्था-पनाभिधानप्रतिवादिदूषणाभिधानवृत्तिवाक्यत्वाधिकरणानुत्पादनो-द्देश प्रवर्त [क] वादिप्रतिवाद्यन्यतरसाधनदूषणान्यतराभिधानत्वम् । उक्त स्तम्भस्थाने [?] ऽप्येतदस्ति । तथाद्देशप्रवृत्तेः सत्त्वात् । युद्ध-वदेकप्रयोजनकतया मिथःसाकाङ्क्षतया चैकवाक्यत्वम् । विभागस्तु सूत्रे—सा त्रेधा वादादिभेदात् । आधिकोऽयं विभागः वादिप्रतिवादि-साधनदूषणाभिधानसन्दर्भतया कथामार्गस्यैकत्वादिति *बाह्याः*, तन्न । तत्त्वनिर्णयस्योभयसाधनदूषणशक्तिनिरूपणस्यैकैकस्थापनदूषणशक्ति-निरूपणस्य फलस्य च त्रित्वेन कथात्रित्वात् । विजिगीषोर्वितण्डा-वत् बुभुत्सोर्वितण्डाया अपि सम्भवात् । इच्छाया अनियमात् । सा चतुर्धेति *सानातनिः* । तन्न, तत्त्वनिर्णयोद्देशप्रवृत्तत्वेन तस्यापि वाद-त्वात् जिगीषुतया न तत्र प्रवृत्तिः सम्भवत्येव । इच्छयोर्विरोधात् बुभुक्षामुमुक्षावत् । तत्र तावत् कथाधिकारिणस्तत्त्वनिर्णयविजयादि-फलाभिधायिनः सर्वजनसिद्धा[नुभवा]नपलापिनः श्रवणादिपटवः अकलहकारकाः कथौपयिकव्यापारसमर्था अवहिताश्च ।

वादाधिकारिणस्तु—प्रकृतोक्तिका अविप्रलम्भकाः यथाकाल-स्फूर्तिका अनाक्षेपका युक्तिसिद्धप्रत्येतारः प्रत्य[ति]बुभुत्सवः ।

तत्र सूत्रे वाद इति लक्ष्यनिर्देशः । शेषं लक्षणाय परिशोधनाय च । पक्षः सिषाधयिषितोऽर्थः, प्रतिपक्षः पक्षविरोधी सिषाधयिषित एव, तयोः परिग्रहोऽङ्गीकारो यत्र स तथा । एतेन कथाप्रयोजको विरोधोऽङ्गीकार उक्तः । एतावन्मात्रं च कथान्तरसाधारणमत उक्तं प्रमाणतर्कसाधनोपालम्भ इति । प्रमाणतर्काभ्यां सत्तर्केण प्रमाण-

त्वाभिमतेन साधनस्वरूपालम्भ इति । वादे सर्वनिग्रहस्थाननिषेधे प्राप्तेऽभिमताष्टनिग्रहस्थानप्राप्त्यर्थं सिद्धान्ताविरुद्ध इत्यादिना विशेषोऽभिधीयते, न हिंस्यात् सर्वाभूतानीति निषेधे अग्निषोमीयं पशुमालभेतेतिवत्। तत्रार्थात् सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तोपग्रहः। सर्वहेत्वाभासानां च तेषां सिद्धान्ते निषेधेन तद्विरोधित्वात्। अवयवोपपत्त्या वामीषामुपग्रहः पञ्चग्रहणात्। न्यूनाधिकयोरित्यष्टनिग्रहाधिकरणो वादः।

*अन्ये* तु प्रमाणतर्काभ्यां साधनस्यैवान्वयो नोपालम्भस्येत्युपालम्भहेतुतया सकलनिग्रहस्थानप्राप्तौ सिद्धान्ताविरुद्ध इत्यादि परिसंख्या व्यवच्छेदकफलत्वेन रागतः सर्वपञ्चनखभक्षप्राप्तौ पञ्च पञ्चनखा भक्ष्या इतिवदित्याहुः।

ननु यथा रागप्राप्ता सर्वधनोपायप्रवृत्तिर्ब्राह्मणस्य याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदिति वचनेनेतरोपायव्यवच्छेदेन नियम्यते। तथात्रापीति रागप्राप्तमेव शशादिभक्षणं श्वादिभक्षणव्यवच्छेदेन नियम्यत इति न परिसंख्याया नियमाद् भेद इति।

अत्राहुः—विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।

तत्र चान्यत्र च प्राप्तौ परिसंख्याभिधीयते। इति।

अस्यार्थः, पाक्षिके विकल्पे सति नियमः। तथा च यद्विषया एकापि क्रिया तदितरविषया न संभवति, तत्र नियमः। यत्र चोभयविषयैका क्रिया संभवति तत्र परिसंख्या। यथा शशादिभक्षणक्रिया श्वादिमांसविषयाप्युभयमांसनिर्मितवटकादिनापि निर्वहतीति मिलितान्वयप्राप्तौ परिसंख्या। तथा च व्यवच्छेदफलकत्वेऽप्यनयोर्विकल्पसमुच्चयविषयतया भेद इति।

एवं च तत्त्वनिर्णिनीषाप्रयुक्ता कथा वाद इति सिद्धं लक्षणम्।

अत्र वादे चतुर्द्धा निग्रहस्थानगतिः। तथा हि किञ्चिदसंभावनीयमेव। यथा प्रतिज्ञाहानिः प्रतिज्ञासन्यासो निरर्थकमर्थान्तरमविज्ञातार्थमपार्थकमिति षट्कम्। यद्यप्येतान्यप्यत्र संभवन्ति तथापि अशक्तिसंग्रहणार्थम् न संभवन्तीति द्रष्टव्यम्। किञ्चित् संभवदप्यनुद्भाव्यम्। यथा प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभाविक्षेपोमतानुज्ञापर्यनुयोज्योपेक्षणमिति सप्तकम्। तत्त्वनिर्णयापरिपन्थित्वान् नैषामुद्भावनम्। किञ्चिदुद्भाव्यमात्रम्। ननु तदुद्भावनेनैव कथाविच्छेदः, यथा विरोधोऽप्राप्तकालम् न्यूनमधिकं पुनरुक्तमयथानुभाषणमपसिद्धान्त इति सप्तकम्। एषु यथसंख्यं योग्यताकाङ्क्षाविरहाकाङ्क्षितानासत्यनाङ्कांक्षितासत्युक्ता। प्रतिसन्धान स्वीकृतप्रमाणविरोधानां तत्त्वनिर्णयविघटकानां सत्त्वात्। किञ्चिच्च कथावसानिकम्। यथा हेत्वाभासा निरनुयोज्यानुयोगश्च साक्षादेव तत्त्वधीविरोधित्वात्। अत्र च वादिनोर्वीतरागतया स्थेयस्य धनाद्यलिप्सुतया च नानुविधेयस्यावश्यकर्तात द्रष्टव्यम्।।१।२।१।

वादद्वारा फलसंबन्धेन जघन्यतया वादानन्तरमुभयपक्षस्थापनावत्त्वेन वितण्डोत्कर्षात्ततः प्राग् जल्पलक्षणाय सूत्रम्—

**यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः।१।२।२।**

छलादिभिः साधनमुपालम्भो वा यत्र स तथोक्तः। छलादिभिस्तु प्रवर्तनं सदुत्तरापरिस्फूर्तौ कोटिभङ्गभिया शाखान्तरसङ्क्रमणाय। *बाह्यै*रविक्षिप्तैस्तत्त्वधर्मैर्झटिति सदुत्तरापरिस्फुरणे तत्त्वसंरक्षणाय च बोद्धव्यम्। एवं च वादव्यवच्छेदेऽपि न केवलं छलादिभिरेवात्र व्यवह्रियते किन्तु प्रमाणतर्काभ्यामपीति ज्ञापनार्थं यथोक्तोपपन्न इति। यथोक्तेनोपपन्नेन योग्येन उपपन्नो अर्थितो यथोक्तोपपन्न इति मध्यपदलोपी समासो मृगाक्षीपदवत्। तथा च वादलक्षणो-

क्तानां मध्ये उपपन्नेन प्रमाणतर्कसाधनोपालम्भ इति पदार्थेनैव योग्यतयाऽन्वयो लभ्यते । एवञ्च प्रमाणतर्काभ्यां कदाचिच्छलादिभिरपि साधनोपालम्भौ यत्र स जल्पः । न चैवमपि वितण्डायामतिव्याप्तिः । उभयपक्षस्थापनावत्त्वस्य विवक्षितत्वात् । नचैवमपि त्वया शब्दानित्यत्वं साध्यं परपक्षो दूष्यो, मयान्विताभिधानं साध्यं परपक्षो दूष्य इति समयबन्धेन क्लृप्तकथायां परस्परविरुद्धधर्मरूपपक्षपरिग्रहाभावाद् जल्पात्मिकायां विजिगीषुकथात्वेन पर्यवसितवितण्डायामतिव्याप्तिरिति वाच्यम् । तस्या निराकाङ्क्षभिन्नभिन्नार्थकत्वेनैकवाक्यत्वाभावे एककथात्वायोगात् । किन्तु विचारद्वयम् । तथा चोभयपक्षस्थापनावती विजिगीषुकथा जल्पः । न च जल्प एका कथा न भवत्येव वितण्डाद्वयशरीरत्वादिति वाच्यम् । एकैकस्य स्वपक्षस्थापनपरपक्षप्रतिक्षेपविषयशक्तिजिज्ञासायां तादृशसमयबन्धप्रवृत्तकथाया अवश्यवाच्यत्वात् । तस्य च वितण्डाद्वयेनानिर्वाहादेकदा कथाद्वयासंभवात् ।

तदयं जल्पप्रवृत्तिक्रमः । वादिना असाधने प्रयुक्ते नायं हेत्वाभासस्तल्लक्षणशून्यत्वादिति नायमसिद्धादिरिति वा तद्दूषणे उद्धृते उच्यमानग्राह्याणामप्राप्तकालार्थान्तरनिरर्थकापार्थकानामलाभे उक्तग्राह्याणां प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासंन्यासहेत्वन्तराविज्ञातार्थविक्षेपमतानुज्ञान्यूनाधिकपुनरुक्त[1] निरनुयोज्यानुयोगपर्यनुयोज्योपेक्षणापसिद्धान्तानामलाभेऽज्ञाना [न] नुभाषणाप्रतिभयेन तदुक्तं दूष्यभागमात्रमनूद्योक्तग्राह्याविशेषेण हेत्वाभासेन दूषयित्वा प्रतिवादी स्वपक्षस्थापनां प्रयुङ्क्ते । ततोऽनुक्तग्राह्यानामज्ञानाप्रतिभाननुभाषणानां तत उक्तमानग्राह्याणामलाभे तद्वचनार्थमवगम्यानूद्याभ्यहितत्वादादौ स्वपक्षदूषणभागं प्रति दूष्यहेत्वाभासातिरिक्ता-

1. अत्र वाराणसीमातृका पुनः समाप्ता भवति ।

नामुक्तग्राह्याणामलाभे तृतीयकक्षास्थितो वादी प्रतिवादिनः स्थापनां हेत्वाभासेन दूषयति । एवं कक्षान्तरेऽपि पूर्वपूर्वेषां दूषणानामनवतारे उत्तरोत्तरेषामुद्भावनमन्यथानवसरग्रहान्निरनुयोज्यानुयोगः स्यात् । हेत्वाभासानां तु प्रतिज्ञाहान्यादिभिः सहोक्तग्राह्यत्वेनाविशेषेऽप्यर्थदोषत्वे प्रणिधानगम्यतया चरममनुसन्धानमिति द्रष्टव्यम् ।१।२।२।

जल्पोपजीवकत्वात् तदनन्तरं वितण्डालक्षणाय सूत्रम्—

**स प्रतिपक्षस्थापनाहीनो वितण्डा ।१।२।३।**

स जल्पः [प्रतिपक्ष]स्थापनाहीनो द्वितीयपक्षस्थापनाभिधानहीनः सन् वितण्डा भवति । न च जल्पो वितण्डेति व्याहतम् । सत्यमनेन पक्षप्रतिपक्षस्थापनावद्विजिगीषुवचनसन्दर्भस्य परामर्शात् । तथा च प्रतिपक्षस्थापना हीना विजिगीषुकथा वितण्डेति लक्षणम् । तडित्स्वाहनने [तड़ि ताड़ने ?] इतिधात्वनुसारादपीदमेव लक्षणम् ।

नन्वन्ततः सत्प्रतिपक्षविषयेऽपि द्वितीयसाधनप्रवेशात् प्रतिपक्षस्थापनाहीनत्वं सम्भवतीति चेत्, न तस्य दूषणपरतया स्थापनात्वाभावात् ।

ननु परपक्षाघातमात्रेण न स्वसमीहितसिद्धिरिति नेदृशकथासम्भव इति वाच्यम् । एकस्य स्वप्रत्यवेक्षाशक्तेरपरस्य पराघातशक्तेः स्थैर्यादिभिः परिचिक्षितत्वात् । तस्याश्चैवमेव निर्वाहादिति ।१।२।३।

## [हेत्वाभासलक्षणप्रकरणम्]

अथ कथाप्रकरणानन्तरं तद्विषयेषु लक्षणीयेषु सदुत्तराच्छलादेरसदुत्तरतयोत्कृष्टानां हेत्वाभासानां लक्षणप्रकरणम् ।

ननु छलादेरिव हेत्वाभासानामपि परवाक्योद्भाव्यत्व-स्ववाक्यपरिवर्ज्यत्वाविशेषात् कुतः सदुत्तरत्वम्? हेत्वाभासत्वस्यार्थ-धर्मत्वेनोत्तराधर्मत्वाच्छलादीनां तु शब्दधर्मत्वादिति।

यद्वा हेत्वाभासानां परवाक्ये सम्भवात्तत्त्वम। छले तूद्भावित-दोषस्य तत्रासत्त्वादतत्त्वम्। तत्राक्षिप्तसामान्यलक्षणं विभागोद्देश-सूत्रम्—

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः।१।२।४।**

अत्र हेत्वाभास इति उद्देशपदं तावद् [अन्यद्] विधेयपदम्। तत्र हेत्वाभासा इति लोकप्रसिद्धार्थवादेनाहेतवस्तत्त्वेनाभासमाना इति सामान्यलक्षणं सूचितम्।

अत्र व्याप्तपक्षधर्मत्वं हेतुत्वम् तच्छून्यत्वं हेत्वाभासत्वमित्यर्थ इत्येके। तन्न समीचीनं, सत्प्रतिपक्षासाधारणयोरव्याप्तेः। किन्तु अनु-मितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं, यद्विषयत्वेन लिङ्ग-ज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वं वा लक्षणवाक्यार्थः।

अथ सिद्धसाधनादेरसंग्रहः, तस्य स्वरूपसत एव दोषत्वादिति चेत्—न, तस्य पुरुषदोषत्वेन हेत्वाभासान्यत्वात्।

ये तु [1]*खण्डनोद्धारकारादयो* व्याप्तिपक्षधर्मतानिश्चययोः साध्य-सन्देहस्याभावानप्यसिद्धीर्ब्रुवते, तन्मते अनुमितिप्रतिबन्धकरूपवत्त्वं लक्षणमवसेयम्।

यद्यपि सद्धेतोरपि स्वाव्यापकं प्रति हेत्वाभासतया केवला-

---

१. खण्डनोद्धारकार इह वर्धमानः। स्वयमपि खण्डनोद्धारमयं प्रणैषीत्। अत एव भ्रान्तिमपनीय वर्धमान एवात्र संग्राह्यस्तत्पदेन।

न्वरयेव हेत्वाभासत्वमिति न लक्षयितुमुचितम्, तथापि तत्पदप्रवृत्ति-निमित्तमेतदित्यवगन्तव्यम् । हेत्वाभासत्वसाक्षाद्व्याप्यासंकीर्णोपाधि-विभागश्चायमतो नोपधेयें संकरान्यतरासिद्धत्वाद्युपाधिभूयस्त्वे च विरोधः । विभागफलं तु प्रसिद्ध एवैको हेत्वाभासः सर्वव्याप्यत्वा-दिति न्यूनसंख्याया, उपाधिना समं षड् हेत्वाभासा इत्यधिकसंख्याया-श्च व्यवच्छेदनं विशेषलक्षणेभ्य एव सिद्ध्यति । तेषां समानासमान-जातीयव्यवच्छेदमात्रपरत्वात् । तत्र व्यभिचारोऽन्वयेन व्यतिरेकेण वा ? विपक्षवृत्तित्वमात्रग्राह्यतया स्वग्रह इत्यादौ साध्याभावेन व्याप्तिज्ञानापेक्षितया विरुद्धो विलम्बितज्ञान इति तदनु प्रतिसाधन—सकलरूपसंपत्तिनिरूप्यतया सत्प्रतिपक्षो दुर्ग्रह इति तदर्थं असिद्धोऽपि गमयतीति मतनिराकरणानन्तरप्रवृत्तिकतया दुर्ग्रहतरत्वादसिद्ध-स्तदर्थबाधकस्य बाधकत्वौपयिकानन्यथासिद्धत्वरूपमुपजीव्यत्वमव-गम्यावगम्यत इति दुर्ग्रहतमतया बाधश्चरममुद्दिष्ट इति ।१।२।४।

तत्रोद्देशक्रमसंगत्या सव्यभिचारलक्षणाय सूत्रम्—

**अनैकान्तिकः सव्यभिचारः ।१।२।५।**

तत्र सव्यभिचार इति लक्ष्यनिर्देशः । तथा चोभयकोट्युपस्थिता-[व्या]पकतावच्छेदकरूपवत्त्वं सव्यभिचारत्वं लक्ष्यतावच्छेदकमुक्तम् । तच्च रूपं साधारणत्वादि, उपस्थितिः संशयस्तथा हि साधारणोऽ-न्वयेन असाधारणो व्यतिरेकेणानुपसंहारी च पक्ष एवोभयसहचारेण संशायकः । शेषं लक्षणम् । अनवधारितानैकान्तिकपदार्थस्य सव्यभिचारत्वमपि लोकप्रसिद्धम् कदाचिल्लक्षणं भवेदिति पर्यायद्वय निर्देशेन दर्शितम् । एकस्मिन्नन्ते साध्यवति तदभाववति वा नियतो व्याप्य एकान्तिकः, अतथाभूतो अन्वयाद् व्यतिरेकाद्वा अनैकान्तिकः । एवं च यद्यपि सद्धेतुविरुद्धयोर्व्युदासो भवति तथापि कस्यचित् सद्धेतोरेवासाधारणीभूतस्यासंग्रहो भवतीत्यतः साध्यधर्ममात्रवृत्त्य-

न्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यस्य तल्लक्षणत्वे तात्पर्यम्। तत्राद्यपदस्य साध्यवन्मात्रवृत्तितया निश्चितान्यत्वे सतीत्यर्थः। तेन वर्तमानस्याप्यसाधारणस्यानित्यत्वे साध्ये शब्दत्वस्य साध्यवन्मात्रवृत्तितया निश्चितान्यत्वेन संशयः। यदा तु तथा निश्चयस्तदा नासाधारणतापि तस्य। एतच्च रूपमनुपसंहारिणि साधारणे चाव्याहृतमेव। सद्धेतोस्तु साध्यवन्मात्रवृत्तितया निश्चितत्वादेव व्यवच्छेदः। किन्तु विरुद्धे तु अतिव्याप्तिस्तद्वारणायोत्तरप्रतीकम्। न च नित्यः शब्दः शब्दत्वादित्यसाधारणस्य साध्याभाववन्मात्रवृत्तेरसंग्रह इति वाच्यम्। उत्तरप्रतीकस्यापि साध्याभाववन्मात्रवृत्तितया निश्चितो यो न भवतीत्यर्थकत्वात्। तथा च तत्रासाधारणपदप्रयोगस्तदा साध्याभाववन्मात्रवृत्तितया निश्चितान्यत्वमस्त्येव। यदा च तथानिश्चयस्तदा विरुद्धपदप्रयोग एव। न चावृत्तावतिव्याप्तिः वृत्तिमत्त्वे सतीत्यस्यापि विवक्षितत्वात्।

*अन्ये* तु इदं रूपमनैकान्तिकपदप्रवृत्तिनिमित्तमित्यावृत्त्यादि साधारणमपि न दोषाय। न चातिप्रसक्तं प्रवृत्तिनिमित्तमिति नेति वाच्यम्। यत्प्रकारिका हि प्रतिपत्तिः पदसाध्या तस्या एव प्रवृत्तिनिमित्तत्वात्, न तु प्रत्याय्यमात्रे वृत्तिस्तथा। ननु शक्यनिष्ठधर्मप्रकारिका पदतो धीरेव न भवतीति ब्रूमह इति चेत्—न पङ्कजं पद्ममित्यादौ पङ्कजनिकर्तृत्वस्याशक्यकुमुदादिनिष्ठस्यापि प्रकारत्वात्। ननु रूढिशक्तौ नायं प्रकारः, किन्तु योगशक्तौ। तत्र च कुमुदाद्यपि शक्यमेवेति क्वाशक्यनिष्ठता पंकजनिकर्तृत्वस्येति चेत्—न, योगाद्यवयवघटना तया च योगपंकजशब्दो वाक्यम्। न च वाक्यं शक्तमतः कुमुदादौ पंकजशब्दस्य योगे शक्तिरस्तीत्यसुष्ठूक्तम्।

सोऽयं सव्यभिचारस्त्रिविधः साधारणासाधारणानुपसंहारि-

भेदात्। उदाहरणन्तु अयं धूमवान् वह्निमत्त्वात्। शब्दो नित्यः शब्दत्वात्। न यदेवं न तदेवम्। सर्वमनित्यं प्रमेयत्वादित्यादि। तत्र सपक्षविपक्षवृत्तिस्वरूपः साधारणः। लक्षणं त्वस्य सपक्षविपक्षवृत्तित्वम्। सर्वविपक्षसपक्षव्यावृत्तस्वरूपोऽसाधारणः। लक्षणं त्वस्य सर्वसपक्षविपक्षव्यावृत्तत्वम्। असत्सपक्षविपक्षस्वरूपोऽनुपसंहारी। लक्षणमस्य व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभाववत्त्वे [सति] तत्त्वाभिमतत्वम्। यद्यप्येतेषां त्रयाणामपि व्याप्त्यधीरूपव्याप्यत्वासिद्धसंकरो भवतीति तस्यैवावश्यकत्वादनुगतत्वाच्चानुमानदूषणतोचिता तथापि तन्निर्वाहकत्वेनोपजीव्यत्वात् स्वतो दूषणसमर्थत्वाच्च पृथगेव दोषता। हेत्वाभासता त्वमीषामनैकान्तिकत्वेनैवेति सम्प्रदायः।

ननूद्भावितानैकान्तिकत्वनिर्वाहार्थं साधारणादेरवश्योपजीव्यत्वे प्रत्येकमेव दूषणसमर्थत्वे च पृथगेव हेत्वाभासतेति विभागव्याघातः।

न च संशायकत्वेन दूषकत्वात् त्रयाणामेकत्वम्। विपक्षवृत्तित्वेनोभयव्यावृत्त्या एकधर्म्युपसंहाराभावेन च त्रयाणामपि व्याप्तिग्राहकाभावधीमुखेन दूषकत्वात्। अन्यथा विरुद्धस्य तत्त्वज्ञानदशायां विपक्षवृत्तिताज्ञानेन दूषकस्य हेत्वाभासान्तरत्वं स्यात्। तत्र संशयासंभवात्। तस्माद् विपक्षवृत्तित्वं साधारणत्वम्। विपक्षसपक्षव्यावृत्तत्वमसाधारणत्वम्। अत्र तु सपक्षव्यावृत्तिमात्रमुद्भाव्यम्। विपक्षव्यावृत्तिं जानत एव परस्य तावतैव संशयोत्थानात्। लक्षणं त्वस्य सर्वपक्षव्यावृत्तत्वमेव। विरुद्धसंकीर्णेऽप्यसाधारणेऽस्याक्षतेः। अनुपसंहारिणस्तु व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभाव एव स्वरूपलक्षणं दोषबीजं चेति।

अत्राहुः—इदमित्थमेव। तथापि प्रत्येकमेव हेत्वाभासत्वेऽपि स्वरूपसता अनुगतेन रूपेण त्रयमेकीकृत्य विभागकरणात्। स्वतन्त्रेच्छस्य [मुनेः] नियोगपर्यनुयोगानर्हत्वादिति ।१।२।५।

उद्देशक्रमसंगत्या विरुद्धलक्षणाय सूत्रम्—

## सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ।१।२।६।

विरुद्ध इति लक्ष्यनिर्देशः, तद्विरोधीति लक्षणम् । तदिति साध्यम् । तेन साध्यविरोधी साध्यविरोधवान् साध्यासहचरित इति यावत् । एतावन्मात्रं चान्यसाध्यसहचरितेऽतिव्याप्तमत उक्तम् सिद्धान्तमभ्युपेत्येति । सिद्धान्तः पक्षः सर्वतन्त्रसिद्धत्वात् तमभ्युपेत्य प्रतिज्ञाय तेन साध्यविपरीतनियत इति दर्शिते साध्याभावव्याप्यो विरुद्ध इति लक्षणार्थः ।

ननु साध्याभावसहचरितस्यैव तदावश्योपस्थितस्य दूषकत्वान्नियमांशो व्यर्थः । न च साधारणव्यावर्तनायैतदुपादानम् । तस्याव्यावर्त्यत्वादिति चेत्—न, साध्यव्यापकाभावप्रतियोगित्वस्य तदर्थत्वात् । अशक्तिविषयोन्नयनस्य वा प्रयोजनत्वान्न वैयर्थ्यम् । न च हेत्वभावस्य साध्यव्यापकत्वबुद्धौ हेतोरपि साध्याभावसम्बन्धधीरावश्यकी । तथा च स एव दोषः क्लृप्तत्वादिति वाच्यम्, सामग्रीभेदेन तदा तज्ज्ञानाभावात् । अन्वयव्यतिरेकनियमयोः समानसंवित्संवेद्यत्वाभावात् । अन्यथा व्यतिरेकिणि विलयापत्तेरिति । उदाहरणं नित्यः शब्दः कृतकत्वादिति । न च निश्चितानन्वयत्वेनापार्थकमेवेदमिति वाच्यम् । अस्य विरुद्धज्ञानोत्तरज्ञेयत्वेन प्राथमिकस्य स्वतो दूषणसमर्थस्य विरोधस्यैव दोषत्वात् ।

*प्राञ्चस्तु* सिद्धान्तमभ्युपगमविषयं पक्षादिकमभ्युपेत्य प्रतिज्ञाय तद्विरोधी तदसाधको हेत्वाभासो विरुद्धः । न चैवमेकहेत्वाभासापत्तिः । यथा हि तृणपदस्य तृणमात्रप्रसक्तत्वेऽपि उलपपदबलादुलपे रूपविशेषपर्यवसायिता, तथा विरुद्धपदस्य सर्वसाधारण्येऽपि अनैकान्तिकादिपदसमभिव्याहारेण तेषामेव चतुर्हेत्वाभासोप-

स्थापकत्वे केवलेन च विरुद्धपदेनास्योपस्थितौ पञ्चत्वस्य निः प्रत्यूहत्वादित्याहुः ।१।२।६।

उद्देशक्रमसंगत्या प्रकरणसमलक्षणाय सूत्रम्—

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ।१।२।७।**

प्रकरणसम इति लक्ष्यनिर्देशः । लक्ष्यतावच्छेदकं च तुल्यबलत्वाभिमतत्वम् । प्रक्रियते साध्यत्वेन निर्दिश्यते वादिभ्यामिति पक्षप्रतिपक्षौ प्रकरणम् । तस्य चिन्ता जिज्ञासा यस्माद् भवति स प्रकरणसमः । तथा च प्रकृतसाध्यहेत्वोः किं तत्त्वमिति जिज्ञासाजनको हेत्वाभास इत्यर्थः । अनैकान्तिकस्तु साध्यमात्रे संशयद्वारा जिज्ञासाजनक इति न तत्रातिव्याप्तिः । सत्प्रतिपक्षाभ्यां च युगपदुपस्थिताभ्यां परस्परप्रतिबन्धेन निर्णयमजनयद्भ्यां प्रकृतसाध्यहेत्वोः किं तत्त्वमिति जिज्ञासा । अनुविधेयादिषु प्रत्येकमाधीयत एवेति नासम्भवोऽपि । न चैवमेवंरूपजिज्ञासाजनके अदृष्टादावतिव्याप्तिरिति वाच्यम्, विरोधिबोधकान्यगमकतौपयिकरूपसंपत्तिमत्मार्गायमाणेन प्रतिबन्धकार्थलिङ्गत्वाभिमतत्वस्यैतदर्थत्वात् । रूपं पक्षसत्त्वादि, तच्च यस्य यावद्गमकतौपयिकं तस्य तावदिहाभिप्रेतम् । एवं च तादृशरूपवत्तया ज्ञायमानेन बाधकेन कार्यप्रतिरोधो बाधितेऽप्यस्तीदं लक्षणं तत्रातिव्याप्तं स्यादतो विरोधिबोधकस्येति रूपसंपत्तिविशेषणम् । न च बाधो व्यावर्त्य एव न भवति, तत्रापि कार्यप्रतिबन्धस्य तुल्यत्वेन बाधप्रतिरोधयोरैक्यादिति चेत्—न, अबोधात् । साध्याभावप्रमा हि तावद्बाधः । सा चाप्रामाण्यज्ञानद्वारा अनुमितिप्रतिबन्धाय कल्पते । प्रतिरोधे तु व्याप्तिपक्षधर्मतयोभयलिङ्गसमूहावलम्बनं तदेव च सत्प्रतिपक्षितत्त्वम् । तद्विषयभूते लिङ्गे सत्प्रतिपक्षिते । इदमेव चात्र दुष्टिरिति स्वरूपद्वारभेदेन नानयोर्भेदस्यावश्यकत्वादिति ।

यद्यप्यत्रान्यतरत्र व्याप्त्यादिभङ्गो नियत एवेति स एवावश्यकत्वाद् दोषोऽर्हति, तथापि तस्याप्येतद्गम्यत्वाद् विशिष्यापरिचयाच्चायमेव तदुपजीव्यः प्राथमिकः, स्वतो दूषणसमर्थश्च पृथक् हेत्वाभास इति। उदाहरणं तु नित्यः शब्दः शब्दत्वादनित्यः शब्दः कार्यत्वादित्यादि। अत्र च प्रत्येकं समर्थाभ्यां साधनाभ्यां स्वस्य साध्यानुमितौ युगपद्भवन्त्यामशक्यात् संशयरूपायां प्रामाण्यग्राहकाप्रवृत्तेरनयोराभासताबीजम्। लक्षणं तु तुल्यबलबोधितसाध्यविपर्ययत्वमिति *तरणिमिश्राः*। तत्र, साध्यतदभावयोर्हि विरोधेन यथैकज्ञापकज्ञानप्रतिबन्धकं तथा साध्याभावव्याप्यज्ञानमपि साध्यज्ञानप्रतिबन्धकमेव। विरोधिविषयकज्ञानत्वस्यैव प्रतिबन्धकत्वे तन्त्रत्वात्।

एवं च यस्मात् प्रकरणचिन्ता स इत्येतावतैव लक्षणसिद्धौ यदि कश्चिदेवं ब्रूयात् किमिति प्रेक्षावान् निर्द्धारितोत्कर्षं हेतुं प्रायुङ्क्त इत्यत उक्तम् निर्णयार्थमपदिष्ट इति। यद्यपि नासौ झटिति निर्णयाय तथापि निर्णाययिष्यत्येवेत्यभिमानेन प्रयुक्त इत्यर्थः ।१।२।७।

उद्देशक्रमसंगत्या साध्यसमलक्षणाय सूत्रम्—

**साध्याविशिष्टः साध्यत्वात् साध्यसमः ।१।२।८।**

अत्रासिद्ध इति यदि लक्षणोक्रियेत तदा सिद्धिमात्रनिषेधे अत्यन्तासिद्ध एव लभ्येत नत्वन्यतरासिद्ध इति, अत उक्तम् साध्याविशिष्ट इति। तथा साध्यमन्यतरासिद्धम् तथायमित्यर्थः। एवं चान्यतरासिद्ध एव प्राप्येत, साध्यस्य तथात्वादत उक्तम् साध्यत्वादिति। तेनासिद्धिमात्रं विवक्षितम्। तेन व्याप्तिपक्षधर्मताभ्यां प्रमितिसिद्धिः। यद्वा अव्याप्यादेरपि तन्निश्चयेनानुमितिदर्शनात् ताभ्यां निश्चयः सिद्धिः तदभाववानसिद्ध इति लक्षणम्। तत्र पक्षानिश्चयादाश्रयासिद्धिः। यथेश्वरोऽकर्ता अशरीरत्वात्। यद्यपि परार्थानुमानेऽपार्थकमिदम्,

तथापि स्वार्थानुमानदिशा नेयम्। असङ्कीर्णमुदाहरणमस्य विशेषणासिद्धया यथा सिद्धसाधनम्। हिरण्मयोऽयं पर्वतोऽग्निमानित्यादिकं च पक्षे लिङ्गनिश्चयात्। स्वरूपासिद्धिः, यथा अनित्यः शब्दः चाक्षुषद्रव्यत्वात्। अयं च विशेषणविशेष्योभयासिद्ध्या त्रिविधः व्याप्तेरनिश्चयादन्यथासिद्धः यथा पर्वतोऽयं वह्निमान् नीलधूमादित्याहुः।

ननूक्तज्ञानविरहो न हेत्वाभासोऽन्यथा त्वत्प्रयोगान्न मम व्याप्त्यादिविशिष्टधीरित्युद्भावनमात्रेणैव वादी जीयेत। अस्तु तर्हि व्याप्त्यादिविशिष्टविरह एवासावनतिप्रसंगात्। हन्तैवं व्याप्त्यादिविरहस्य ज्ञानादुद्भावनाच्च स्वपरानुमितिप्रतिबन्धात्। सन्तु ते त्रय एव हेत्वाभासाः। न तु विशिष्टाभाव एको हेत्वाभास इति चेत्, सत्यम्, आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिश्च प्रत्येकमेव दोषः अनुमितिप्रतिबन्धकत्वात्। हन्त विशिष्टविरहोऽस्तु अत एव वर्तंय इति चेत्, हन्त हेत्वाभासोऽस्तु अत एव षष्ठ इत्यपि ब्रूयाः।

सामान्यधियोऽपि विशेषविषयतया विषयान्तर्भावश्चेत्, तुल्यं लिङ्गपरामर्शविषयाभावत्वेनार्थगतेन त्रयाणामेकीकृत्य महर्षिणा विभजनात् न विभागव्याकोपोऽपि, स्वतन्त्राभिप्रायस्य निषेद्धुमशक्यत्वात्। शास्त्रे परिभाषोच्छेदापत्तेश्च।१।२।८।

उद्देशक्रमसंगत्या बाधलक्षणाय सूत्रम्—

**कालात्ययापदिष्टः कालातीतः ।१।२।९।**

अत्रातीतकालत्वेनोद्देशेऽपि कालातीत इति पर्यायान्तरेण लक्ष्यनिर्देशः। कालात्ययापदिष्ट इति लक्षणम्। हेत्वपदेशस्य हि साध्यसन्देहविशिष्टः कालः। यदाहुः[न्यायभाष्यकाराः] न निर्णीते न चाज्ञाते न्यायः संशयिते पुनरिति। तस्यात्यये सत्यपदिष्टो निर्दिष्टः। न चैवं सिद्धसाधनातिव्याप्तिः। विरोधोल्लेखेन दूषकत्वस्य विवक्षणात्, तस्य

च तत्राभावात् । तथा च प्रमिताभावप्रतियोगिसाध्यकलिङ्गत्वाभिमतत्वं कालातीतत्वम् । एवं च विवक्षितविवेकेन साध्याभावप्रमेयदोषः ।

ननु बाधायामनेकान्तपक्षधर्मान्यतरनियमेन आभ्यामेवानुमानदूषणे कृतमनेनेति चेत्—न, पक्षे साध्याभावनिश्चयः साध्याभावज्ञानप्रमात्वनिश्चयात् । तथा चासिद्ध्यनेकान्तयोरुपजीव्यत्वेन स्वतो दूषणक्षमत्वेन च बाधस्य पृथक्त्वात् व्यक्तिसाध्यत्वेऽनुमानेन सपक्षे गृहीते साधनव्यापकभावमपि साध्यं बाधादेव न भवतीति बाधः पृथगिति *चिन्तामणिकृतः ।*

एते च हेत्वाभासा निश्चिता इव बाधबोधवर्जं सन्दिग्धा अपि दूषणमेव त्रिरूपनिश्चयस्यानुमितिहेतुत्वात् असिद्ध्यादित्रिकसंशये तदभावादिति द्रष्टव्यम् ।१।२।९।

## [छललक्षणप्रकरणम्]

एवं प्रयत्नेन परवाक्योद्भावनीयस्ववाक्यपरिहरणीयहेत्वाभासप्रकरणानन्तरं सत्समाधानोत्तरयोरस्फूर्तौ तदाभासेनापि वाच्यमिति तद्व्युत्पादनमवसरप्राप्तम् । तत्रापि जातेः स्वव्याघातकत्वेन जघन्यत्वात् छलस्य तात्पर्यतो दुष्टत्वेऽपि नात्यहितत्वादस्फूर्तावपि तदेव प्रयोक्तव्यम् । तस्याप्यस्फुरणे जातिरिति विशेषज्ञापनार्थं जातेः पूर्वं छलमुद्दिष्टमित्यनयैव संगत्यादौ छललक्षणप्रकरणम् ।

तत्र तत्सामान्यलक्षणाय सूत्रम्—

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ।१।२।१०।**

अर्थस्य शब्दप्रतिपाद्यस्य विकल्पोपपत्त्या विविधकल्पसंभवेन वचनस्य परोक्तस्य व्याघातो विहन्यते पर्यास अनेनेति विघातो दूषण-

मिति यावत् तच्छलम्। अर्थस्य पराभिप्रेतस्य विकल्पः विरुद्धार्थ-कल्पना सैवोपपत्तिस्तयेति वार्थः। तेन परातात्पर्यविषये शब्दतात्पर्य-सञ्चारेण दूषणवचनं छलम्। न च यत्रानभिहितत्वमारोप्य अभिहिते वांशाभिहितत्व[वाशब्दाभिहितत्व]मारोप्य दूषणवचनं तत्राति-व्याप्तिरिति वाच्यम् अननुभाषणविशेष एव तदन्तर्भावस्य पञ्चमे व्यक्तत्वात्।

*केचित्तु* जातिभिन्नं कल्पितदूष्यं दूषणं छलमतो नाव्याप्तिः। न च विशेषेष्वन्तर्भावशङ्का सामान्यच्छलस्य वाक्छलोपचारच्छलान्य-च्छलत्वेन तत्रैवान्तर्भावादित्याहुः। इदं चतुर्थमेव च्छलं विभाग-सूत्रस्थचकारेणानुक्तस्यैव समुच्चयनादित्यन्य इति १।२।१०।

तद्विभागाय सूत्रम्—

**तत्त्रिविधम् वाक्छलं सामान्यच्छलमुपचारच्छलं च ।१।२।११।**

तत् त्रिविधमिति विभागः, शेषं विभक्तानामुद्देशो विभाग-प्रपञ्चश्च। चकारस्तुल्यबलसमुच्चये। उक्तेष्वेव सकलछलान्त-र्भावात्। अत्रोक्तिपूर्वकत्वात् तात्पर्यज्ञानस्य तात्पर्यानुसन्धानपूर्वक-त्वादुपचारस्योद्देशक्रमनियमः। अत्र तावद् द्वयी छलगतिः, तात्पर्य-मात्रसंचारः पदार्थतात्पर्यसञ्चारश्च। तत्राद्यं सामान्यच्छलम्। अन्त्य-स्य चतुर्धा गतिः, शक्यान्तरे प्रयुक्तस्य संचारः, शक्यान्तरे शक्ये प्रयुक्तस्य उपचार्ये संचारः, उपचार्ये प्रयुक्तस्य शक्ये संचारः, उपचार्ये प्रयुक्तस्य उपचार्यान्तरे संचारः। तत्राद्ये गौः विषाणीत्युक्ते कथमगौः विषाणीति दूषणवचनम्। द्वितीयेऽग्निर्दाहक इत्युक्ते कथं माणवको दाहक इति। तृतीये मञ्चाः क्रोशन्तीत्युक्ते कथं काष्ठपुञ्जाः क्रोशन्तीति। चतुर्थे गङ्गायां घोषः प्रतिवसतीत्युक्ते कथं गङ्गा-सम्बन्धिनि मकरादौ घोषप्रतिवास इति। अत्राद्यद्वयं वाक्छलम्। मुख्य

वृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणं वाक्छलमिति लक्षणात् । अन्त्यद्वयमुपचारच्छलम् उपचारवृत्त्या प्रयुक्ते वृत्तिमात्रे दूषणमिति तल्लक्षणात् । ननु दूषकताबीजस्याभिप्रायारोपस्याभेदात् कथं छलानामनेकत्वमिति चेत्—न वयं दूषकताबीजभेदेन भेदमाचक्ष्महे, किन्तु शिष्यधीवैशद्याय विवक्षितभेदमाद्रियामह इति । अशक्तिविशेषोन्नायकतया अमीषां भेद इत्यप्याहुः ।१।२।११।

अत्रोद्देशक्रमसंगत्यादौ वाक्छललक्षणाय सूत्रम्—

**अविशेषाभिहितेऽर्थे वक्त्रभिप्रायादर्थान्तरकल्पना [[1]अनभिप्रेतार्थोद्भावनं] वाक्छलम् ।१।२।१२।**

तेन मुख्यवृत्त्या प्रयुक्ते अर्थान्तरे सञ्चार्य दूषणवचनं वाक्छलम् । शक्त्या प्रयुक्ते शक्त्यैवार्थान्तरे संचार्य दूषणवचनं वाक्छलमित्यन्ये । उदाहरणं तूक्तमेव । एतच्चोदाहरणभेदाद् बहुभेदम् । ।१।२।१२।

शब्दशक्त्युपजीवनादनन्तरं सामान्यच्छललक्षणाय सूत्रम्—

**संभवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम् ।१।२।१३।**

संभवतोऽर्थस्येति तात्पर्यसंचारे बीजमात्रप्रदर्शनमतिसामान्ययोगादित्यारोपबीजमात्रप्रदर्शनम्। असद्भूतत्वं चार्थस्यातात्पर्यविषयत्वेन। तेन शक्त्युपचारापुरस्कारे बहुतात्पर्याविषये शब्दतात्पर्यकल्पनया दोषाभिधानं सामान्यच्छलम् । यथा सम्भवत्यत्र ब्राह्मणे विद्याचारसम्पदित्युक्ते ब्राह्मणत्वेन विद्याचरणसंपत् साधनमसङ्गतम्

---

१. पदमिदं सूत्रे कुत्रापि नोपलभ्यते अत्र मातृकायां कथं समाविष्टमिति चिन्त्यम् वृत्त्यभावात् ।

न्नात्ये व्यभिचारादिति दूषणम्। यथा सारमेय इतो द्रुततरं यातीत्यर्थे श्वेतो धावतीत्युक्ते श्वित्री नैनेक्षीत्यर्थकल्पनया दूषणाभिधानम्। यथा वृद्धिं गतोऽसीत्यर्थे अश्व इत्युक्ते तुरगाभिप्रायेण नाहमश्व इति दूषणाभिधानम्।

न चैतदुभयमपि वाक्छलोदाहरणमिति वाच्यम्, शक्तिमुखप्रवृत्तत्वेन पदमात्रविषयत्वात्। श्वेत इति अश्व इति न पदे किन्तु वाक्ये संकेतवत् समूहत्वात्। सामान्यच्छलं च वाक्यमात्रविषयकमुदाहरणभेदाद् बहुभेदमिति द्रष्टव्यम्।१।२।१३।

शक्तितात्पर्योभयनिरूप्यत्वादुपचारस्यानन्तरमुपचारच्छल-लक्षणाय सूत्रम्—

**धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ।१।२।१४।**

धर्मः शब्दस्य प्रयोगः, तस्य विकल्पो द्वैविध्यम् मुख्यत्वभाक्तत्वभेदात्। तेन निर्देशे वचने उभयथा प्रयोगसंभवे भक्त्या प्रयुक्ते, अर्थस्य पदार्थस्य सद्भावप्रतिषेधः प्रतिषेधवचनम्। तेन भक्त्या प्रयुक्तस्य पदस्यार्थान्तरे तात्पर्यसञ्चाराद् दूषणाभिधानमुपचारच्छलम्। उदाहरणं तूक्तमेव। इदमप्युदाहरणभेदाद् बहुभेदम् ।१।२।१४।

अथ योग्यायै छलपरीक्षा। तत्र पूर्वपक्षसूत्रम्—

**वाक्छलमेवोपचारच्छलं तदविशेषात् ।१।२।१५।**

अत्रोपचारच्छलं विषयः तात्पर्यसञ्चारात् साधारणधर्मात् संशयः। प्रयोगे उद्भावनसौकर्यं प्रयोजनम्। पूर्वपक्षस्तु उपचारच्छलं वाक्छलाभिन्नं वृत्तिसञ्चारमुखप्रवृत्तत्वाद् वाक्छलवत्। यद्यपि

सामान्यच्छलेऽपि पूर्वपक्षयितुमुचितम् तथाप्युक्तेऽभ्युपेततद्भेद एव पूर्वपक्षीकृतोऽतो न तत् पूर्वपक्षितमिति द्रष्टव्यम् ।१।२।१५।

सिद्धान्तसूत्रम्—

**न तदर्थान्तरभावात् ।१।२।१६।**

तस्योपचारच्छलस्य वाक्छलभेदरूपार्थान्तरसद्भावादित्यर्थः। शक्तिभक्तिभ्यां विशेषोऽस्त्येव। न च तात्पर्यारोपमात्रस्यैव दूषकत्वेऽधिकवैयर्थ्यम्। न तावदिदमशक्त्युन्नयने अशक्तिविशेषस्यैवोन्नेयत्वात्। नापीतरभेदसाधने अन्योन्यस्यैव व्यवच्छेद्यत्वादिति भावः। १।२।१६।

विपक्षे बाधकमाह—

**अविशेषे किञ्चित्साधर्म्यादेकछलत्वप्रसंगः ।१।२।१७।**

एवमभ्युपपत्तौ छलत्रित्वमिति भज्येतेति सूत्रार्थः। एवमप्युत्पत्तुं छलद्वित्वमिति भज्येतेति सूत्रार्थः।

ननु छलपरीक्षा न युक्ता, अभिधानौपयिकजिज्ञासाजनकज्ञानविषयत्वरूपसङ्गतिर्द्वेधा अन्तर्भावलक्षणा बहिर्भावलक्षणा च। तत्राद्या अध्यायार्थतावच्छेदकोपाधिरूपा। अन्त्या अनन्तराभिधानप्रयोजिका। तत्र प्रथमा छलपरीक्षा या अत्राध्याये नास्ति, परीक्षाध्याय एव तदौचित्यात्। अध्यायानन्तर्भूतस्याह्निकप्रकरणयोरन्तर्भावा[भावा]त्। द्वितीया तु षोढाऽप्यत्र न भवति। स्मारकाभावेन प्रसंगाभावात्। तया विनैव प्रकृतिसिद्धेरुपोद्घाताभावात्। न च लक्षणानुपपत्तिः निर्णजनस्य परीक्षात्वेन छलोपयोगिनी तत्परीक्षेत्युपोद्घात एवास्तीति वाच्यम्। लक्षणानुपपत्तिनिर्णजनं हि परीक्षासाध्यम्, न तु लक्षणस्वरूपं तत्साध्यम्। अत्र च लक्षणमभिधीयत इति०० उपोद्घातः।

जात्यादिलक्षणजिज्ञासया प्रतिबन्धेनावसराभावात् छलपरीक्षाया उत्तरप्रबन्धं प्रत्यनुपयोगेन [हेतु]हेतुमद्भावात् प्रकृतोपपादकताया-स्तदुपपादकोपपादकतायाश्चाभावेन निर्वाहकत्वस्याभावात् । छल-परीक्षया सह पूर्वोत्तरप्रकरणाभ्यामेककार्यस्याप्यभावात् । ननु पूर्वो-क्तातिप्रसङ्गात् यत्रान्यदभिधीयते तत्रापवादलक्षणा सङ्गतिः । एवमन्य-त्राभिधाने प्रसक्ते यत्र तदैव स्थापनमिति कृत्वा तदुच्यते तत्र स्थानि-त्वलक्षणा सङ्गतिः । तत्कथं षोढा सेति चेत्-न, अपवादस्य पूर्वोक्त-निर्वाहकतयापोद्धात एवान्तर्भावात् स्थानित्वस्य च प्रसङ्ग एवान्त-र्भावादिति । मैवम्, शास्त्रे त्रिविधप्रवृत्त्या छललक्षणैरेव विषयतया परीक्षायाः स्मरणात् । प्रसङ्गसङ्गतेः सत्त्वात् । नहि पूर्वोक्तेन स्मारितत्वं तन्त्रम् । किन्तु स्मारितत्वमात्रं पूर्वोक्तत्वांशस्य गौरवेणा-प्रयोजकत्वादिति ।१।२।१७।

## [पुरुषाशक्तिलिङ्गविशेषस्य सामान्यलक्षणप्रकरणम्]

अथोद्देशक्रमसङ्गत्या पुरुषाशक्तिलिङ्गविशेषस्य सामान्यलक्षण-प्रकरणम् । तत्रापि प्रतिज्ञाहान्याद्यपेक्षयानुद्भटापराधतया परव्यामोह-हेतुत्वात् जातेरपि निग्रहस्थानत्वस्य लक्षणीयत्वाच्च प्रथमं जाति-लक्षणाय सूत्रम्—

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ।१।२।१८।**

साधर्म्येण वैधर्म्येण च प्रत्यवस्थानम् प्रतीपमवस्थानम् सा जातिरिति स्वरूपकथनेनोत्तरत्वं दर्शितम् । स्वव्याघातकमुत्तरं जातिरिति सामान्यं तल्लक्षणं सूचितम् । न चैतद्व्युत्पादनं शास्त्रम् विफलं परप्रयोग उद्भावनस्य स्वयमपीतरास्फुरणदशायां जात्यादि भेदनिन्दाकरणस्य फलत्वादिति ।१।२।१८।

निग्रहस्थानेनैव कथावसानात् अर्थतः पश्चात्तदभिधानमित्यु-द्देशक्रमसंगत्या तल्लक्षणाय सूत्रम्—

## विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ।१।२।१९।

विप्रतिपत्तिरयथार्था प्रतिपत्तिः, अप्रतिपत्तिः प्रकृताज्ञानम् । अनयोश्च परगतयोरयोग्ययोः स्वरूपेणोद्भावयितुमशक्यत्वात् । विभागसूत्रे निग्रहस्थानपदस्य प्रतिज्ञाहान्यादिपदसामानाधिकरण्यानुपपत्तेश्च । तदुन्नायकोपाधिपरतया सूत्रमिदं व्याख्येयम् । परस्परनैरपेक्ष्यसूचनायासः समा अनुगतरूपं च सामान्यलक्षणं उद्देशीभूतार्थतत्त्वज्ञानाभावलिङ्गत्वं निग्रहस्थानत्वमिति । १।२।१९।

इदानीं जातिनिग्रहस्थानविशेषलक्षणमुचितं तदप्रणयनसमर्थनाय सूत्रम्—

## तद्विकल्पात् जातिनिग्रहस्थानबहुत्वम् ।१।२।२०।

तदित्यनेन साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्याप्रतिपत्त्यादिलिङ्गस्य च परामर्शः । तस्य च विकल्पो नानात्वम् । तस्माद् बहुत्वमतस्तेषामेतर्हि विशेषलक्षणप्रणयनेऽभ्यर्हितप्रमाणादिपरीक्षाप्रतिबन्धः स्यादित्यधुना तदप्रणयनमित्यर्थः ।

तदेवं पदार्थाः प्रथमाध्याये षोडशोद्दिष्टाः लक्षिताः । वक्तः फलाभिसंबन्धश्छलमोक्षौ च परीक्षितौ ।

*इति महामहोपाध्यायश्रीवाचस्पतिमिश्रविरचिते*
*नय [न्याय] तत्त्वालोके प्रथमोऽध्यायः सम्पूर्णः ।*

---

# द्वितीयोऽध्यायः

## प्रथमाह्निकम् ।

विश्वविश्वासनिलयं विश्वमानपरीक्षकम् ।
द्वितीयमद्वितीयं च ध्यायामि मधुसूदनम् ॥

### [ संशयपरीक्षाप्रकरणम् ]

अथ प्रथमाध्याये यावदुद्दिष्टलक्षणपर्याप्ताविदानीं शिष्याकाङ्क्षा-क्रमेण परीक्षापर्वारभ्यते । तत्र परीक्षाया लक्षणानुपपत्तिनिर्णोजन-रूपतया तदपेक्षत्वाद् हेतुहेतुमद्भावः सङ्गतिः ।

यद्वा जात्यादिसामान्यलक्षणानन्तरं तद्विशेषलक्षणप्रसक्तौ शिष्याणां परीक्षाजिज्ञासायामुपेक्षानर्हतया प्रसङ्गः सङ्गतिः ।

अथ वा प्रमाणलक्षणानुपदमेव तदनन्तरायास्तत्परीक्षायाः प्राप्तौ प्रमेयादिलक्षणजिज्ञासया प्रतिबन्धेऽथ तत्सिद्धौ प्रतिबन्धक-जिज्ञासापगमलक्षणयोरवसरः सङ्गतिः[1] ।

तत्र प्रमाणपरीक्षैतदध्यायार्थ *इत्याचार्याः* । न चैवं संशयादि परीक्षाया बहिर्भावापत्तिः । संशयादिपरीक्षायाः प्रसङ्गसङ्गतत्वेनापि

---

१. अनुमितिसङ्गतिग्रन्थे षोढायाः सङ्गतेरुल्लेखो विद्यते—
सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते ॥
अत्र तु तत् त्रैविध्यं ग्रन्थकृता प्रदर्शितम् ।

एतदध्यायप्रतिपाद्यत्वोपपत्तौ मुख्यार्थत्वाभावात् । [1]छलापवर्गपरीक्षयोरिव प्रथमे । *अन्ये* तु छलप्रमेयान्यप्रथमसूत्रोद्दिष्ट यावत्पदार्थपरीक्षैतदध्यायार्थ इत्याहुः[2] ।

न च छलप्रमेयान्यपदार्थपरीक्षात्वेन न शिष्यजिज्ञासा किन्तु प्रमाणादिपरीक्षात्वेनेतीयमेवाध्यायार्थावच्छेदिका युज्यते, एतत्परत्वादध्यायस्यैति वाच्यम् । एत[या]पि प्रमाणपरीक्षाया मुख्यतामात्रमायाति न तु अध्यायार्थावच्छेदकत्वम् । सकलेनैतत्प्रतिपाद्यावृत्तित्वादिति ।

साङ्गोपाङ्गप्रमाणपरीक्षैतदध्यायार्थ *इत्यपरे* । कथमन्यथा आतिदेशिकी दृष्टान्तादिपरीक्षा संगच्छते । संशयादिवत् प्रसङ्गसङ्गतेरपि दृष्टान्तादिष्वभावादित्यर्थः ।

अत्रोद्दिष्टरूपवत्तया प्रमाणपरीक्षा प्रथमाह्निकार्थः । उद्दिष्टरूपातिरिक्तप्रमाणपरीक्षा द्वितीयाह्निकार्थः । तत्र प्रथमाह्निके नव प्रकरणानि तानि यथास्थानं वक्ष्यन्ते ।

तत्र प्रथमं प्रसङ्गेनोपोद्घातेन वा सङ्गत्या संशयपरीक्षाप्रकरणम् । उद्देशक्रमानुरोधात् प्रमाणपरीक्षाया मुख्यत्वेऽपि सर्वपरीक्षा संशयपूर्विकेति विभावयितुं प्रावृत्तिकक्रमप्राप्तप्रवृत्तिबाधरूपः प्रावृत्तिकक्रमबाधः ।

न च 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' [१।१।४०।] इति सूत्रादेतद्विभावनसिद्धिः । क्त्वा प्रत्ययस्य पूर्वकालमात्रशक्ततया संशयपरीक्षयोः कार्यकारण[भाव]स्य तत्सूत्रादलाभात् ।

१. प्रथमाध्यायद्वितीयाह्निके उद्देशलक्षणाभ्यां सह सूत्रकृतैव छलं परीक्षितम् । प्रथमाध्यायस्य प्रथमाह्निके अपवर्गलक्षणसूत्रभाष्ये भाष्यकृताऽपवर्गलक्षणपरीक्षा कृतेति संकेतयति वृत्तिकारः ।

२. यद्यपि वृत्तिकृद् विश्वनाथः द्वितीयवाचस्पतिमिश्रतोऽस्मात् परवर्ती । स च स्वमतरूपेणैवंविधमुल्लेखं करोति तथापि तस्मिन् सम्प्रदाये पूर्वमप्ये-

क्रमस्तावत् विततिः। स च शाब्द आर्थः पाठकः प्रावृत्तिक ऐच्छिकः स्थानिक आङ्गिकः प्राधानिकश्चेति अष्टधा[1]। तत्र शब्द-प्रतिपाद्यः शब्दः। यथा अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादौ।

आर्थः प्रयोजकः। यथा अग्निहोत्रं जुहुयात्, यवागूं पचतीत्यादौ। अत्र पाठकक्रमेण यवागूपाकस्य चरमत्वेन यदि चरमानुष्ठेयतैव स्यात् तदा पुरुषार्थत्वेनादृष्टार्थत्वापत्त्या अग्निहोत्रद्रव्याकाङ्क्षाया अपकर्षणकाले च कल्पयुतापत्तौ प्रथमानुष्ठानप्रयोजनानुरोधेन पाठकं क्रमं बाधित्वा आर्थः क्रमः प्रवर्तते।

यद्यप्यर्थानुरोधि क्रमत्वं शाब्दक्रमादावप्यस्तीति न तदार्थक्रमस्य लक्षणम् तथापि [शाब्द]क्रमबाधकक्रमत्वं तल्लक्षणमवसेयम्।

पाठपौर्वापर्योपस्थापितन्यायगम्यः क्रमः पाठक क्रमः। यथा समिधो यजतीत्यादिपञ्चके पाठक्रमानुसारेणानुष्ठानम्।

प्रथमप्रवृत्तिनियम्यः क्रमः प्रावृत्तिकः। यथा पशूननक्ति, पशूनभ्युक्षति, सप्तदश प्राजापत्या पशूनालभत इत्यत्राभ्युक्षणे क्रमाकाङ्क्षायामन्यस्य क्रमहेतोरनुपस्थितेरञ्जने येन क्रमेण प्रवृत्तिस्तेनाभ्युक्षणादेरपीति।

---

तन्मतसमर्थक आसीदिति पंक्त्याऽनयावसीयते। गौडमैथिलयोस्तु सम्प्रदायभेदः प्राचीनकालादेव प्रसिद्धोऽस्ति।

१. श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि षट् सन्ति मीमांसायां सर्वत्र प्रसिद्धानि क्रमपदाभिधेयानि। अत्र त्वैच्छिकाङ्गिकौ द्वावतिरिक्तौ तौ स्वीकृताविति अष्टधा स प्रतिपादितः। अस्य तु द्वयोराधिक्येन स्वीकृतयोर्मूलमनुसन्धेयम्।

पेच्छिको यथा पशूननक्तीत्यत्रैव कुतश्चिदेव पशुतोऽञ्जनमिच्छया नियम्यते।

स्थानिको यथा सोमेश्वरे प्रकृतौ प्रातःसवनेऽग्नीषोमीयः मध्याह्नसवने सवनीयः सायं सवने चानुबन्ध्यः पशुरिति स्थितौ तद्विकृति साद्यस्के यागे सह पशूनालभत इति पशुत्रयालम्भम् । सह द्वे देशिते कदा साहित्यमित्याकाङ्क्षाया अनिवृत्तौ आश्विनं ग्रहं गृहीत्वा सवनीयं पशुमुपाकरोतीत्यस्यापि तत्रैव श्रवणात्। आश्विनग्रहणसवनीयपशूपाकरणमेवानन्तर्यं विहिते । सवनीयस्य स्वकालत्याजकाभावात्। मध्याह्न एव साहित्ये सिद्धे तदैव आश्विनग्रहत्वात्। प्रागेवाग्नीषोमीये पशूपाकरणे श्रुतसाहित्यभंगः स्यात्। तदनन्तरन्तु तत्करणे श्रुतस्याश्विनग्रहः ग्रहसवनीयपशूपाकरणयोरानन्तर्यस्य भङ्गः स्यादिति तदुभयानुरोधात् सवनीयपशूपाकरणापेक्षयाग्नीषोमीयपशूपाकरणस्य पश्चाद्भावे सिद्धेऽपि अनुबन्ध्यपशूपाकरणस्य सर्वपश्चिमत्वं स्थायिक्रियानुरोधात्।

प्राधानिको यथा सारस्वतौ पुरोडाशौ भवत इति सरस्वती सारस्वतपुरोडाशयोरङ्गयोः क्रमाकाङ्क्षायां याज्ञाया सारस्वत्याः रुचेः प्राथम्यात् । सरस्वतीयागस्य प्रधानस्य प्राथमिकत्वात् । तत्पुरोडाशोऽपि प्राथमिक इत्यायाति ।

आङ्गिको यथा अत्रैव याज्ञाया रुचोऽङ्गी [रुचेरङ्गी] भूतायाः क्रमात् प्रधानयोः सरस्वतीसारस्वत्या [सारस्वतया]गयोः क्रम इति ।

स चायं संशयो [यन्निष्ठो विचाराङ्गम् त[द]ध्यायप्रकरणेऽध्यवसेयम् ।

इह संशयलक्षणं परीक्षाविषयः। लक्षणत्वेनोक्तत्वात् सम्यगसम्यग् वेति संशयः । प्रयोजनं तु संशयलक्षणपरीक्षातः संशयस्य तल्लक्षण॰

कारणरूपत्व्यवस्थिते संशयोत्पादनार्थं तत्साधने निरूढप्रवृत्तिः । अन्यथा कारणविशेषानिश्चये तत्राप्रवृत्तौ संशयानुत्पादे विचारे प्रवृत्तिरेव न स्यात् । प्रमाणादिपरीक्षाप्रतिबन्धकत्वात् ।

संशयलक्षणपरीक्षाजिज्ञासायाः तत्परीक्षया तन्निवृत्तौ प्रमाणादिपरीक्षाप्रवृत्तिः प्रयोजनमिति प्राञ्चः ।

तत्र पूर्वपक्षसूत्रम्—

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद् वा न संशयः ।२।१।१।**

यद्यप्यादौ सामान्यलक्षणमाक्षेप्तुमुचितम्, तथापि यावद्विशेषलक्षणाक्षेपेणैव तदाक्षेपोऽप्यर्थतः सिद्धः । निर्देशस्य सामान्याभावादिति न पृथक् तदाक्षिप्तम् ।

यतः समानधर्माध्यवसायात् अनेकधर्माध्यवसायाच्च संशयोऽतो न समानधर्मादनेकधर्माच्च स्वरूपतः संशयः । संशयलक्षणसूत्रे च नाध्यवसायपदं श्रूयते ।

[1]ननुपपत्तिपदादध्यवसायस्य शक्त्या लक्षणया वोपस्थितिरिति चेत् तत्राह—अन्यतरधर्माध्यवसायाद्वेति । वाकारोऽप्यर्थः । तेन समानादिधर्माध्यवसायेऽन्यतरधर्माध्यवसायाद् विशेषदर्शनात् न संशयो भवति । अतो व्यभिचाराच्च त्वदुक्तसंशयकारणमित्यर्थः ।२।१।१।

सूत्रम्—

**विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ।२।१।२।**

१. १।१।२२ तमे सूत्रे 'समानानेकधर्मोपपत्ते' रित्यत्रोपपत्तिपदात् ।

विप्रतिपत्त्यव्यवस्थयोरध्यवसायात् संशयो भवति । अतो न ताभ्यामपि स्वरूपसतीभ्यां संशयस्तल्लक्षणसूत्रे च नानयोर्ज्ञानं श्रूयत इत्याक्षेपार्थः ।२।१।२।

पुनःसूत्रे—

**विप्रतिपत्तौ च संप्रतिपत्तेः ।२।१।३।**

**अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ।२।१।४।**

न संशय इति चकारार्थः । स्वरूपविरोधाच्च विप्रतिपत्त्यव्यवस्थे स्त इति सूत्रयोरर्थः ।२।१।३-४।

पुनः सूत्रम्—

**[1]अत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ।२।१।५।**

तस्य संशयविषयस्य ये धर्माः साधारणा त्वर्धत्वादयो (?) असाधारणाः पनसत्वादयश्च तेषां सातत्येन सर्वदोपपत्तेः सत्त्वादत्यन्तसंशयः स्यात् । तस्याच्च साध्यत्वात् संशयस्येत्यर्थः । अत्र तद्धर्मपदे कर्मधारय इति *भाष्यकारादयः* ।२।१।५।

सिद्धान्त सूत्रम्—

**यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ।२।१।६।**

अत्रोपपत्तिपदस्य ज्ञानार्थतया यथोक्तानां समानधर्मादीनामध्यवसायादेव मया संशय उक्तः । नायं संशयः । स्वरूपसतः समानादिधर्माच्च संशय इति कृत्वा योऽसंशयप्रसङ्ग उक्तः सन् एवं विशेषापेक्षा-[द्]समानधर्मादितो मया संशये व्युत्पादिते तद्धर्मसातत्येन योऽत्यन्त-

१. "तथात्यन्तेति" विश्वनाथकेशवमिश्रकृतवृत्तिसम्मतः पाठः ।

संशयप्रसङ्ग उक्तः सोऽपि न। एवं व्यभिचारोऽपि न विशेषापेक्षा-[या] अपि कारणत्वात्। विशेषदर्शने च तदभावादित्यर्थः।

विप्रतिपत्त्यव्यवस्थयोराक्षेपसूत्रयोः नोक्तिसंभवोऽपि नहि सम्प्रतिपत्तिविषयीकृता विप्रतिपत्तिः। 'स्वीये[?]विषये न विप्रतिपत्तिरिति वक्तुं शक्यते। एवमव्यवस्थायाः व्यवस्थितत्वेन तद्विषयस्याव्यवस्थितत्वे न किञ्चित् खण्डितमिति *सूत्रकृता* नैतदुत्तरितम्।२।१।६।

ननु संशयवत् प्रयोजनमपि परीक्षाया मूलत्वेन पूर्वं परीक्षणीयमित्यतिदेशेन प्रयोजनादिकं परीक्षते—

**यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः।२।१।७।**

यत्र क्वचित् संशयः स्यात् तत्रैवमुत्तरोत्तरः प्रसङ्गः कर्तव्यः। उत्तरोत्तरप्रयोजनादिषु परीक्षाप्रसङ्गः कर्तव्य इति सूत्रार्थः।

नन्वेवमेतत्प्रकरणस्य न संशयपरीक्षकता। अन्येषामपि परीक्षणादिति चेत् न, औपदेशिकत्वाभिप्रायेण तदर्थत्वाभिधानात्। प्रयोजनादिपरीक्षायाश्चै[श्चा]तिदेशिकत्वादिति।२।१।७।

## [प्रमाणसामान्यलक्षणपरीक्षाप्रकरणम्]

अथावसरतः प्रमाणपरीक्षा। तत्रापि सामान्यलक्षणपूर्वकत्वात् विशेषलक्षणानामादौ प्रमाणसामान्यलक्षणपरीक्षाप्रकरणम्। प्रत्यक्षादिषु प्रमासाधनत्वं न वेति वस्तुत्वात् संशयः। विधिकोटिप्रसिद्धिस्त्वस्माकं प्रदीपादौ, *माध्यम*कस्यापि मते तेष्वेव सत्ख्यात्या। निषेधकोटिप्रसिद्धिरस्माकं चरमध्वंसे, तस्य तु वस्तुमात्रे। प्रयोजनं तु समस्तवस्तुसिद्धिः। तत्र पूर्वपक्षसूत्रम्—

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः।२।१।८।**

त्रैकाल्येत्यत्र स्वार्थे ष्यञ्। तथा च प्रमेयापेक्षया प्रमाणानां पूर्वापरसहभावानुपपत्तेः त्रिष्वपि कालेष्वसाधकत्वात्। तदयं प्रयोगः। यत् त्रिष्वपि कालेषु [अ]सद्धं तद्प्रमाणम् अवस्तुत्वात्। यथा शशविषाणम्, तथा च प्रत्यक्षादय इति। न चैतदनुमानस्य प्रामाण्याप्रामाण्ययोर्व्याघातः। न हि वयमप्रामाण्यं साधयामः। किन्तु त्वत्कल्पितानि प्रमाणानि त्वत् कल्पितैरेव प्रमाणैर्विचार्यमाणानि परस्परविरोधेन विलीयन्ते इत्युद्भावयाम इति कुतोऽस्मान् प्रति व्याघातविभीषिका !

न च प्रमाणानभ्युपगमे कथाप्रवृत्तिरपि न स्यात्, सिद्ध्युपलब्ध्योस्तन्मूलकत्वादिति वाच्यम्। यद्वचसि वाद्युद्भावितनिग्रहस्थानावगमः स्थेयस्य स पराजयी तदितरो जयीति समयबन्धादेव तदुपपत्तेः।२।१।८।

तत्र हेत्वसिद्धिपरीहाराय सूत्रम्—

**पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः।२।१।६।**

यया प्रमया प्रवृत्तिनिमित्तेव [०मित्त एव] प्रमेयपदं प्रमाणपदं च प्रवर्तेते सा प्रमेयस्य प्रथममुत्पद्यते तदनन्तरं वा युगपद् वा ?

तत्राद्ये [इ]दं सूत्रम्। अस्यार्थः, हि यतः प्रमेयात् पूर्वमादौ प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः। इन्द्रियार्थसन्निकर्षजा हि प्रमया [प्रमा तया] विशिष्यमाणं प्रत्यक्षं प्रमाणतां याति। सा च प्रमा अर्थजा। अर्थता च वस्तुता [नो]ऽर्थमाणतया। अर्थमाणता च लब्धात्मना प्रमाणेन भविष्यतीत्यन्योन्याश्रयोऽतो न तत्पूर्वं तत्सिद्धिर्भाव्येत्यर्थः।

अत्र यद्यपि प्रत्यक्षमात्राक्षेपः श्रूयते। तथापि तन्मूलकानामन्येषां तत्खण्डनेन खण्डनमिति तात्पर्यम् ।२।१।९।

द्वितीयकल्पं सूचयति—

**पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ।२।१।१०।**

प्रमेयापेक्षया प्रमाणानां पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः। प्रमेयत्वनिर्वाहिका हि प्रमा प्रमाणाधीना सा चेत् प्रमाणेभ्यः पूर्वमिति कृतं तर्हि तदर्थकैः प्रमाणैरित्यर्थः ।२।१।१०।

अन्त्यं दूषयति—

**युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ।२।१।११।**

गन्धादिषु षट्सु [पञ्चसु] अर्थेषु उत्पद्यमानेषु तद्बुद्धयोऽपि यदि तैः सहोत्पद्येरन् तदा क्रमवृत्तयो न स्युः। न चेष्टापत्तिः। युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति [१।१।१६] सूत्रविरोधात्, प्रत्यक्षविरोधाच्च।

तदयं प्रघट्टकार्थः। प्रमाविशिष्टं तावत् प्रमेयमुच्यते। तत्र यदि पूर्वं प्रमाणं पश्चात् प्रमेयम् अविशेषणीभूतप्रमाविरहात् प्रमेयानिर्वाहे नार्थेन्द्रियसन्निकर्षजा प्रमा। अतस्तद्विशिष्टं प्रत्यक्षं प्रमाणं न स्यात्।

अथ पूर्वं प्रमेयं पश्चात् प्रमाणम् तदा प्रमेयानिर्वाहिका प्रमा प्रमाणं विनैवेति कथं तस्मिन्नर्थे तत्प्रमाणम्।

अथ यौगपद्यं तदा न कार्यकारणभावः। एवं प्रत्यक्षे खण्डिते तन्मूलकान्यन्यान्यपि खण्डितानीति हृदयम्।

एवं प्रमाणादर्थसिद्धिरिष्यते अप्रमाणाद् वा ? नान्त्योऽपसिद्धान्तात्, विपरीतापत्तेरशक्यत्वाच्च । नाद्यः, येव हि प्रमा तेनोत्पद्यते तयैव हि प्रमाविशिष्टः प्रमाणतां याति अन्यया वा ? आद्ये अन्योन्याश्रयः । उत्पादितया हि प्रमया विशिष्टं प्रमाणम्, प्रमाणेन च प्रमोत्पाद इति ।

न च पूर्वपूर्वविशिष्टे प्रमाकरणे नोत्तरोत्तरप्रमोत्पाद इति द्वितीयपक्षोऽस्त्विति वाच्यम् । प्राथमिकघटादिप्रमायाः प्रमाजन्यत्वप्रसङ्गात् । अतज्जनकेन प्रमाणेन प्रमाया अजननात् । न च स्वाजनितैव प्रमा विशेषणम् । अजनितप्रमाया प्रमाकरणत्वरूपप्रमाणत्वानिर्वाहकत्वादिति ।२।१।११।

सिद्धान्तसूत्रम्—

**त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तेः [चि.] ।२।१।१२।**

त्रैकाल्यासिद्धिदोषोत्तरप्रतिषेधोऽप्यनुपपन्न इत्यर्थः । एवं च यद्यादौ प्रमाणासत्त्वं स्थापयसि तदा व्याघातो दोषः । प्रथमया स्थापितानि प्रमाणानि दूषयते तदा अहेतुसाम्यमात्रेण हेतुत्वापादनात् अहेतुसमेयं जातिरित्यर्थः ।२।१।१२।

प्रकारान्तरेण व्याघातमाह—

**सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ।२।१।१३।**

यदि सर्वं प्रमाणं प्रतिषेधसि तदा प्रतिषेधोऽपि न सिद्ध्येत् प्रमाणाभावादित्यर्थः ।२।१।१३।

एतदतिरिक्तानि प्रमाणानि प्रतिषेधामीति चेत् तत्राह—

**तत्प्रामाण्ये वा न सर्वप्रमाण[वि]प्रतिषेधः ।२।१।१४।**

यदि अन्यायावयवाश्रितानां प्रमाणानां प्रामाण्यमभ्युपैषि तदा न सर्वप्रमाणविप्रतिषेधः। तेषामेव सत्त्वाभ्युपगमात्। तथा च तेषां प्रामाण्याप्रामाण्ययोर्व्याघात इत्यर्थः। अन्यायावयवाश्रितानि प्रमाणानि प्रामाण्यान्येवान्यानि न तथेति न किञ्चिद् विनिगमकमिति भावः ।२।१।१४।

अनियमोपदर्शनमुखेन *मध्यमक*महेत्वसिद्धतोद्भावनपरं सूत्रम्—

[1]शब्दादातोद्यसिद्धिवत् तत्सिद्धिः[द्धेः] ।२।१।१५।

अनियमोपलक्षकं सूत्रम्। तेन यथा पश्चात्तनेन शब्देन प्राक्तनस्यातोद्यस्य वीणादेः, एवं प्राक्तनसामग्र्या पश्चात्तनस्य कार्यस्य, एवं सहभाविना धूमेनाग्नेः सिद्धिः। तथा अनियमेनैव प्रमाणप्रमेययोरपि सिद्धिरित्यर्थः।

तदयं तात्पर्यार्थः। प्रमाणप्रमेययोः स्वजन्यप्रमाविशेषणतामाश्रित्य यत्खण्डनं कृतं तद्दूरार्तम्। मया प्रमायास्तयोरुपलक्षणत्वाङ्गीकारात् पाकस्येव पाचके।

किञ्चैवं सकलापलापकः प्रयोजनादिकमप्यनङ्गीकुर्वाणः त्वमुपेक्षणीय एव स्याः ।२।१।१५।

ननु प्रयोजनज्ञानं कथाप्रवेशकम्। तच्चासत् ख्यातिरूपं ममाप्यस्त्येवेति चेत्, न। असत्ख्यातेरपि वस्तुभूतायास्त्वयानभ्युपगमात्। यत्पुनराक्षिप्तं यदनियतं न तत् पारमार्थिकम्। तामेव हि रज्जुं

---

१. त्रैकाल्याप्रतिषेधश्चेति न सूत्रांशतया समुद्धृतमिह। न्यायसूचीनिबन्धे तु सूत्रारम्भेऽत्र तत्पदस्योल्लेखो विद्यते। केशवमिश्रस्तु द्वितीयवाचस्पतिमिश्रममुं समनुगच्छतीहेति गौतमीयसूत्रप्रकाशे दृश्यते।

कश्चित् सर्प इति कल्पयति कश्चिद् धारेति । तत्र चायं प्रमाणप्रमेयभावः । तस्मादपारमार्थिक इति । समाधत्ते तत्—

## प्रमेया च तुलाप्रामाण्यवत् ।२।१।१६।

प्रमाणमपि तुलाप्रामाण्ये स्वकीये परिच्छेत्तव्ये यथा प्रमेया च भवति निमित्तसमावेशात् तथा प्रमाणप्रमेययोरपि तत एव तथात्वं स्यात् । यथैकस्मिन्नेवाश्वनिमित्तसमावेशात् अश्वो गच्छति अश्वं पश्यति अश्वेन गच्छति अश्वाय घासं प्रयच्छति अश्वात् पतति अश्वे तिष्ठतीत्यादौ । यतश्च व्यवहाराः तत्र कर्तृव्यवहारनिमित्तं स्वातन्त्र्यं तच्च प्राधान्येन धातुप्रत्ययान्यतराभिधीयमानव्यापारत्वम् । चैत्रः पचतीत्यत्राख्यातेन चैत्रगतव्यापारस्यैवाभिधानादेवं यथा देवयति पाचयतीत्यादौ प्रयोजकतदन्वयव्यवहारकः प्रयोज्यान्वय इति प्रयोजकस्यैव कर्मत्वम् । करणादेस्तु तदभिधीयमानव्यापारसंबन्धः कर्तृतैरश्चीन्येनैवेति *शाब्दिकाः* ।

तत्र, धातुप्रत्ययाभ्यां प्राधान्येन कर्तृगत एव व्यापारोऽभिधातव्य इति । अत्र कर्तृत्वस्यैव प्रयोजकत्वेनान्योन्याश्रयात् । अभिधीयमानत्वस्य च विशेषणत्वेऽभिधानदशायां सर्वतोऽप्यकर्तृत्वापत्तेः । उपलक्षणत्वे चेतरव्यावृत्तानुगतोपलक्ष्यसम्भवे तस्यैवावश्यकत्वेन लक्षणत्वापत्तेः । तदसंभवे चोपलक्षणत्वाभावात् । कृतिमत्त्वमेव कर्तृत्वम्, तदेव च स्वातन्त्र्यमिति ।

*केचित्तु* सकामस्थलोपकर्तृत्वमेव [?] । प्रायश्चित्तभेदस्तु कामरूपसहकारिवैकल्येन प्रत्यवायलाघवादन्यथा तत्र तस्य कारणतापि न स्यात् ।

किञ्च पचतीत्यादौ आख्यातस्य यत्नार्थकत्वेन पाकानुकूलयत्नवत्त्वमेव कर्तृत्वमनुभूयते । न चाख्यातस्यापि ज्ञानादिवाचकता केवल यत्नार्थकरोतिना विवरणादित्याहुः ।

*अन्ये* तु ज्ञानेच्छाकृतिसमवायित्वरूपकर्तृत्वमेव स्वातन्त्र्यम्। अत एव ज्ञानेच्छाव्यतिरेकेण कृतिमात्रजन्ये मत्तो भूतमिदं न तु मया कृतमिति व्यवहारोऽज्ञानकृतेऽकामकृते मय्यकर्तृत्वाभावात् प्रायश्चित्त विशेषश्चोपदिश्यते। अन्यथा कर्तृत्वाविशेषात् स न स्यात्। न चा-रामादिस्थले पापं न स्यात् अकर्तृकत्वादिति वाच्यम् तथात्वेऽपि हेतुत्वेन प्रत्यवायात्। न चैवं बाधक व्यतिरेकेणाचेतने कर्तृव्यापारस्य अशक्तिकतया गौणत्वापत्तिः। कृताकृतविभागेन कृञो यत्नार्थत्वेऽचेतने तद्गौणत्वस्य युक्तत्वात्। किञ्च व्यापारस्योपाधित्वेन गुरुत्वाद् यत्नत्वस्य च जातित्वेन लघुत्वात् तत्रैवाख्यातस्य शक्तिः कल्प्यते लाघवात्।

*केचित्तु* पचतीत्युक्ते किं चैत्रो मैत्रो वेति चेत्र विशेष एव संशयो भवति न तु स्थाली काष्ठं वेति प्रतीतिसिद्धम्। स च तदा घटते यद्याख्यातेन चेतनव्यापारप्रयत्न एवाभिधीयते। व्यापारमात्रा-भिधाने तु विशेषदर्शनाभावात् अचेतनकोटिकोऽपि संशयः स्यादिति समादधुः।

तन्न, संशयकोटिनियमस्य पाकक्रियायाश्चेतनकर्तृत्वाव-धारणप्रयुक्तत्वात्। तथानवधारणे च गच्छतीत्युक्ते किं देवदत्तो रथो वेति संशयस्य दृष्टान्तत्वात्।

कर्मत्वं तु तत्क्रियानधिकरणत्वे सति तत्क्रियाफलभागि-त्वम्। गन्तुर्गमनक्रियायाः कर्मत्ववारणाय सत्यन्तम्। न चैवं वृक्षात् पर्णं पततीत्यत्र पतनक्रियायाः फलभागाश्रयत्वात् वृक्षस्यापि कर्मसंज्ञा स्यात्, धात्वर्थतावच्छेदकस्योक्तत्वात्। पतेश्च तादृशं फलमधःसंयोगः स च न वृक्षनिष्ठ इति न तत्र तत्प्रसंगः। नन्वेवं नदी वर्धत इत्यादौ वृद्धेरवयवोपचयरूपक्रियाया अप्राप्तदेशप्राप्तिः फलमिति तद्भागि तीरं कर्म स्यात्। तथा च नदी तीरं वर्धत इति प्रयोगो भवेदिति चेत्

तीरं कर्मेति सत्यं धात्व[र्थता]वच्छेदकफलभागिन एव कर्मत्वात्। अस्य चावयवोपचयावच्छिन्नव्यापार एव शक्तिः वृधिधातुतस्तावन्मात्रस्यैव प्रतीतेः। अस्तु योक्तसंयोगावच्छिन्नावयवोपचयो वृधेरर्थः। तथापि न तीरं कर्म आश्रयावच्छिन्नसंयोगावच्छिन्नोपचयस्य धातुनैवाभिहितत्वेनाश्रयप्रतीत्यर्थके कर्मपदप्रयोगे आकाङ्क्षाविरहात्। तदुक्तम्—

धातोरर्थान्तरे वृत्तौ धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥ इति।

एवं पतिरपि आश्रयावच्छिन्नफलावच्छिन्नव्यापारमात्रस्यावगमात्पतारीति[?]तत एवाश्रयोपस्थितेराश्रयाकाङ्क्षाविरहात् अकर्मकः। अधःसंयोगावच्छिन्नस्पन्दस्य हि ततः प्रतीतेः। त्यजिगम्यादि न तथा। ततः कर्मावच्छिन्नव्यापारमात्रस्यावगमात् धातुशक्तिवैचित्र्यात् फलस्य चाधिकरणाकाङ्क्षायां कर्मविभक्तेरौचित्यात् धात्वर्थो विवक्षितः। अन्यथा पत्यर्थस्यैव कर्मणस्त्यजिनाभिधीयमानस्यावच्छिन्नं फलं पूर्वविभागः। तदाश्रयस्तरुरिति वृक्षात्पर्णं पततीत्यत्र वृक्षं पर्णं पततीति स्यात्। अत एव वर्धतिपतत्यादिना धातुना कर्तृनिष्ठत्वेन फलस्य प्रतिपादनादकर्मकत्वम्। गच्छतिना तु संयोगस्य फलस्योभयनिष्ठस्यापि कर्तृभिन्नग्रामनिष्ठस्यैव प्रतिपादनात् सकर्मकत्वम्। न चाश्रिततया फलस्य धातुवाच्यतायां मानाभावः। धातुनार्थतत्फलानभिधाने फलेन कर्तुरनन्वयापत्तेरिति। धातोर्न फलवाचित्वम् न वा फलाश्रयवाचित्वमिति मते तु त्यजिगम्यादेः कर्मभिन्ननिष्ठत्वेन फलस्य प्रतीतौ तात्पर्यमिति। तदाश्रयस्य प्रयोगावच्छिन्नशक्यतायां सकर्मकत्वं पतत्यादेस्तु कर्तृनिष्ठत्वेनैव फलस्य प्रतिपत्तौ तदिति न तत्र कर्मविभक्त्यन्तं अवन्तप्रयोग आकाङ्क्षाविरहादिति तस्याकर्मकत्वमिति प्राञ्चः।

अत्र वदन्ति जानातेरपि वर्द्धते(?)विनैव सकर्मकत्वं स्यात्। तस्यान्यापहितज्ञानवचनत्वात् पततेरिव त्यजतेश्च यथात्वं स्यात्। आश्रयोपहितफलोपहितव्यापारवचनत्वात्। न ह्यत्राधःसंयोगवत्तत्र पूर्वविभागो न प्रतीयत इति। किञ्चाश्रयान्वितफलान्वितव्यापारवचनत्वे पतेरन्विताभिधानाभ्युपगमेऽपसिद्धान्तः स्यात्।

अथ यत्र कर्तृक्रिययोरुपस्थितौ किमित्याकाङ्क्षा नोदेति सोऽकर्मक इति चेत्, न ह्यत्र नोदेतीत्यस्य पर्यनुयोगस्यानिवृत्तेः। यत्र कर्मविभक्त्यन्तरसुबन्तस्य विवक्षितान्वयप्रतिपादनाक्षमत्वम् तत्र सा नोदेतीति चेत् तर्हि तदेवाकर्मकत्वलक्षणमस्तु। न च तदपि घटं जानातीत्यतो घटकर्मकज्ञानधीः अभूतलं पततीत्यत्रापि भूतलकर्मकपतनवत्त्वधियोऽप्युत्पत्तिप्रसंगात्। तस्मात् न सकर्मकत्वमकर्मकत्वं वा धातूनां किन्तु पूर्वप्रयोगलभ्यमित्येवमुक्तम्। एवञ्चाश्रयान्वितफलवाचित्वम् तद्वाचित्वकल्पनापि कल्पनैवेति।

न चैवं घटं पश्यतीत्यादौ घटादेः कर्मता न स्यात् ज्ञानक्रियाश्रयजन्यफलानाश्रयत्वादिति वाच्यम्, संस्कारस्य तत्फलस्य तत्रापि सत्त्वात्। तदनुत्पादे तु विषयतामात्रं न तु कर्मतापि द्वितीया स्वकर्मण्यपि तत्र प्रयोगः साधुः। प्रयोगसाधुत्वं चैतदेव यत्कर्मविभक्त्या विना सकर्मकक्रियापदस्याप्रयोगः। तथा च तत्साधुत्वार्थमेवेयं द्वितीया न तु द्वितीयोक्तस्य कर्मत्वस्यात्राप्यन्वयोऽयोग्यत्वात्। तेनान्विताभिधानाक्षमत्वेऽपि व्याकरणमतार्थबोधनावश्यकप्रयोगकत्वमेव प्रयोगसाधुत्वम्। एवमात्मानं जानासीत्यादावपि द्वितीयाप्रयोगः साधु। अतीतादिस्थले तु प्रतियोगिवाचकघटादिपदेन लक्षणयोपस्थापितयोः प्रागभावप्रध्वंसयोः कर्मतेत्याहुः।

ननु ग्रामं गच्छतीत्यादौ ग्रामादेर्गमनाद्यकारकतया कथं तद्विशेषः कर्मता न कथमपि। कथं तर्हि द्वितीया कर्तुरीप्सिततमत्व-

मात्रपुरस्कारेण *पाणिन्यादिभिः* कर्मसंज्ञाविधानात्। अत्र तत्कर्मणि-द्वितीया। घटस्य ज्ञानक्रियाजनकव्यापाराश्रयत्वे सति ज्ञानक्रिया-जन्यसंस्काररूपफलशालित्वात्।

नन्विदं कर्मलक्षणं वा कर्मपदप्रवृत्तिनिमित्तं वा कर्मसंज्ञा-निमित्तं वा? नाद्योऽननुगमात्, चरमध्वंसान्यवस्तुत्वस्य च तल्लक्षणत्वाच्च। न द्वितीयः, इदमविदुषो वैयाकरणस्य कर्मपद-प्रयोगादननुगमाच्च। नान्त्यः, एतद्विनाप्यतीतादौ कर्मसंज्ञाविधाना-दननुगमाच्चेति।

अत्राहुः—नहि चरमध्वंसान्यवस्तुत्वपुरस्कारेण द्वितीया युज्यते कर्तर्यपि तत्प्रसङ्गात्। किन्तु तत्क्रियानाश्रयादियुक्ते। तथा च कस्यां क्रियायां कर्मेति जिज्ञासायामनुगतस्यैव प्रतिपिपादयिषितत्वात्। यथोक्तं तत्स्वरूपनिरुक्तिस्तल्लक्षणनिरुक्तिर्वेति।

तदिदं कर्म त्रिविधम्, निर्वर्त्यविकार्यप्राप्यभेदात्। तत्र कटं करोतीत्यादौ कटादि निर्वर्त्यम्। शरं लुनातीत्यादौ शरादि विकार्यम्। ग्रामं गच्छतीत्यादौ ग्रामादि प्राप्यम्। न च घटं जानातीत्यादि प्रकाश्यं कर्मान्तरं स्यात्। अत्र निर्वर्त्यविकार्ययोर्मुख्या द्वितीया कटकाण्ड-पदाभ्यां स्वावयवलक्षणात् तदवयवानां च यथोक्तलक्षणासम्भवात्। प्राप्य तु गौणी ग्रमादेस्तु तत्क्रियायामकारकत्वात्।

एवं करणव्यवहारनिमित्तं साधकतमत्वम्। एवं सम्प्रदान-व्यवहारनिमित्तं कर्मणोऽभिप्रेयमाणत्वम्। लक्षणन्तु सम्प्रदानत्वमेव। तच्च भक्तिश्रद्धापूर्वकदानक्रियोद्देश्यत्वम्। न च तस्य कारकतैव नास्ति दानक्रियायामिति वाच्यम्। अनुमतिद्वारा तस्यापि दाने हेतुत्वात्। देयोपनयस्य चानुमतावेवोपयोगः, एतदद्व्यतिरेकेण गौणः प्रयोग इति *नव्याः*।

*आचार्यास्तु* तत्क्रियाभिप्रेयमाणत्वमेव तत्क्रियासम्प्रदानत्वम् । तथा च सर्वत्र मुख्य एव प्रयोग इत्याहुः ।

एवं तत्क्रियाजन्यासंबन्धवत्त्वम् तत्क्रियायामपादानत्वम् । न चैवं वृक्षः पर्णं त्यजतीत्यत्र वृक्षस्याप्यपादानत्वं स्यात् । स्पन्दरूप-तत्क्रियाजन्यविभागाश्रयत्वादिति वाच्यम् । तत्क्रियापदेन तद्धात्वर्थरूपक्रियाया इह विवक्षितत्वात् । गर्भविभागश्च न पूर्वविभाग-विशिष्टपरिस्पन्दत्यजर्थजन्योऽसत आत्माश्रयात् ।

ननु तथापि तादृशक्रियाजन्यपूर्वसंयोगध्वंसरूपासंबन्धाश्रयतया त्यजिप्रयोगे पतेरपादानं स्यादिति । न चासंबन्धपदेन विभाग एवेह विवक्षितः । न च त्यागजन्यो विभाग इति वाच्यम् । एवं हि पततीत्यत्रापि अपादानता न स्यात् । नह्यधःसंयोगविशिष्टपरि-स्पन्दजन्यः पूर्वविभागः अधःसंयोगपूर्ववृत्तित्वात् । तथापि विशेष्य-परिस्पन्दनमात्रजन्यो भवतीति चेत् हन्त तर्हि त्यजिप्रयोगेतरमपा-दानं स्यात् विशेष्य परिस्पन्दनजन्यविभागाश्रयत्वादिति ।

अत्रोच्यते, धात्वर्थानवच्छेदकधात्वर्थीभूतपरिस्पन्दजन्यविभागा-श्रयत्वमपादानत्वम् । तेन त्यजतीत्यत्र त्यज्यर्थतापन्नपरिस्पन्द-जन्यो विभागस्तं परिस्पन्दमवच्छिनत्ति । पूर्वविभागावच्छिन्नपरि-स्पन्दस्य त्यज्यर्थत्वात् । अतो न वृक्षेऽस्यास्त्यजेरपादानम् । गमिपत्योस्तु न पूर्वविभागो धात्वर्थीभवन्तं परिस्पन्दमवच्छिनत्तीति तादृश-विभागाश्रयो पूर्वदेशादपादानतैवेति काननात् सौरभमायातीति नौप-चारिकप्रयोगः । कर्मपूर्वविभागयोरभावादिति ।

एवं धर्मसंबन्ध आधारत्वम् । स च सम्बन्धः संयोगसमवाय-विशेषणतान्यतमः । तेन कुण्डे बदरं, घटे रूपं, भूतलेऽभाव इत्यादि संगृह्यते । ननु धर्मत्वं विशेषणोपलक्षणोपरञ्जकसाधारणम् विशिष्ट-बुद्धिजनकत्वम् । तच्चाधारलक्षणमव्यस्तीति तत्संबन्धिनि आधेयेऽति-

व्याप्तिरिति चेत् न, अबोधात् । आधारत्वस्य केवलान्वयित्वात् । तस्यापि किञ्चित् प्रत्याधारत्वात् । कुण्डं प्रति बदरस्याधारता स्यादिति चेत्, न । प्रतिबध्यपतनानाश्रयत्वे सति पतनप्रतिबन्धकसंयोगाश्रयत्वस्य तदाधारलक्षणत्वात् । आद्यविशेषणेन च आधेयस्यैव व्यवच्छिन्नत्वात् । एवमीश्वरस्यापि ब्रह्माण्डाधारता संगच्छते । समवायेन त्वाधारता समवायित्वमेव विशेषणतया त्वाधारताज्ञप्त्यर्थमपेक्षणीयत्वमेव । यद्यपि भूतले घटाभावो गवि गोत्वसमवाय इत्यादौ समवायाभावाभ्यां स्वज्ञप्त्यर्थं गोत्वघटावप्यपेक्षणीयौ तथापि धर्मितयापेक्षणीयत्वं विवक्षितम् ।

नन्वेवं वायौ रूपाभाव इत्यादौ न स्वज्ञप्त्यर्थं वाय्वादिरपेक्षणीय इति स नाधारः स्यादिति चेत् न, तद्योग्यत्वस्योक्तत्वात् ।२।१।१६।

तदेवं त्रैकाल्यासिद्ध्या अनियतत्वेन प्रमाणाक्षेपे परिहृते सम्प्रत्यनवस्थया तदाक्षिपति—

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ।२।१।१७।**

प्रत्यक्षादीनां प्रमाणानां सिद्धिस्तु न तावत् स्वाधीना आत्माश्रयात् । नापि असाधारणजातीयाधीना इन्द्रियाणामतीन्द्रियत्वात् । नापि चतुरन्यतमविजातीयाधीना परस्पराश्रयत्वापत्तेः । तस्मात् पञ्च[म]प्रमाणाधीना वाच्या । एवं तस्यापि सिद्ध्यर्थं षष्ठाभ्युपगमेऽनवस्थेत्यर्थः ।२।१।१७।

निःसाधनैव प्रमाणानां सिद्धिरित्याशङ्क्य सूत्रम्—

**तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः ।२।१।१८।**

त्यज तर्हि प्रमेयसिद्धावपि प्रमाणापेक्षामित्यर्थः ।२।१।१८।

सिद्धान्त सूत्रम्—

**प्रदीपप्रकाशसिद्धिवत् तत्सिद्धिः ।२।१।१९।**

यथा प्रदीपप्रकाशोऽर्थप्रकाशनेऽप्यनेनैव प्रकाशेन प्रकाश्यते तथा प्रमाणादयोऽपि, अनुमानादिना प्रत्यक्षादीनां साधनात् । न च परस्परसापेक्षतया सर्वासिद्धिः व्यक्तिभेदात् । न चानवस्था दोषाय प्रमाणकत्वात् । तस्माद् यथा प्रदीपप्रकाशश्चतुर्णामन्यतमेन प्रसाध्यते तथा प्रमाणमपीत्यर्थः ।२।१।१९।

*केचिदाचार्यदेशीया*स्त्वेवमाहुः—यथा प्रदीपप्रकाशः स्वतः प्रकाशः तथा प्रमाणान्यपीति तन्मतं सिद्धान्ती दूषयति—

**क्वचित्तन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः ।२।१।२०।**

क्वचित् प्रकाशादौ प्रकाशान्तरस्य निवृत्तिः क्वचिद् घटादौ तदनिवृत्तिरित्यनेकान्तोऽनियमः । दृष्टान्तमात्रादरणाद् दृष्टान्तसमा चेयं जातिः । प्रकाशत्वस्यैकस्य ज्ञानदीपसाधारणस्याभावात् स्वरूपासिद्धिर्दृष्टान्तासिद्धिर्वेत्यर्थः ।२।१।२०।

## [ प्रत्यक्षपरीक्षाप्रकरणम् ]

अथ सामान्यविशेषयोर्हेतुहेतुमद्भावसङ्गत्या तदनन्तरमुद्देशक्रमानुरोधात् अनुमानपरीक्षातः प्राक् प्रत्यक्षपरीक्षाप्रकरणम् । तत्र फललक्षणद्वारकं तावत् प्रत्यक्षप्रमाणस्य लक्षणमुक्तम् । अतस्तदाक्षेपसमाधानाभ्यामेव प्रत्यक्षप्रमाणस्याक्षेपसमाधाने इत्यभिसन्धाय तथैव पूर्वपक्षसमाधाने इति द्रष्टव्यम् । तत्र प्रत्यक्षलक्षणसूत्रे यल्लक्षणत्वेनाभिमतं वाक्यप्रतिपाद्यम् तद्वस्तुलक्षणदोषरहितं न वेति

वाक्यार्थत्वसाधर्म्याद्विप्रतिपत्तेर्वा संशयः । प्रयोजनं च प्रमेयतत्त्वावगमः । तस्य परीक्षितप्रमाणसाध्यत्वात् । पूर्वपक्षस्तु यथाश्रुतोत्पादकाभिमतस्य सामग्रीत्वेन लक्षणत्वं कारणत्वमात्राद्वा ?

आद्ये सूत्रम्—

**प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ।२।१।२१।**

कारणान्तरस्यात्ममनोयोगेन्द्रियमनोयोगादेरनभिधानात् सामग्रीत्वेन लक्षणत्वं नोपपद्यत इत्यर्थः ।२।१।२१।

ननु इन्द्रियमनोयोगे ज्ञानहेतावावश्यकत्वेन तदधिष्ठानमनोयोगेनैवान्यथासिद्धेरिति चेत् न, मनःसाक्षात्कारकारणेन्द्रियसन्निकर्षाश्रयः साक्षात्कारकारणमूर्तत्वात् घटवदित्यनुमानात् तत्सिद्धिः ।

न चाप्रयोजकत्वम्, उपहतेन्द्रियस्य तदधिष्ठानमनःसंयोगेऽपि ज्ञानानुत्पत्तेरिन्द्रियमनःसन्निकर्षाश्रयस्य आवश्यकत्वात् प्रत्युताधिष्ठानमनःसंयोग एवान्यथासिद्धो जीवत्पुरुषमनसोऽधिष्ठानादन्यत्रेन्द्रियसंयोगस्यासम्भवित्वेन तदधिष्ठानयोगस्य नान्तरीयकत्वात् ।

द्वितीये तु ज्ञानमात्रेऽतिव्याप्तिः । सर्वधियामात्ममनःस्वरूपेन्द्रियसन्निकर्षजत्वात् । तज्ज्ञानार्थत्वविवक्षायां चात्मस्मृत्यनुमित्योरतिव्याप्तिरीश्वरज्ञानेऽव्याप्तिश्च । न चात्ममनःसंयोगो न ज्ञानकारणमिति वाच्यम्—

**नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ।२।१।२२।**

यत इति शेषः । सुगमः सूत्रार्थः ।२।१।२२।

नन्वात्ममनोयोगो न ज्ञानकारणम् । यावत्कारणसमवधाने

तदभावात् कार्याभावासिद्धेः। आत्ममनःसंयोगोत्पत्तिक्षणे चात्मनि ज्ञानानुत्पत्तौ मानाभावादिति चेत्—नैवम्, ज्ञानादिकं मूर्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वव्याप्यजातिमत् विभुविशेषगुणत्वात् शब्दवदित्यनुमानात् तत्सिद्धिः। स्नेहे व्यभिचारवारणाय विभुपदम्। न च शरीरमनःसंयोगेन सिद्धसाधनम् कार्यसमानाधिकरणस्यैवासमवायिकारणत्वे सम्भवति तद्व्यधिकरणस्यान्याय्यत्वात्।

न चैवमपि शरीराद्योगेन सिद्धसाधनम्, सुखादिप्रादेशिकताविरोधात्। विभुकार्याणामसमवायिकारणदेशाभिव्याप्तिनियमात्। न च व्यतिरेकं विना व्यतिरेकनियममनियतायाः कारणताया एवाभावे उपायसहस्रेणापि न तद्ग्रह इति वाच्यम्, धर्मिग्राहकमानेनात्ममनसोर्ज्ञानकारणत्वावगतौ परस्परं नैरपेक्ष्येऽपि ज्ञानोत्पत्तिप्रसक्तौ सन्निकर्षस्यावश्यमपेक्षणीयतया ज्ञानोत्पत्तिनियामकत्वेनात्मनःसंयोगस्याकारणत्वसिद्धेः। न चैवमपि व्यतिरेकाभावेन कारणताखण्डने न किञ्चित्वत्कृतमिति वाच्यम्। ज्ञानोत्पत्तिनियामकत्वेन कारणीभूतसिद्धात्ममनःसन्निकर्षे ज्ञानकारणताखण्डनस्य सिद्ध्यसिद्धिपराहतत्वादिति।

अथ सति भावमेव कारणताग्राहकं व्यतिरेकस्य तु दैवागतित्वेनावर्जनीयत्वमित्यात्ममनःसन्निकर्षागणनादसमग्रवचनं मन्वानस्य मतनिराकरणाय पूर्वपक्षसूत्रम्—

**दिग्देशकालाकाशेष्वप्येवंप्रसङ्गः ।२।१।२३।**

एवं सति भावमात्रेण कारणत्वे सति दिगादिष्वपि ज्ञानकारणतायाः प्रसङ्गः स्यात्। न चैवं तस्मादुक्तयुक्त्यैवात्मादिसन्निकर्षस्य कारणतया तदपरिगणनादसमग्रवचनमित्यर्थः।

यद्वा पृथगेवायमाक्षेपो दिक्कालयोरपि साक्षाद्धीकारणत्वा-

दिति। मूले च पार्श्वस्थोक्तिरेका सूत्रनिराकार्यदेशना कर्त्रभिप्राया। अन्यथैतन्निराकरणमपि सौत्रं स्यादिति। सिद्धान्तस्यौत्सर्गतः सौत्रत्वादिति *नव्याः।*

सूत्रमिदं पार्श्वस्थदेशयितुः सिद्धान्तस्त्वसौत्र इति *प्राञ्चः।* २।१।२३।

न सामग्रीत्वेनेदं लक्षणम्, न वा कारणत्वमात्रेण। यतोऽसमग्रवचनमतिव्याप्तिर्वा स्यात्। किन्तु इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति सूत्रप्रतीकमनुज्ञानात् प्रसक्तकारणमुपस्थाप्य साक्षात्कारित्वं तल्लक्षणमुपलक्षयतीति सिद्धान्तं हृदि निधायागमनमात्रेणात्ममनःसन्निकर्षस्याकारणताप्रसङ्गं परिहर्तुं सिद्धान्तसूत्रम्—

**ज्ञानलिङ्गत्वादात्मनो ना[1]नवबोधः।२।१।२४।**

आत्मनः समवायिकारणतया ज्ञानानुमेयत्वात्, समवायिकारणस्य चासमवायिकारणापेक्षायामात्ममनःसंयोगस्यैवोक्तयुक्त्या समवायिकारणत्वात् नानवबोधः। अपरिगणनमात्रेणाकारणताभ्युपगमोऽस्माकमित्यर्थः। लक्षणावसरेऽपरिगणनन्तु अनुमित्यादिसाधारणत्वादिति भावः।२।१।२४।

एवमगणनमात्रेणेन्द्रियमनःसन्निकर्षस्यात्ममनः सन्निकर्षस्य[च] अकारणताभ्रमनिराकरणाय सिद्धान्तसूत्रम्—

**तदयौगपद्यलिङ्गत्वाच्च न मनसः।२।१।२५।**

अनवबोध इत्यनुषज्यते। इन्द्रियमनःसंयोगस्येति प्रकृतम्। तेन

---

१. नानवरोध इति बहुसम्मत पाठः। विवरणकृत्तु नानवबोध इति पठतीति गङ्गानाथझा खद्योते कथयति। तदनुगामिनं चात्र वृत्तिकारं वयं पश्यामः।

मनसो युगपज्ज्ञानानुत्पत्तिलिङ्गकत्वाद् व्यासङ्गानुरोधेन क्रमिकेन्द्रिय-मनःसंयोगसिद्धौ इन्द्रियमनःसंयोगस्य नानवबोधः। अनुल्लेखमात्रेण नाकारणत्वाभ्युपगमोऽस्माकमित्यर्थः। लक्षणावसरेऽनुल्लेखस्तु सुखादिप्रत्यक्षाव्यापकत्वादिति भावः ।२।१।२५।

[1]इन्द्रियार्थसन्निकर्षस्य विशिष्योपन्यासे हेत्वन्तरमाह—

**सुप्तव्यासक्तमनसां चेन्द्रियार्थसन्निकर्षनिमित्तत्वात् । २।१।२६।**

ज्ञानोत्पत्तिरिति शेषः। यतः सुप्तो घनगर्जितादिना जागर्ति व्यासक्तश्च विषयान्तरं बुध्यते ततः सुप्तमनसां व्यासक्तमनसां च पुरुषाणां ज्ञानोत्पत्तेरिन्द्रियार्थसन्निकर्षनिमित्तत्वादिन्द्रियार्थसन्निकर्ष एव प्राधान्यादुपात्तो नान्य इत्यर्थः ।२।१।२६।

असमर्थसमासकरणं तु इन्द्रियार्थयोरेव पाटवलक्षणं प्राधान्य-मितरकारणापेक्षयेति ज्ञापयितुम् । विशेषोल्लेखे हेत्वन्तरम्—

**तैश्चापदेशो ज्ञानविशेषाणाम् ।२।१।२७।**

यतस्तैरिन्द्रियैरर्थैश्च ज्ञानविशेषाणां चतुर्ज्ञानां [चतुर्णां ज्ञानानां ?] रूपज्ञानमित्यादि व्यपदेशो भवत्यतः प्राधान्यात् तत्सन्नि-कर्ष एवोदाहृत इत्यर्थः ।२।१।२७।

सिद्धान्तिनैवमिन्द्रियार्थसन्निकर्ष एव कारणमुक्तमिति भ्रान्त आक्षिपति—

१. इतः पूर्वं सूत्रमेकं 'प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम्' इति भाष्यवार्त्तिकयोः तात्पर्यटीकायां न्यायसूचीनिबन्धे च दृश्यते। अत्र तस्यानुपलब्धिः गौतमीयसूत्रप्रकाशे केशवमिश्रेणाप्यस्वीकृतमस्य सूत्रत्व मिति धीधनैर्विचारणीयम् ।

**व्याहतत्वादहेतुः ।२।१।२८।**

विशेषोपादाने कारणत्वं न हेतुः । आत्ममनःसन्निकर्षादीनामकारणत्वस्य व्याहतत्वात् युक्तिविरुद्धत्वादित्यर्थः ।२।१।२८।

परिहरति—

**नार्थविशेषप्राबल्यात् ।२।१।२९।**

व्याघात इति विपरीतोऽनुषज्यते । मया कारणत्वे न विशेषेणेन्द्रियार्थसन्निकर्ष उपादीयते अपि तु प्राधान्येन । अतो न व्याघात इत्यर्थः ।

प्राधान्यमेव कुत इत्यत आह—अर्थविशेषप्राबल्यात् । अर्थविशेषस्य गर्जादेः प्राबल्यात् । सुप्तव्यासक्तयोः प्रबोधविषयान्तरज्ञानदर्शनात् प्राधान्यमिन्द्रियार्थसन्निकर्षे इत्यर्थः ।२।१।२९।

## [ प्रत्यक्षस्यानुमानत्वपरीक्षाप्रकरणम् ]

एवमतिव्याप्तिनिरासद्वारा परीक्षितेऽपि प्रत्यक्षलक्षणे नार्थविशेषप्राबल्यादिति सूत्रेण स्मारितस्य घटादेरर्थस्यातिरिक्तभागसत्त्वेन भागद्वयात्मकतामभ्युपेत्य तद्धियमेव भागदर्शनजां परभागानुमितिरूपां वर्णयित्वा ये प्रत्यक्षां धियमपह्नुवन्ति तन्मतं यावन्न निराक्रियते तावत् प्रत्यक्षलक्षणे आश्रयासिद्धिः परिहृता न भवतीति प्रसङ्गादिदानीं तद्द्वारापि प्रत्यक्षलक्षणपरीक्षैव । अवयविपरीक्षा तु साध्यत्वादित्यादिभिः । तत्त्वं परीक्षितुं प्रत्यक्षमिति ताष्ट[ तात्पर्य ? ]दर्शनात् तत्पर्यन्तं प्रत्यक्षलक्षणपरीक्षाप्रकरणमेकमेवेत्येके ।

प्रत्यक्षमनुमानमिति सूत्रे न ह्यवयवी नाम कश्चिदर्थान्तरभूत इति *टीका*दर्शनादित्यत्रावयविप्रकरणमित्यन्ये ।

इत एव सूत्रादारभ्य त्रिभिः सूत्रैः प्रत्यक्षस्यानुमानभेदसाधकं भिन्नमेवैतत्प्रकरणमित्यन्ये।

तत्र पूर्वपक्षसूत्रम्—

**प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ।२।१।३०।**

प्रत्यक्षत्वेनाभिमता वृक्षादिधीरनुमानम् अनुमितिः । कुतः? एकदेशग्रहणादुपलब्धेः । वृक्षादिधियामेकदेशग्रहणरूपलिङ्गदर्शनजत्वात् । न चासिद्धिः, कात्स्न्यैकदेशविकल्पात् । अतिरिक्तभागाभावेनायं भागो भागान्तरविष्टब्धः अम्लानपत्रादित्वात् । दृश्यमानोभयभागवृक्षैकभागवदित्यनुमानजत्वात् तद्बुद्धेः ।२।१।३०।

सिद्धान्त्याह एतावता प्रत्यक्षमात्रमपह्नूयते वृक्षादिप्रत्यक्षं वा? आद्यस्तावत्—

**न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ।२।१।३१।**

अर्वाग्भागस्याप्यन्ततस्त्वया प्रत्यक्षत्वेनेष्टत्वात् । तथा च बाधो दोष इति सूत्रार्थः ।२।१।३१।

द्वितीयं दूषयति—

**न चैकदेशोपलब्धिरवयविसद्भावात् ।१।२।३२।**

चोऽवधारणे, एकदेशमात्रस्य प्रत्यक्षेणोपलब्धिर्भवति, एवं न । कुतः? अवयविसद्भावात् अवयविनः प्रामाणिकत्वादित्यर्थः ।२।१।३२।

## [ प्रासङ्गिकमवयविपरीक्षाप्रकरणम् ]

अथावयविसद्भावादिति सूत्रेण स्मारिततया प्रसङ्गसङ्गत्या पूर्वप्रकरणोक्तप्रत्यक्षविषयवृक्षाद्यवयविसाधकत्वेनोपोद्घातसंगत्या चे-

दानीमवयविप्रकरणम्। तत्र विप्रतिपत्तेः मूर्तत्वं परमाणुभिन्नवृत्ति न वेति संशयः। प्रयोजनं प्रत्यक्षसिद्धिः। तत्र पूर्वपक्षसूत्रम्—

## साध्यत्वादवयविनि सन्देहः।२।१।३३।

साध्यत्वादसिद्धत्वादवयविनि आपाततः सन्देहो भवति। विचारानन्तरं तु व्यतिरेकावधारणमेव। तथा हि द्व्यणुकत्वाभिमतोऽवयवी एकावयवकोऽनेकावयवको वा। आद्ये स्वक्रियाविरोधः, अन्त्ये सोऽवयवे परिसमाप्य वर्तते अपरिसमाप्य वा? आद्ये अवयवान्तरे न वर्तते। अन्त्ये तदवयवावच्छिन्नेऽवयवे वर्तते अवयवान्तरावच्छिन्ने वा? आद्ये आत्माश्रयो, द्वितीये विरोधोऽवयवान्तरकल्पने चानवस्था।

अपि च न कार्त्स्न्यैकदेशाभ्यामन्यथावृत्तिः सम्भवतीति वृत्तिव्यापकत्वात्। कार्त्स्न्यैकदेशान्यतराभावात् वृत्त्यभावः। अपि च पाण्यादौ सकम्पे कम्पः शरीरवृत्तिर्नवा। आद्ये पादावच्छेदेनापि कम्पोपलम्भापत्तिरवयविन एकत्वात्। अन्त्ये चलाचलयोः पाणिशरीरयोः वस्त्रोदकवत् स्वतः सिद्धिप्रसंगः। तस्मादवयव्येव सकम्पो निष्कम्पश्चेति प्राप्तम्। एवं रक्ताञ्चलपटो रक्तो न वा? आद्ये मध्यावच्छेदेनापि रागग्रहणप्रसङ्गः, अन्त्ये अञ्चलावच्छेदेनापि नीरागपटग्रहापत्तिः। तस्मात् पटो रक्तोऽरक्तश्चेति प्राप्तम्। एवञ्च सावयवत्वे विरुद्धधर्मसंसर्गप्राप्तौ निरवयवत्वस्य सत्त्वव्यापकत्वसिद्धौ यत् सत् तन्निरवयवं यथा विज्ञानम्। सन्तश्च नीलादयोऽनुभूतावसितेति निरुपाधिसम्बन्धहेतुनावयव्यभावसिद्धाववयवीति प्रलापमात्रमिति पूर्वपक्षिणामाशयः।

सिद्धान्तिनां तु अवयवसिद्ध्यसिद्धिपराहतान्येतानि दूषणानीति हृदयम्।

ननु कथमयं व्याघातो धर्मिणि वादिनोरवि[प्रति]पत्तेः।

स्वरूपादि परमाणुपुञ्जो वावयवी वेत्यन्यदेतत् । स एवैकरूपो नोभयसिद्ध इति चेन्न, एवं हि पर्वतेऽपि ब्रह्मविवर्तादित्वेन विप्रतिपत्तौ प्रसिद्धानुमानमपि विलीयेत । अथ पर्वतस्य ब्रह्मविवर्तादित्वेऽपि साध्यस्यापि विवर्तादिरूपस्य निःप्रत्यूहासिद्धिः। इह तु परमाणुपक्षत्वे सिद्धसाधनमवयविपक्षत्वे चाश्रयासिद्धिर्बाधः। स्थूलोपलब्धिविषय-त्वस्य च पक्षत्वे विरोध इति चेत्, शङ्खशुक्लत्वानुमाने पीतोपलब्धि-विषयस्यैवात्र पक्षत्वात्, तस्यैव च परमाणुत्वावयवित्वसन्देहे निर-वयवत्वस्य च साध्यत्वात्। तर्हि स्थूलोपलब्धेरबाध इति चेत् तस्या आभासत्वात्। तदेव तर्हि साध्यतां किं निरवयवत्वसाधनेनेति चेत्, न। निरवयवत्वसाधनेनैव स्थूलप्रतीतेराभासत्वस्यापि साधनात् । पीतोपलब्धेरिव शङ्खशुक्लत्वानुमानेन। नाप्यत्र स्थूलत्वेन पक्षत्वम्, येन सिषाधयिषितधर्मविरोधः स्यात् । किन्तु स्थूलोपलब्धिविषय-त्वेन। न च स्थूलोपलब्धिविषयत्वमेव निरवयवत्वविरोधि । स्थूलः शब्द इति धियो निरवयवेऽप्यङ्गीकारात्। स्थूलोपलब्धिविषयमात्रस्य पक्षत्वेंऽशतः सिद्धसाधनम् निरवयवस्यापि तत्प्रतीतिविषयत्वात्। स्थूलप्रमितिविषयस्य पक्षत्वे बाध इति चेत् न, उद्देश्यप्रतीतेरसिद्धतयां-शतः सिद्धसाधनस्यादोषत्वात् । पक्षतावच्छेदकनानात्व एव तस्य तथात्वात्। अस्तु वा घटत्वेनैव पक्षत्वम्, घटत्वं तु व्यावृत्तिरूपं विधिरूपं वेत्यन्यदेतदिति। मैवं, धर्मिविकल्पस्य बाधतात्पर्यकत्वात्, घटादावेकस्थूलत्वस्य प्रत्यक्षसिद्धत्वात्। विरुद्धधर्माध्यासेन तदपह्नवे नानादिग्देशसंबन्धिनः परमाणोरपि तवैकत्वं न सिद्ध्येत् । एवं साध्यनिरवयवत्वमपि किं मूर्तानुत्पादकत्वमिति चेत् तव सभाग-सन्तान इ[व]वादिनः पूर्वलीनपरमाणोरुत्तरलीनपरमाणूपादान-त्वाभ्युपगमे स्वमतेन बाधात्। अनेकमूर्तानुपादानकत्वमिति चेत्, न। प्रतियोग्यप्रसिद्धेर्हेतोरप्रयोजकत्वप्रसङ्गात् । एवं च न चलाचल-विरोधोऽपि । अवयवचलनेऽप्यवयविनोऽचलत्वात् । कर्मणो व्याप्य-वृत्तितानियमेन पाण्यवच्छेदेन शरीरं कम्पत इति प्रतीतेः पाण्यादि-

मात्रविषयत्वाभ्युपगमात् । न चैवं वह्न्युदकवदसंबद्धयोर्विद्यमानतारूपा स्वतः सिद्धिः स्यात् । तत्र तदसमवेतत्वस्योपाधित्वात् । न चासंबद्धयोर्विद्यमानता स्यादिति वचोभङ्ग्या तदसमवेतत्वमेवोपपादयामः । तथा च तदेव कथमुपाधिः स्यादिति चेत् न, अप्रयोजकतया तर्कनिदानशैथिल्यस्यैवोपाधिना स्फुटीकरणात् । न चावृतानावृतविरोधोऽपि किञ्चिदवयवावरणेऽपि । अवयविनोऽनावृतत्वात् । न चैवमनावृतसर्वाङ्गवदस्याप्यविकलग्रहप्रसङ्गः । कोऽयमविकलग्रहः अवयविग्रहो वा, तत्परिमाणग्रहो वा, तद्वृत्तिपरमाणुत्वव्याप्यजातिग्रहो वा, नाद्यौ, अविष्टत्वात्[?], अवयविसन्निकर्षमात्रस्यैव तद्भमानहेतुत्वात् । नान्त्यः, तद्व्यञ्जकस्य तावदवयवग्रहस्याभावात् । ननु अवयविसन्निकर्षस्य तन्त्वात्मकत्वे परमाणुमात्रान्तरितो गृह्येत । बहुतरावयवावच्छेदेन च तत्सन्निकर्षस्य तद्धेतुत्वे एकतन्तुकः पटो न गृह्येत । न चैकतन्तुकःपटो नास्त्येव तद्धीस्तत्र स इति वाच्यम्, बाधकाभावात् । न च समवायिकारणाभावो बाधकः । तानप्रतानचरमध्वंसयोगस्यैवासमवायिकारणत्वात् । न चैक एव तन्तुः तानप्रतानभावापन्नस्तस्य च कथं संयोगः स्यादभावादिति वाच्यम् । महातन्तोर्हि द्वौ भागौ क्षुद्रतन्तूनां संयुज्य पटमारभेते । न चैवमेकस्मिन्नेव तन्तौ तन्तव इति धीः स्याद् बहोरुभयान्तावच्छेदस्य तद्व्यञ्जकत्वात् । न चैवमपि पटस्य महातन्तोः क्षुद्रतन्तुद्वयवृत्तिता न स्यात् मूर्तानां समानविरोधात् । न ह्येषा परिभाषा किन्तु प्रत्यासत्तिविरोधो मूलम् । स चेह नास्ति तन्तोरन्यथासंस्थं प्रत्यासत्तिरन्यथा च पटस्येति । कथमन्यथैकस्मिन्नेव तरौ शाखामृगो संयोगेन वर्तते ।

*केचित्तु* अंशुसंयोगोऽसमवायिकारणम् । अंशुतन्तुसंयोगस्तथे*त्यपरे* । अंश्ववयवसंयोगस्तथे*त्यन्ये* । नैवम्, अवयवीन्द्रियसंयोगविशेषस्यैव तन्त्वात्मकत्वात् । स च फलैकोन्नेयः ।

यद्वा बहुतरावयवसंयोगेनोपलक्षितो विशेषोऽवयविघटक-

त्वमिन्द्रियसन्निकर्षो ग्राहकः। अवयवत्वं च साक्षात्परम्परासाधारणम्। अतो द्व्यवयवस्य पटस्य ग्रहणम् कथञ्चिद् भागे हेतुघटकत्वं न गृह्यते व्यञ्जकाग्रहात्। नापि रक्तारक्तविरोधः पटस्य तदवयवानाञ्च रक्तत्वात्। तर्हि कथं रक्ताञ्चलावच्छेदेनापि श्वैत्योपलम्भः अवयवश्वैत्यस्य महारजनरागाभिभवात्। अवयविश्वैत्यस्य चानभिभूतावयवश्वैत्यव्यङ्ग्यत्वात्।

ननु रक्तारक्तरूपावयवारब्धेऽवयविन्यस्तु रक्तारक्तविरोध इति चेन्न तत्रावयविनश्चित्ररूपत्वात्। तथा हि न तावदवयवनिरूपक एव चाक्षुषताविरोधात्। न च रूपवत् समवेतत्वं तद्धेतुः चित्रत्वाभिमतत्र्यणुकपरम्पराङ्कितस्याप्यभावात्। न चावयविनि व्याप्यवृत्तीनि नानैव रूपाणि अनुभवविरोधात्। नाप्यव्याप्यवृत्तीनि नानाव्याप्यवृत्तिजातीयताविरोधात्। न च व्याप्यवृत्तावेकस्यामेकरूपव्यक्तौ शुक्लत्वादिनानाजातयः समवयन्ति। विरुद्धजातीयानामेकत्र समावेशादर्शनात्। न चाव्याप्यवृत्तिः व्याप्यवृत्तिस्वभावविरोधात्। अन्यथा पृथिव्यामेवावच्छेदभेदेन जलत्वादिवृत्तिसम्भवे द्रव्यान्तराण्यपि विलीयेरन्। विनिगमनाविरहस्तु समान एव। तस्मादगत्यैव प्रचरद्रूपविजातीयरूपं तस्मिन्नवयविनि कर्बुरप्रतीतिबलादास्थेयम्। तच्चैकजातीयान्न सम्भवतीति अगत्यैव विजातीयानामप्यारम्भकत्वम्।

नन्विह वृक्षे शाखायां कपिर्मूले च नेति प्रतीतिबलात्तस्यैव तदैव तद्देशत्वात्तद्देश इति विरोधः। नहि संयोगस्याव्याप्यवृत्तितया तदुपपत्तिः। भावस्य स्वसंसर्गाभाववैदेश्यनियमादिति चेन्न, यथेह कपाल आसीद् घटो भविष्यति घट इति प्रतीत्या कालभेदेन प्रतियोग्यभावयोरेकत्र वृत्तिस्तथेह वृक्ष इदानीं कपिसंयोगतदभावाविति प्रतीतिबलाच्छाखामूलावच्छेदेन तदुभयाधिकरणत्वविरोधात् यथाभावाभावयोः परस्परविरहात् सत्त्वं दर्शनबलादास्थीयते। तथा आश्रयैकत्वनानात्वे अपि।

ननु भावाभावयोरेव कथं तथा अभावनिषेधात्मकत्वे भावस्य भावत्वव्याकोपात्। न ह्यभावादन्यो निषेध इति। उच्यते, घटप्रागभावस्य घटभिन्नप्रध्वंसे घटध्वंसस्य घटभिन्नप्रागभावे स्वीकृते तयोरपि पूर्वकावेव प्रागभावप्रध्वंसौ अतिरिक्तौ वा? अन्त्ये अनवस्था। आद्ये प्रथमत एव परस्परविरहरूपत्वमङ्गीक्रियतामलं द्वितीयकक्षयापि।

ननु घटातिरिक्तौ तत्प्रागभावध्वंसाभावौ आवश्यकौ। कथमन्यथा घटध्वंसकालेऽपि तत्प्रागभावो घटप्रागभावकाले तद्ध्वंसो नोन्मज्जेत। प्रतियोगिरूपस्वविरहाभावादिति चेत्, न प्रागभावध्वंसानामुभयोभयविरोधितया प्रागभावकाले तस्यैव विरोधिनः सत्त्वादेवं ध्वंसेऽपि अतिरिक्ताभावे स्वीकारेऽप्यनुन्मज्जनो विरोधिसत्त्वैव बीजम्।

ननु विरोधः परस्पररूपता वा परस्पराभावविरहता वा? नाद्यः, प्रागभावस्य घटध्वंसविरहरूपत्वे तत्प्रध्वंसस्य घटस्य स्वध्वंसाभेदापत्तेः। अन्वये तदभावाभावस्य तत्त्वात्। नान्त्योऽतिरिक्ताभावप्रसङ्गादिति। न घटस्यापि स्वध्वंसविरहरूपत्वात्। तदेव न स्यादेवमिति चेत्—न, घटप्रागभावघटकालयोः प्रध्वंसो नास्तीति प्रतीतिस्त्वनुभवसिद्धा तद्विषयस्तावेव वातिरिक्ताभावो वेति विमर्शे धर्मिकल्पनातो धर्मकल्पनाया लाघवेन घटस्य स्वध्वंसविरहरूपतामेव कल्पयित्वा तयोरेव तत्प्रतीतिविषयत्वकल्पनात्। तथा च तत्तादात्म्ये तद्विरहरूपत्वमुपाधिः। न चोक्तं न ह्यभावादन्यो निषेधस्तत्कथं भावो निषेध इति। निषेधपदेन विरोधिनो विधानात्। एवं च विरोधितया अभावग्रहो प्रतियोग्यपेक्षेति न सा भावमात्रग्रहे, एवं हि अभावमात्रग्रहेऽपि न सा। एवं चाभावप्रतियोगित्वमभावे प्रतिषिद्धम्। नन्वभावाधिकरणत्वमपि अन्यथाभावत्वात्यन्ताभावो भावान्योन्याभावश्च तत्र न स्याताम्। न चैवं भावान्योन्याभावादौ तद्व्यक्त्यात्माश्रयो दोषाय प्रमितत्वात्। अभावे तु अभावप्रतियोगिको भेदो विरोध्ये तु

०० भावादेव अभावेऽपि विरोधस्यैव तन्त्रत्वात्। अभावस्य चाभाव-प्रतियोगित्वेऽनवस्था स्यादिति *प्राञ्चः।*

*नव्यास्तु* अभावप्रतियोगिकोऽप्यभावोऽस्त्येवाविशेषात्। घटा-भावः पटाभावो न, घटाभावो घटो नेति प्रतीतेः। अंशत आत्माश्रयो न दोषाय प्रतीतत्वादित्याहुः।

नन्वेवमावश्यकत्वादवयववृत्ती एव संयोगतदभावाविति। न अवयविनि प्रतीयमानयोः संयोगतदभावयोरविरोधाय कल्प्यमाना-वच्छेदकभेदौ नावयविनि तयोर्वृत्तिमपह्नूयते उपजीव्यविरोधात्। नन्वेवमपि शाखावच्छिन्न अवयविनि कपिसंयोगः कथं वर्तताम्। कपिशाखयोर्घनद्रव्यतया संयोगेनापि समानदेशताविरोधादिति चेत्— न, इह कपिरित्यबाधितानुभवात्। घनद्रव्ययोरपि क्वचित् समान-देशताभ्युपगमात्।

*अन्ये* तु कपिसंयोगसमवायः सकल एव वृक्षेऽस्ति यदवयवा-वच्छेदेन तु तत्प्रतीतिस्तत्र संयोगस्याधारतास्ति। न तु सर्वत्रावयवा इति व्याप्यवृत्तित्वार्थ इत्याहुः।

*केचित्तु* कपिसंयोगः समस्त एवावयविन्यस्ति अवयवेऽपि कस्मिँश्चिदस्ति। तथा च यदवयवे कपिसंयोगस्तदवयवे गृह्यमाणे अवयविनि कपिसंयोगो गृह्यते। यस्मिँस्त्ववयवे नास्ति तस्मिन् गृह्य-माणेऽपि अवयविनि संयोगो न गृह्यत इत्यव्याप्यवृत्तित्वमाहुः।

नन्वेवमपि कात्स्न्यैकदेशविकल्पे किमुत्तरम्? इदमुत्तरम्, यत्तवाप्येकं विज्ञानं बहुभिरालोकमनस्कारादिभिरुत्पाद्यमानं प्रत्येकं कात्स्न्यैनोत्पद्यते एकदेशेन वा। आद्ये एकेनैव सिद्धावितरवैयर्थ्यात्। नान्त्यस्तस्यैकदेशाभावात्।

एवं च यदनेककार्यं तन्नाना यथा नीलपीतादि, अनेककार्यं च

विज्ञानमिति प्रसङ्गः। नानात्वाभावादनेककार्यत्वाभाव इति विपर्ययः। तदेतद् भवता विपक्षबाधकाभावेन समाधेयं धर्मिग्राहकप्रमाणबाधेन वा। तच्चोभयं ममापि समानमिति।

तदेवमियता प्रबन्धेन परिहृते एकः स्थूल इत्यबाधितानुभवादवयविसिद्धिः।

परमाणुषु समुदितेषु विशकलितेषु वा तदसंभवात् स्वरूपायोग्यत्वात्। नहि समुदिता अपि परमाणवो भवन्ति चाक्षुषाः। न चैवमवयविनो भिन्नस्याभ्युपगमे तद्गुरुत्वमपि कारणगुरुत्वेभ्यः पृथक् स्यादिति, विशकलितावयवबहुतोलने तुलाया यावदवनमनमभूदवयवसहितावयवितोलने तदधिकं स्यादिति वाच्यम्। कार्यादर्शनेन तेन० विशेषप्रयोजकगुरुत्वातिशयस्यावयविन्यभ्युपगमात्। गुरुत्वं त्वसत्येव धूमवत्। न चैवमवयविनि दत्तेऽप्यवयवे स्वदातुः स्वर्गत्वं नापगच्छेत् तेषां ततो भिन्नत्वादिति वाच्यम्, समाहृतस्यैव तद्वस्तुनादानात् तथैवाभिसन्धानात्।

ननु किमिदं स्वत्वं विनियोगविषयत्वं वा, यथेष्टविनियोगविषयत्वं वा, शास्त्राविरुद्धयथेष्टतद्विषयत्वं वा, शास्त्राविरुद्धयथेष्टतद्विनियोगयोग्यत्वं वा, अन्यद् वा ?

न प्रथमौ, चौरस्यापि स्वत्वापत्तेः। न चेष्टापत्तिः, चौर्यस्यागमस्वास्मरणात्।

न तृतीयः, विनियोगात् प्राक् स्वत्वाभावापत्तेः। न चतुर्थः, योग्यत्वानिरुक्तेः, शास्त्राविरुद्धविनियोगस्योपायभूतक्रयादिविषयत्वं तद्योग्यतेति चेत्—न, क्रयादेः स्वरूपतो विनियोगोपायत्वासंभवात्। क्रयादिस्वरूपस्वर्गोपायविषयत्वं स्वत्वोपायमिति चेत्—न, आत्माश्रयात्। स्वर्गोपायविषयत्वं वस्तु सत् क्रयादीनामुपग्राहकम्। तथा च

शास्त्रोक्तक्रयादिविषयतैव यथेष्टविनियोगयोग्यता । तदेव स्वत्वम् । तच्च ज्ञातं सत् विनियोजकमिति चेत् ? केयं विषयता उपायस्वरूपमेव वा, उद्घाटितोपाधिर्वा, तज्जनितो धर्मो वा ? नाद्यः, क्रयादीनां क्षणिकत्वेन तद्विषयत्वस्य क्षणिकतया क्रीतेऽपि क्रयोत्तरतृतीयक्षण एव स्वत्वापत्तेः । प्रतिग्रहीत्रादावप्येवम् । अस्तु तर्हि द्वितीयः पक्षः, ज्ञानात्यये ज्ञेयत्वार्थवृत्तिवत् क्रयात्ययेऽपि क्रयविक्रयत्वार्थवृत्तेरपि संभवादिति चेत् ? अस्तु तावदेतत्, तथापि नैतदुपाधिः सामान्यं क्रयादिजन्यत्वात् । अस्तु तर्हि ज्ञानजन्य एव कश्चिद्धर्म इति चेत् ? स हि भावोऽभावो वा ! तत्र नाद्यः, गुणस्यापि स्वस्वविषयत्वेन तत्रापि तत्त्वसमाङ्गीकारे गुणस्य समवायिकारणतया द्रव्यत्वापत्तेः । नान्त्यः, नहि क्रयध्वंसान्यः कश्चिदभावः क्रयजन्यः सम्भवति । क्रयध्वंसस्य क्रयजन्यस्यापि न शास्त्रीयविनियोगेऽपि जनकत्वम् प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वात् । नान्त्यः, तदनिर्वचनात् । निर्वचनेऽपि भावत्वेऽभावत्वे सदोषस्योक्तत्वात् । प्रकारान्तरस्य चासंभवित्वात् ।

किञ्च क्रयादिविषयत्वं स्थिरं ब्रूषे तच्च क्रीत्वा विक्रीतेऽप्यनुवर्तते इति तदपि विक्रेतुः स्वमेव स्यात् । तस्मादतिरिक्तमेव स्वत्वमिति ।

अत्रोच्यते, शास्त्रविरुद्धविनियोगप्रयोजकीभूतक्रयादिप्रागभावविरोधित्वरूपं यथेष्टविनियोगयोग्यत्वं स्वत्वम् । शास्त्राविरुद्धो यो विनियोगः सागमस्य तत्प्रयोजको यः क्रयादिप्रागभावस्य ध्वंसः तद्वत्त्वं वस्तुनः स्वत्वम् । क्रयश्च परेण स्वाभिमतप्राप्त्युपाधिना त्यज्यमानस्य तस्मिंस्तज्ज्ञानसोपाधिना । अस्तु ममेदमिति संप्रतिपत्तिविशेषः । स च स्वोत्पत्तितृतीयक्षणे नाशीति यद्यप्यस्थिरस्तथापि तत्प्रागभावस्य विरोधी । स च तद्ध्वंसश्चेति तृतीयक्षणे तद्वत्तया तृतीयादिक्षणे तद्ध्वंसवत्तया स्वत्वमव्याहतम् । घटप्रागभावाभाव-

व्यवहारे घटध्वंसयोर्जनकत्ववदुपपत्तेः। न चैवं क्रीत्वा विक्रीतेऽपि तद्ध्वंसवत्त्वात् स्वत्वानुवृत्त्यापत्तिः। तस्य तत्र वचनबलात् स्वोद्देश्यविक्रयप्रतिहतत्वेन विनियोगप्रयोजकीभूतत्वाभावादिति। पुत्रदारादौ तु यथोक्तविनियोगस्वत्वसत्त्वेऽपि शब्दनिषेधाद् विक्रयादियथेष्टविनियोगाभावः। ननूर्जितेषूक्तरीत्या प्रमीतस्यापि पितुः स्वत्वमनुवर्तिष्यत इति। न, तत्र क्रयादेर्मरणव्यवधापितस्य शास्त्रीयविनियोगप्रयोजकत्वाभावाद् विक्रीतवदस्वत्वात्। चौरेणापहृत्याब्धौ क्षिप्ते तु स्वामिनः स्वत्वमेव क्रयादेः शास्त्रीयविनियोगप्रयोजकस्याप्रत्यवा[या]त्। विनियोगाभावे स्वप्राप्तिरिति संक्षेपः।

*केचित्तु* क्रयादिध्वंस एव स्वत्वम्, शेषं समानमित्याहुः।

*साम्प्रदायिकास्तु* क्रयादिविषयत्वमखण्डमेव सतः स्वत्वमिति ब्रुयुः।

*यत्तु* इष्टमये क्रयादौ विनियोगरूपफलसाधनताज्ञानेन प्रवृत्ते यागेऽपूर्ववदत्र स्वत्वमेव क्रयादिव्यापारत्वेन कल्प्यते। उपायविषयत्वं च नोपायव्यापारस्तादात्म्यात्। नापि तद्ध्वंसः, प्रतियोगितद्ध्वंसयोरेकत्र जनकत्वात्। अन्यथा यागेऽप्येवं स्यादित्यगत्याष्टमः पदार्थः स्वत्वमिति *चन्द्रः।*

तन्न, व्यभिचारेण क्रयादेर्विनियोगाहेतुत्वात्। स्वत्वे तु स एव हेतुरत एव याजनादिभिर्वर्तयेदिति नियमविधिः। शास्त्रविकल्पविनियोगे चागमध्वंसो हेतुः पूजायां प्रतिष्ठाध्वंसहेतुवदिति।२।१।३३।

तदेवमवयविनि बाधकेऽपास्ते तत्र विरोधप्रदर्शनमुखेन प्रत्यक्षप्रमाणप्रदर्शनपरं सिद्धान्तसूत्रम्—

**सर्वाग्रहणमवयव्यसिद्धेः** ।२।१।३४।

महतोऽवयविनोऽसिद्धौ सर्वेषां गुणादीनामग्रहणं स्यात् । महाद्रव्यद्वारकप्रत्यासत्त्यैव तन्त्रत्वात् । मानान्तरस्यापि मूलभूतप्रत्यक्षाभावेऽनुपपत्तेरत एकः स्थूल इति प्रत्यक्षमेवावयविनि मानमित्यर्थः ।२।१।३४।

प्रत्यक्षेणापरितुष्यन्तं प्रत्यनुमानप्रदर्शनाय सूत्रम्—

**धारणाकर्षणोपपत्तेश्च ।२।१।३५।**

यद्यपि स्थितिहेतुसंयोगमात्रमेव धारणम् । अदृष्टवदात्मसंयोगेऽपि धारणव्यपदेशात् । एवञ्च क्रियाजनकसंयोगमात्रञ्चाकर्षणं शरेणाकृष्टं यातीति व्यपदेशात् । एतच्च द्वयं निरवयवसाधारणमपि तथापि क्रियाप्रतिबन्धकमूर्तमात्रसंयोगः धारणं धारकाभिमुखक्रियाजनकः संयोग आकर्षणमिह विवक्षितम् । तथा च प्रयोगः—अयं तन्तुः स्वसमानकालीनमहाद्रव्यसमवेतः तन्त्ववयवक्रियाप्रतिबन्धकसंयोगवन्मूर्तत्वात् । तन्त्वन्तरक्रियाकारणसंयोगवन्मूर्तत्वात् यन्नैवं तन्नैवं यथा विज्ञानम्, ईश्वरवारणायात्र मूर्तपदम् ।

अत्र बौद्धैः पूर्वक्षणविनष्टस्याणुनस्तन्तोश्च द्रव्यसमवायितया तन्तुकारणत्वाभ्युपगमात् उभयेन सिद्धसाधनवारणाय साध्यविशेषणद्वयम् ।

ननु साध्यं प्रसिद्धं न वा ? अन्त्ये व्याप्यत्वासिद्धिः । आद्ये यत्र प्रसिद्धं तत्र हेतोर्वृत्तावन्वयित्वावृत्तावसाधारण्यमिति चेत्—न, अन्वयव्याप्त्यप्रतिसन्धाने व्यतिरेक्यवतारणात् ।

न च धारणाकर्षणयोः संग्रहप्रयोजनत्वात्तेनैवार्थान्तरम् । द्रव्यासमवायिकारणसंयोगवृत्तिसंयोगद्वारान्तरजातिर्हि संग्रहत्वम् । तथा च संग्रहस्यावयविनान्तरीयकतया तत्सिद्धेरप्यवयविसिद्धेर्घविरोधित्वात् । अत्रावयवित्वं जन्यद्रव्यत्वम् । तदप्यारम्भकानारम्भकभेदाद्

द्वेधा । तत्र द्रव्यारम्भकानित्यद्रव्यत्वारम्भकावयवित्वम् अन्यावयवित्वमनारम्भकावयवित्वम् । तच्चैकत्वासमवायिकारणत्वविरहितैकावयवित्वम् कपालादीनामेकत्वम् । कदाचिद्घटाद्येकत्वमारभते घटैकत्वं न कदाचिदपि आपाद्यम् व्या[प्या]भावात् । मनोवारणायावयवित्वपदम् ।२।१।३५।

ननु समुदायिनां विभज्याग्रहणेऽपि समुदायप्रत्यक्षत्वं दृष्टमित्याक्षेपं समुदायिप्रत्यक्षत्वे भवत्वेवं न त्वन्यथेति समाधिं चाह—

**सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ।२।१।३६।**

नातिशयविशेषाद् भवन्त्यणवः प्रत्यक्षाः । यदाह ***कीर्तिः***—

को वा विरोधो बहवः सञ्जातातिशयाः पृथक् ।
भवेयुः कारणं बुद्धेर्यदि नात्मेन्द्रियादिवत् ।।

[प्रमाणवार्त्तिकम् २।२२३।]

अतिशयः निविडीभूयोत्पन्नत्वादिति चेत्—न, बाधकं विनैकः स्थूल इति धियोऽप्रामाण्यप्रसङ्गात् । तदनेनावयविव्यवस्थापनेनानेकवृत्तयः सामान्यादयोऽपि व्यवस्थापिताः ।

ननूत्पन्नस्य गोः कुतस्त्यं गोत्वम् । न तावत् तस्मिन्नेव देशे आसीत्, देशस्य गोत्वापत्तेः । नापि पिण्डान्तरादागतं निष्क्रियत्वात् । आगमे सामस्त्येनावच्छेदकदेशेन वा ! नाद्यः, पूर्वपिण्डत्यागप्रसङ्गात् नान्त्यः, निरंशत्वात् । न च गवैव सहोत्पन्नं नित्यत्वात् । तदाहुः—

न याति न च तत्रासीत् न चोत्पन्नं न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ।।

[प्रमाणवार्त्तिकम् ३।१५२-५३ ।]

इति चेत्—न, सामान्यस्य सर्वासमुत्थस्यापि सर्वैः सहावस्थानात् । ये त्वस्य व्यक्तिविशेषा व्यञ्जकास्तेषु उत्पन्नेषु समवायादुप-

लब्धेः। न चैवमपि समवायस्यैकत्वादन्यत्रापि गोत्वं स्यादिति वाच्यम्। अन्यत्र गोत्वसमवायेऽप्येतेषां गोत्वेन सह समवायरूपसंबन्धाभावात्। अत्र च नियामकः स्वभावविशेष एव। व्यापकत्वं चास्य व्यञ्जकसत्त्वे सर्वदा सर्वत्रोपलम्भस्य च समानत्वं न तु विभुत्वम्। ननु गोत्वं गोत्वविशिष्टे वर्तते तदविशिष्टे वा ? आद्ये आत्माश्रयोऽन्त्येऽगोरपि गोत्वापत्तिः। तदाहुः—

किं गवि गोत्वमुतागवि गोत्वं यदि गवि गोत्वमनर्थकमेतत्।
अगवि च गोत्वं यदि पुनरिष्टं भवतु भवत्यपि संप्रति गोत्वम्॥

इति चेन्न, सास्नादिपरिचिते पिण्डविशेषे गोत्वस्य वृत्तेरिति सर्वमवदातम्।२।१।३६।

## [ अनुमानपरीक्षाप्रकरणम् ]

अथावसरतोऽनुमानपरीक्षाप्रकरणम्। तत्र बाह्यार्थत्वसामान्यात् समीचीनासमीचीनत्वसंशयः। प्रयोजनं तु आत्मादिप्रमेयत्वावगमः। तत्र पूर्वपक्षसूत्रम्—

**रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम्।२।१।३७।**

रोधादपि नदीवृद्धिर्भवति। बिलोपघातादपि पिपीलिकाण्डसंचारो भवति। मयूरशब्दसदृशात् पुरुषशब्दादपि मयूरानुमितिर्भवति। अतो व्यभिचारादनुमानमप्रमाणमित्यर्थः।

अत्र यद्यपि त्रयाणामन्यतमादपि न पूर्ववदुदाहरणं घटते यथाश्रुतं तथापि वर्षपूरकारणमहाभूतसंक्षोभस्य पूर्वस्य कार्यं पिपीलिकाण्डसञ्चरणं तथा भौमेनोष्मणा गण्यमानाः खलु पिपीलिका भूमिष्ठाण्डान्युपरिष्टान्नयन्ति। तथा च तत्रानुमितेन महाभूतसंक्षो-

भेण वृष्ट्यनुमानं पूर्ववत उदाहरणं, पिपीलिकोपतापेन कार्येण क्षोभानुमानं शेषवतः सञ्चरणकारणभूतक्षोभकार्यत्वभाने स्वाभाविक—संबन्धमात्रज्ञानेन तत्सञ्चरणादिना वृष्ट्यादेरनुमानं, सामान्यतो दृष्टस्य पुरवासितानां च वृष्टिमयूरानुमाने शेषवदुदाहरणे। न चैवमपि विशेषलक्षणोदाहरणव्यक्तीनामाक्षेपेऽपि उदाहरणान्तरमादायापि तल्ल[क्ष]णोपपत्तौ न तद्दूषणमात्रेणानुमानदूषणमिति वाच्यम्। विशेषलक्षणयोर्नदीपूराद्यपि लक्ष्यमभिप्रेतम् सूत्रकारस्येति व्याख्या[ना]च्च परम्परातोऽवगतमतस्तदन्तर्भावेन पक्षत्वे सामान्यलक्षणं विशेषलक्षणानि चेतरभेदे साध्ये भागासिद्धानीति।

नदीपूरादिग्रहणमुपलक्षणं वा। तेन सर्वत्रानुमानत्वाभिमते व्यभिचारेण व्याप्तिपक्षधर्मतारूपस्यानुमानलक्षणस्यासंभवदोषात्। अनुमानप्रमाणविशेषो लिङ्गपरामर्शश्चानुमानम्। तच्चोक्तस्थलेषु चेद्-यथार्थमपि ज्ञानं जनयति तदा साध्यव्यभिचारान्न प्रमाणमित्यभिप्रायात् ।२।१।३७।

व्यभिचारसत्त्वोद्भावकसिद्धान्तसूत्रम्—

**नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ।२।१।३८।**

यदुक्तस्य लिङ्गस्यैभ्योऽर्थान्तरभावात् व्यभिचारः। तथा हि वहलाविलजलावर्त्तमहाक्षोभत्रुटदुभयतटनिकटपूरेण निःपतद्विटपिसंकटमहापूरेण हि तदुपरि वृत्तवृष्टेरनुमानम्। तस्य चैकदेशः पूरोऽतो न व्यभिचारः। एवमाश्रयानुपघाते अधः प्रदेशादुपरि सञ्चरणं हि पिपीलिकानाम्, त्रासे तु न तथा। एवं षड्जादियोगिनः शब्दविशेषान्मयूरानुमानम्। तत्सदृशपुरुषशब्दस्तु न षड्जजातीय इति न व्यभिचार इत्यर्थः।

न चाननुगमव्यभिचाराभ्यां तत्तद्व्यक्तेर्न लिङ्गत्वमिति वाच्यम्।

व्यक्तीनां तथात्वेऽपि व्याप्यत्वाद् भेदकरूपत्वेनानुगमात्। एवं धूमादावपि द्रष्टव्यम्। अ०० आलिङ्गं न च तस्य वह्न्यकार्यत्वान्न शेषवदुदाहरणमिदं स्यादिति वाच्यम्। कृत्तद्धितसमासेभ्यः संबन्धाभिधानं त्वतल्भ्यामिति *कात्यायनीय*सूत्रात् त्वप्रत्ययाभिधेयस्याग्निकार्यत्वात्।

ननु पर्वतधर्मो हि धूमवत्त्वं करणम्, तच्च नाग्निकार्यम्। अग्निधूमसंबन्धस्त्वग्निकार्यो न करणमिति न शेषवदुदाहरणं समर्थितमिति चेत्—न, अग्निधूमसंबन्धस्य व्याप्तेर्हि स्मृतिः करणम्, सा चाग्निजन्या एवेति भवति, धूमवत्त्वज्ञानं शेषवदुदाहरणम्।

यद्वा धूमत्वाद्येव लिङ्गम्, न चापक्षधर्मता धूमत्वादेरेव पक्षत्वात्, वह्निसंबन्धत्वादेः साध्यत्वात्। यदाहुः—

स एव चोभयात्मायं गम्यो गमक इष्यते।
असिद्धेनैकदेशेन गम्यः सिद्धेन साधकः॥ इति।

न च कारणत्वस्य केवलान्वयितया सर्वं पूर्ववदेवानुमानं स्यादिति वाच्यम्। यत्र हि कारणत्वावच्छिन्ना व्याप्तिस्तत् पूर्ववत्। यत्र कार्यत्वावच्छिन्ना तच्छेषवत्। यत्र ताभ्यामनवच्छिन्नं तत्सामान्यतोदृष्टम्। उपधेयसंकरेऽप्युपाधे [र] संकरात् न विभागव्याघात इति। २।१।३८।

## [ वर्तमानपरीक्षाप्रकरणम् ]

एवं हि पूर्ववदादिष्वनुमानस्य त्रिकालविषयत्वमपि परीक्षितम्। तच्च वर्तमाने असति न घटते इत्युपोद्घातसंगत्या इदानीं वर्तमानपरीक्षाप्रकरणम्।

ननु कालसिद्धौ तद्विशेषस्य वर्तमानस्य परीक्षोचिता। तत्सिद्धावेव पुनः किं मानम्? अथ ज्येष्ठकनिष्ठयोर्बहुत्वल्पसूर्यक्रियावच्छेदक-

बुद्ध्यनन्तरं समानदिक्कयोरपि तयोः परापरव्यवहारादर्शनात् अदैशिकत्वे परत्वापरत्वे मन्तव्ये। तन्निर्वाहकश्च क्रियावच्छेदः पिण्डे साक्षादसम्भवन् परम्परया स्यादिति परम्पराघट[क]तया परिशेषात् कालसिद्धिः। न च साक्षात् संबन्धेनैव विशेषणतात्मकेन तदुपपत्तिः। अतिरिक्तसंबन्धबाधके सति तदभ्युपगमादन्यथासिद्धिप्रसङ्गात्। न चातिरिक्तकालकल्पनागौरवमेव बाधकम्, फलमुखत्वात्। न च कालनामैव साक्षात्संबन्धोऽस्त्विति वाच्यम् अद्रव्यनिष्ठतया संयोगान्यत्वेनान्यधर्मान्यधर्मितया सम्बन्धितया समवायान्यत्वेन परिशेषात् विशेषणतात्मकत्वपर्यवसाने उक्तदोषात्। एवञ्च तपनकर्म पिण्डेन परम्परासंबद्धं साक्षादसम्बन्धे सति तदवच्छेदकत्वात् स्फटिकजपारागवत्।

नन्वेवमपि आकाशमात्मा वा पिण्डमार्तण्डसंयोगी सूरक्रियोपनायकः कल्प्यतां कृतमदृष्टचरेण कालेन। न चानयोरन्यतरस्य धर्मोपसंक्रामकत्वे सर्वत्र सर्वधीप्रसङ्गः। तयोरेव नियतधर्मोपसंनायकत्वस्य स्वभावविशेषस्यापि कल्पनात्। धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात्।

किञ्चैवमाकाशधर्मेष्वपि सूरक्रियावच्छेदकधीरूपपद्यते अन्यथा कालव्योम्नोर्विभुतया तत्संयोगाभावात् सा न स्यादिति चेन्न, पिण्डविषयकमार्तण्डक्रियाविशिष्टबुद्धिर्न व्योमादिसम्बन्धनिबन्धना पिण्डविषयकक्रियाविशिष्टबुद्धित्वात्। पिण्डो नास्तीति बुद्धिवत्। न च कालोऽप्येवं साध्यम्, सिद्ध्यसिद्धिव्याघातात्। न चाप्रयोजकत्वम्, विलक्षणकार्येण विलक्षणकारणस्यैवाक्षेपात्। व्योम्नश्च नियतपरधर्मोपनायकत्वस्वभावकल्पनायां पदार्थैकदेशत्वापत्तेः। एकेनैव पदार्थेनावच्छेदभेदात् तत्कार्याणामुपपादनात्।

नन्वेवमपि पिण्डमार्तण्डमध्यवर्तिमूर्तजातसंयोगपरम्पराभिधेव तत् क्रियापनी[य]तामिति चेत् न, क्रियोपनायकग्राहकमानेन लाघव-सहकारादेकस्यैवोपनायकस्य विषयीकरणात् ।

ननूक्तकालस्य तदुपानायकत्वे व्योमादिधर्मेषु सूरक्रियावच्छेदाधीर्न स्यात् विभुनोरयोगादिति चेत्—न, तत्रागत्या विशेषणतयैव तदुपपत्तेः ।

ननु बहुतराल्पतरतपनादिपरिस्पन्दान्तरितज्ञानं नाना परत्वा-परत्वयोरुत्पत्तिर्ज्ञप्तिश्चेत्यावश्यकाभ्यामेव परापरव्यवहारोपपत्तौ परत्वा-परत्वे एव सिद्धे इति कुतस्तन्निमित्तकारणीभूतापेक्षाबुद्धिविषयीकृत बहुतराल्पतरसूरक्रियोपनायकतया कालसिद्धिः ।

न च जन्मन आद्यक्षणसंबन्धात्मकत्वेन चिरातीततया सम्प्रति तथाजन्मकत्वस्य तरोरिदानीमयमस्मादपरः परश्चेति धीव्यवहारौ स्यातामिति वाच्यम्, नहि पुत्रात् पितेदानीं ज्येष्ठ इति कश्चित् चेतनो व्यवहरति व्याहरति वा ।

मैवम्, पितरि पुत्रापेक्षया परत्वमस्ति पुत्रे तदपेक्षयापरत्वमिति प्रत्ययस्य सार्वलौकिकत्वात् । अत्र चाख्यातेन वर्तमानस्योपस्थानादिति परत्वापरत्वनिर्वाहकतया सिद्धः कालः । स चायं द्रव्यं संयुक्तीभूय-सिद्धत्वात् । एवं दिगपि द्रष्टव्या ।

***तरणिमिश्रास्तु*** प्रत्यक्षमेव काले मानम् । इदानीं घट इत्यादि प्रत्यक्षस्य सर्वजनसिद्धत्वात् । न चेदानीमिति बुद्धिः कालोपाधिविषया न तु कालविषयेति वाच्यम् । कालोपाधिर्हि परिस्पन्दनादिर्न च तदधि-करणको घटादिः ।

नन्वेवमिदानीमित्यादिधियः कालविषयत्वे तस्य चैक्ये दिवसादि-विरूपज्ञानं कथम्? इत्थम्, तुहिनाचलदक्षिणदिगवस्थितमिहिरमण्डला-

वच्छिन्नः कालोऽस्माकं दिनम्, तदुत्तरदिगवस्थितमिहिरमण्डलावच्छिन्नः कालोऽस्माकं रात्रिः, तत्पूर्वदिगवस्थितमिहिरमण्डलावच्छिन्नः कालोऽस्माकं प्रातः सन्ध्या, तत्पश्चिमदिगवस्थितमिहिरमण्डलावच्छिन्नः कालोऽस्माकं सायं सन्ध्येति। तदुपाधिकप्रतिसन्दधानानां तत्तदुपहित प्रत्ययोपपत्तिर्यथैकस्मिन्नेव महीमण्डले जम्बूद्वीपाद्युपहितबुद्धय इति।

नन्वेकेन्द्रियेण कालो गृह्यते सर्वैरेव वा? घ्राणादेर्द्रव्यादेर्ग्राहकत्वान्मनसो बहिरस्वातन्त्र्यात्। कथमेवम्, न सर्वत्र ज्ञानोपनीतस्यैवास्य भानात् इदानीमिति बुद्धेरनादित्वात्। अस्तु वा अनन्यगतिकतया स्वातन्त्र्येणैव सर्वेन्द्रियवेद्योऽसौ तद्भवादित्याहुः।२।१।३८।

एवं कालसिद्धौ पूर्वपक्षसूत्रम्—

**वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः २।१।३९।**

कालस्यैकत्वादतीतादिव्यवहारास्तावदौपाधिकाः। तत्र वर्तमाने क उपाधिः? न साध्या क्रिया। तस्या असिद्धत्वात्। नापि सिद्धा उत्तरकालमपि तथात्वेनातिप्रसङ्गात्। नापि कारकम्, अपतदित्यादावपि पततीति स्यात्। कारकस्य च तादवस्थ्यात् [?]। अतीतानागतयोस्तु विवक्षितक्रिया प्रध्वंसप्रागभावावुपाधीत्युपाधिद्वये द्वावेव कालौ न वर्तमानोऽपीत्यर्थः।

तथा वर्तमानाभावान्न त्रैकाल्यविषयकमनुमानमिति भावः। २।१।३९।

सिद्धान्तसूत्रम्—

**तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्।२।१।४०।**

वर्तमानध्वंसप्रतियोगित्वमतीतत्वम्, वर्तमानप्रागभावप्रतियोगित्वमनागतत्वम्। एतच्च द्वयं वर्तमाने निरूप्यम्। तथा च तस्याभावे तयोरप्यभावः स्यादिति। एवञ्च यस्याः क्रियायाः प्रागभावप्रध्वंसावनागतातीतकालयोर्व्यञ्जकौ सैव च क्रिया वर्तमानत्वव्यञ्जिकेति न व्यञ्जकानुपपत्तिरस्तीति भावः। २।१।४०।

[1]व्यावृत्त्यप्रकारकं ज्ञानं विद्या। मिथ्याज्ञानमविद्या। तत्र विद्या चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा। तत्रेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्, अर्थजन्यं ज्ञानं वा, ज्ञानाकरणकं ज्ञानं वा, साक्षात्कारिज्ञानं वा। साक्षात्त्वं सामान्यविशेषस्तद्वदित्यर्थः। एवन्त्वय [एतद्द्वय]मीश्वरप्रत्यक्षसाधारणं स्मृत्यजनकज्ञानकारणमनःसंयोग [गाश्रयत्वम् ?] एवमिन्द्रियत्वं शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं वा। नक्तञ्चरनयनरश्मिः नेन्द्रियं किन्तु तेजोऽन्तरमेव। शब्दरूपेतरोद्भूतविशेषगुणानाश्रयत्वमिति तदुपग्रहाय कर्तव्यमित्येके।

इन्द्रियाणि तु घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षट्। सन्निकर्षश्चैषां संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः [समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। संयोगेन घटादिद्रव्यस्य, समवायेन] गुणकर्मगतजातीनां, समवायेन शब्दस्य, समवेतसमवायेन शब्दत्व[स्य], कत्वगत्वादीनां, विशेषणविशेष्यभावेनाभावस्य ग्रहणम्। तत्र बहिर्द्रव्याणां महत्त्वे सत्युद्भूतरूपवत्त्वम्। योग्यभावा हि अद्रव्यगतसामान्यगुणकर्मणामुद्भूतरूपवत्त्वमहत्त्वैकार्थसमवेतत्वं सामान्यानां

---

१. नातीतानागतयोः, वर्तमानाभावे, कृतता इति त्रीणि सूत्राणि न्यायसूचीनिवन्ध धृतानि नात्रोल्लिखितानि न वा व्याख्यातानीति ध्येयम्। अथ चाप्रासङ्गिकीं वार्तामिहोत्थापयतीति मन्ये। अप्रकरणकोऽयं प्रतिभाति विचारः। मातृकानुरोधेन प्रकाश्यते। संभवति मयाज्ञानेनैवं चिन्त्यते। प्रासङ्गिक्येव स्याद् वार्तेति।

च योग्यव्यक्तिगतत्वम् । शब्दस्य कर्णशष्कुल्यवच्छेदेनोत्पत्तिः । तत्सामान्यस्य योग्यशब्दगतत्वमेव, संसर्गाभावस्य योग्यप्रतियोगिकत्वम्, अन्योन्याभावस्य योग्याधिकरणत्व स्वरूपयोग्यता । भवति हि स्तम्भः पिशाचो न भवतीति चाक्षुषी प्रतीतिः । विशेषणता च सम्बन्धान्तरगर्भा शुद्धा चेति द्वयी । तत्राद्या संयुक्तविशेषणतादिभेदेन षोढा । यथा संयुक्तविशेषणतया द्रव्यविशेषणीभूताभावग्रहणम् । संयुक्तसमवेतविशेषणतया रूपादौ रसत्वाभावग्रहणम् । संयुक्तसमवेतसमवेतविशेषणतया रूपत्वादौ रसत्वाद्यन्योन्याभावादिग्रहणम् । समवेतविशेषणतया ककारादौ गत्वाद्यभावग्रहणम् । समवेतसमवेतविशेषणतया कत्वादौ गत्वाद्यन्योन्याभावादिग्रहणम् । विशेषणविशेषणतया चाभाववैधर्म्यादिग्रहणम् । सामान्यलक्षणा च प्रत्यासत्तिर्विशेषणतयातीतानागतरूपादावित्याद्यूह्यम् । योगजधर्मश्च प्रत्यासत्त्यनन्तरमेव तत्संस्तुतेन मनसातीतानागतस्वरूपायोग्यपरमाण्वाकाशादीनां निर्भासात् । ज्ञानलक्षणा तु संयुक्तसमवेतविशेषणतैव मनःसंयुक्तात्मसमवेतज्ञानविशेषणतया परमाणुप्रभृतीनामपि । भवति हि परमाणुमहं जानामीति प्रत्यक्षम् । बहिर्द्रव्यग्रहे चतुर्विधसन्निकर्ष तन्त्रम् । स चेन्द्रियार्थयोरन्योन्यमिन्द्रियावयवार्थावयवयोरन्योन्यमिन्द्रियावयवार्थयोरर्थावयवेन्द्रिययोश्च ।

तदेतद् द्विविधम् निर्विकल्पकं सविकल्पकं च । तत्राद्यं वैशिष्ट्याविषयकं निःप्रकारं वा । न तत्र प्रमाणमिति चेन्न, विशिष्टज्ञानस्यैव तत्र प्रमाणत्वात् । न हि विशेषणज्ञानमन्तरेण विशिष्टज्ञानमुत्पद्यते । अर्थमित्यादौ तथादर्शनात् । तथा च गौरिति प्रत्यक्षं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वादनुमितिवत् । न च परोक्षत्वमुपाधिः । प्रत्यभिज्ञाने साध्याव्यापकत्वात् । नापि विशिष्टविशेषणं पक्षेतरत्वात् । न च व्याप्यत्वासिद्धिः अनुमितौ साध्यस्य, शब्दज्ञाने पदार्थस्य विशेषणस्य ज्ञानविशिष्टधीमात्रे जनकत्वदर्शनात् । न च विशेषणप्रमाणवृत्तित्वे सति प्रत्यक्षानुमानभिन्नवृत्ति न वेति संशयः । न वेति पक्षे

प्रमाणवृत्त्यैव नेत्येके। प्रमाणवृत्त्यपि सत प्रत्यक्षानुमानभिन्नावृत्त्या वेत्यन्ये। प्रयोजनमतिरिक्तोपमानप्रमाणसिद्धिः।

## [ उपमानपरीक्षाप्रकरणम् ]

तत्र पूर्वपक्षसूत्रम्—

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ।२।१।४१।**

अत्र साधर्म्यपदमुपलक्षणम्। तेनावगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थानुसन्धानम्। संज्ञासंज्ञिसंबन्धज्ञानफलकमुपमानं विवक्षितमतो वैधर्म्यस्यापि संग्रहः। तत्रातिदेशवाक्यविषयो न साधर्म्यं वैधर्म्यमात्र[त्रेऽ]मतिप्रसङ्गात्। नाप्यात्यन्तिकम्, गवयादौ तथाभावात्, नापि प्रायिकमतिप्रसङ्गादित्यर्थः ।२।१।४१।

सिद्धान्तसूत्रम्—

**प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानवकाशः[1] ।२।१।४२।**

अत्रापि साधर्म्यपदं पूर्ववदुपलक्षणम्। प्रकर्षेण महिषादिव्यावृत्ततया सिद्धं व्यवस्थितं यत्साधर्म्यादिप्रवृत्तिनिमित्तकरभत्वगवयत्वाद्युपस्थापनसंबन्धं तत उपमानसिद्धिः। उपमितिनिर्वाहोऽभिमतो यथोक्तदोषाणामात्यन्तिकत्वादीनामनवकाशः।

अयमभिसन्धिः—प्रकरणाद्यपेक्षं वाक्यं स्वार्थबोधकं न तु केवलम्। तदिह प्रतीतमहिषादिकं नागरकं प्रति कीदृशो गवय इति पृष्टेन वनेचरेण यदा यथा गौस्तथा गवय इति वाक्यमुच्चार्यते तदा

१. °दोषानुपपत्तिरिति प्रसिद्धपाठः प्रायेण सर्वत्रोपलभ्यते।

महिषादिविलक्षणमेव भूयः सादृश्यं विवक्षितमित्यवगत्य तद् वाक्यार्थं स्मरन् वनं गतो नागरको महिषादिषु सादृश्यमपि जानन् गवयसंज्ञां निवेशयति किन्तु गवये परं तस्यैवानवगततयोपदेशविषयत्वयोग्यत्वात्। तथापि सादृश्यादौ नियमो न विवक्षितः। किन्तु प्रकरणादिवशाद् भूयस्त्वादौ वक्तुस्तात्पर्यम्।

यस्तु अतिदेशवाक्यात् महिषादिव्यावृत्तं सादृश्यं न प्रतिपद्यते तस्य सादृश्यधीरपि न संभवतीतरसाधारण्यादिति ।२।१।४२।

प्रसिद्धप्रमाणभावमुपमानमनुमानेऽन्तर्भावयिष्यन् पूर्वपक्षयाह—

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः ।२।१।४३।**

उपमानमनुमानमिति शेषः। प्रत्यक्षेण प्रतीतेन गोसादृश्येनाप्रत्यक्षस्याप्रतीतस्य गवयत्वविशिष्टस्य प्रतीतेः। तथा हि यथा गौस्तथा गवय इति वाक्यं तावद्व्याप्तिप्रदर्शकम्। यो गोसदृशः, स गवय इति। तथा च प्रत्यक्षे गवये स पिण्डो गवयपदवाच्यो यथोक्तसाधर्म्यादतिदेशवाक्यावगतगवयपिण्डवदित्यनुमानेन। एवं धिक्करभकमित्यादिवाक्येनापि व्याप्तिग्रहे स पिण्डः करभपदवाच्यो यथोक्तवैधर्म्यात्। अतिदेशवाक्यावगतकरभपिण्डवदित्यनुमानेन शक्तिग्रहसम्भवे विषयाभावादेव नोपमानं पृथगिति सूत्रार्थः ।२।२।४३।

समाधिसूत्रम्—

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ।२।१।४४।**

गवय इत्युपलक्षणं करभ इत्यपि द्रष्टव्यम्। उपमानस्य प्रमाणार्थं प्रामाण्यव्यवस्थापकमसाधारणमर्थं विषयमप्रत्यक्षे करभे गवये च सति न पश्यामः।

अयमभिसन्धिः, गवयत्वेन निमित्तेन गवयपदवाच्यता तावदुपमानार्थः । अत्र गवयस्य गवयपदवाच्यत्वेऽवगतेऽपि गवयाप्रत्यक्षदशायां गव[य]त्वनिमित्तकस्याप्रतीतान्वयव्यतिरेकाभ्यान्तयोरग्रहणान्नानुमानम्। तत्प्रतीतौ तु किमनुमेयं सिद्धसाधनादेवं करभादिस्थलेऽपीति प्रकारान्तरेण चानुमानान्तर्भावो लक्षणपर्वण्येव निराकृतः ।२।१।४४।

अनुमाने वैधर्म्यप्रदर्शनाय सूत्रम्—

**तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ।२।१।४५।**

उपमानस्यानुमानादविशेषो न । कुतः ? तथेत्युपसंहारात् । उपमाने हि यथा तथेत्युपसंहारो न त्वनुमाने । न हि यथा धूमस्तथाग्निरिति । तथा च प्रतिपत्तिभेदादप्युपमानस्यानुमानाद् भेद इत्यर्थः ।२।१।४५।

## [ शब्दसामान्यपरीक्षाप्रकरणम् ]

अथोद्देशक्रमसंगत्या शब्दसामान्यपरीक्षाप्रकरणम् । तत्र शब्दत्वं प्रमाणवृत्तित्वे सति प्रत्यक्षानुमानभिन्नवृत्ति न वेति संशयः । निषेधकोटौ च द्वये वादिनः शब्दः प्रमाणमेव नेत्येके । तत्त्वेऽप्यनुमानमेवेत्यन्ये । प्रयोजनं च पृथगङ्गपरिशोधनाय प्रवृत्तिः । श्रवणविधेर्मननविधितो भेदसिद्धिः ।

इह प्रामाण्ये परीक्षिते प्रमाणभूतानुमानान्तर्भावः परीक्षितुं युज्यत इत्यादौ तत्परीक्षा । तत्र पूर्वपक्षः—शब्दो न प्रमाणं शब्दे सत्यपि प्रवृत्त्यनुत्पत्तेः । प्रमया अयोगव्यवच्छिन्नस्य प्रमाणत्वादिति ।

राद्धान्तस्तु न शब्दमात्रं प्रमाणं ब्रूमः । किन्तु प्रयोगहेतुभूतार्थ-

तत्त्वज्ञानजन्यम्। तस्मिंश्च साङ्के सति व्युत्पन्नस्य प्रमाणमेवेत्याक्षेपहेतुत्वसिद्धिः। यद्यपि शब्दो न प्रमाणमित्याक्षेपः स्वस्य प्रामाण्याप्रामाण्ययोर्व्याहृतं भवति न समाधिमपेक्षते तथापि वस्तुगतिमनुरुध्य समाहित इति द्रष्टव्यम्।२।१।४५।

एवं शब्दाप्रामाण्यहेतौ निरस्तेऽनुमाने भेदाय पूर्वपक्षसूत्रम्—

**शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्।२।१।४६।**

अर्थस्य ग्राह्यस्यानुपलब्धेरप्रत्यक्षीकरणादनुमेयत्वं वाच्यम्। तेन श्रोत्राजन्यशब्दजा प्रमितिरनुमितिः साक्षात्प्रमितित्वात् धूमजवह्निप्रमितिवत्। अत्र च शब्दसाक्षात्कारोऽपि शब्दजा प्रमितिर्भवति। न च सानुमितिरित्यंशतो बाधवारणाय श्रोत्राजन्येति। न चोपमितौ व्यभिचारः, प्रत्यक्षानुमानाभ्यामन्यत्प्रमाणं नास्तीति पूर्वपक्षिणोऽभिमानात्।२।१।४६।

हेत्वन्तरमाह—

**उपलब्धेरद्विप्रवृत्तिकत्वात्।२।१।४७।**

विवादपदस्योपलब्धेरद्विप्रवृत्तित्वात् अनुमानापेक्षया भिन्नकरणत्वाभावात्। तेन श्रोत्राजन्यजाशब्दजा प्रमितिरनुमितिः इन्द्रियाजन्यप्रमात्वादिति सूत्रार्थः।२।१।४७।

हेत्वन्तरमाह—

**संबन्धाच्च।२।१।४८।**

यद्यपि प्रत्यक्षमपि संबन्धमपेक्षते तथापि शब्दोऽनुमानम् संबन्धज्ञानजन्यज्ञानजनकत्वादिति सूत्रार्थः।२।१।४८।

सिद्धान्तसूत्रम्—

**आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ।२।१।४९।**

असाक्षात् प्रमात्वादिनानुमितिनियतमज्ञापूर्वदेवतादेर्मानान्तरादनवगतौ व्याप्तिग्रहस्य शब्दमनुपजीव्याशक्यत्वात् । किन्तु आप्तोपदेशबलादेव तदुपस्थितिरित्यर्थः ।२।१।४९।

ननु स्वर्गादौ प्रत्यक्षानुमानागोचरे स्वर्गादिपदसंकेतग्रहोऽप्यशक्यः । तथा चागृहीतसंकेतस्य व्यवहारानुपपत्तौ वाक्यस्यापि क्व प्रमाण्यम् ? ततः स्वर्गादिपदप्रवृत्तिरेव स्वर्गादौ मानान्तरमाक्षिपतीति चेन्न, स्वर्गादेर्वाक्यार्थतया तत्र संकेतग्रहानपेक्षणात् । मानान्तरोपनीत एव तत्तत्पदानां लोकावगतसंकेतानामाकाङ्क्षादिसाचिव्यात् अलौकिकविशिष्टार्थबोधकत्वात् ।

ननु यत्नजनकेच्छाजनकं घटानयनज्ञानमस्यानुमिनोति । तस्य च शब्दतद्भावभावितया तत्कारणकतामवगम्य तत्रैव पदानामपि शक्तिमवधारयति ।

ननु पदार्थमात्रज्ञाने व्यवहारात्तस्यानुपस्थितेः । तस्मादितरान्वितस्वार्थशक्तत्वेन ज्ञातं पदं स्वार्थान्वयास्वभावकमित्यन्विताभिधानमिति । ननु तज्ज्ञाने शक्तिग्रह इति चेत् न, इतरान्वितपदार्थज्ञानोपस्थितौ पदार्थज्ञानमप्युपस्थितमेव विशिष्टज्ञानस्य विशेषविषयत्वनियमात् । तथा च लाघवात्तत्रैव पदानां शक्तिः कल्प्यते न त्वन्वयांशेऽपि गौरवात् । न च पृथगुपस्थितिस्तत्र तन्त्रम्, जातेर्व्यक्तिकवलिताया एवोपस्थितेः । तव तस्य [?] शङ्क्यत्वापत्तेः [तत्र तस्य शक्यत्वापत्तेः] गौरवाच्च । न चानन्यलभ्यत्वादन्वये शक्तिः, पदार्थेषु ज्ञातशक्तिभ्यः पदेभ्य एवाकाङ्क्षादिमद्भ्यस्तल्लाभसम्भवात् । कथमन्यथा तत्राशक्यस्यान्वयविशेषस्य लाभः । न चान्वयविशेषे जिज्ञासाबलाद्

न्वयसामान्ये शक्तिः कारकेण क्रियया च क्रियाकारकसामान्याक्षेपाच्च तदुपपत्तेः । अत्र चन्दनादावुत्कृष्टस्वर्गोपरागेण स्वर्गपदप्रयोगादुत्कर्षरूपजातियोग्येव स्वर्गे स्वर्गपदशक्यम् । तदुपाय एव क्वचित्तु व्ययायाससाध्यकर्मणि तत्स्वर्गमात्रार्थी न प्रवर्तत इत्यर्थवादोपनीते स्वर्गविशेषे स्वर्गपदस्य तात्पर्यमात्रमित्येके ।

तन्न, विचित्रयागादिसाध्यतयानन्तानामुत्कर्षाणां शक्यत्वापेक्षया वाक्यार्थस्य शक्यत्वे लाघवात् । न चोत्कर्षत्वेनैव तेषामनुगमः तस्याशक्यत्वात् । शक्यानां चोत्कर्षाणामननुगमतादवस्थ्यात् ।

*अन्ये* तु स्वर्गमात्रमेव स्वर्गपदशक्यमुत्कर्षस्तु प्रयोगोपाधिरित्याहुः । तन्न, तन्मात्रज्ञानस्याप्रवर्तकत्वात् । प्रयोगोपाधिकृतस्योत्कर्षस्याननुगमात् । प्रयोगोपाधेर्निषिद्धत्वाच्च ।

*अपरे* तु यैव लोके स्वर्गत्वाकारे प्रवृत्ता शक्तिः सैव दुःखासंभिन्नत्वादिकमपि विषयीकरोतीति शक्तेर्विस्तारमात्रमिदमित्याहुः ।

तन्न, स्वर्गत्वाकारशक्तिज्ञानस्य यागादावप्रवर्तकत्वात् । अत्र यद्यपि दुःखासंभिन्नत्वं दुःखासहप्रवृत्तिरूपम् अन्तिमस्वर्गार्थे नास्ति अभिलाषोपनीतत्वं च कदाचिदैहिकेऽप्यस्ति तथाप्यधर्माजन्यशरीरजन्यस्वर्गत्वं तदर्थः ।

एवमिन्द्रमुपासीतेत्यादौ च इन्द्र इत्यपेक्षाया इन्द्रः सहस्राक्षः स्वराडित्यस्यानुवादोपनीत एव वाक्यार्थे इन्द्रपदस्य शक्तिरेवं रुद्रपदादेरपीति देवतापि शब्दमात्रवेद्या वाक्यार्थ एव ।

ननु आग्नेयमष्टाकपालं निर्वपेदित्यत्र देवताधिकारे शब्दानुशासनात् प्रकृत्यर्थस्याग्नेर्देवतात्वं प्रतीयते । प्रकृत्यर्थश्चाग्न्यादिरूपो लौकिक एवेति चतुर्थ्यन्तपदस्य देवताव्यवहारे ताभ्यामर्थोपहितः शब्द एव देवतेति । देशनादेशितचतुर्थ्यन्तपदनिर्देश्यानामेव देवतात्वा-

दिति सिद्धान्तेनेन्द्रादिरर्थरूपो देवतेति चेत्- न अग्निर्देवता इत्यादौ चतुर्थीं विनापि देवताव्यवहारात् । चतुर्भुजत्वाद्युपेतार्थस्यैव याज्ञिकानां होमोद्देश्यत्वाच्च ।

अपि च किमिदं देशनादेशितत्वं, वैदिकत्वं वेष्टाद्युद्देश्यतया वेदबोधितत्वं वा ? नाद्यः, नान्यः पन्था विद्यतेऽयनायेत्यादावतिव्याप्तेः। नान्त्योऽसम्भवात् । नहीष्टोद्देश्यतया शब्दो बोध्यते। अस्तु वा अविचारितसुन्दरमेवेदं तथाप्यग्नये कव्यवाहनायेत्यादौ देवताद्वयापत्तिः। न चानादिवेदेनादिमद्देवताबोधे नित्यानित्यसंयोगविरोधः, प्रवाहनित्यतयैवाविरोधात्। संयोगस्य च ज्ञाप्यज्ञापकतया घटादेरात्मादिनैवोपपत्तेः। तस्मान्मन्त्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वं देवतात्वम्। अन्येषां हविःसम्बन्धे मन्त्रस्याकारणत्वात्। मन्त्रत्वं च वाक्यत्वावान्तरजातिविशेषानुभवसाक्षिको ब्राह्मणान्यवेदत्वं वा। हविस्तु—

कृतमोदनसन्ध्यादिः तण्डुलादिकृताकृतम्।
व्रीह्यादि चाकृतं प्रोक्तमिति द्रव्यं त्रिधा बुधैः॥

इतिस्मृतेरध्यवसेयम् । अत्र हविर्भागित्वान्ते कृते हविरसंबन्धदशायां देवतात्वं न स्यादतस्तेनोद्देश्यत्वं युक्तम् । ननु मन्त्रकरणहविर्भागित्वेनोद्देश्यत्वं तादृशं यदिच्छाविषयत्वं तच्चानुगतधर्मग्रहणं विना न ग्राह्यमित्यनुगतधर्माभ्युपगमे अस्तु तदेवावश्यकत्वाल्लक्षणम्। तदनभ्युपगमे चेदमेवाग्राह्यमिति चेन्न, नहीदं देवताया लक्षणम् किन्तु तत्स्वरूपं देवतापदार्थावसर एव *टीकाकृता*वतारणात्। लक्षणं तु त्रिदशत्वादिकं तच्च सुग्रहमेव, अनुगतधर्मग्रहं विना तृणादौ कारणत्वग्रहवदुद्देश्यत्वग्रहः। तथा च पूर्वमेव लक्षणं तेन पित्रादीनामपि देवतात्वलाभ इत्यन्ये।

ननु तथापि शब्दोऽनुमानान्तरम् अनुमानादेव तदर्थसिद्धेः।

तथा हि एते पदार्थास्तात्पर्यविषयाः मिथःसंसर्गवन्तः आकाङ्क्षादि-मत्पदस्मारितत्वात् मतवत्[?]। तत्राकाङ्क्षाभिधानापर्यवसानं येन विना यस्य न स्वार्थाद्यभावकत्वं तदपर्यवसानम्, क्रियाकारकादिपदानां परस्परं विनाननुभावकत्वात् । एवं योग्यताप्येकपदार्थसंसर्गोऽपर-पदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः ।

प्रमेयं वाच्यमित्यत्रापि प्रमेयपदार्थनिष्ठात्यन्ताभावप्रतियोगि-त्वप्रमाविशेष्यत्वाभावः गोत्वे प्रसिद्धः । वाच्यत्वसंसर्गे च तदभावः । भ्रमरूपयथोक्तज्ञानविषयत्वं योग्येऽप्यस्तीत्येतदुक्तं प्रमेति । एवमपि आनयनपदार्थे घटपदसंसर्गस्यात्यन्ताभावो नास्तीत्यादि यथोक्त-प्रमाविशेषणत्वम्। विशेषणतया संसर्गस्याप्यस्तीति असम्भववारणाय विशेष्येति । संसर्गविशेष्यिका तु न तथा प्रमेति इतरपदार्थसंसर्गोऽपर-पदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं योग्यता । आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः । यद्यपि योग्यतासत्ती अर्थधर्मावाकाङ्क्षामात्रमेव शब्दधर्मस्तथापि योग्यासत्त्वार्थकत्वेन पदेऽपि योग्यतादिकं विवक्षित्वा आकाङ्क्षादिमत्पदेऽप्युक्तमिति *सौगतादयः* ।

तन्न, योग्यतासंशयेऽपि वाक्यार्थदर्शनादनुमानविधायां च तस्यालिङ्गविशेषणत्वेन तत्संशयस्य विरोधात् ।

*प्राभाकरास्तु* व्यभिचारिशब्दव्यावृत्तमव्यभिचार्यत्वगतं प्रमा-प्रयोजकं किञ्चिदुपेयम् । तच्च यथार्थतात्पर्यकम् । यथा स्ववाक्यार्थधी-प्रयोजनकत्वरूपं प्रयोजनं च फलम् न तु वक्त्रिष्टम्[?] । वेदे वक्तृविरहात्, तच्च लोकवेदसाधारणम्, तच्च ज्ञातमुपयुज्यते, ज्ञाय-मानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यात् । अन्यथान्यपदादन्यार्थ-धीर्न स्यात् न स्याच्च यष्टीः प्रवेशयेत्यत्र च लक्षणा । नानार्थे श्लिष्टे च विनिगमनाभासतात्पर्यग्रहमूलकत्वात् । तच्च तात्पर्यं वेदे न्याय-गम्यम्, लोके प्रमाभिप्रायस्य न्यायानियतत्वात् न तथा, किन्तु लोके

प्रत्यापयिषाप्रयोज्यं यथार्थान्वयधीपरत्वम् । सा च वक्तुः प्रत्याय्यान्वयप्रमाप्रयोज्येति वक्त्रन्वयप्रमाज्ञानाधीनज्ञानमिति तदीयवाक्यार्थवृत्त्यनुमित्युत्तरगम्यम् । तथा हि इदं वाक्यं भ्रमादिविशिष्टज्ञानान्यतरजन्यं लौकिकवाक्यत्वात् । ततो भ्रमादिनिरासे सति अयं वक्ता स्वप्रयुक्तवाक्यार्थविशिष्टज्ञानवान् भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वात् अहमिव । तत एते पदार्था यथोचितसंसर्गवन्तो यथार्थधीविषयत्वादेवं वक्तृवाक्यार्थज्ञानेऽनुमितेः प्रकरणादिना वक्त्रभिप्रेतयथार्थवाक्यार्थधीपरत्वज्ञानम् ततो वेदतुल्यया सामग्र्या शब्दादर्थप्रत्यय इत्यर्थवादको लौकिकः शब्दो वक्तृज्ञानावच्छेदकतया तदर्थस्वातन्त्र्येण वाक्यार्थस्य पूर्वमेव भातत्वादित्याहुः ।

तन्न, वाक्यार्थस्यापूर्वतया यथार्थवाक्यार्थधीपरत्वस्य प्रथमं ज्ञानमशक्यत्वात् । लोके भ्रमादिनिरासस्य चाशक्यत्वात् वक्तृभ्रमादिसंभवात् [प्रमा]दस्य च वाक्यार्थज्ञानोत्तरकालीनत्वात् । वेदे च वाक्यार्थमज्ञात्वा न्यायेनापि तज्ज्ञानमशक्यं विषयनिरूप्यत्वात् प्रतीतेः । न च लोकवन्मानान्तरात् तत्प्रतीतिः, वेदार्थस्य प्रथमतो मानान्तराविषयत्वात् । किञ्च शब्दस्यान्वयप्रमापकत्वे अन्वयप्रमापकत्वं तन्त्रमिति बहुलम् । तन्न, आत्माश्रयात् । तस्य ज्ञानं न तन्त्रम्, मानाभावात् । यत्र तात्पर्यभ्रमाच्छब्दभ्रम इति तत्र तात्पर्यं वक्त्रिच्छाघटितं, न तु त्वदुक्तम् तज्ज्ञानस्योभयतो व्यभिचारात् । तद्बीजनने तात्पर्यादेव श्रुतीनामपि पौरुषेयत्वम् । अपि चान्वयतात्पर्यग्रहाय पूर्वमशब्दान्वयज्ञानोपगमे तदर्थतात्पर्यावधारणाधीनशब्दप्रवृत्त्यभ्युपगमे लौकिकवद् वेदोऽप्यनुवादको भवेदिति । शब्दमात्रस्यानतिरिक्तत्वेजितं *वैशेषिकैरिति* । तस्मादनुगतमपि तज्ज्ञानं सन्न शाब्दप्रमाजनकम्, किन्तु तद्ग्राहकत्वेनाभिमतानां न्यायज्ञानप्रकरणादीनामन्यतमं तात्पर्यव्याप्यत्वेनानुगतम् आकाङ्क्षासत्तिनिश्चयो योग्यताज्ञानमात्रं विभक्त्यादिसमभिव्याहारः सहोच्चारणम् शाब्दज्ञानमात्रे कारणानि ।

*केचित्तु* विभक्तिस्थानीयैकदेशवत्त्वादाकाङ्क्षादिमत्त्वाच्च संस्कृतवदपभ्रंशोऽप्यन्वयप्रापकश्च न, शक्त्यभावान्न तथा। तदारोपेणापि पदार्थोपस्थितावाकाङ्क्षितान्वयबुद्धावर्थाबाधेन प्रमायामन्वयव्यतिरेकाभ्यामपभ्रंशस्यैव कारणत्वात्। न चापसिद्धान्तः, आप्तोपदेशः शब्द इति सूत्रेणास्यापि संग्रहादित्याहुः।

*अन्ये* तु अवैभक्त्याः कर्मत्वाद्युपस्थितेरन्वयबोधानङ्गत्वान्न ततोऽन्वयधीः। व्यवहारस्तु संशयप्रतिभयोरन्यतरस्मादपभ्रंशस्मारितपदार्थानां मनसा संसर्गावभासाद्वा चेष्टावदित्याहुः।

हरिमानयेत्यादौ नानार्थे श्वेतो धावतीत्यादिश्लिष्टार्थे चानेकोपस्थितावपि प्रकरणादिवशादेवैकमादायान्वयः।

एवं लक्षणापि न तात्पर्यानुपपत्त्या, किन्त्वन्वयानुपपत्त्यैवेति न क्वापि तात्पर्यग्रहापेक्षा। नानार्थे लक्षणायां च नियतोपस्थित्यर्थं पदार्थे तात्पर्यग्रहापेक्षेति *केचित्*।

ननु क्रमिकनानापदजन्यक्रमिकनानापदार्थस्मृतीनां न यौगपद्यं क्रमिकलक्षकानां तदसंभवादिति। कथमेतावत् पदार्थान्वयबोधो विशेषणधीसाध्यत्वाद् विशिष्टबुद्धेरिति क्व शब्दप्रामाण्यगन्धोऽपीति चेन् मैवम्, श्रोत्रं प्रत्येकपदानुभवजन्यसंस्कारमेलकादेकदैव हि तावत् पदस्मृतिः। तत एकदैव तावत् पदार्थस्मृतिः। ततो वाक्यार्थानुभवः। न चान्यविषयसंस्कारान्नान्यस्मरणं वाक्यार्थानुभवबलेन संस्काराणां परस्परसहकारेण स्मरणजनकत्वस्य कल्पनात्। प्रत्येकवर्णसंस्काराणामिव पदस्मरणे। यच्चाप्तिप्रवृत्तिकत्वात् [२।१।४७] इत्युक्तं तन्न, शब्दस्य व्याप्तिपक्षतानपेक्षितत्वेनानुमानापेक्षया पृथक् प्रवृत्तित्वात्। संबन्धादिति[२।१।४८] च यदुक्तं तदपि न, न ह्यत्र व्याप्तिरूपसंबन्धोपगमः, किन्तु वाच्यवाचकभावः, स च नाङ्गम्।

*केचित्तु* शब्दार्थयोस्तुल्यदेशत्वरूपां व्याप्तिमाहुस्तन्मतं निरस्यति—

**पूरणप्रदाहपाटनानुपपत्तेः संबन्धाभावः ।२।१।५०।**

यदि त्वदुक्तः संबन्धः स्यात् तदा मोदकाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि स्युः, न भवन्ति । तस्माद् बुद्धार्थयोस्तुल्यदेशता-रूपसंबन्धाभाव इति सूत्रार्थः ।२।१।५०।

आक्षेपसूत्रम्—

**शब्दार्थव्यवस्थानादप्रतिषेधः ।२।१।५१।**

यदि शब्दार्थावसंबद्धौ स्यातां तदा शब्दादर्थप्रत्ययव्यवस्था न स्यादसंबन्धविषयादतो मदुक्तसंबन्धस्याप्रतिषेध इत्यर्थः ।२।१।५१।

समाधिसूत्रम्—

**न सामयिकत्वाच्छब्दादर्थसंप्रत्ययस्य ।२।१।५२।**

तदुक्तयोः पदार्थयोः स्वाभाविकसम्बन्धस्यानिषेधो न । कुतः ? शब्दकरणकार्थसंप्रत्ययस्य सामयिकत्वात् संकेतनियतत्वात् । तथा हि शब्दर्थयोः स्वाभाविकः संबन्धो न संभवति २।१।५२।

कुतः—

**जातिविशेषेचानियमात् ।२।१।५३।**

तथा हि ऋषयस्त्रिवृच्छब्दं स्तोत्रीयनवके ऋग्विशेषे प्रयुञ्जते आर्यास्तु लताविशेषे । एवं म्लेच्छा यववराहवेतसशब्दान् प्रियङ्गु-वायसजम्बुषु प्रयुञ्जते आर्यास्तु दीर्घशूकशूकरवञ्जुलेष्वित्यर्थः ।२।१।५३।

## [शब्दविशेषपरीक्षाप्रकरणम्]

शब्दसामान्यपरीक्षानन्तरं हेतुहेतुमद्भावसंगत्या तद्विशेष-

परीक्षाप्रकरणम् । तत्र विप्रतिपत्तेर्वेदाः प्रमाणं न वेति संशयः । प्रयोजनं च मोक्षस्य वेदोपदिष्टतया तत्प्रामाण्ये मोक्षार्थिनोऽत्र शास्त्रे प्रवृत्तिः । तत्र पूर्वपक्षसूत्रम्—

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ।२।१।५४।**

अत्र तच्छब्देन वेदपरामर्शः । वेदः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दः । अत्र प्रमाणशब्दः स्मृत्यादिकमपि भवतीति तद्व्यावृत्तये शब्दजन्यवाक्यार्थज्ञानाजन्येति शब्दविशेषणम् । स्मृत्यादयस्तु नैवम्, वेदादर्थं प्रतीत्य तत्प्रणयनात् । यद्यपि जन्यवाक्यार्थेत्यादावेव कृते स्मृतिलौकिकवाक्ययोर्व्युदासस्तथापि जन्यवाक्यार्थज्ञानपदेनाजन्यवाक्यार्थज्ञानं व्यवच्छेद्यम्, तच्चोभयसिद्धं न प्रतिषिद्धमिति, न तथाकृतम् । प्रत्यक्षानुमानविषयार्थकलौकिकवाक्यव्यवच्छेदाय सत्यन्तम् । अत्रापि यदि प्रत्यक्षानुमानविषयार्थकेति क्रियेत, तदा वेदार्थस्याप्यलौकिकप्रत्यक्षानुमानोभयविषयार्थकत्वादसम्भवः स्यादिति, शब्दतदुपजीवीति वेदपूर्वोक्तमनुमानादिकं विवक्षितम् । एवमपीदानीन्तनेषु वेदेषु गुरुपाठानुपूर्वीज्ञानजनितेषु शिष्योच्चारितेष्वव्याप्तिः स्यादत उक्तम् वाक्यार्थेति । शिष्यस्य वाक्यार्थज्ञानं न वेदजनकं, किन्तु आनुपूर्वीमात्रमनुगतत्वान्निर्वाहकत्वाच्च । न चाग्निर्हिमस्य भेषजमित्यादेः प्रत्यक्षार्थकवेदस्याव्याप्तिः । हिमभेषजत्वं तु हिमनाशकारणत्वं, तच्चातीन्द्रियमेव, एवमन्यदपि ज्ञेयम् ।

अत्र यद्यप्यनृतत्वादिकं न सर्ववेदव्यापि तथापि दृष्टान्तार्थमिदमिति मन्तव्यम् । अनृतत्वं तु बाधितार्थकत्वम् । तथा च प्रयोगः पुत्रकामः पुत्रेष्ट्या यजेतेति वेदवाक्यमप्रमाणम् अनृतत्वात्, शशः शृङ्गीति वाक्यवत् । न च स्वरूपासिद्धिः, पुत्रेष्ट्याः वैदिकफलस्यैव कामनाविषयत्वात्, तस्य च क्वचिददर्शनात् ।

एवं व्याघातोऽपि वेदस्य परस्परविरुद्धार्थप्रतिपादकता । यथोदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यमिति वाक्यमिति । श्यावोऽस्याहुतिमभ्यवहरति, य उदिते जुहोति । शबलोऽस्याहुतिमभ्यवहरति, योऽनुदिते जुहोति । श्यावशबलावास्याहुतिमभ्यवहरतो, यः समयाध्युषिते जुहोतीति निन्दाश्रुत्यनुमितनिषेधपरवाक्ययोः ।

यद्वा यावज्जीवमग्निहोत्रं जुहुयादिति वाक्येन समं निषेधपरपूर्वोक्तवाक्यानां विरोधः । मध्याह्नादीनामप्युदितकालानतिरेकात् । उदिते होतव्यमित्यादिवाक्यानामेव वा परस्परविरोधः । न ह्येकं होममनूद्य परस्परविरुद्धकालविधिः सम्भवेत् । तथा च प्रयोगः अग्निहोत्रादिविधिनिषेधवाक्यान्यप्रमाणानि व्याहतार्थत्वात् माता वन्ध्येतिवत् ।

पुनरुक्तं यथा त्रिः प्रथमामन्वाह त्रिरुत्तमामिति । अत्रोत्तमा आद्येति पूर्वपक्षिणोऽभिप्रायस्तथा चाद्याया एव त्रिरभिधानमुपदेश्य त्रिरभिधानोपदेशः पुनरुक्तः । त्रिष्वित्येव वा पुनरुक्तम् । यद्यपि पुनरुक्ते नाप्रामाण्यनियमः [तथापि] वक्तुरपेक्षावत्त्वमनुमाय तत्तत्कर्तृकत्वेनाविश्वसनीयार्थकत्वरूपमप्रामाण्यमनुमेयम् ।

एवं सति शेषाण्यपि वेदवाक्यान्यप्रमाणम्, वेदवाक्यार्थत्वात् । पुत्रेष्ट्यादिवाक्यवदिति पूर्वपक्षार्थः ।२।१।५४।

अत्रानृतत्वहेतुमसिद्ध्या सिद्धान्ती दूषयति—

## न कर्मकर्तृसाधनवैगुण्यात् ।२।१।५५।

नानृतत्वं, कुतः कर्मकर्तृसाधनवैगुण्यात् । फलाभावस्यान्यथासिद्धेः । तथा हि कर्तारौ पितरौ ऋत्विजश्च । तत्र पितुः शुक्रोपघाते

मातृ रक्तोपघाते वैगुण्यमृत्विजां त्वशुचिता पातकिता मन्दान्तःसंगता अपटुकरणता अवेदवेदिता च तत्। क्रियते इति कर्म पित्रोः संयोगः तद्वैगुण्यं पुरुषायितादिः। साधनमिष्टिस्तद्वैगुण्यं हविरसंस्कारः, सम्यगङ्गाननुष्ठानं, द्यूतादिदुरुपायार्जितेन यथोक्तजातिपरिमाणहीनेन च द्रव्येण दक्षिणा। न च द्यूतादेरपि स्वत्वोपपादकत्वात् न ते दुरुपाया इति वाच्यम्, क्रतूनां धनसाध्यतया क्रतुविधौ सामान्यतो धनार्जनमनुजानाति तदाकाङ्क्षायां तदेव वाक्यतापन्नेन याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदिति नियमविधिना ब्राह्मणस्यार्थादन्योपायनिषेधात्।

ननु धनार्जनविधयोऽनारभ्याधीतत्वात् पुरुषार्थास्तेन रागप्राप्तधनार्जकं प्रति उपायं नियमयन्तीति। तदुपायातिक्रमे पुरुषः परं प्रत्यवेयात्। कर्म तु तेन धनेन सदेव तु स्यादिति चेन्न, तथापि परिश्रमाभ्युपात्तधनेन कृतानां कर्मणां फलविशेषप्रसारकत्वश्रवणात्, द्यूतादिधनस्य चातथात्वात्। अब्राह्मणानामपि द्यूतादिधनं दूरागतमेव।

ननु दक्षिणाया दूरागतत्वेऽपि न यज्ञस्य किमपि वैगुण्यम् तस्या ऋत्विगानतिकरत्वात्। तथा हि यद्यपि यजमानेन कर्मानुष्ठानाय ऋत्विजां वरणं कृतं तथापि तावन्मात्रेण न दृष्टमिदमेवेति प्रतिसन्धाय महायाससाध्ये कर्मणि तेषां प्रवृत्तिर्युक्तेति कर्मानुकूला आनतिरेव भाविन्यापि दक्षिणया प्राप्स्यामेवेति प्रतिसन्धानविषयीकृतया साध्यते। अत एकवाक्यताधिकरणे यजमानानामेव यज्ञेन दक्षिणाबाध इति चेन्न, तत्प्रतिसन्धानादेवानभ्युपपत्तौ दक्षिणादानस्य वैफल्यापत्तेः। यत्र वा शुष्ककृतिर्दक्षिणा तत्र का गतिः। तस्माद् दक्षिणादानमदृष्टजनकं यज्ञाङ्गमेव। तथा चागमः—

हृतमश्रोत्रिये दानं हतो यज्ञस्त्वदक्षिणः।
तस्मात् पलं काकिनीं वा पुष्पं फलमथापि वा॥
प्रदद्याद् दक्षिणां यज्ञे तया समफलो भवेत्॥ इति।

एतच्च ताण्ड्यब्राह्मणेऽप्युक्तम्—तथा हि श्लेष्म वा एतद्यज्ञस्य यद्दक्षिणा न वा अश्लेष्मा रथो वहत्यथ यथा श्लेष्मवता यं कामं कामयते तमभ्यश्नुते । एवमेतेन दक्षिणावता यं कामं कामयते तमभ्यश्नुते । शुभो वा एता यज्ञस्य यद्दक्षिणा यद् दक्षिणावता यजते शुभमेवास्मिन् दधातीति (१६।१।१३-१४।)

मुख्यार्थः, श्लेष्म रथकीलः रथस्य श्लेष्म वैतत् यद् यज्ञस्य दक्षिणा न वा अश्लेष्मा कीलकशून्यो वा रथो वहति गच्छति । यथा श्लेष्मवता रथेन रथी यं कामयते तमभ्यश्नुते प्राप्नोति । एवमेतेन दक्षिणावता यज्ञेन याज्ञिको यं कामं कामयते तमभ्यश्नुते । शुभो वा एतद् यज्ञस्य दक्षिणावता यज्ञेन यजते शुभमेवास्मिन् दधातीति अस्मिन् दक्षिणावति शुभभाजं भवति ।

तदयं तात्पर्यार्थः, यथा कीलकशून्यो रथो नोद्देश्यं प्राप्नोति एवमिष्टसिद्धिर्न दक्षिणाशून्याद् यज्ञादिति । न च सत्राधिकरण-विरोधः । तत्र हि य एव यजमानास्त एव द्विजा इति श्रवणाद् दातृगृहीत्रोरैक्ये परस्वोत्पत्तेरसम्भवात् । दानस्यासम्भवित्वेनागत्या दक्षिणाबाधादिति । अथैवमपि वेदाप्रामाण्यान्न फलाभावः किन्तु कर्त्रादिवैगुण्यादित्यत्र विनिगमकं न किमपीति चेत् न, नहि वयं प्रामाण्यं साधयामः किन्तु त्वदुक्तहेतुमेव सन्दिग्धासिद्धं साधयाम इति ।

ननु साङ्गेऽपि कर्मणि पुत्रादर्शनात् कुतो नानृतत्वम् । तत्र जन्मान्तरीयपुत्राभ्युपगमात् । पुत्रमात्रस्यैव फलत्वश्रवणादिति ।२।१।५५।

व्याघातं परिहरति—

## अभ्युपेत्य कालभेदे दोषवचनात् ।२।१।५६।

न व्याघात इति शेषः । [स] मयोदित एव होतव्यमित्यग्न्याधान-

कालेऽभ्युपगमात्। तत्कालभेदे तस्याभ्युपगमस्यातिक्रमे श्यावोऽस्याहुतिमभ्यवहरतीत्यादि दोषवचनादित्यर्थः।

नन्वेवं व्याख्याने उदितादिविधिवाक्यैरेकैकहोमो विधीयत इति गम्यते। एको होमस्त्रिषु कालेषु समुच्चयेन संभवति। न च [स]मयोदित एव होतव्यमित्यादिनियमेन शाखाभेदेन वा व्यवस्थित विकल्पादुपपत्स्यत इति वाच्यम्। तत्र प्रतिपादकविकल्पाद्यश्रवणादिति चेन्न विकल्पादेवैतद्वर्ण्यात्मकतया [?] तदश्रवणेऽपि तदसम्भवात्। उदितादिलक्षणस्तु—

लेखामात्रोदिते सूर्ये रश्मिभिः परिभूषिते।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत्॥
रात्रेः षोडशमे भागे ग्रहनक्षत्रसंयुते।
अनूदितं तं जानीयात् तत्र होमं प्रकल्पयेत्॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्यश्चेत् समयाध्युषितं विदुः॥

इति स्मार्तमेव।२।१।५६।

पौनरुक्त्यं परिहरति—

**अनुवादोपपत्तेश्च।२।१।५७।**

चकारात् पुनरुक्तानामिति समुच्चीयते। पुनर्वचनं हि प्रयोजनाभावे पुनरुक्तं प्रयोजनवदनुवादः। अत्रोत्तमा शेषा पाणिन्यादिभिस्तथैव स्मरणात्। तेनोत्पत्तिवाक्ये श्रुतानामेकादशसामिधेनीनां प्रथमाया उत्तमायाश्च त्रिस्त्रिः पाठे पञ्चदशत्वं सिद्ध्यति। तथा च मन्त्राभिवादः—इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेणापबाधे योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति मन्त्रो वज्रं पञ्चदश सामिधेनीरभिवदति। एतच्च पञ्चदशत्वमभ्यासं विना न निर्वहतीति प्रयोजनवत्वान्न पौनरुक्त्यमित्यर्थः। सामिधेन्यस्तु ॐ प्रवो वाजा अभिद्यवो

हविष्मन्तो घृताच्या । देवां जिगाति सुम्नयुमिति यागादि समुच्चयः । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ।२। ॐ तन्त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि बृहच्छोचा यविष्ठय ।३। ॐ स नः पृथुश्रवा यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ।४। ॐ इलेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ।५। ॐ वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईडते ।६। ॐ वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ।७। ॐ अग्नि दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ।८। ॐ समिध्यमानो अध्वरेऽग्निः पावकः इड्यः । शोचिः केशस्तमीमहे ।९। ॐ समिद्धो अग्न आहुत देवान् यक्षिस्वध्वर । त्वं हि हव्य-वाडसि ।१०। ॐ आजुहोता दुवस्यताग्नि प्रयत्यध्वरे । वृणीध्वं हव्य-वाहनम् २।१।५७।

एवं वेदप्रामाण्यसंभावनाहेतुर्वक्तुमर्हति । यदा सम्भावितश्च प्रतिज्ञायां पक्षत्वं साध्यते हेतुना—

'न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः' । इत्यत आदौ प्रामाण्यसम्भावनाहेतुमाह—

**वाक्यविभागस्य चार्थग्रहणात् ।२।१।५८।**

प्रामाण्यं संभाव्यते वेदानामिति शेषः ।२।१।५८।

येषां शब्दानां वाक्यविभागो दृष्टस्तत्प्रदर्शनाय सूत्रम्—

**विध्यर्थवादानुवादवचनविनियोगात् ।२।१।५९।**

मन्त्रब्राह्मणसमुदायस्तावत् वेदः । तत्र ब्राह्मणभागो विध्यर्थ-वादानुवादभेदात् त्रेधेत्यर्थः ।२।१।५९।

तत्र विधिस्वरूपमाह—

विधिर्विधायकः ।२।१।६०।

कृतिजनकचिकीर्षाजनकज्ञानजनकः शब्द इति सूत्रार्थः । तत्र विधिपदानां लिङादीनां यत्नोऽर्थ इत्येके । तन्न, यत्नज्ञानस्याप्रवर्तकत्वात् । विधायकवाक्यजन्यज्ञानानां यत्नत्वाप्रकारकत्वाच्च । नापि शब्दव्यापारोऽभिधा, तदर्थश्च पदार्थस्मृतिहेतुपदपदार्थसंबन्धभिन्नायास्तस्या असिद्धेः, तज्ज्ञानादप्रवृत्तेश्च । अथ शब्दानां भाव्यमानप्रवृत्तिहेतुज्ञानं प्रति कारणतया तद्व्यापारोऽभिधैव कल्प्यते । तस्याश्च व्यापारिशब्दाश्रयतया शब्दभावनेति नाम, सैव च लिङादिवाच्या । यदाहुर्भाट्टाः—

लिङोऽभिधा सैव च शब्दभावना
भाव्या च तस्याः पुरुषप्रवृत्तिः ।
संबन्धबोधश्च करणं तदीयं
प्ररोचना चाङ्गतयोपयुज्यते ॥ इति [?]

भावना तावद्द्वेधा, अर्थभावनाशब्दभावनाभेदात् । तत्राद्यायाः करणं यागो, भाव्यः स्वर्गोऽङ्गं प्रयाजादिकमिति । अन्त्यायास्तु करणं शब्दशक्तिः भाव्या प्रवृत्तिः अङ्गमर्थवादः । तत्रान्त्या इत्थं [कथं] संगृहीतेति वाच्यम् ।

अभिधा भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना ह्यन्या सर्वाख्यातस्य गोचरा ।। इति ।
[ तन्त्रवार्त्तिकम् २।१।१।१। ]

तन्न, मानाभावात् । न च स्ववृत्तिव्यापारकर्मस्वेव क्रियाकरणत्वं यथा ज्वलनकर्तृः काष्ठस्य पाके । तथा च शब्दस्यापि [स्वा]श्रितशब्दभावनारूपव्यापारकर्तृतया सिद्ध्यति शब्दभावनेति वाच्यम्, लाघवात्

व्यापारहेतुतयैव करणत्वात्, प्रवृत्तिविषयानुकूलभावनालिङभिधेयेत्य तोऽप्रवृत्तेः। नापि पूर्वापरीभूतफलानुकूलयत्नात्मिका भावना लिङर्थः। तस्याश्च सर्वान्वयातसाधारणत्वेनाप्रवर्तकत्वात्। नापि सङ्कल्पः तज्ज्ञानस्याप्रवर्तकत्वात्।

*अत्र प्राभाकराः*—आरोग्यकामः पथ्यमश्नीयादिति वाक्य-श्रवणानन्तरं पथ्याशने प्रवृत्तं प्रयोज्यमुपलभ्यमानो बालो यस्य ज्ञानं कृतिजननीमिच्छां जनयति स [तं] लिङर्थमवधारयति। आत्मनि कृता-विच्छा[दौ] ज्ञानस्य हेतुत्वावधारणात्। आत्मनि च तेन कार्यत्व ज्ञानमेव तथात्वेनावधृतमिति तत्रैव लिङः शक्तिं कल्पयति। तथा हि चिकीर्षा तावत् कृतिजननी, सा च कृतिसाध्यत्वप्रकारिका कृतिसाध्य [ता] क्रियाविषयेच्छा पाकं कृत्या साधयामीति बुद्धि-वेघनात्। सा चासमानप्रकारकज्ञानजन्या ज्ञानेच्छयोस्तथैव कार्य-कारणभावादिति सिद्धं कृतिसाध्यताप्रकारकं ज्ञानं चिकीर्षाद्वारा कृति हेतुः। न चैवं लघूपाये सम्भवति गुरूपाये प्रवृत्त्यापत्तिः। इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखाजनकत्वस्य कृतौ परिचाय-कत्वात्। नापि भ्रमे तदापत्तिः, तस्य जन्यक्रियाजन्यत्वात्। न च गुरुतरभारोक्तेन अप्रवृत्तस्य क्रियानन्वये भ्रमो दोषः। तत्राप्यन्तर्नाडी-चलनसंभवादिति *केचित्।* तन्न, आमवातजडीकृतसकलनाडीकल्पो-त्थानाय यतमानस्य भ्रमोदयात्। किन्तु स्वोद्देशजत्वस्यापि कृतौ परिचायकत्वात्। अनयोस्तु न विशेषणत्वं गौरवात्। स्वोद्देशजत्वं तु स्वेच्छाधीनत्वम् न तु स्वचिकीर्षाधीनत्वं गौरवात्। तथा चोक्तधर्माभ्यामुपलक्षितो मानसप्रत्यक्षसिद्धो यः कृतिविशेषस्तत्साध्य-ताज्ञानं प्रवर्तकम्।

ननु मया तत्र कृतिविशेषकारणविशेषव्यङ्ग्यो जातिविशेषो-ऽनुभवसाक्षिकोऽभ्युपेयत इति स्वेच्छाधीनत्वादिना तद्वानेव कृति-विशेष उपलक्ष्यत इति मन्मते घटते। त्वन्मते तु न तथा, त्वया तत्र

जात्यनङ्गीकारादिति चेत्? यतो विलक्षणकृतिविशेषा एव ममापि तदुपलक्ष्या इति तुल्यम्। न चाननुगमः, उपलक्षणानुगमे धेन्वादिपदशक्यत्ववत् पूर्ववद्धर्मतादिज्ञाने पक्षतानुगमेनानुगमवच्च तदनुगमादिति। न, अवधृतायाथार्थ्यस्य तादृशस्मरणस्याप्रवर्तकत्वात्। अनाद्यप्रवृत्तौ तु लिङ्गतदाभासशब्दवत्तदाभासजन्यमिष्टोपायतासंशयरूपं स्मरणं चास्माच्च [?] सिद्धपाकादिविषयकादेव कृत्यनर्हस्वरूपकार्यत्वज्ञानात् प्रवृत्तिस्वाभाव्यादसिद्धे इच्छाकृतीति केचित्।

*अन्ये* तु कार्यत्वं न तावत् सिद्धसाधारणं कृत्यनन्तरभविष्यत्वम्। चिकीर्षायाः कृत्या साधयितुमिच्छायाः कृत्यनन्तरभविष्यत्वप्रकारकत्वानुभवसिद्धत्वात्। इयं च न सिद्धावयवकार्यताज्ञानात्। तत्र कृत्यनन्तरभविष्यत्वप्रकारकज्ञानत्वस्य प्रमाभूतस्येदानीमसम्भवात्। न चासंसर्गाग्रह एवासौ शुक्तौ रजतासंसर्गाग्रहादिवासमर्थप्रवृत्त्यापत्तेः।

अथ सिद्धविषयककृत्यनन्तरभविष्यत्वप्रकारकस्मरणात् कालास्पृष्टादिदानीमसिद्धे प्रवृत्तिः तत्स्वाभाव्यादिति चेन्न पूर्वमप्येतदनुभावकाभावात्। तद्भावे वा इदानीमेव तथास्तु। किञ्चैवं लाघवात् कृतीच्छैव कारणमस्तु समानविषयकत्वस्य त्वया ज्ञानेऽप्यनादरणात्। तस्मात् स्वविशेषणवत्ताप्रतिसन्धानजन्यं कार्यताज्ञानं प्रवर्तकम्। तद्यथा काम्ये स्वविशेषणं कामना ततस्तत्साधने तस्येष्टसाधनताज्ञानम्, ततस्तद्धेतुकं कार्यताज्ञानम्। एवं नित्येऽपि वेदात् कार्यत्व उपस्थिते स्वविशेषणे च शौचादौ प्रतिसंहिते तज्जन्यं कार्यताज्ञानम्। तथा चैतत्सन्ध्यायामहं कृतिसाध्यसन्ध्यावन्दनः एतत्सन्ध्यायां शौचादिमत्वात्। यो यत्सन्ध्यायां शौचादिमान् स तत्सन्ध्यायां कृतिसाध्यसन्ध्यावन्दनो यथा पूर्वसन्ध्यायामहम्।

एवं पाको मत्कृतिविशेषसाध्य इष्टोत्पत्तिनान्तरीयकदुःखाति·

रिक्तदुःखाजनकत्वे सति मत्कृतिं विना असत्त्वे सतीष्टसाधनत्वात् मद्भोजनवत्। कृतिविशेषश्च स्वेच्छाधीना कृतिः। अत्र हेतौ मधु-विषसम्पृक्तान्नभोजनादौ व्यभिचारवारणाय यथोत्तरं विशेषणत्रयम्। न च कृतक्रियमाणयोर्व्यभिचारः। तयोरपि कदाचित् कृतिसाध्यत्वात्। इदानीं कृतिसाध्यत्वस्य चासाधनात्। अन्यथा दृष्टान्तस्यापि साध्य-वैकल्यापत्तेः। इदानीं कृतिसाध्यतासिद्धिस्तु वर्तमानस्य पक्षावच्छेदक-त्वात्। यद्यपि वर्तमानः कालो न पक्षः, तत्र साध्योपसंहाराभावात् तथापि आत्मत्वप्रकारकमेव ज्ञानमनुमितिः। इदमिति तत्काल एव पक्षावच्छेदकः। पक्षतावच्छेदकधर्मावच्छिन्नसाध्यसिद्धेश्चानुमाने क्लृप्तत्वात्। अन्यथा वह्न्यनुमानेऽपि कालगर्भव्याप्त्यवबोधे वर्तमान-वह्न्यनुमितौ तदानीं निष्कम्पवह्न्यर्थिप्रवृत्त्यनुपपत्तेः। यस्य यदिष्ट-साधनं यदा यत्कृतिं विना न सिद्ध्यति तत् तदा तत्कृतिसाध्य-मिति व्याप्त्या दृष्टान्ते कालान्तरमादाय साध्यप्रसिद्धिः। पक्षे त्विदानीं कालमादाय पर्यवसानः। न चैवं साध्यत्वसाधनत्वयोरेककालान्वये-ऽबोधः। यदेत्यस्येष्टसाधनत्वेनानन्वयात्। तथा चोत्तरकाल इष्ट-साधनं तत्प्राक् काले कृतिं विनासत्तदा कृतिसाध्यमिति कालभेदा-न्तर्भावेनैव साध्यत्वसाधनत्वावगाहिनी व्याप्तिधीर्यथा तव प्रवृत्ति-कारिणीति।

ननु पाकादिः कृतः क्रियमाणो वा न पक्षः। इदानीं तत्र बाधेन कृतिसाध्यत्वानुपसंहारात्, नानागतः तस्याज्ञानात्। सामान्य लक्षणाया अभावात्, अनुमितेश्च पक्षज्ञानजन्यत्वात्। न च पक्ष-ज्ञानस्य तत्कारणत्वे मानाभावः। अयमेतद्वानिति हि विशिष्ट वैशिष्ट्यबोधः। तत्र च पूर्वविशेषणवत्तया ज्ञात एव काल उत्तर-विशेषणसम्बन्धबाध इत्यायातं पाकत्वेन पक्षीभूतपाकज्ञानं तदङ्ग-मिति।

हुअत्राः—पाको मत्कृतिविशेषसाध्य इत्यनुमितिः पाकत्व-

प्रकारकज्ञानजन्येति मत्या न तु तत्प्रकारकपक्षज्ञानजन्यं गौरवात्। एवं च पक्षधर्मताधीरपि पक्षतावच्छेदकरूपवद्वृत्तिताधीः। सा चेहास्त्येव। एवं च यथा वह्नित्वप्रकारकादुदाहरणीयवह्निज्ञानादेव पर्वतीयवह्नावज्ञातेऽपि पर्वते वह्निमत्त्वधीः तथा पाकत्वेन सिद्धपाकज्ञानादेवाज्ञातमपि भविष्यन्तं पाकमादाय कृतिसाध्यताधीः। तेन विना साध्योपसंहाराभावात्। न हीदानीं कृत्यनन्तरभविष्यत्वं कृतक्रियमाणयोरुपसंहारार्हं बाधात्, पक्षधर्मतायाः प्रतीत्यनुपपत्तिसीमत्वात्। क्व ह्याश्रयासिद्धिः। यत्र न पक्षतावच्छेदकप्रकारकज्ञानम्। तदुक्तम्—

प्रसिद्धस्य क्वचित् सिद्धे सिद्धे सिद्धस्य च क्वचित्।
अप्रसिद्धस्य चासिद्धे सिद्धिस्तेनानुमा त्रिधा॥ इति।

उच्यते न तावदाद्यः। अनिष्टसाधनताभ्रमेऽपि यथोक्तकृतिसाध्यपाके कृतिसाध्यत्वप्रकारकज्ञानात् प्रवृत्त्यापत्तेः। अथ यथोक्तकृतिसाध्यत्वेन ज्ञानं तद्धेतुः। तर्हि साध्येष्टनान्तरीयकदुःखातिरिक्तदुःखाजनकत्वे सतीष्टसाधनत्वमेव कृतिसाध्यताज्ञानविषयीभूयातिप्रसङ्गवारकमस्तु न तु त्वदुक्तम्, इच्छाज्ञानस्यापि प्रवर्तकतापत्तेः। तथा चायं दोषो न सत्पक्षे तथानुपदमेव वक्ष्यामः।

लिङ्त्वाख्यातत्वेन कृतिर्विधिप्रत्ययत्वेन चेष्टसाधनत्वमर्थस्तदुभयं चाविशेषात् प्रकृत्यर्थान्वयीति यागे कृतिसाध्येष्टसाधनत्वधीः शाब्दी। न च साध्यत्वसाधनत्वयोर्विरोधो निर्विशेषितयोरविरोधात्। अन्यथैकत्र न ते स्याताम्।

ननु तयोरविरोधे वाजपेयेन यजेतेत्यत्रापि पेयात्मकवाजसाध्यतया लिङ्स्तु नियोगसाधनतया तद्यज्ञार्थः प्रतीयतामिति द्रव्यविशिष्टयागविधिरेवायं भवतु। तेनोत्कटा द्रव्याकाङ्क्षापि पूरिता स्यात्। तथा च वाजपेयपदस्य कर्मनामधेयत्वमिति सिद्धान्तो भज्येतेति

चेत् नाबोधीरवाजपेयेन यजेतेति हि विनियोगसाधनं यागमनूद्य द्रव्यं विदधात् नियोगसाधनतारम्भस्य यागस्य पेयबाजसाध्यतां विदधीत। तच्च न संभवति साधनतारम्भस्य साध्यतावैशिष्ट्यविरोधादित्येक-काले साध्यत्वसाधनत्वप्रतीतिविरोधात् कर्मनामधेयत्वम् न तु निर्विशेषतयोरपि साध्यत्वसाधनत्वयोर्विरोधादिति । द्रव्यं त्वत्र सोमीयमेवान्वीयते अनपवादादिति । नापि द्वितीयः, विषभक्षणादि-व्यावर्तनाय कृतसाध्यताज्ञाने यथोक्तेष्टसाधनत्वस्यैव लाघवेना-वच्छेदकत्वात्, न तु स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्य गौरवात्। लिङ्गाभासाच्छब्दाभासाच्च प्रवृत्त्यनापत्तेः। उभयत्रेष्टसाधनतादिकं काम्यानुमित्यसंभवात् । लिङ्गाभासशब्दाभासयोर्भेदाग्रहस्य सच्छब्दे शाब्दग्रहस्य सतोऽपि त्वया तद्धेतुत्वेनानभ्युपगमात्। साध्यत्व-साधनत्वयोश्च यथा न विरोधस्तथोक्तम्। अन्यथा तवापीष्टसाधन-त्वात् कार्यतानुमितौ बाधासिद्ध्योरन्यतरप्रसङ्गः।

वस्तुतस्तु सिद्धसाधनकृतिसाध्यताज्ञानं न प्रवर्तकम्। अन्यथा तस्य सिद्धत्वाद् यथा विरोधे वाजपेयेन यजेतेत्यत्रापि तयोरविरोधे वाजपेयपदस्य कर्मनामधेयत्वमिति व्याहन्येत। किञ्च स्वतोऽसुन्दरे वस्तुतो यत् स्वेष्टं तत्साधनतामभिसन्धाय येच्छेति सा तत्साध्या न तु कृतिसाध्यताज्ञानसाध्या धृष्टौ तदनापत्तेः । न च केवलायां धृष्टाविच्छैव न अपलापात् । तस्मादुपायेच्छायामिष्टोपायताज्ञानस्य हेतुत्वावधारणात् तत्रावश्यकं किञ्चिदिच्छायाश्चिकीर्षात्वसिद्धये कृति साध्यत्वमपि तद्धेतुज्ञानविषयः।

किञ्च त्वत्पक्षे स्वर्गकामो मण्डलीं कुर्यादिति वाक्यं प्रमाणं स्यात्, विषयाबाधात् । यत्तु विशिष्टोपायताज्ञानमेव पाकचिकीर्षायां हेतुः उपायेच्छायां तद्धेतुत्वावधारणात्, न तु कृतिसाध्यपाकत्वेन कृतिसाध्यत्वेन वा गौरवात् । तत्प्रकारकेच्छायां तत्प्रकारकज्ञान-स्यैव लाघवेन हेतुत्वाच्च ।

अथ कृताविच्छा चिकीर्षा सनः प्रकृत्यर्थगोचरेच्छावाचित्वात्, न, पक्षादौ तथावगमात्। न च चिकीर्षा कृत्या साधयितुमिच्छा, भोजनं कृत्या साधयामीति तदनुभावात् [तदनुभवात्] न तु कुरु मम भोजनकृतिर्भवत्वित्यनुभावादिति वाच्यम्। विनिगमनाविरहात् व्युत्पत्तिविरोधाच्च। न चैवं कृताविच्छाप्रवृत्ते तु पाक इत्ययुक्तम् इच्छाप्रवृत्त्योश्च समानविषयत्वनियमादिति वाच्यम्। कृतेरिष्टसाधनतापरत्वे एकप्रत्ययोपात्तत्वेनान्तरङ्गत्वात् ततस्तामिच्छति ततः कृतिरुत्पद्यते ततः पाकोत्पाद इत्येव कार्यकारणभावोपपत्तौ ज्ञापितयोः समानविषयकत्वानुपगमात्। इयानेव विशेषो कृतिविषयिण्या चिकीर्षया स्वविषयः साक्षादेव जन्यते पाकादिस्तु कृतिद्वारेति तस्याः स्वभाव इति।

नैवम्, प्रकृतिप्रत्ययार्थान्वयव्युत्पन्नत्वादन्वयधीद्वयकल्पने कृतिसाध्यत्वप्रकारिकैवेच्छा, सैव हि प्रवर्तिका। घटं जानाति चिकीर्षति करोतीति हेतुहेतुमद्भावापन्नज्ञानचिकीर्षाकृतीनां समानविषयत्वानुभवाच्च। नापि व्युत्पत्तिविरोधः लाघवात्। कृत्यर्थान्वितज्ञानजनकत्वमात्रं सनित्युपत्वम्? [सनोऽर्थत्वम्] न तु प्रकृत्यर्थविषयेच्छाबोधकं गौरवात्। तथा च विपक्षादौ विषयतया पाकस्यान्वयः चिकीर्षायां तु कृतेरिच्छाप्रकारतयेति।

नन्वस्तु कृतीच्छैव चिकीर्षा, सैव च प्रवर्तिका, सापि द्विव्यापारविषयैव। तथा हि कृतेर्विनयनमात्रं किन्तु व्यापारसाधनावस्था यत्नः। तथा च तदिच्छात्मसाध्यीभूतव्यापारपर्यन्तैरेव। तथाचेच्छायाः विशिष्टविषयत्वात् व्यापार एवास्या विशेष्यः। कृतिस्तु प्रकारस्तत एव च त्वदुक्तं कृते कर्तव्येच्छायौगपद्यमपि घटते। अन्यथेच्छाद्वयस्यैकदान्वये एकस्या इच्छाया उभयरूपत्वाभावे तन्न स्यादिति सर्वं सुस्थमिति *वटेश्वर*मतं, तन्न। एवं हि कृतित्वं प्रकारः स च नेच्छाविषयः तदुपश्लिष्टौ व्यापारयत्नौ तावेव हि त्वन्मते

कृतिस्तथा च कृतीच्छैव स्यात् न तु कर्तव्येच्छापि । न चेच्छायौगपद्यप्रवादव्याहतिर्दोषाय तस्य प्रौढिवादरूपत्वादिति । अथ यथोक्तेष्टसाधनताज्ञानस्य प्रवर्तकत्वे इच्छाज्ञानमपि तद्धेतुः स्यादिति चेत्, न, वस्तुतो यत्रेच्छा[तत्र] तत्साधनताज्ञानस्य प्रवर्तकत्वात्। अथैवं सुखादिसाधनताज्ञानं प्रवर्तकम्, तच्च शक्यमननुगमात् । यच्च शक्यमिष्टसाधनत्वज्ञानं तच्च न प्रवर्तकमिति विधेः प्रवर्तकतैव न स्यादिति चेत्—साक्षादेवमेतत्। किन्तु इष्टसाधनं याग इति लिङ्-बोधिते इष्टाकाङ्क्षायां काम्यत्वेन श्रुतः स्वर्ग एवेष्टत्वेनावगम्यते। तेन स्वर्गकामपदसमभिव्याहारात् स्वर्गसाधनं याग इति वाक्यजं ज्ञानं प्रवर्तकमापद्यते।

ननु श्येनेनाभिचरन् यजेतेत्यत्र कथं विधेः प्रवृत्तिः । तथा हि अभिचारस्तावद्धिंसा, सा च न हिंस्यात् सर्वाभूतानीति प्रतिषिद्धा। न चाग्नीषोमीयपशुहिंसावदियं हिंसा शाब्दी, तथा च तद्वदेवा-निषिद्धेति वाच्यम्। न हिंस्यात् सर्वाभूतानीत्येव हि निषेधस्व-रूपार्थोऽनारभ्याधीतत्वात्। अन्यथा क्रत्वर्थत्वेऽस्य स्वातन्त्र्येण स्थानं न स्यात्। तथा च रागतः प्राप्तां हिंसामयं निषेधेन रागहिंसासाध्या-दनिष्टात् पुरुषं वारयन् [अ?] पुरुषार्थो भवति। तथा चानेन श्येन-फलीभूतापि हिंसा प्रतिषिध्यते रागप्राप्तत्वात् रागप्राप्तापि तद्भूतादि-हिंसा न प्रतिषिध्यते अनर्थासम्भेदात्, अग्नीषोमीयपशुहिंसावत्। अथ हिंसानिषेधेऽपि श्येनविधौ किमायातं, न ह्यत्र हिंसा विधीयते, येन विधिः स्यात्, किन्तु रागप्राप्तां हिंसां फलत्वेनानूद्य तदुपायतया श्येनो विधीयत इति चेत्—न, हिंसानिषेधः स्यात् । तन्मते श्येनस्या-नर्थत्वात्। कथं विधेयत्वमिति? उच्यते श्येनेनाभिचरन् यजेतेत्यनेन श्येनो न विधीयते अनन्वयादेव? किन्तु रागतोऽभिचारोद्यतं तदुपाय-जिज्ञासुं प्रति तदुपायविशेष उपदिश्यते छिदोद्यतं छिदाहेतुजिज्ञासुं

प्रति परशुश्छिदाकारणमितिवत्। तथा च योऽभिचरितुमिच्छेत्तस्य श्येन उपाय इति तदर्थः।

एवं च श्येनस्य विध्यनालिङ्गितत्वेन हिंस्यादिति निषेधकवलिततया प्रत्यवायजनकत्वम्। तेन प्रत्यवायेनानन्तरं वैरिहिंसामुत्पाद्य नरको जन्यत इति श्येनयत्नतदर्थापूर्वनरकाणामनुष्ठातृवृत्तित्वम्। अपूर्वन्तु हिंसामनुत्पाद्य नरकं जनयितुं न शक्नोतीति। तदानुगुण्येनानन्तरां वैरिहिंसामुत्पादयति। नन्वेवं श्येनापूर्वस्य यजमानवृत्तितया तत्फलस्य च हिंसाया वैरिवृत्तितया फलापूर्वयोर्वैयधिकरण्यं स्यादिति चेत्, न, तदभिचरितुः प्रत्यवायापूर्वं तत्फलं च न वैरिहिंसानिरोधात्, किन्तु स्ववृत्तिर्नरक एव। वैरिहिंसा तु तस्य नरकार्जनाय द्वारमिति। अत एव यो यत्कृतिफलान्वितया क्रियते स तदनुकूलमतिशयं तदर्थमेव जनयति इत्यत्र नियमे वैरिगतहिंसार्थितया क्रियमाणे यजमानगततदनुकूलापूर्वजनके श्येने व्यभिचारमतोऽप्यवह्णेः [?]।

अथ श्येन एव कस्मान्न हिंसा लाघवेन साक्षात्परम्परासाधारणमरणफलकव्यापारस्यैव हिंसात्वात्। अत्र केचित् पचयादावव्यवहितमेव विक्लित्यादिरूपं फलधात्वर्थावच्छेदकम् तद्वदिहाप्यव्यवहितमेव मरणरूपं फलं धात्वर्थावच्छेदकम्। तेनानुनिष्पादिमरणफलको व्यापारो हिंसेति। स च व्यापारोऽभिचरणीयस्य धातुविकारादिरूप इत्याहुः।

धात्वन्तरे तथात्वेऽप्यत्र गललग्नान्नान्मरणे भोक्तुरपि हिंसापत्तिः, तस्याहिंसात्वात् किन्तु मरणोद्देश्यकोऽनुनिष्पादिमरणफलको व्यापारो हिंसेति। न चैवमकामकृते ब्रह्मवधादौ ब्रह्महत्यानापत्तिः। दोषस्येष्टत्वात्। अत एवाज्ञानकृते हत्यामकृते च प्रायश्चित्तार्धमपि संगच्छते, अन्यथा वधाविशेषे तन्न स्यात्। अत एव कूपादौ नष्टे

गवि न तत्कर्तुर्गोवधः मरणोद्देश्यव्यापाराद्यभावात् । मरणोद्देश्यश्च फलीभूतमरणविषयको विवक्षितः । अत एवान्यमरणोद्देश्येन क्षिप्तनाराचेन हते गवि न क्षेप्तुर्गोवधित्वम् गोमरणस्यानुद्देश्यत्वात् । अथैवं खलु खड्गघातेन दिनान्तरे तद्विनाशितुस्ताद्धिंस न स्यात् । मरणस्यानुनिष्पादित्वाभावादिति चेत् न, अदृष्टानन्तरे तस्य मरणोद्देश्यकमरणफलकव्यापारस्य हिंसात्वात् । तस्य चात्राप्यनपायात् । न चादृष्टान्तरितत्वविशेषणे मौलाभावः क्षणलवमुहूर्ताद्यन्तरायाभावविवक्षणेऽननुगमापत्त्यानुगमार्थमतद्दृष्टानन्तरितत्वस्यावश्यदेयत्वात् । तथा च श्येनो न हिंसा अदृष्टान्तरितत्वात् किन्तु हिंसाजनक एव । ननु व्यापारीभूतमदृष्टं न व्यापारव्यवधायकं स्वाङ्गत्वात् यागादृष्टवदिति । तस्मात् श्येनो न हिंसा किन्तु तज्जनक इतीति सूक्तं श्येनस्यानर्थत्वान्न विधेयत्वमिति ।

नन्वस्य विधेयत्वाभावे श्येनेनाभिचरन् यजेतेत्यतः कथं प्रवृत्तिः । इत्थं रागप्राप्तमभिचारीप्रत्युपायत्वे अनेन बोधिते द्वेषोत्कटत्वाद् बलवदनिष्टानुबन्धांशे तिरोहिते बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानादगम्यागमनवदिति सर्वं सुस्थम् ।

इष्टसाधनताज्ञानं न प्रवर्तकम् नित्ये सन्ध्योपासनादौ तदभावेऽपि प्रवृत्तिदर्शनात् । न च यावन्नित्यनैमित्तिकानुष्ठानस्य ब्रह्मलोकावाप्तिफलकत्वश्रवणादत्रापि सैव फलं कामनोपाधिकार्यत्वे कामनायाऽसार्वदिकत्वात्, नियतानुष्ठानानापत्तेरिति चेत् नात्र सन्ध्यास्तवपाठादाविव नियतकामनासम्भवात् । किञ्च कामनाया असंभवे नैमित्तकानुष्ठानमपि नियतं न स्यात् । अपि चानुवादाद्युपस्थितफलोपाधिकर्तव्यत्वेऽवगतेऽकुर्वन् विहितं कर्मेत्यादिचिन्तया अकरणे प्रत्यवायकल्पने तत्परिजिहीर्षयैव नियतप्रवृत्तिसंभवात् । ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थस्य निषेधानुपपत्तिस्तद्भक्षणस्य तृप्तिरूपेष्टसाधनत्वादिति चेत् न, विशेष्यवति विशिष्टनिषेधस्य विशेषणविधिपर्यव-

सायितया इष्टसाधने कलञ्जभक्षणे बलवदनिष्टाननुबन्धित्वस्य विशेषणस्य निषेधात् ।

**केचित्तु** साधनत्वमात्रं लिङर्थः । स्वर्गादिसाधनतालाभस्तु समभिव्याहारात् इष्टसाधनतापक्षवत् । तथा हि यजेतेत्यनेन यागः कृतिसाध्यः साधनं चेति बोधिते साधनस्य साध्याकाङ्क्षायां कामनाविषयत्वेन स्वतोऽसिद्धः स्वर्ग एव साधनाकाङ्क्षी साध्यत्वेनावगम्यते उपस्थितत्वात्, न तु यागस्य साधनाकाङ्क्षा कृतिसाध्यत्वेनैवोपस्थितेः । न च स्वर्गकाम इत्यत्र स्वर्गकामनाया एव साध्यतयाऽन्वयोऽस्तु यागस्य कामनासाधनत्वेन योग्यताज्ञानविरहादित्याहुः ।

तन्न, न कलञ्जं भक्षयेदित्यादौ लिङर्थस्य कृतिसाध्यत्वे सति साधनत्वस्य निषेधानुपपत्तेः । तद्भक्षणस्यापि तृप्त्यादिकं प्रति साधनत्वात् । बलवदनिष्टाननुबन्धित्वेनोपस्थितेः इष्टसाधनतापक्षवदिति **त्वन्ये** ।

***आचार्यास्तु*** प्रवर्तकमिष्टसाधनताज्ञानमेव लिङर्थस्त्वाप्ताभिप्रायो लाघवात् । कुर्याः कुर्यामित्यादौ विधिलिङः सम्बोध्यानुकर्तृकक्रियेच्छाभिधायकत्वेनाज्ञाप्रार्थनादिलिङानुबन्धादीच्छाभिधायकत्वेन लिङ्मात्रस्येच्छाभिधायकत्वकल्पनाच्च ।

एवं स्वर्गकामो यजेतेत्यस्य स्वर्गकामस्य यागः कृतिसाध्यत्वेनाप्तेच्छाविषयवदर्थस्ततो यो व्यापारो यस्य कृतिसाध्यतया यस्याप्तेनेष्यते स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमिति व्याप्तिग्रहाद्यागस्य इष्टसाधनत्वमनुमिनोति । तथा हि यागे बलवदनिष्टाननुबन्धित्वे सति मदिष्टसाधनं मत्कर्तव्यतया तदाप्तेनेष्यमाणत्वात् मत्कर्तव्यतयेष्यमाणमद्भोजनवदित्याहुः । अत्र ***तरणिमिश्राः***—सर्वज्ञाप्तत्वं दुर्ग्रहं यत्र क्वचिदाप्तत्वम् व्यभिचारि ततः प्रकृतप्रतिपाद्य

आप्तत्वम्। तच्च यथार्थज्ञानवत्त्वं वा अर्थजनकज्ञानवत्त्वं वा एत-च्चोभयमपि संवादात् पूर्वं तन्त्रत्वमपि च मदर्थधीलिङ्गकात् प्रकरणा-दितो वा? नान्त्यः, शब्दादनुपस्थितानां शब्दान्वयबहिर्भावात्। नाद्यो गौरवात्। तथा हि मदाप्तेन मत्कर्तव्यत्वेनेष्यमाणत्वं गुरुकर्तव्यत्वे सति इष्टसाधनत्वम्, लघु मदर्थानन्तर्भावात्। किञ्च त्वन्मते कृति-साध्यत्वप्रकारिकेच्छा न स्यात्। लैङ्गिके प्रवर्तकज्ञाने कृतिसाध्यत्वस्या स्फुटत्वात्। अपि च स्ववृत्तिकारणीभूतज्ञानस्य शब्दादेव साक्षा-दुत्पत्तिसंभवे लिङ्गादुत्पत्तिकल्पने गौरवम्। न च

गवां ग्रासप्रदानेन स्वर्गलोके महीयते।

इत्यत्र स्वर्गकामो गवां ग्रासं दद्यादित्यादि विधिकल्पनं न स्यादिष्टसाधनत्वातिरिक्तलिङ्त्वस्याभावात्, तस्य चार्थवादादेव प्रतीतेः। अतः स्वाभिप्राय एवाधिको लिङर्थ इति वाच्यम् कृति-साध्यत्वस्यार्थवादादनुपस्थितेस्तदर्थमेव विधिकल्पनादिति।

ननु विध्यर्थ इष्टसाधनत्वे कार्यत्वे वा न यागादावन्वयोऽसम्भ-वात्। तथा हि साधनतया हि ज्ञानं साक्षात् तद्बाधे परम्परासाधक-ताप्रकारकमेव ज्ञानं भवेत्। तच्च त्वन्मते द्वारानुपस्थितौ न संभ-वति। एवं यागे कार्यतावगमो न भवति काम्यसाधनतया ज्ञात एव काम्ये नियोगस्य कार्यताज्ञानोदयात्। कामिकार्यतान्वये काम्यसाधनत्वस्य योग्यत्वात्। अत्र तु न साक्षात् परम्परया वा साधनताज्ञानं सम्भ-वति क्षणिकत्वात् परस्परघटकानुपस्थितेश्च। तस्मादन्वयप्रयोजक-रूपस्य काम्यसाधनत्वस्य योग्यताया बाधाभावानुनेयो ह्यस्य यागे कर्तव्यताधीः सम्भवात्। तथा च यागेऽपीष्टसाधनतया कार्यतया वा धीर्द्वारमन्तर्भाव्यैवेति तदेककार्यतया वाच्यमावश्यकत्वात्। न चेष्टसाधनताधीविरहात् तस्यापि कथं कार्यतया धीः कार्यतान्वय-बुद्धौ हि तस्य योग्यतात्वेनोपयोगो न तु कार्यपदार्थोपस्थिता-वपि। तस्मात् कार्यं वै देवता विधिलिङोऽर्थः।

ननु बाधकमानाभावो योग्यता । न च यागे साधनत्वमात्रे बाधकं साक्षात् तद् बाधेऽपि परम्परासाधनत्वमादायापि तद्विश्रान्तिसंभवादिति चेत्—न, स हि स्वबाधकप्रमाविरहो वा बाधकप्रमामात्रविरहो वा ? आद्ये तत् सत्त्वासत्त्वाभ्यामेकस्यैव योग्यायोग्यत्वापत्तेः । अन्त्ये परप्रमायाः अयोग्यतया तदभावस्याशक्यज्ञानत्वात् । ननु पूर्वं व्युत्पत्तिविरहः । तथा हि प्रसिद्धार्थस्वर्गकामपदात् अन्वयानुपपत्त्योपस्थितौ शक्तिर्गृहीतव्या । न च वाक्यार्थानुभवात् पूर्वमपूर्वमुपस्थितम् वाक्यार्थानुभवैकविषयस्य तदपूर्वत्वादिति चेत् न उपस्थितेष्वेव कार्यधर्मिषु कार्यत्वेन रूपेण शक्तिग्रहसम्भवात् । न चैवं शक्तिग्रहस्य प्रचरत् कार्यविषये तद्धति लिङ्मात्रस्यैव स्मृत्यनुभूतीस्तां सविषयकत्वेन शक्तिग्रहादीनां कार्यकारणभावावधारणादिति वाच्यम् । समानप्रकारकत्वेनैव तेषां तत्त्वात् । घटत्वेन शक्तिग्रहे प्रमेयत्वेनापि स्मृत्यापत्तेः । तस्य त्वयाभ्युपगन्तव्यत्वात्, उभयोश्च तत्त्वे गौरवात् । तथा च शक्तिग्रहपदार्थस्मरणे प्रचरत्कर्मविषयके वाक्यार्थानुभवस्तु योग्यतादिवशादपूर्वकार्यविषयक इति ।

ननु यदि क्रियासाधारणेनैव कार्यत्वेन कार्ये धर्मिणि शक्तिग्रहः सा च स्वर्गकामान्वययायोग्येति प्रतिसन्धानादन्विताभिधानावसरे तदन्वययोग्यस्यापूर्वस्य भानं तदा नित्यनिषेधापूर्वयोर्लाभो न स्यात् । नहि तत्रायोग्यतया क्रिया त्यक्तुं शक्यते फलाश्रवणादिति चेत् न, लोके हि तावत् पाकादेः प्रकृतिलभ्यतया कृतिरूपे कार्यत्वमात्रे लिङः शक्तिः क्लृप्ता । तथा च धर्मिणि शक्तिरेव कल्पनीया । सा च क्रियानिरासे सत्येव । नहि क्रियायाः कार्यत्वान्वययोग्यत्वे धर्मिणिशक्तिः कल्पयितुं शक्यते । तस्मात् कार्यत्वेन वस्तुतः क्रिया तद्विकार्ये धर्मिणि शक्तिकल्पनान्नित्यनिषेधयोरपि तदेव लिङा बोध्यते क्लृप्तत्वात् । अन्विताभिधानदशायां काम्यस्थलीयलिङ्गादपूर्वलाभः । एवं च लोके वेदे च प्रतीतिवैलक्षण्याल्लिङो नानार्थप्रकल्पने गौरवादन्यत्

वा लाक्षणिकत्वावश्यकत्वे लौकिक्येव लिङर्था लक्षणा (त)यापि तात्पर्यनिर्वाहात् ।

ननु वैदिक्येवास्तु लाक्षणिकी कार्यत्वशक्तेः प्रथम गृहीतत्वेनाभ्यर्हितत्वादिति चेत् न, लाक्षणिकानामननुभावकतयैव-पदैः तदर्थान्वितस्वार्थबोधने कार्यविषयो याग इत्यनुभवः स्यान्न तयोरपेक्षितोऽपि यागविषयकं कार्यमित्यनुभवः, स च न स्यादिति विधेः प्रवर्तकताभङ्गप्रसङ्गात् । एतेन व्युत्पत्तिविरोधोऽपि परिहृतः । नहि लोके क्रियाकार्यत्वमात्रे शक्तिरवधृता किन्तु कार्यत्वमात्रे क्रियायाः धातुलभ्यत्वात् । न च धर्मिणि शक्तिकल्पनेऽपि तत्तदङ्गम् तस्मात् ज्ञातैव योग्यता हेतुर्द्वाराज्ञाने च नास्ति । सा अतत्क्रियान्वयायोगात्तद्भिन्ने समयो लिङ्गमिति *प्राभाकराः* ।

अत्र वदन्ति—अन्वयप्रयोजकरूपवत्त्वं न योग्यता अनाप्तेः । पयसा सिञ्चतीत्यादौ सत्यप्यन्वयप्रयोजकद्रवद्रव्यत्वेऽनवधृतत्वस्यान्वयबोधाभावात् । किन्तु स्वबाधकमानाभावो योग्यता । न चैवं तदेव योग्यमयोग्यं च स्यात् इष्टत्वात् । दशाविशेषे साकाङ्क्षानाकाङ्क्षवत् । न चैवमपि यागे स्वर्गसाधनताधीर्न स्यात् सामान्यज्ञानस्य विशेषविषयतयानियमादिति चेत् न, वस्तुतः परम्परासाधनस्यैव विशेषस्य साध्यत्वेन प्रकारेण भानात् । तत्त्वं च प्रकारे न भासते । परम्परासाधनत्वप्रकारकज्ञाने परम्पराघटकभानस्य हेतुत्वात् ।

ननूक्तं शाब्दज्ञानस्यैकविशेषबाधे तदितरविशेषप्रकारकतानियमः अन्यथैकप्रकारकबाधे सामान्यनिश्चयेऽपि कदाचिदपरविशेषसंशयोऽपि स्यात् । न चैवम्, न चैकप्रकारबाधे सामान्यज्ञानस्यापरप्रकारसमनैयत्याद् विशेषदर्शनाद्वा सर्वत्र संशय इति वाच्यम् । उषसादौ रविस्वरूपविशेषदर्शनेऽपि प्राच्यां प्राचीति प्रतीतिदर्शनात् । तत्र दोषप्रवेशात् तथेति चेत् ? एवञ्चानावश्यकत्वात् ततप्रकारकनिश्च-

यस्य तत्प्रकारकसंशयपरिपन्थित्वस्थितौ दिङ्मोहस्थले संशयसजातीयत्वस्यापि तत्रान्तर्भावे सिद्धः सामान्यज्ञानस्यैकविशेषबाधेऽपरविशेषप्रकारकतानियम इति चेन्, मैवम्, एकप्रकारकबाधे सामान्यज्ञानस्यापरप्रकारसमनैयत्येन तस्यापि विशेषप्रकारकनिश्चयसमानशीलस्य तत्प्रकारकसंशयस्य विरोधित्वे तत्प्रकारकनियतनिश्चयत्वस्य तन्त्रत्वात्।

यच्चोक्तम्—काम्यस्य व्यवस्थितसाधनतयैव ज्ञाते कामिनः कृतिसाध्यताधीर्भवति न तस्य यागे साम्यादिति। तन्न, काम्यसाधनताज्ञानस्यैव लाघवेन तत्प्रयोजकत्वात्। न चैवं भोजनकामः सिद्धौदनोऽपि पाके प्रवर्तेत इष्टोत्पत्त्या नान्तरीयकदुःखप्रतिसन्धानस्य तत्प्रतिबन्धकत्वात्। तन्मते च बलवदनिष्टाननुबन्धित्वलिङ्गविशेषणस्याभावेन तत्र कार्यताज्ञानानुदयात्।

वस्तुतस्तु सर्वबाधकप्रमाविरहो योग्यता तस्याः संशयसाधारणं ज्ञानमात्रमेव हेतुः। शाब्दधियः बाधसंशयस्य प्रमाणापरिपन्थित्वादतो न यागे योग्यताज्ञानाभावादन्वयबोधाभावः। किञ्च व्युत्पत्तिविरहोऽपि। तथा हि स्वर्गकामान्वयायोग्यत्वात् क्रियानिरासस्तथा यागान्वयानुपपत्त्या प्रचलद्घटादिरूपकार्यनिरासस्यापि सम्भवे क्व कार्ये धर्मिणि व्युत्पत्तिः स्यात्? न चायोग्यान्वयानुपपत्तेस्तदास्फुरणं नियामकाभावात्। प्रत्युत प्रकृतिप्रत्ययान्वयोऽन्वयस्यान्तरङ्गतया तदनुपपत्तिप्रतिसन्धानमेव प्राथमिकम्।

ननु कार्यत्वस्थायित्वानुगुणत्वस्वर्गजनकत्वे अप्रमाणाभावे नागृहीतांशभागेषु बाधकाभावेन परस्परसाकाङ्क्षिषु चैकेन शक्तिः कल्प्यते। लाघवादुपपादकाच्च। दृष्टा हि एकत्वकारणत्वयोरेकैव टाशक्तिः। न चैवं नानार्थोच्छेदः शक्तिग्रहकाले एकत्रोच्चारणे इति विशेषणमहिम्ना तद्व्यवच्छेदात्। नानार्थस्थले च मानाभावेन तदप्रवेशात्।

तदेवं लिङ्गपदस्थापितानाममीषामैव सति भवति विशिष्टावगमः। एवमेवालौकिकार्थेषु व्युत्पत्तिः। नहि शब्दानुवाद एव तदर्थबोधकः स्तुतिपरत्वादिति। मैवम्, अयोग्यतया स्थायिघटादिनिरासवत् स्थायित्वादीनामपि तदवरुद्धानां निरासात्।

किञ्चैवमपूर्ववाच्यतापि न स्यात्, धर्ममात्रस्यैवालिङ्गार्थत्वात्। एषामन्वयो न स्यात् यागस्यायोग्यत्वात्। अन्यस्यानुपस्थितेराश्रयाभावात्।

किञ्च तृतीया करणत्वैकत्वयोरेका शक्तिरित्यपि वार्तम्। तथा हि शक्त्यैक्यं हि शक्त्यैकत्वापस्थित्यैक्यम्[?]नाद्यः, पशुपदस्य नानार्थतापत्तेः। न च तत्रापि लोमवल्लाङ्गूलत्वरूपं पशुत्वं शक्यमेव न तु शक्योपलक्षितमिति वाच्यम्। तथा सति छिन्नपुच्छादावप्रयोगापत्तेः।

ननु गतमतिबलात् पशुत्वम् जातिरेव शक्यमिति चेत्, न द्विपद्वीप्यादौ सार्वलौकिकपश्वाकारानुगतमत्यभावात्। कुतस्तर्हि द्रव्यत्वं जातिः। समवायिकारणत्वावच्छेदकत्वान्यथानुपपत्तेः।

द्वितीयस्तु अभ्युपगम्यते किन्तु प्रकृते न संभवति। नान्त्यो व्युत्पन्नस्य नानार्थस्थलेऽप्युपस्थित्यैक्यसंभवात्। अन्यथा तत्र विनिगमनावसरोऽपि न स्यात्। किन्तर्हि शक्त्यैक्यं नियामकप्रवृत्तिनिमित्तैक्यम्। एकत्वकरणत्वयोस्तु नैकं प्रवृत्तिनिमित्तम् किन्तु नाना। एक पद इव देवलविभीतकत्वादि पशुपदे तु लोमवल्लाङ्गूलयोग्यताप्रवृत्तिनिमित्तमतो न तदपगमेऽपि अप्रयोगापत्तिः। आकाशादिपद इव शब्दाश्रयत्वयोग्यतेति।

यदि नैका शक्तिः कथं तर्हि टापदेन करणत्वैकत्वयोर्युगपदुपस्थितिः। इत्थम्, अस्ति हि टापदस्य तृतीयात्वम्। अस्ति च समुदाय-

प्रथमाविभक्तित्वम्। तथा च तृतीयात्वपुरस्कारेण तत एव करणत्वोपस्थितिः। समुदायप्रथमविभक्तित्वपुरस्कारेण चैकत्वोपस्थितिः। उभयत्र व्युत्पन्नस्य उभयशक्तिप्रतिसन्धानादेकदैवोभयानुस्मृतिरिति। तस्मात् पाके पचेतेत्यादौ कर्मत्वेन साधनत्वरूपधर्मशक्तालिङ् यजेतेत्यादावपि योग्यतादिवशात्तद्‌वयं यागे बोधयतीति वादे धर्मिणि शक्तिकल्पना प्रतीता चाङ्गसाधनता, साध्यक्रमाधानस्य यागस्य व्यापारं विनानुपपद्यमाना तन्निर्वाहकमपूर्वं कल्पयतीति न किञ्चिदनुपपन्नमिति अदृष्टसिद्धिर्गौणपरीक्षा सिद्धा।

अथ विधायकशब्दशून्यवाक्यमर्थवादस्तं वितनुते—

## स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ।२।१।५९।

तत्र विधेयप्रवृत्त्यनुकूलप्राशस्त्यप्रतिपादकोऽर्थवादः स्तुतिः। यथा 'सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयती'ति।

निवृत्त्यनुकूलाप्राशस्त्यप्रतिपादकोऽर्थवादो निन्दा। यथा 'स एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा अन्येन यजते स गर्ते पतत्ययमेवैतज्जीर्यतेऽथ वा प्रमीयत वे'त्यादि।

पुरुषविशेषकर्तव्यतया मिथोविरुद्धस्य विधेर्वादः परकृतिः। यथा हुत्वा वपामेवाग्रेऽभिघारयन्ति। अग्नेः प्राणाः पृषदाज्यस्तोमित्यभिदधतीत्यादि।

ऐतिह्यसमाचरिततया कीर्तनं पुराकल्पः। तस्माद् वा एतेन ब्राह्मणाः बहिष्पवमानं सामस्तोममस्तौषन् योने यज्ञं प्रतनवामहे इति ।२।१।५९।

अनुवादमाह—

**विधिविहितस्यानुवचनमनुवादः ।२।१।६०।**

अत्रानुवचनमनुवाद इति सामान्यलक्षणम् । प्राप्तस्य सप्रयोजनमभिधानमिति तस्यार्थः । विधिविहितस्येत्यवान्तरविभागः । विधेर्विहितस्य चेत्यर्थः । तेन शब्दतदर्थानुवादौ दर्शितौ, प्रयोजनं त्वस्य स्तुतिर्निन्दा वा कालविशेषो वा [क्रम] विशेषो वा ज्ञाप्यत इति वक्ष्यमाणोदाहरणेषु यथोत्तरमूह्यम् ।

यथाश्वमेधेन यजेतेति विधिः । तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजत इति विध्यनुवादः स्तोतुम् ।

एवम् उदिते जुहोतीति विधिः । श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोतीति विध्यनुवादो निन्दितुम् । एवमाग्नेयोऽष्टाकपालो भवति । अमावास्यायामैन्द्रं दधि भवति । अमावास्यायामाग्नेयोऽष्टाकपालो भवति । पौर्णमास्यामैन्द्रयं पयो भवति । अमावास्यायामग्नीषोमीयं प्रायच्छत । पौर्णमास्यमुपांशुयागमन्तरा यजन्तीति षडुत्पत्तिवाक्यैः तत्राग्नेयादयो यागा अमावास्यापौर्णमासीरूपसमयसंबद्धाः विहिताः । विष्णुरुपांशु यष्टव्य इत्युपांशुयागे विष्णुर्देवता । तत्र यागत्रयममावास्यासम्बन्धिश्रुतं दर्शः दर्शः, उत्तरत्रयं पौर्णमासश्च ते चाभी विधयः स्ववाक्ये इष्टमनासादयन्तस्ततसापेक्षा एवमाघारादिविधयोऽपि । तथा च कुत्र विध्यर्थफलान्वय इत्याकाङ्क्षायां य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इति समयविशेषद्यस्कालानुवादो दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति विध्युक्तफलस्य तेषामेव षण्णामर्थत्वबोधनार्थः । तेनाघारादीनामुक्तकालमर्थत्वेन श्रुतानां साक्षात् फलसंबन्धाभावः ।

अत एवाघारादयः 'फलवत् सन्निधावफलम् तदङ्गमि'ति न्यायाद् दर्शपौर्णमासाङ्गतया व्यवतिष्ठन्त इति सिद्धम् । एवमग्निहोत्रं जुहो-

तीति विहितो होमो दध्ना जुहोति पयसा जुहोतीत्यनेन दधिपयोरूपगुणविधानार्थमनूद्यते। एवं सोमो दर्शपौर्णमासौ च विहितास्तेषामानन्तर्याद् विधातुमुभयानुवादो दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति। एवमध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादावपि २।१।६०।

उक्तविशेषमविद्वानाक्षिपति—

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ।२।१।६३।**

अभ्यासोऽभ्यावृत्तिः, स च शब्दस्य। तस्मात् पुनरुक्तादविशिष्टोऽनुवादः। विशेषकथनं च पदार्थान्तरादेव तदर्थप्राप्तौ वादादेव सिद्धमिति सूत्रार्थः। २।१।६१।

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ।२।१६।४।**

अभ्यासाद् हेतोरविशेषो न, कुतः अनन्यलभ्य प्रयोजनसंबन्धरूपाद् विशेषात् शीघ्रतरगमनोपदेशवत्। यथा शीघ्रं गम्यतामित्युक्ते शीघ्रतरं गम्यतामिति न पुनरुक्तम्। तरपः क्रियातिशयस्य प्रत्यायनात्। तथात्रापि प्रयोजनरूपविशेषलाभोऽभ्यासात्। न च पदान्तरादेव विशेषलाभः। जुहोतीत्यादि समभिव्याहारं विना दध्नेत्यादेरन्वयानर्पकत्वादित्यर्थः ।२।१।६२।

एवं बाधाभावं प्रामाण्यसम्भावनाहेतुमुक्त्वा प्रामाण्यहेतुमाह—

**मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ।२।१।६५।**

चकारो बाधसम्भावनाहेतुमनुकर्षति। व्यधिकरणोपन्यासो व्याप्तिग्रहप्रदर्शनाय। आप्तस्य प्रामाण्यं यतोऽतस्तदुक्तम् प्रामाण्य-

व्याप्तम्। तेन विवादापदान्यदृष्टार्थानि वेदवाक्यानि प्रमाणम् आप्तोक्तत्वात् दृष्टार्थमन्त्रायुर्वेदवत्। न च हेत्वसिद्धिः, वेदानां वाक्यत्वेन अपकृष्टत्वसिद्धौ चक्षुषः परिशेषाश्रितसर्वविषयज्ञानवतः सिद्धयाप्तत्वस्य सिद्धावाप्तोक्तत्वस्य सिद्धेः। न च *शाक्यभिक्षुकदिगम्बरसंसारमोचकादीनामागमा*स्तत्प्रणीता वेदा वेति संशय इति वाच्यम्, तेष्वेव बुद्धर्षभादिप्रणीतत्वेन ईश्वरप्रणीतत्वेन च श्रवणात्। वेदानामविगीतमहाजनपरिग्रहादाप्तोक्तत्वग्रहः। महाजनाश्च क्षीणदोषा मन्वादयः, तैः परिग्रहः तदर्थोपनिबन्धः तदुक्ताचरणं च, न त्वेवं बौद्धागमेषु। ते हि केश्चिदेव मनुष्यापसदैः पशुप्रायैः व्युत्पाद्यन्ते परिगृह्यन्ते च। आप्तोक्तत्वं च वेदानां वेदसमानविषयानित्यज्ञानातिरिक्तकारणीभूत ज्ञानसमानविषयत्वम्। कारणीभूतप्रमाविषयशब्दत्वमित्येव (य)द्यप्याप्तोक्तत्वम् तथापि वेदानां वेदसमानविधावनित्यज्ञानातिरिक्तत्वात्। वस्तुगतिमनुरुध्य तदुक्तम्—दृष्टान्तानां मन्त्राणामायुर्वेदस्य च प्रवृत्तिसामर्थ्यादेव प्रामाण्यावधारणमतो न दृष्टान्तस्य साध्यवैकल्यम्। वेदत्वं च तत्तत्क्रमकवाक्यत्वम्। वाक्यद्वारान्तर्जातिर्वा सिद्धं महाजनपरिग्रहादाप्तोक्ता वेदास्ततश्च प्रमाणमिति।

*इति वाचस्पतिमिश्रविरचिते न्यायतत्त्वालोके द्वितीयाध्यायस्य प्रथमाह्निकम्।*

## द्वितीयोऽध्यायः द्वितीयाह्निकम्

### [प्रमाणचतुष्ट्वपरीक्षाप्रकरणम्]

एवं प्रथमाह्निके प्रामाण्यरूपधर्मवत्तया प्रमाणचतुष्टयपरीक्षा-पर्याप्तावर्थनिरूपितप्रमाणभावानामेव तेषां प्रमाणस्या[प्रामाण्यस्या]तिरिक्तधर्मवत्तया परीक्षार्थं द्वितीयाह्निकारम्भः। संगतिश्च हेतुहेतुमद्भावः। न ह्यपरीक्षितप्रामाण्यानां प्रमाणानामष्टविधत्वादिपूर्वपक्षावतारो भवतीति प्रामाण्यपरीक्षायाश्चतुष्ट्वादिपरीक्षां प्रति हेतुत्वात्। तत्र प्रामाण्यातिरिक्तधर्म[व]त्तया प्रमाणपरीक्षा द्वितीयाह्निकार्थः।

चत्वारि चात्र प्रकरणानि। चतुष्ट्व-शब्दानित्यत्व-शब्दपरिणाम-पदार्थनिरूपणभेदात्।

तत्रापि प्रमाणविशेषवृत्तिभ्यः शब्दानित्यत्वादिभ्यः सकलधर्मतयाभ्यर्हितत्वदादौ चतुष्ट्वपरीक्षाप्रकरणम्। तत्र प्रमाणत्वं प्रत्यक्षादिचतुष्टयभिन्नत्वाद् भिन्नं न वेति संशयः। प्रयोजनं तु विभागसम्यक्त्वसिद्धिः।

तत्र पूर्वपक्षसूत्रम्—

**न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्।२।२।१।**

प्रमाणानां चतुष्ट्वविभागो न सम्यक्, ऐतिह्यादीनामपि पृथक् प्रमाणत्वादित्यर्थः। तत्रानिर्दिष्टविशेषवक्तृकं परम्परायातं वाक्यमैतिह्यम्। यथा मधौ मधौ गौडी वटे वटे यक्षाः प्रतिवसन्तीति।

अर्थापत्तिस्तु यद्व्यतिरेकेण यन्न भवति तज्ज्ञानफलकं तज्

ज्ञानम् । यथा असत्सु मेघेषु वृष्टिर्न भवति, भवति च वृष्टिस्तस्मात् सत्स्वेव मेघेषु भवतीति न । चेदनुमानम्, व्याप्तिपक्षधर्मतयोरज्ञानेऽपि भावात् ।

सम्भवो नियततदेकदेशज्ञानफलकमेकदेशिज्ञानम् । यथा द्रोणज्ञानमाढकज्ञानजनकमाढकज्ञानं च प्रस्थज्ञानजनकम् । न चेद्-मनुमानम्, द्रोणान्तर्गतस्याढकस्य तदर्थकत्वेन गम्यगमकभावा-नुपपत्तेः ।

भूयः सहचारदर्शनं संभवः । यथा सम्भवति ब्राह्मणे विद्या-चरणसम्पदिति । तमिमं स्व ० सर्गमार्गः [?] ।

अभाव एकविरोधिज्ञानजनकमितरविरोध्यभावज्ञानम् । यथात्र बलाहकोदयेऽपि पयोधरप्रसूनानामपतनज्ञानं पवनगगनतमालसंबन्ध-बोधकमिति *जरन्मीमांसकाः* ।२।२।१।

यत्रैषामविसम्वादित्वं तत्रोक्तान्तर्भाव एवान्यत्र प्रमाणत्वमेव नास्तीति सिद्धान्तप्रदर्शकं सिद्धान्तसूत्रम्—

**शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवा-भावानर्थान्तरभावाच्चाप्रतिषेधः ।२।२।२।**

अनर्थान्तरभावोऽन्तर्भावः । शब्दो द्विविधः, प्रत्यक्षः परोक्षश्च । तत्राद्य ऐतिह्यादीनां न विषयः । इन्द्रियादेव तद्ग्रहात् । द्वितीयोऽपि संबद्धो वा स्यादसंबद्धो वा । नान्त्योऽतिप्रसङ्गात् । आद्येऽपि संबन्धो व्याप्तिर्वा उपलक्षणं [वा], आद्यो धर्मवैधर्म्यरूपं संकेतो वाऽनन्यो वा, नान्त्योऽनिरुक्तेः । आद्यत्रितयेऽपि यथायथमनुमानाद्यन्त-र्भाव एवेति विषयाभावादेव नैतिह्यादीन्यतिरिक्तानीति भावः ।

तत्रैतिह्यस्य शब्दे अन्तर्भावः आप्तोपदेशत्वात्। अर्थापत्तेस्त्वनुमाने यद् येन विना न भवति तत् तस्मिन् सति भवतीति व्याप्तेः। पक्षधर्मतायाश्च सत्त्वात्। एवं सम्भवस्यापि द्रोणादेराढकाद्यविनाभावात्। न च तयोरभेदः। समुदायसमुदायित्वविरोधात्। उत्सर्गतस्त्वनुमानम्, उत्कटकोटिकसंशयफलकत्वात्। एवमभावस्याप्यनुमानेऽन्तर्भावः, कार्यानुत्पादस्य कारणाभावाविनाभावात् ।२।२।२।

अत्र तटस्थीयमाक्षेपसूत्रम्—

अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ।२।२।३।

असत्सु मेघेषु वृष्टिर्न भवतीत्यत्र सत्सु भवतीत्यर्थापत्तिविषयस्तथा च मेघसत्त्वमनुद्दिश्य वृष्टिविधावुद्देश्यस्य व्याप्यतया विधेयस्य च व्यापकतया वृष्टिव्याप्यं मेघसत्त्वं प्रतीयते। न चैवं, मेघसत्त्वेऽपि कदाचिदवृष्टिरित्यनेकान्तिकत्वोपपत्तेरित्यर्थः ।२।२।३।

परिहारसूत्रम्—

अनर्थापत्तावर्थापत्त्यभिमानात् ।२।२।४।

सत्सु मेघेषु वृष्टिर्भवत्येवेति नार्थापत्तेर्विषयः, किन्तु सत्सु भवतीति। तथा च कारणस्य कार्यव्यभिचारेऽपि न कार्यस्य कारणव्यभिचार इत्यनर्थापत्तौ तदभिमानादाक्षेपो न युक्तः। न चोद्देश्यस्य विधेयव्याप्यतानियमः, क्षीणः पट इत्यादौ व्यभिचारादित्यर्थः ।२।२।४।

किञ्चाविषये यदि व्यभिचारो दोषस्तदा तवापि स स्यादित्याह—

प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ।२।२।५।

अत्र चोऽप्यर्थः। अर्थापत्तिर्न प्रमाणमित्यस्यापि प्रतिषेधस्या-

प्रामाण्यमेव स्वाविषयस्यार्थापत्तिषु सत्त्वस्याप्रतिषेधकतयानैकान्तिकत्वादित्यर्थः ।२।२।५।

स्वाविषये व्यभिचारो न दोषायातो न प्रतिषेधाप्रामाण्यमिति चेत्तत्राह—

तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ।२।२।६।

स्वाविषये व्यभिचारस्यादोषत्वादित्यर्थः ।

[1]ननु जीवी यत्र नास्ति स तदा तदतिरिक्तदेशेऽस्तीति ज्ञाने सति बहिः सत्त्वं बिना जीविनो गृहासत्त्वमनुपपन्नमिति ज्ञानानन्तरं बहिरस्तीति ज्ञानमस्ति । तत्र चान्वयव्यतिरेकाभ्यामनुपपत्तिज्ञानमेव करणम् । न चानुमानादेव बहिः सत्त्वसिद्धिः । यो जीवी यत्र नास्ति स तदा तदतिरिक्तदेशेऽस्तीति सामान्यतोऽवगतव्याप्तेः विशिष्योपसंहर्तुमशक्यत्वात् । बहिः सिद्धेरर्थापत्तिफलत्वात् । व्याप्त्यनवगमदशायामप्यनुपपत्तिज्ञाने सति बहिर्भावसिद्धेः । न चानुपपत्तिज्ञानमेव व्याप्तिज्ञानं विना न भवतीति तदारभ्यत्वादनुमानमेव तदिति वाच्यम् । नहि व्याप्तिज्ञानमात्रादनुमितिरपि तु पक्षधर्मताप्रकारकात् । अत्र तु व्यतिरेकव्याप्तिरन्वयश्च पक्षधर्मताऽत्र बहिः सत्त्वप्रमाया व्याप्तिधीजन्यत्वेनानुमितित्वम् व्याप्तिपक्षधर्मताज्ञानाभावात् । न च गृहनिष्ठाभावप्रतियोगित्वं व्याप्तं पक्षधर्मश्चेति तदेव लिङ्गमस्त्विति वाच्यम् । देवदत्तासन्निकर्षे तद्विशेष्यकस्तृतीयलिङ्गपरामर्शोऽपि न सम्भवति, विशेष्यासन्निकर्षात् । न चैवमसन्निकृष्टे स्मर्यमाणे देशे धूमज्ञानादग्न्यनुमितिर्न स्यादिति वाच्यम् । तत्राप्यर्थापत्तिः पर्वताग्निज्ञानादनुमित्यसिद्धेः । तस्माद् व्यतिरेकव्याप्तिजनितानुपपत्तिज्ञानादेवबहिःसत्त्वसिद्धिः ।

ननु बहिःसत्त्वमात्रं बिना जीविदेवदत्तीयगृहाभावस्यानुप-

पत्त्यभावात्, तदीयबहिःसत्त्वं विनानुपपत्तिज्ञानं कल्पकं वाच्यम्। न देवदत्तीयबहिः सत्त्वमर्थापत्तितः पूर्वं प्रतीतं, प्रतीतौ वा नार्थापत्तेः फलं किञ्चिदस्ति। तदुक्तम्—यतोऽन्यत्वं तत्सत्त्वे चाग्रे तदन्वितत्वमिति चेत्—न यस्य जीविनो गृहासत्त्वं तस्य बहिः सत्त्वमिति देवदत्तेऽपि गृहासत्त्वेन कल्प्यमानं बहिः सत्त्वं स्वयं सिद्ध्यति, पर्वतीयवह्निवत्। नैवम्, गृहे देवदत्तस्याभाव इति प्रत्यक्षमेव देवदत्ततदभावसंबन्धो यादृक् देवदत्तासन्निकर्षेऽपि तद्धर्मगृहनिष्ठाभावप्रतियोगित्वं परिच्छिनत्ति प्रतियोगित्वस्यैव संबन्धत्वात्। संबन्धज्ञानस्य च संबन्धिद्वयविषयत्वनियमाद् देवदत्तमपि गौरवयति। यदि चासन्निकृष्टस्य प्रतियोगिनः प्रतियोगित्वेन ग्रहो न स्यात्तदा काप्यभावप्रतीतिर्न स्यात्। प्रतियोगित्वेनानुपस्थिते प्रतियोगिनि तत्प्रतियोगिकत्वेन तदज्ञानात्। प्रतियोग्यसन्निकर्षे तद्धर्मस्य प्रतियोगित्वस्य चाग्रहात्। न च गृहे देवदत्तस्याभाव इति प्रतीतिरेवासिद्धा। देवदत्तासन्निकर्षेण निषेध्यस्य तत्संसर्गस्य यावदाश्रयसन्निकर्षाभावादिति वाच्यम्, अभावाश्रयसन्निकर्षमात्रस्यैवाभावग्राहकत्वात्। अधिकस्य गुरुत्वात्। एवं देवदत्तस्य गृहनिष्ठाभावप्रतियोगित्वे चाक्षुषप्रत्यक्षोपस्थितेः स्मृतव्याप्तिवैशिष्ट्यमपि तत्र चाक्षुषमिति तृतीयलिङ्गपरामर्शोऽपि न दुष्करः। न च देवदत्तस्य गृहनिष्ठाभावप्रतियोगि तदन्यदेशसंबन्धेन व्याप्तमिति तृतीयलिङ्गपरामर्शे उपसर्जनतया भातस्य देवदत्तस्यानुमितौ विशेष्यतया भानं न स्यादिति वाच्यम्। पर्वते धूमो धूमवान् वा पर्वत इति ज्ञानानन्तरं वह्निमान् पर्वतः पर्वते वह्निरित्यनुमितेरपि दर्शनात्। कुत एव अनुमितेर्व्याप्तिस्मरणानुकारित्वात्। तथा च लिङ्गज्ञानस्य पक्षविशेष्यकत्वे तद्विशेषणकत्वे वा व्याप्तिस्मृतौ प्राधान्येन मद्भाषिते अनुभावपि तदेव। व्याप्तिस्मृतिश्चतुर्धा—यत्र धूमस्तत्र वह्निः, यो धूमवान् स वह्निमान्, यो धूमवान् तत्र वह्निरिति [यत्र धूमः स वह्निमानिति] *चिन्तामणिकृतः*।

व्याप्तिज्ञानसहकृतेन मनसा देवदत्तविशेष्यकस्तृतीयलिङ्गपरामर्शो जन्यत इति *प्राञ्चः ।*

एवं श्रुतार्थापत्तिस्थलेऽपि पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रोगाद्यजन्यपीनत्वं प्रति भोजनस्य हेतुत्वे गृहीते देवदत्ते तादृशपीनत्वे दिवाऽभोजने च निश्चिते पीनत्वबलात् कल्प्यमानं भोजनं वस्तुतो रात्रिभोजनं सिद्धयति । न तु तेन प्रकारेण रात्रिभोजनकल्पना प्रतीतचरत्वात् । अथ पीनो देवदत्तो दिवा न भुङ्क्त इति वाक्यमतो जीवी न इतिवन्नान्वयबोधकम् दिवाऽदिवाऽभोजिनः पीनत्वान्वयप्रयोजकरात्रिभोजनाप्रतीत्यान्वयप्रयोजकरूपरहस्ययोग्यताया ज्ञानाभावात् । तथा च योग्यताघटकरात्रिभोजनोपपादकं रात्रौ भुङ्क्त इति शब्दं कल्पयित्वान्वयं बोधयति । तस्माद् योग्यताघटकोपस्थापकं विनानुपपद्यमानं वाक्यं कल्पयित्वा यत्रान्वयं बोधयति तत्र श्रुतार्थापत्तिः । न च लाघवाद् रात्रिभोजनमेव कल्प्यतामिति वाच्यम् शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति नियमात् ।

एवं द्वारमित्यादौ पिधेहीत्यादिकमपि श्रुतार्थापत्तिरेव । मैवं, दिवाभोजनबाधे रात्रिभोजनाप्रतीतावपि भोजनमात्रं न बाधितमिति बाधकमानाभावरूपाया योग्यतायाः सत्त्वाद् वाक्यस्य भोगान्वयबोधकत्वान्न प्रतीत्यनुपपत्तिः । किन्तु प्रतीतस्यैव पीनत्वस्यानुपपत्त्या रात्रौ भोजनं कल्प्यते अपूर्ववत् । अन्वयप्रयोजनरूपवत्त्वं तु न योग्यता । अनाप्तोक्ते पयसा सिञ्चतीत्यादौ तत्सत्त्वेऽपि योग्यताभावादिति ।

*प्रा[भा]करास्तु* ज्योतिःशास्त्राद्देवदत्तस्य शतवर्षजीवित्वेऽवगते [श]तवर्षजीवी गृह एवेति नियमे प्रत्यक्षेणावगते पश्चाद् योग्यानुपलब्ध्या निश्चितो गृहाभावो जीवननियमग्राहकयोर्बलाबलानिरूपणाद् बहिः सत्त्वज्ञानं विना नियमद्वयविषयकं संशयं जनयित्वा

जीवनसंशया[प]नुत्तये जीवनोपपादकं बहिःसत्त्वं कल्पय[ती]ति। यथोक्तसामग्र्यनन्तरं बहिरस्तीति प्रतीतेः।

न चानुमानं तदा जीवित्वस्य लिङ्गं, विशेषणस्य सन्दिग्धत्वात्। अथ जीवननियमग्राहकयोर्यदि तुल्यबलवत्त्वम्, न तर्हि बहिःसत्त्व-कल्पना, विशेषादर्शनात्। अतुल्यबलवत्त्वे चैकेनापरस्य बाध एवेति, जीवित्वसत्त्वे हि फलासिद्धिरेवेति, यत्सिद्धानुकल्पना, सा चानुमानादेव न त्वर्थापत्तेरिति।

मैवं, यथोक्तसंशयवानेवं कल्पयति यद् योग्यानुपलब्धिजनितो गृहाभावनिश्चयः सुदृढ इति जीवननियमग्राहकत्वात्। तदिह मरणं कल्पयित्वा जीवनग्राहकं बाध्यतां, तद् बहिःसत्त्वं कल्पयित्वा नियमग्राहकम्। तत्र मरणकल्पने शतवर्षजीवित्वतदवच्छिन्नगृह-सत्त्वनियमयोर्बाधः स्यात्, विशेषणबाधे विशिष्टस्यापि बाधात्। बहिः सत्त्वकल्पने च गृहनियमग्राहकमात्रबाधेति लाघवान्नियमग्राहकमेव बाध्यम्। न च तस्यां दशायां मानान्तरमस्ति, यत्र तर्कः सहकारी स्यादिति, सैवार्थापत्तिः। सा च गृहाभावनिश्चयो वा नियमग्राहक प्रामाण्यसंशयो वा इत्याहुः।

तन्न, अनयोरेकं बाध्यम्, विरुद्धार्थग्राहकत्वादिति। सामान्यतो दृष्टादेव यथोक्तलाघवसहितात् गृहीत[गृह] नियमग्राहकबाधे लिङ्ग-विशेषेण जीवित्वनिश्चयेऽनुमानादेव बहिःसत्त्वसिद्धेः कल्पनीय-प्रमाणसहकारित्वापेक्षया क्लृप्तप्रमाणभावे सामान्यतो दृष्ट एव तत्सह-कारित्वकल्पनस्य लघुत्वात्।

न च तदा सामान्यतो दृष्टावभावासिद्धिः। अनिर्द्धारितैक-बाध[प्रा]प्तावेकबाधानुकूलतर्कस्य सामान्यतो दृष्टं विनानव-तारात्। न चानयोरेकं बाध्यमित्यनुमितिं जनयित्वा सामान्यतो

दृष्टस्य पर्यवसितत्वात्, अनुग्राह्यं मानान्तरमनुसरणीयम् । तर्कसहकृतस्यास्यैव पुनरनुसन्धीयमानस्य नियमग्राहकं प्रामाणमित्यनुमितिजनकत्वात् । सहकारिवैचित्र्येणैकस्यापि विचित्रकार्यक्षमत्वात् । न च पुनरनुसन्धानमसिद्धम्, गृहनियमग्राहकस्य जीवनग्राहकविरुद्धानुग्राहकत्वज्ञानं विना बहिःसत्त्वकल्पनेऽप्यबाधो[प]पत्तेः । जीवनमरणान्यतरप्रतियोगिशालित्वाद्गृहमिवेति सामान्यतो दृष्टमेवाभावरूपमरणापेक्षया लाघवाद् जीवनमेव परिच्छिनत्तीति जीवित्वस्य लिङ्गविशेषणस्य निश्चयेऽनुमानादेव बहिःसत्त्वं सिद्ध्यतीति ।

यत्तु मरणकल्पने शतवर्षावच्छिन्नजीवी गृह एवेत्यस्यापि नियमस्य बाध इति तन्न, मरणकल्पनेऽपि जीवी गृह एवेत्यस्य विशेष्यबाधे विशिष्टबाधस्य विशेषणमात्रबाधार्थकत्वात् । पाकरक्तो श्यामो नायं घट इतिवत् घटवति रक्तो घटो नास्तीतिवद्वा २।२।६।

ननु प्रमाणस्याभावस्य प्रमाणेऽनुमानेऽन्तर्भावो न युक्त इत्यभिप्रेत्याह—

**नाभावप्रामाण्यं प्रमेयासिद्धेः ।२।२।७।**

नाभावज्ञानं प्रामाणम्, प्रमेयस्याभावस्यासिद्धेः । न खलु सर्वोपाख्यारहितं प्रमाणज्ञानविषयतामनुभवति । केवलं काल्पनिकोऽयमभावस्य व्यवहारो लौकिकानामित्यर्थः ।२।२।७।

सिद्धान्तसूत्रम्—

**लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः २।२।८।**

तस्याभावज्ञानस्य प्रमाणप्रमेयविषयोऽभावस्तस्य सिद्धिः । तस्याभावस्य प्रमेयत्वसिद्धिरिति भावप्रधानो निर्देशः । कुतः ?

लक्षितेषु कृतचिह्नेषु वस्तुस्वरूपादेयेषु मध्ये (ह्य)लक्षितानामकृतचिह्नानामुपादेयानामलक्षणलक्षितत्वात् चिह्नाभावपरिचायितत्वात् । उभयसन्निधावलक्षितानि वस्तून्यानयेति प्रयुक्तो न येषु वस्तुषु लक्षणानि पश्यति तानि लक्षणाभावेन प्रतिपद्यानयतीति लक्षणाभावज्ञानमितरव्यवच्छिन्नवस्तुप्रमापकत्वात् प्रमाणमतो लोकव्यवहार सिद्धोऽभावः । न च कल्पनातस्तदुपपत्तिः । भावस्येवाभावस्याप्यर्थक्रियाकारित्वेन वस्तुत्वादित्यर्थः ।२।२।८।

आक्षेपसमाधानयोः सूत्रम्—

## असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ।२।२।९।

प्रतियोग्युत्पत्तेः पूर्वमसति प्रतियोगिनि नाभावो न तज्ज्ञानम्, प्रतियोगिग्रहं विनाभावस्याज्ञानात् । सति हि प्रतियोगिनि तत्र तदभावो गृह्यते यथा ध्वंसः । अलक्षितत्वं च न प्रागभावः, तस्य भविष्यद्व्यक्तिविशेषप्रतियोगितया तस्य च मानाभावात्, ज्ञाने ज्ञातुमशक्यत्वात् । नाप्यत्यन्ताभावः, इह घटो नास्तीत्यत्रेह यो घटः स निषिध्यते स चासन् । न चासत्प्रतियोगिकोऽभाव एवेति । न चान्यत्र स्थितस्यैवायमभावः । अन्यत्र स्थितस्येह बुद्ध्यविषयत्वादित्याक्षेपार्थः । अन्येषां यानि लक्षणानि तत एवात्रोपपत्तिर्निषेधनिरूपस्यालं यतोऽतो नाक्षेप इति समाधानार्थः ।२।२।९।

आक्षेपसूत्रम्—

## तत्सिद्धेरलक्षितेष्वहेतुः ।२।२।१०।

न लक्षणाभावलक्षितत्वमभावसाधने हेतुः । कुतः ? तत्सिद्धेः तेषां लक्षणानां लक्षितेष्विवालक्षितेषु वस्तुषु सिद्धेः विद्यमानत्वात् । नहि यत् कोऽपि विद्यते तत् कोऽपि [?] नास्ति व्याघातादित्यर्थः ।२।२।१०।

समाधिसूत्रम्—

न लक्षणावस्थितापेक्षसिद्धेः ।२।२।११।

न ब्रूमो यत्र यानि भवन्ति तत्र तेषामभाव इति । अपि त्वन्यत्र स्थितान्येव लक्षणान्यपेक्ष्य येषु लक्षणानि न पश्यति तानि लक्षणाभावेन प्रतिपद्यते । अन्यथा लोकव्यवहारविरोध इति नाक्षेप इत्यर्थः ।२।२।११।

असदातनोऽभावो ध्वंस एव परं नेत्यत्र युक्त्यन्तरमाह—

प्रागुत्पत्तेरभावोपपत्तेश्च ।२।२।१२।

असार्वदिकाभावो द्वेधा प्रागुत्पत्तेरविद्यमानता उत्पत्तेः प्राङ्-नास्तीति बुद्धेरनन्यथासिद्धेः । एवञ्चोत्पत्तेः प्रागभावोपपत्तेरध्वंस एवासदातनोऽभाव इति सूत्रार्थः ।

नन्वनुपलब्धिरभावग्राहकं मानान्तरमेव । यदाहुः

मयूरी वृक्षमारुह्य कृत्वा दिगवलोकनम् ।
हन्त भावमभावेन ज्ञात्वा नृत्यति निर्भया ॥ इति ।

न ह्यध्यक्षादि तन्त्रत्वे हेतुः । अभावेन समं चक्षुरादेः प्राप्त्य-भावेनाश्रयग्रह एव तदुपक्षयात् । न चाभावधियामालोकापेक्षायां चक्षुरपेक्षा तस्य तदेकसहकारित्वादिति वाच्यम्, प्राप्तिं विना चक्षुषोऽहेतुत्वात् । आलोकस्य च प्रतियोगिग्राहकत्वेन योग्यताघटकत्वेन हेतुत्वम् । न च योग्यताघटकत्वेन चक्षुरपि हेतुः स्यात्, प्राप्तिबाधेन साक्षाद्धेतुत्वे बाधात् । आश्रयग्रहणेनैव च योग्यताघटनात् ।

नचैवमन्धस्यापि त्वगिन्द्रियोपनीते नीले स्मृतपीतस्यानुपलब्ध्या पीताभावग्रहप्रसङ्गः, प्रतियोगिग्राहकेन्द्रियग्राह्यत्वे त्वभावस्य नायं दोषोऽन्धस्य चक्षुरभावादिति वाच्यम् । प्रतियोगिग्राहकेन्द्रियेण

श्रयग्रहेऽनुपलब्ध्याभावग्रहात् । अन्यथा चक्षुःसंयुक्ते परमाणौ जलत्वाभावग्रहप्रसङ्गात् ।

अथैवं वायौ रूपाभावो [ न गृह्येत, अत्रोच्यते प्रतियोगिग्राह्यकेन्द्रियेणाश्रयग्रहो ] न हेतुः प्राङ्नास्तितास्थले त्वन्नयेन व्यभिचारात् ।

किञ्च वाय्वादौ रूपाद्यभावधीरिन्द्रियजन्यैव नानुपलब्धिलिङ्गजन्या अनुपलब्धेरज्ञानात् । आप्तवाक्यस्येव तज्ज्ञापकस्याभावात् ।

न चाज्ञातैव रूपाद्युपलम्भस्यानुपलब्धी रूपाद्यनुपलम्भं गृह्णातीति वाच्यम् त्वन्मतेनोपलम्भस्यातीन्द्रियत्वेन योग्यानुपलब्ध्या तदभावस्य ग्रहीतुमशक्यत्वात् ।

अपि च घटवत्युपलम्भ प्राक्काले घटस्मृतिमतोऽनुपलब्ध्या कुतो नाभावधीः घटाभावाभावादिति चेत् अर्थजत्वादिन्द्रियजाप्यभावधीः इन्द्रियजज्ञानस्यैव तथात्वादित्यनन्यगत्या विशेषणतया एव प्राप्तेः, कल्पनायाः प्राप्तिरपि बाधिका ।

स्यादेतत् गृहमुपलभ्य निर्गतश्चैत्रो यत्र केनचित् पृष्टस्तत्र मैत्र आसीत्, स च क्षणं ध्यात्वा तत्र मैत्राभावमवगम्याह नासीदिति, सेयं प्राङ् नास्तिताधीः न तावत् स्मृतिः, पुरा मैत्राज्ञाने तदभावाननुभवात् । एवञ्च तत्रेन्द्रियव्यापारं विनानुपलब्ध्या अभावानुभवादन्यत्रापि तदनुभवेनैव [सा] हेतुः क्लृप्तत्वात् ।

यदाह—　　स्वरूपमात्रं दृष्टं हि वेश्माद्यर्थं स्मरन्नथ ।
　　　　तत्रान्येनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥ इति ।

नैवम् , प्राङ्नास्तितायां हि न तावदज्ञातानुपलब्धिः भूतले घटाभावस्येव [अभाव] ग्राहिका, तदानीं गृहस्य विप्रकृष्टत्वेन योग्यानुपलब्धेरभावात् । नापि ज्ञाता, अनवस्थाप्रसङ्गात् । अनुपलब्धेरप्यभावरूपतयाऽनुपलब्ध्यन्तरवेद्यत्वात् । उपलम्भस्यानुपलब्धिरज्ञातैव

[स्वरूपसती] मैत्रानुपलब्धिं ग्राहयतीति चेत् स्वज्ञये उपलम्भस्यातीन्द्रियत्वेन तदभावस्य योग्यानुपलब्ध्यग्राह्यत्वात् । किन्तु मनसा ज्ञाताद् योग्यतास्मरणात् तदा तत्र मैत्राभावावगमः । तथा हि तद्गृहं तदा मैत्राभाववत् तत्तुल्य[परिमाणादि]योगितया स्मरणेऽपि तद्वत्तया अस्मर्यमाणत्वात् मत्वत् । न च सर्वेऽपि स्मरणं भवति, किञ्चिद्धि वस्तु सदुपलभ्यत एव । तदुपलम्भश्च संस्कारमाधत्त एव स चोद्बुध्यत एव यथा विश्वनाशमनुभवतमिति दिक् ।

विशिष्य प्रागभावे प्रमाणमाह—प्रागुत्पत्तेरभावोपपत्तेः ।२।२।१२।

प्रत्यक्षं हि प्रमाणमभावं प्रमेयं व्यवस्थापयति । तच्च प्रध्वंसवत् प्रागभावेऽपि तुल्यम् । प्रतियन्ति हि लौकिकाः दधनि क्षीराभावमिव क्षीरे क्षीरपरमाणौ दध्यभावमित्यर्थः ।

ननु क्षीरपरमाणौ दधिप्रागभावो नास्त्येव तस्य कालातिरिक्ते प्रतियोग्युपादानमात्रे वृत्तेः । क्षीरपरमाणोश्च मानाभावेन दध्यनुपादानत्वादिति चेन्न दधिद्व्यणुकारम्भस्थले क्षीरपरमाणूनामावश्यकतया लाघवेन च तेषामेव दधिद्व्यणुकारम्भकत्वकल्पनात् न त्वनारब्धदुग्धानां परमाण्वन्तराणां, कल्पनीयोपस्थितिकत्वेन गौरवात् । न च दधिदुग्धत्वयोरवयवावयविवृत्तिजातित्वेन पृथिवीत्वादिवत् परमाणुवृत्तितया दुग्धपरमाणुभिन्नदध्यारम्भो भिन्नजातीयत्वादिति वाच्यम् दुग्धत्वादेः पृथिवीपरमाणुभिन्नत्वेन पृथिवीत्ववत् पटादिवृत्तित्वप्रसङ्गात् ।

नन्वेवमेवास्तु जवसविशेषवृत्तिरेव दुग्धत्वादिजातिः द्रव्यवृत्तित्वेऽपि तद्व्यञ्जकस्यावश्यकत्वात् । द्रव्यत्वादिसामानाधिकरण्यबुद्धिः परम्परासंबन्धात् । तथा च य एवावयवा दुग्धानुकरणवन्तस्त एव पाकविशेषा दध्यनुकरणमारभन्ते इति सूक्ष्मदुग्धेनैव सूक्ष्मदध्यारम्भ इत्याहुः ।

अस्य सूत्रस्य व्याख्यानद्वयमुपलभ्यते कतरत् साध्विति विद्वद्भिरवधारणीयम् ।

ननु प्रागभावः कथमध्यक्षः सति प्रागभावे प्रतियोगिबुद्धेरभावात् । प्रतियोगिसत्त्वकाले च प्रागभावस्यैवाभावादिति चेन्न चरमकालेन कार्यस्य प्रतियोगिनोऽनुमाने सति तदा प्रत्यक्षेण प्रागभावग्रहस्य सुकरत्वात् । इह भविष्यति घट इत्याप्तोपदेशाद्वा प्रतियोगिनो ज्ञानं सामान्यप्रत्यासत्त्या वेह सूत्रे प्रमाणमेव संसर्गाभावानामभिधानादन्योन्याभावोऽधिको नास्त्येव । तत्प्रतीतिस्तु प्रतियोगिवृत्त्यसाधारणधर्मात्यन्ताभावविषयेति केचित् ।

तन्न लक्षणसंसर्गाभावेनेत्यनेन संसर्गाभावानां ग्रहणात् । लक्षितत्वमितरभिन्नतयावधारणमित्यनेनान्योन्याभावस्य च ग्रहणात् । घटः पटो नेति धर्मिप्रतियोगिकाभावबुद्धेश्च बाधकं विना प्रमात्वाच्च । न च लक्षणभेदाभाव एव बाधकः, लक्षणभेदसत्त्वात् । तथा हि प्रतियोग्यधिकरणयोः संसर्गमारोप्य प्रतियोगिनः स्वाधिकरणे आरोप्य यो निषेधोऽवगम्यते [स] संसर्गाभावः । भूतले घटसंसर्गो नेत्यत्र न घटसंसर्गो न वा घटसंसर्गस्य संसर्ग आरोप्यते किन्तु तादात्म्यम्, तच्च संसर्गत्वम् । एवं प्रतियोगितावच्छेदकमधिकरणे समारोप्य यो निषेधो बुद्ध्यते सोऽन्योन्याभावः । घटो न भूतलमित्यत्र घटत्वस्यैवारोपात् । घटत्वमेव प्रतियोगितावच्छेदकं तदेव घटतादात्म्यम् । न चारोपस्य हेतुत्वे मानाभावः, तादात्म्ये संसर्गयोरारोपं विना नेदमिदं नेदमिहेत्यबाधितविलक्षणबुद्धेराधानानुपपत्तेः ।

एवमन्योन्याभावबहिर्भक्तस्य संसर्गाभावस्य त्रयो भेदाः प्रागभावः, प्रध्वंसोऽत्यन्ताभावः । तत्र विनाश्यभावत्वमाद्यस्य, जन्याभावत्वं द्वितीयस्य, अनादिनिधनसंसर्गाभावत्वं तृतीयस्य लक्षणम् ।२।२।१२।

## [ शब्दानित्यत्वपरीक्षाप्रकरणम् ]

एवं चतुष्ट्व सर्वप्रमाणसाधारणतया शीघ्रोपस्थितं

परीक्ष्य तद्विशेषधर्माणां परीक्षाप्राप्तौ परिणामादीनां चिन्तार्थकगर्भं विशेषधर्मत्वात् तदपेक्षया शब्दमात्रधर्मत्वेनानित्यत्वस्य शीघ्रोपस्थिततयेदानीं तदनित्यत्वपरीक्षाप्रकरणम्। शब्दपरीक्षायां तद्धर्मस्यानित्यत्वस्यापि तत्साहचर्यादुपस्थितेः, तस्य शिष्यजिज्ञासितस्योपेक्षानर्हत्वादत्र प्रसङ्गः संगतिः। मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादित्यत्र [२।१।६८] प्रामाण्यनिर्वाहकतयोक्तस्याप्तोक्तत्वस्य शब्दनित्यत्वेऽसम्भवादुपोद्घातो वा।

तत्र शब्दो विषयः स नित्योऽनित्यो वेति विप्रतिपत्तेः संशयः। प्रयोजनं च नित्यतानिरासेन पदवाक्यकौटस्थ्यशङ्कानिरासेनाप्तोक्तत्वसिद्धौ वेदप्रामाण्यसिद्धिः। न च वक्तुरभिव्यञ्जकत्वेऽपि तत्सिद्धिः। अपौरुषेयत्वाद् दोषनिवृत्तौ प्रामाण्यस्येव गुणनिवृत्तावप्रामाण्यस्यापि संभवात्। लौकिकवाक्ये परं गुणजन्यत्वेन प्रामाण्यमिति चेत् एवं प्रा[मा]ण्यान्वयव्यतिरेकिगुणस्य वेदेऽतिक्रमे शब्दमहिमलंघने शाब्दधीहेतोः श्रुत्यादिषट्कस्यापि त्यागप्रसंगः। अन्यथा श्रुतिलिङ्गवाक्यप्रकरणस्थानक्रमसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनीयं सूत्रम्। [ मी० सू० ३।३।१४ ] अस्यार्थः। *श्रुतिर्द्वितीया* तृतीया वा। *लिङ्गं* पदार्थसामर्थ्यम् लिङ्गमाकाङ्क्षा परेषां तत्तदर्थाविनाभाव आकाङ्क्षेति स्वीकारादित्य*न्ये*। लिङ्गं तात्पर्यमित्य*परे*। ***वाक्यं*** समभिव्याहारविशिष्टानि पदान्येव आसत्तिर्वा। ***प्रकरणं*** बोद्धः सन्निधिः योग्यता वा। कर्तव्यस्येतिकर्तव्यता आकाङ्क्षा वा ***स्थानम्***। क्रमो यथासंख्यादि। ***समाख्या*** आकाङ्क्षितादिरूपप्रतिपादकं नाम। एषु परमुत्तरं दुर्बलं पूर्वं च बलवदिति।

ननु पदवाक्यकौटस्थ्येऽपि यथोपलब्धार्थप्रतिपत्तये अभिव्यञ्जकस्यैवाप्तत्वात् तदुक्तत्वेन प्रामाण्यं स्यादेव। किञ्च वर्णानां नित्यत्वेऽपि क्रमविशेषणादनोक्तपदवाक्ययोः कौटस्थ्याच्च। क्रमश्च पूर्वज्ञानानन्तरज्ञानविषयत्वमुत्तरवर्णस्येति चेत् न, अभिव्यञ्जकाप्तज्ञानप्रतिपिपादयिषाभ्यां शब्दप्रामाण्यनियमे त(दु)च्चारयितृणामभि-

प्रायानियमात् प्रामाण्यस्य नियमापत्तेः। वक्ष्यमाणन्यायेन समानदेशानां समानेन्द्रियग्राह्याणां वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वानुपपत्तावभिव्यक्तिनिरूप्यक्रमाभावेन क्रमस्य ध्वंसनिरूप्यत्वाच्च।

तत्र शब्दो नित्यः आकाशैकगुणत्वात् तन्महत्त्ववत् करणा[कर्णा]भिघातजेन वायुना यावद्वेगमतिप्रतिष्ठमानेन श्रोत्रव्याप्तेन तत्समवेतशब्दस्याभिव्यञ्जनात्। गुणत्वं च द्रव्यग्राहकबहिरिन्द्रियाग्राह्यजातीयत्वात् आकाशीयत्वं च परिशेषादित्याक्षिप्तपूर्वपक्षकं सिद्धान्तसूत्रम्—

## आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ।२।२।१३।

आदीयतेऽस्मादित्यादिः, कारणं तद्वत्त्वात् प्रागभावप्रतियोगित्वाद्युत्पत्तिमत्त्वाद् वा शब्दोऽनित्यः। न च हेत्वसिद्धिः, ऐन्द्रियकत्वात् बहिरिन्द्रियवेद्यत्वात्, जातिमत्त्वे सतीति शेषः।

स्वातन्त्र्येणाप्यस्य हेतुत्वसूचनाय स्वतन्त्रहेतुसमभिव्याहारः। अनित्यत्वं तूपलब्धिलक्षणप्राप्तस्य स्वात्मतिरोभाव इति *सांख्याः।* तन्न, उपलभ्यमानगवादितदर्थप्रकृतितदात्मकत्वेन सर्वस्य योग्यताभ्युपगमव्याकोपापत्तेः। वैनयिकादिवदनित्यमेवानित्यत्वमित्येके। तन्न, प्रत्ययस्य निरर्थकत्वे प्रकृतिसमभिव्याहारस्य प्रत्ययत्वस्य चानुपपत्तेः। प्रकृत्यर्थानतिरिक्तार्थत्वे च पौनरुक्त्यात्। न चैको द्वौ बहव इत्यत्र व्यभिचारः। तत्रापि विभक्तेर्लिङ्गविशेषाभिव्यञ्जकत्वात्। एवं यावकादावपि विरुद्धजात्यन्तरव्यवच्छेदस्य कप्रत्ययार्थत्वात्।

तदाहुः *शाब्दाः* याव एव यावक इति। न चानित्यत्वमित्यत्रापि तथात्वे ततो [१] स्तत्रास्मरणात्। किन्तूत्तरावध्यवच्छिन्नसत्तानित्यत्वम्। सत्तामादायैव अनित्यपदप्रयोगस्य वृद्धव्यवहारसिद्धत्वान्न वैयर्थ्यम्।

ननु कारणत्वमसिद्धम् संयोगविभागयोः शब्दाभिव्यञ्जकत्वात्। न च संयोगादिभिदा बुद्धिभेदोपलब्धेः, न तदभिव्यञ्जकं मणिकृपाणादिव्यञ्जकभेदेनैकस्यैव मुखस्य भेददर्शनादिति चेत्, न। दूरस्थे ताल्वादिसंयोगनिवृत्तावपि तदुपलम्भात्। न चासति व्यञ्जकेऽभिव्यक्तिः आत्मोत्सर्गे (?) तथाऽदर्शनात्। तस्मात् संयोगादिभिरातुरदेशावच्छेदेन शब्द उत्पाद्यते, तेन शब्देन वीचीतरङ्गन्यायेन उत्पाद्यमानेषूत्तरोत्तरेषु यः श्रोत्र उत्पद्यते स गृह्यते। अन्यथा शब्दप्रतीत्यसंभवात्। ननु यदि सन्तानक्रमेण शब्द उत्पद्यते तदा श्रोत्रस्तस्यैव तद्ग्रहात् पूर्वेण शब्द इत्यादिधीर्न स्यादिति चेत् न, विशिष्टदेशस्थितसंख्यादिप्रभवशब्दसन्तानजन्यश्रोत्रग्राह्यकारणप्रयोज्यजातिविशेषेण तदनुमानात्। दिग्देशाभिमुख एवं प्रणिधानविशेषेण वा। तत्राद्यः शब्दः संयोगादिजन्यः तदन्ये शब्दजन्याः। एवं सन्तानचरमः कारणनाश्य इति वै कार्यनाश्याः।

किञ्च नभःकोष्ठ्यवायुसंयोगादयो यदि वर्णव्यञ्जकाः स्युस्तदा कव्यञ्जकवायोः कव्यक्तेरपि स्यादविशेषात्। अन्वयव्यतिरेकाभ्यां प्रतिनियतजनकजन्यत्ववद्बुद्धेः प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपीति चेन्न, बाधात्। तथा हि वर्णा न प्रतिनियतव्यञ्जकव्यङ्ग्याः एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात् घटैकत्वपरिमाणवत्। रूपरसादौ व्यभिचारवारणाय समानेन्द्रियेत्यादि प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं च मिथो व्यभिचारिव्यञ्जकव्यङ्ग्यत्वम्। एवं चावयविनास्तदेकत्वस्य चावयवबहुत्वावयविपृथक्त्वव्यञ्जकाव्यङ्ग्यत्वेऽपि अवयवबहुत्वस्यावयविपृथक्त्वस्य चावयवि तदेकत्वव्यञ्जकव्यङ्ग्यत्वमेवेति न मिथो व्यभिचारिव्यञ्जकव्यङ्ग्यत्वमिति न तत्र व्यभिचारः।

अत [एव] नीला बलाकेत्यत्र रूपपरिमाणयोरर्धनिखातवंशसंख्यापरिमाणयोश्च न व्यभिचारः। एवमप्यवयवसंयोगाव्यञ्जकव्यङ्ग्येन तच्छीलिम्ना व्यभिचारवारणाय सत्यन्तम्। संयोगस्याव्याप्यवृत्तितया

उत्पलत्वस्य चाधिकवृत्तितया एकावच्छेदेन वृत्त्यभावात् । न चाप्रयोजकत्वम् निरुपधित्वादिति ।

ननु वर्णाः प्रतिनियतव्यञ्जकव्यङ्ग्याः आश्रयेण सह समानेन्द्रियाग्राह्यत्वात् गन्धवदित्यापाततः सत्प्रतिपक्षत्वम् । वस्तुतोऽनन्यथासिद्धप्रत्यभिज्ञासाचिव्यादस्य बलवत्त्वमेव । तथा हि स एवायं गकार इति प्रत्यभिज्ञानाशकत्वाभिमतानन्तरमपि भवन्ती गकारस्य स्थेमानमाकलयन्ती अग्रे तन्नाशकाभावात् तन्नित्यतायामेव पर्यवस्यति । तदाहुः—

तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति । [इति]

न च तारत्वमन्दत्वरूपविरुद्धधर्माध्यस्तविषयत्वात् । केशप्रत्यभिज्ञावत् सा न मानम् । तारत्वादीनां गकारबुद्धित्वे परिशेषाद् जातित्वे गत्वेन संकरापत्त्या तद्वृत्तित्वात् । न च गत्वादिव्याप्यं नानैव तारत्वमनुगतमतेश्च सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वप्रतिसन्धानादिति वाच्यम् । तदज्ञानेऽपि अनुगतमतिसत्त्वात् । तस्माद् वायुधर्मा एव तारत्वादयः कर्णशष्कुलीत्वचा गृह्यन्ते श्रोत्रेणैव वा वायुधर्मग्रहण एव सा योग्यत्वात् । चक्षुरादेर्वायुधर्माग्राहकतायामयोग्यत्वस्योपाधित्वात् । न च वायोरप्रतीतिः वायुत्वेनाप्रतीतावपि तारत्वेनैव प्रतीतेः । अग्नित्वेनाप्रतीतावपि अयःपिण्डे लोहितत्वेन प्रतीतिवत् ।

अथ वायुशब्दयोस्त्वचा [ श्रो ]त्रेण वा ग्रहे तु केन तारोऽयं गकार इत्यारोप इति चेत्, त्वगिन्द्रियोपनीततारत्वस्य श्रोत्रेण उभयेन्द्रियग्राह्ययोरसंसर्गाग्रहाद् वा संसर्गव्यवहारः ।

सन्तु वा गकारधर्मा एव तारत्वादयः । न च विरोधः, य एव गकारस्तार आसीत् स एवेदानीं मन्द इति तयोरेकत्र प्रतीतेः ।

सन्तु वा तारमन्दरूपा भिन्ना एव गकारा नित्या अबाधितप्रत्यभिज्ञानात्। न चोत्पत्तिधीर्बाधिका, तदनन्तरमपि श्रुतपूर्वोऽयं गकार इति प्रत्यभिज्ञानात्। तस्माच्छब्दो नित्यः श्रावणत्वात् शब्दत्ववत्, विशेषगुणान्तरासमानाधिकरणैकव्यक्तिगुणत्वात् कालमहत्त्ववत्, पृथिवीतरनित्यभूतविशेषगुणत्वात्। अपाकजैकवृत्तिनित्यभूतवृत्तिगुणत्वात् जलपरमाणुवत्। विपक्षबाधकं च प्रत्यभिज्ञानमेवेति सर्वमतिसन्धायाह—कृतकवदुपचारादिति। कृतकत्वव्याप्यसर्वधर्मपरमुपचारग्रहणात्।

अयमभिसन्धिः, गकारादिव्यक्तयस्तावत् नैकैकाः। अस्ति हि शुकादिप्रभवेषु तेषु स्फुटतरा वैलक्षण्यधीः, इक्षुक्षीरादिमाधुर्यवत्। न चेयमौपाधिकी उपाधित्वाभिमतशुकाद्यननुभवेऽपि तदनुभवात्। यतोऽनुमीयते शुकगकारोऽयमित्यादि। अन्यथान्योन्याश्रयात्। नापि व्यञ्जकवायोरेव वैलक्षण्यम्, गकारवृत्तित्वेन भासात्, तद्वृत्तित्वे बाधकाभावात्।

ननु य एव वर्णः कीरेणोच्चरितः स एव पुंस्कोकिलकण्ठकुहरादपि निःसरतीति प्रत्यभिज्ञैव बाधिका। न चाभिव्यञ्जकवायुवैलक्षण्यस्य गकार आरोपे वक्तृविशेषानुमितिप्रमितिर्न स्यात्, वायुवैलक्षण्यस्यैव शुकादिव्याप्ततया तदनुमापकत्वात्। मणिशिखरिणि वाष्पपूरविषयकधूमारोपप्रसूतहुताशनानुमितिवत् साध्यांशे यथौष्ण्याच्चेति।

अथ यदि गत्वादिकं न जातिस्तदा कोलाहलधीर्न स्यात्। धर्मिणां ग्रहणात्, वैधर्म्यस्य चाभावात्। न च तेषामन्योन्याभावस्य भेदस्याग्रहात् कोलाहलधीः, वैधर्म्याभावे तस्याप्यभावात्। न च ध्वनिरेव तत्र गृह्यते तद्व्यञ्जकस्य भेरीताडनादेरभावात्। न च

वर्णाभिव्यञ्जका एव तथा, सन्निधावपि तच्छ्रवणापत्तेः। न च दूरे तथा, कव्यञ्जकस्य गव्यञ्जन इव वर्णव्यञ्जकस्य ध्वनेः व्यञ्जने असामर्थ्यात्। समीपे च बहुषु गकारेष्वभेदाभावेन तद्ग्रहेऽपि न कोलाहलधीरिति।

मैवं, यद्यप्येकैके वायवो वर्णमेवाभिव्यञ्जयन्ति तथापि प्रत्येकप्रयत्नप्रेरिताः सर्व एव प्रबलाः परितः परमाणाः? परस्पराभिहताः सर्वतो दिक्कालध्वनीन् व्यञ्जयन्ति जनयन्ति वेत्येवमभ्युपपत्तेः। न च समीपेऽपि ध्वनिव्यञ्जनापत्तिः। तत्र श्रूयमाणवर्णव्यञ्जकवायोरितरताडनाप्रतिहेतुत्वात् अवश्यं च परस्परसंहृताः पवनध्वनिव्यञ्जका इत्युपेयम्। अन्यथा पवनगगनसंबन्धाविशेषे क्वचिद्वर्णानामभिव्यक्तिः क्वचिच्च ध्वनीनामिति विभागो न स्यात्।

अथास्ति कोऽपि शब्दस्य जातिविशेषः श्रोत्रग्राह्यो यतो दिग्देशविशेषप्रभवत्वमनुमीयते, व्यपदेश्यत्वेऽपि इक्षुक्षीरादिमाधुर्यावान्तरवत् वर्णस्यानुभविकत्वात्। अन्यथा विशेषधीर्न स्यात्, श्रोत्रस्य तत्रासामर्थ्यादिति चेन्न। तस्या जातेर्योग्यव्यक्तिवृत्तितया योग्यत्वेन शब्दत्ववन्निश्चितत्वेन दिग्देशसंशयविपर्ययानापत्तेः। तस्या जातेर्निश्चयेऽपि दिग्देशव्याप्यत्वसंशयविपर्ययाभ्यां ताविति चेन्न, अनेककल्पनाप्रसङ्गात्। किन्तु यद्देशाभिमुख्येन कर्णशष्कुलीप्रणिधाने शब्दः श्रूयते तादृक्कालस्थानवत्त्वमेव दिग्देशादिमापकमित्येवास्तु लाघवात्। अत एव दिग्देशविशेषानवधारणे श्रवःप्रणिधानेनैकतरमवधारयन्ति। न च गकारैक्ये तारगकारेण गकाराभिभवो न स्यादिति। नहि गकारस्तारो मन्दो वेति निवेदितं प्राक्, किन्तु तद्व्यञ्जको वायुस्तथा। तथा च तारः पवनो मन्दं पवनमभिभूय गकारमभिव्यनक्ति। तत्रैव च भावत्वाध्यारोपो मूढानामिति।

अत्राहुः—परस्पराभिहता एव पवना ध्वनिव्यञ्जकाः परस्परा-

भिहता अपि वा ? नाद्यः, वीणादेर्ध्वनीनामनभिव्यक्तिप्रसङ्गात्। अथापि वर्णा अभिव्यञ्जका वा तदितरे वा ? नाद्यः, मर्मोत्पत्तेस्स्ववर्णोच्चारणे पवनं प्रति प्रतिध्वनीनामभिव्यक्तौ कोलाहलधीप्रसङ्गात्। तस्माद् वर्णानामभिव्यञ्जका एव पवना ध्वन्यभिव्यञ्जकास्तत्परास्त्वगत्यैव स्ववर्णोच्चारणे दूरस्थो नाभिव्यक्तगत्वादिकं वर्णमात्रं श्रूयत इत्यभ्युपेयमिति । गत्वादिजाति""""गकारनानात्वे सिद्धे तारमन्दश्रुतीयतदुत्पादविनाशश्रुतीयतश्च शुकादिगकारादिषु वैलक्षण्यप्रतीतयश्च गकारादितारत्वादि कमेवालभ्यन्ते न त्वौपाधिक्यो बाधकाभावात्। न च प्रत्यभिज्ञैव बाधिका। तथा हि अस्ति ह्युत्पातादि बुद्धौ सत्यामपि प्रत्यभिज्ञा, अस्ति च प्रत्यभिज्ञानन्तरमपि उत्पादादिप्रतीतिः। न चानयोः परस्परं विहायान्यद् बाधकमस्ति। न चानयोर्बाधकाभावे विनिगमकं किञ्चित्, येनैकत्र भ्रान्तत्वादिविरोधः स्यात्। कथं वा भेदो भेदज्ञानयोरप्यवधिधृतं मिथः प्रतिबन्धकत्वं परिभूय प्रथमं तयोरेकसत्त्वेऽप्यपरोत्पत्तिनय इति संकटप्रविष्टतया प्रत्यभिज्ञानं नित्यत्वे प्रमाणयितुं न शक्यते तद् व्युत्पत्तिमत्वादेव नित्यत्वसिद्धिरपि कथम्। इत्थम् उत्पादादिधीप्रत्यभिज्ञयोरवश्यं विषयभेदः। एकविरोधेनैकानन्तरमपरानुत्पत्तिप्रसङ्गात्। तथा च भेदे प्रतिभासमाने प्रत्यभिज्ञायास्तज्जातीयत्वं विषयो नाभेदः। न चैवं तज्जातीयोऽयमिति तज्जातीयत्वबुद्धेरपि सोऽयमित्याकारदर्शनात्। यथा तानेव शालीनुपभुञ्जमहे तामेव तिन्तिणीमिति। न चोत्पादादिबुद्धिरेवान्योत्पादादिकमवगाहते गकारगतत्वप्रतीतेः भ्रान्तत्वप्रसङ्गात्। न चेष्टापत्तिः अभेदे भासमाने भेदप्रमानुपपत्तेः, विनिगमकाभावेनोभयत्र यथार्थत्वाच्च। यत्र तु प्रथमं न भेदधीस्तत्रैव प्रत्यभिज्ञानार्थभेदो विषयः। तस्माद् यत्र भेदधीस्तदितरबाधकबाध्या न, तत्र प्रतिज्ञैव न भवति, भवन्ती वा तज्जातीयत्वमानमुखेन तु भ्रान्ताविशेषदर्शने भ्रमानुदयात्। कथञ्चान्यथा सैवेयं गुर्जरीति प्रत्यभिज्ञायमाना अप्यनित्या ध्वनयः। तस्माद् वर्णमेकः शब्दोऽनित्यः भावत्वे सत्युत्पत्तिमत्त्वात्, जातिमत्त्वे सति

अस्मदादिबहिरिन्द्रियग्राह्यत्वात्, बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात्। उत्कर्षापकर्षलब्धप्रवृत्तिनिमित्तजातिमत्त्वात्, भस्मादिवत्। न च गत्वादिभिः संकरापत्त्या तारत्वादीनां गकारादिजातित्वमिति वाच्यम्। तारत्वादीनां गत्वादिव्याप्यत्वात्। कथं तर्हि अनुगतधीः सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिमत्त्वेन एतदननुसन्धाने त्वननुगतधीरसिद्धैव।

*अन्ये* तु अस्ति हि प्रतिबन्धभेदं गकारादिषु वैलक्षण्यम्। तच्च जातिविशेष एव। तथा च गत्वादिव्याप्यास्ते अनन्ता एव गकारादिषु जातिविशेषाः। तद् व्याप्याः भावत्वादयोऽप्यनन्ता इति कल्पनातो वरं प्रबलपवनोत्पादितत्वमुपाधिरेव भावत्वमस्तु लाघवादित्याहु।

ननु भावत्वमस्तु यथा तथा, तथापि साधनविकलो दृष्टान्तः, रसादिषु भावत्वाभावादिति[चेत्]न, तेषु भावत्वाभावेऽपि मधुरत्वादिजातेस्तत्र सत्त्वेन तत्परशब्दप्रवृत्तिनिमित्तजातिमत्त्वस्यावैकल्यात् २।२।१३।

प्रागुक्तानित्यत्वहेतूनां व्यभिचारदर्शनाय सूत्रम्—

**न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ।२।२।१४।**

घटाभावश्च सामान्यं च घटाभावसामान्ये तयोर्नित्यत्वात्। तथा चादिमत्वं न हेतुः नित्येऽपि घटध्वंसे गतत्वात्। नाप्यैन्द्रियकत्वं नित्ये सामान्ये गतत्वात्। कृतकवदुपचारश्च कृतकधर्मवत्तया व्यवहारः। स च नित्येऽप्याकाशेऽस्ति, आकाशस्य देशजातिव्यपदेशादित्यर्थः ।२।२।१४।

प्रथमव्यभिचारं समाधत्ते—

**तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः ।२।२।१५।**

उभयान्तानवच्छिन्नसत्तासंबन्धस्तावन्नित्यता तात्त्विकी । सा च न ध्वंसे किन्तूत्तरान्तानवच्छिन्नत्वमात्रेण भाक्तस्तत्र तत्प्रयोगः। न चैतावता व्यभिचारो भवति, तत्त्वभाक्तयोर्नानात्वस्य विभागात् स्फुटत्वादिति सूत्रार्थः ।२।२।१५।

द्वितीयं समाधत्ते—

**सन्तानानुमानविशेषणात् ।२।२।१६।**

अव्यभिचार इत्यनुषज्यते । जातिमत्त्वविशेषणादव्यभिचार इत्यर्थः ।

ऐन्द्रियकत्वं द्वीन्द्रियप्रत्यासत्तिग्राह्यत्वम् । शब्दानित्यत्वपक्षे न संभवतीति परिशेषाच्छब्दसन्तानसिद्धावेव तत्सिद्धिरिति भावः ।२।२।१६।

तृतीयं समाधत्ते—

**कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् ।२।२।१७।**

अव्यभिचार इत्यनुषज्यते । कृतकवदुपचारादित्यनेन कृतकत्व-व्याप्ययथोक्तहेतूनां विवक्षितत्वात् । न वा आकाशे प्रदेशः । महावयव कारणं वा न । आकाशे व्यापकत्वादमूर्तत्वाच्च । अत एव तदकृतक प्रदेशव्यपदेशस्तत्रत्यालोकादेव व्याप्यवृत्तिसंयोगस्यानेकमूर्तसंबन्धस्य वा गुणस्य योगाद् भक्तिरिति सूत्रार्थः ।२।२।१७।

इदानीं शब्दानित्यत्वे प्रत्यक्षप्रमाणप्रदर्शनाय सूत्रम्—

**प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ।२।२।१८।**

उच्चारणात् प्राक् नास्ति शब्दः, कुतः ? अनुपलब्धेः । योग्यस्य सतोऽनुपलम्भात् । न ह्यवधानोऽविकलेन्द्रियः प्राप्तं शब्दं न गृह्णातीति संभवः । एवं प्रागभावसिद्धिवत् तदनन्तरमनुपलम्भात् ध्वंसोऽ

सिद्धयति । योग्यानुपलब्धिलिङ्गकादनुमानादप्येतत् सिद्धयतीति चकारार्थः ।

तथा हि श्रुतपूर्वो गकार इदानीं नास्तीति प्रतीत्या प्रत्यक्षमेव शब्दानित्यत्वम् ।

ननु चाभावप्रत्यक्षत्वे प्रतियोगियोग्यता प्रयोजिका तदधिकरण-योग्यता वा ? नाद्यः, स्तम्भे पिशाचान्योन्याभावस्याप्रत्यक्षत्वापत्तेः । नान्त्यः, तव शब्दाभावस्यैवाप्रत्यक्षतापत्तेरिति चेन्न । संसर्गाभावस्य हि प्रत्यक्षत्वे प्रतियोगियोग्यतायास्तन्त्रत्वात् । न च मूर्तत्वसामान्या-भावे व्यभिचारः, योग्यायोग्यघटितत्वेन मूर्तत्वसामान्यस्यैवायोग्य-त्वात् । न चैवं वायौ स्पर्शाभावोऽपि गृह्यते तस्याश्रयनाशजन्यान्ये-न्द्रियेणाप्राप्तत्वात् । अन्योन्याभावप्रत्यक्षत्वे तदधिकरणयोग्यता तथा । उभयानुगतत्व उपलब्धिविरोधिसत्त्वकप्रतियोगिकत्वम् ।२।२।१८।

शिष्यव्युत्पत्तये जात्या पूर्वपक्षसूत्रे—

**तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ।२।२।१६।**

**अनुपलम्भादप्यनुपलब्धिसद्भावात् नावरणानुप-लब्धिरनुपलम्भात् ।२।२।२०।**

आवरणानुपलब्धिरुपलभ्यते न वा ? आद्ये आवरणानुपलब्धेर-नुपलब्धिबलादभावे सत्यावरणोपलब्धिरायाता । तथा चावरणसंभवः स्यात् । ज्ञानस्य निरालम्बकत्वायोगात् विषयसिद्धेरित्याद्यसूत्रार्थः ।२।२।१६।

अथोक्तदोषभियानुपलभ्यमानाप्यनुपलब्धिरस्तीति मन्यते । तथा सत्यनैकान्तिकत्वान्नावरणस्याप्यभावोऽनुपलम्भात् । तथा चासिद्धमसत्यावरणमिति हेतुविशेषणमिति द्वितीयसूत्रार्थः ।२।२।२०।

सिद्धान्तसूत्रम्—

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ।२।२।२१।

जातिवादी तावदनुपलब्धेर्नोपलब्धिर्विरोधादित्याह । अत्र विधायकमानगोचरतानुपलब्धौ विरुद्ध्यते न तु निषेधकमानगोचरतापि । ततश्चोपलब्धि निषेधता मानसप्रत्यक्षेणानुपलब्धिग्रहणं न विरुद्धम् ।

तदयमर्थः । अनुपलब्धेरावरणानुपलम्भात्मकत्वादावरणानुपब्धिरनुलम्भादित्ययमावरणोपलब्धौ न हेतुः, असिद्धत्वात् । निषेधविषयेण प्रमाणेनानुपलब्धेरुपलम्भादिति ।२।२।२१।

पूर्वपक्षसूत्रम्—

अस्पर्शत्वात् ।२।२।२२।

शब्दो नित्यः स्पर्शात्यन्ताभाववत्त्वाद् व्योमवदित्यर्थः ।२।२।२२।

सिद्धान्तसूत्रम्—

न कर्मानित्यत्वात् ।२।२।२३।

अस्पर्शत्वं न नित्यत्वसाधकम् । कुतः ? कर्मानित्यत्वात्, अस्पर्शत्वेऽपि सति कर्मणोऽनित्यत्वादित्यर्थः ।२।२।२३।

[1]नाणुनित्यत्वात् ।२।२।२४।

न चानैकान्तिकमपि साधनं, नित्यत्वेन परमाणूनामप्यस्पर्शत्वसाधनापत्तेरिति भावः ।२।२।२४।

---

१. यद्यपि नाणुनित्यत्वादिति सूत्रं नोल्लिखितमत्र परं व्याख्यानमस्य समुपलभ्यते । तस्मान् मन्ये लेखकस्य प्रमादात् सूत्रस्यात्र लेखनं नाभूदिति ।

नित्यत्वानुमानाय सूत्रम्—

सम्प्रदानात् ।२।२।२५।

सम्प्रदीयमानमवस्थितं दृष्टम् । यथा गवादि सम्प्रदीयते [तथा] शब्द आचार्येणान्तेवसिने । तस्मादवस्थितमित्यर्थः ।२।२।२५।

सिद्धान्तसूत्रम्—

तदन्तरालानुपलब्धेरहेतुः ।२।२।२६।

बाधोद्भावनपरमेतत् योग्यानुपलब्धौ चावस्थानमन्तराले बाधितमित्यापाततोऽर्थः प्रतिभाति । स चायुक्तः, उत्तरसूत्रविरोधात् अध्यापनाद् प्रतिषेध इति हि तत् ।

न चानेनान्तरालानुपलब्धिः परिह्रियते न वा ? अयोग्यत्वं तस्य ख्याप्यते । तथा सति सम्प्रदानस्य स्वयमेवासिद्धत्वमुद्भावयति । न ह्ययोग्यं सम्प्रदीयत इति विपरीतापत्तिः । अध्यापनादिति हेत्वन्तर मेवाप्रतिषेध इति पूर्वोपक्रान्तप्रतिषेध प्रत्यव[स्थान]त्वात् । तस्मा दन्तरा लानुपलब्धेरहेतुरिति सम्प्रदीयमानत्वस्य विकाशाभाव इत्यसिद्धः सम्प्रदीयमानत्वं हेतुः । स्वत्वफलस्य निषेधमुखेन सम्प्रदीयमानत्वस्य हेतोः लिङ्गस्यासिद्धिरियमुद्भाव्यते । तथा च विभक्तिव्यत्ययेन सुगममेतत् सूत्रम् । तथा हि अहेतोः हेतोः कारणस्य स्वत्वस्याभावात् तदन्तरा नानुपलब्धिः । सम्प्रदानत्वस्यावकाशाभाव इत्यसिद्धः सम्प्रदीयमानत्वं हेतुः ।२।२।२६।

एवं सति पूर्वपक्षसूत्रम्—

अध्यापनादप्रतिषेधः ।२।२।२७।

सम्प्रदानमध्यापनं ब्रूमो न तु स्वस्वत्वत्यागपूर्वकपरसत्तापादनमित्यसिद्धं न भवति । अध्याप्यमाने शिष्यादिवच्छब्दस्यान्तरालेऽपि कल्प्यत्वादित्यर्थः ।२।२।२७।

सिद्धान्तसूत्रम्—

**उभयोः पक्षयोर[1]ध्यापनादप्रतिषेधः ।२।२।२८।**

अध्यापनं हि शिक्षाजनकमुच्चारणम्। तच्चोभयोरपि पक्षयोरवस्थानानवस्थानयोः समानम् । अतोऽध्यापनादनित्यत्वस्याप्रतिषेधः। अन्तरालावस्थानमुभयोः पक्षयोरतोऽध्यापनादनित्यत्वस्याप्रतिषेधः। समानसन्तानवृत्त्यापि तस्य सम्भवादित्यर्थः ।२।२।२८।

नित्यत्वे हेत्वन्तरम्—

**अभ्यासात् ।२।२।२९।**

शब्दस्य मानमवस्थितं दृष्टम्। यथा रूपं पञ्चकृत्वो दशकृत्वः पश्यतीति। एवं दशकृत्वो विंशति कृत्वो वानुवाकोऽधीत इत्यभ्यासादवस्थितमेवैतदिति सूत्रार्थः ।२।२।२९।

सिद्धान्तसूत्रम्—

**नान्यत्वेऽप्यभ्यासोपपत्तेः[2] ।२।२।३०।**

अभ्यासो ह्येकस्मिन् क्रमिकानेकक्रियासंबन्ध एकजातीयो वा। तत्राद्यो यदि हेतुः कृतस्य ह्यन्यतरासिद्धिः। यद्यन्त्यस्तदा विरोधः, यद्यविशिष्टस्तदानेकान्तः । द्विस्त्रिरित्यादौ कृत्येऽस्थिरेऽपि अभ्यासदर्शनादित्यन्यत्वेऽपि अभ्यासोपपत्तेः। नाभ्यासः स्थैर्यसाधनमित्यर्थः ।२।२।३०।

सम्प्रति तु गत्यन्यत्वमेव नास्तीति कथमन्यत्वेऽप्यभ्यासोपपत्तिरिति वाक्छलवाद्याह—

**अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ।२।२।३१।**

१. अन्यतरस्येत्यधिकपाठः न्यायसूचीनिबन्धे ।

२. °सस्योपचारादिति न्यायसूचीनिबन्धेऽन्यत्र च पाठः प्रसिद्ध्यति ।

अन्यदन्यस्मात् यद्यन्यत् तदा विरोधः। न ह्यस्मादेव तदेवान्यदिति। अस्मादन्यस्मादनन्यद् वाच्यम्। तथा चानन्यत्वादन्यभिन्नत्वात् कथमन्यत् अन्यत्वानन्यत्वयोर्विरोधादिति सूत्रार्थः। २।२।३१।

परिहारसूत्रम्—

**तदभावे नास्त्यनन्यतापि तयोरितरेतरापेक्षसिद्धेः।२।२।३२।**

तस्या अन्यताया अभावे अनन्यतापि नास्ति। तयोरन्यानन्ययोर्मध्ये इतरस्यानन्यस्येतरापेक्षासिद्धिर्यतः। उत्तरपदार्थाभावेन नञा तन्निषेधायोगादिति व्याख्यात इत्यर्थः।

न च स्वस्मादनन्यत्वे नान्यस्यान्यता विरुद्ध्यते। नहि नीलमात्मनोऽनन्यं श्वेतपीतादप्यनन्यदिति भावः।२।२।३२।

पूर्वपक्षसूत्रम्—

**विनाशकारणानुपलब्धेः।२।२।३३।**

यदनित्यं तस्य विनाशकारणानि आश्रयनाशादीन्युपलभ्यन्ते। न च तदुपलम्भः शब्दे। तस्मादसौ नित्य इत्यर्थः।२।२।३३।

सिद्धान्तसूत्रम्—

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः।२।२।३४।**

यदि प्रत्यक्षेण विनाशकारणानुपब्धिमात्रात्तदभावस्तर्हि अश्रवणकारणस्यापि प्रत्यक्षेणानुपलब्धेस्तदभावः स्यादिति सततं शब्दश्रवणप्रसङ्गः।२।२।३४।

यथा श्रवणकारणं साक्षादनुपलभ्यमानमपि लिङ्गादिनोपलभ्यत इति मुदस्तीति मनुषे तदा समः समाधिरित्याह—

१. °सस्योपचारादिति न्यायसूचीनिबन्धेऽन्यत्र च पाठः प्रसिद्ध्यति।

## उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ।२।२।३५।

विनाशकारणस्यानुपलब्धेरित्यनपदेशोऽहेतुः। शब्दस्यापि लिङ्गादिना विनाशकारणोपलम्भादिति सूत्रार्थः ।२।२।३५।

घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्ततरः शब्दो* ऽनुभूयते, तद्व्यञ्जकं तावत् स्याद्वा उत्पादकं तावत् स्याद्वा ? नाद्यः, यद् व्यञ्जकं तद्घण्टास्थमन्यवृत्ति वा ? तदप्येकं सन्तानवृत्ति वा ? यदि घण्टास्थमेकं श्रुतिभेदो न स्यात्। अत एव घण्टास्थं सन्तानवृत्त्येकरूपमिति निरस्तम्। कथं च घण्टास्थं स तु श्रोत्रे शब्दमभिव्यञ्जयेदसंबन्धात् । अन्यवृत्तित्वे चैकघण्टावत् सन्निहितघण्टान्तरेऽपि शब्दमभिव्यञ्जयेत् प्राप्त्यविशेषात्। द्वितीयस्तु स्यात्। तथा हि अनित्यत्वे घण्टास्थस्य कारणस्य भेदात् तारतारतरादिभेदो युक्तः। कार्यभेदे कारणभेदस्य हेतुत्वात् । घण्टास्थेनैवाभिघातेन शब्दोत्पत्तौ सन्तानवृत्त्या श्रोत्रेऽपि शब्दोत्पत्तेः । न च युगपदेव तारादिशब्दोत्पत्तिः कार्यवैजात्यात्। कल्पितानां कारणानां क्रमिकत्वात्। तद्यथा स्पर्शवद्वेगवद्पाण्यादिसंयोगो वायौ क्रियामारभते तर्हि घण्टायां कर्म तदुत्तरक्षणे कर्मवद्घण्टाकाशसंयोगाच्छब्दः घण्टापूर्वदेशविभाग घण्टाकर्मणा च वेगोत्पत्तिः ततो घण्टावेगापेक्षस्थित एव घण्टाभ्यन्तरवायुसंयोगो वायौ क्रियामारभते । तदैव घण्टावायुसंयोगः ततो घण्टाभ्यन्तरदेशसंयोगो वायुपूर्वदेशविभागो वायुवेगश्च ततो घण्टाकर्मणा वायुघण्टासंयोगस्ततो वेगवद्वायुसंयोगाद् घण्टायां पुनः[कर्म]कर्मवद् घण्टाभिघाताच्छब्दः घण्टाविभागः घण्टावायुसंयोगः वेगघण्टाभिघाताच्छब्दः ततो वेगवद् घण्टाभिघाताद् वायौ क्रिया घण्टा वायुसंयोगः वायुविभागः वायुवेग इत्येवं संस्कारतारतम्यात् कारण भेदाच्छब्दसन्तानभेदः । संस्कार प्रवाहे चान्त्यस्यातिमान्द्यान्महाभूत संक्षोभणशक्तेरभावान्न वायूपग्रहः, ततो न क्रियोत्पत्तिरिति । अजन्यो

त्तरोत्तरसंयोगात् संस्कारनाशः । नन्वनुपलम्भात् संस्कारो नास्त्येवेत्यत्र सूत्रम्—

**पाणिनिमित्तप्रश्लेषाच्छब्दाभावो नानुपलब्धिः ।२।२।३६।**

संस्कारस्येति शेषः । पाणिनिमित्तस्य प्रश्लेषात् घण्टायां संयोगात् शब्दाभावो यतोऽतः पाणिसंयोगात् घण्टास्थः संस्कारो निवर्तते । ततश्च कारणाभावाच्छब्दानन्तरं नोत्पद्यत इति नानुपलब्धिः संस्कारस्येत्यर्थः ।२।२।३६।

ननु पाणिसंयोगाच्छब्दो निवर्तते इति घण्टाश्रयतैव शब्दस्य युज्यते । व्यधिकरणस्योच्छेद्यत्वेऽतिप्रसङ्गात् । अत एवाहङ्कारिक पञ्चतन्मात्रभूतसूक्ष्मारब्धपृथिव्यादिविकारगवादिवृत्तिर्गन्धादिवदवस्थित एव शब्द आहङ्कारिकतया व्यापकं श्रोत्रेन्द्रियं विकुर्वन्नवस्थित एव व्यज्यत इति *सांख्या*श्च । तत्राह—

**अस्पर्शत्वादप्रतिषेधः[1] ।२।२।३७।**

आकाशगुणस्येति शेषः । कुतः शब्दाश्रयस्य अस्पर्शत्वात् । यदि हि स्पर्शवदाश्रितः शब्दः स्यात् ग्राह्यो न स्यात् । कर्णशष्कुल्यवच्छिन्नाम्बरघण्टयोरसंबन्धात् । न चाहङ्कारिकमिन्द्रियं व्यापकमिति वक्ष्यते स्पर्शाकाशवृत्तित्वे च शब्दस्य सन्तानवृत्त्या श्रोत्र उत्पन्नो गृह्यत इति युज्यते । श्रोत्रस्य भूतत्वेन बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वाच्च । *सांख्य* प्रक्रियायाश्च निरासात् ।२।२।३७।

शब्दस्य स्पर्शवद्वृत्तित्वे बाधकान्तरमाह—

**विभक्त्यन्तरोत्पत्तेश्च समासे ।२।२।३८।**

---

१. विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसंगः सूत्रमिदं नोपलभ्यत ।२।२।३७। न्यायसूचीनिबन्धे धृतोऽस्ति ।

*सांख्यस्य* रूपरसगन्धस्पर्शशब्दसमुदायरूपं विनाशश्चादिद्रव्यम् । तत्र समासे समुदायोऽस्ति । तत्र च शब्दो व्यज्यत इति दर्शनम् । तत्र यदि समुदाये व्यज्यते शब्दस्तर्हि विभक्तिश्च षडज्धैवतगान्धारादिभेदेन विभागान्तरं षडजादिजातीयस्यैव तारतम्यरूपं नोपपद्यते । नहि तद्गतानां गन्धादीनामेकस्मिन्नेवाश्रये नानाजातीयत्वम् । एकजातीयानामेव वा प्रतिक्षणं भेदो दृश्यते इति शब्दोऽपि तथैव स्यात् । तस्माद् विभक्त्यन्तरोपपत्तेर्न समासे व्यज्यते शब्दः, किन्तु आकाशगुणो जन्यः सन्तानवृत्तिश्चैवं न स्यादिति चार्थः ।

शब्दो नित्य अद्रवद्रव्यत्वादिति *केचित्* तन्नासिद्धेः । तथा हि द्रव्यं सत् विभु वा स्यात् मूर्तिमान् वा ? नाद्यो नेह शब्द इत्यादिना निश्चयात् । अन्त्येऽपि निरवयवं वा सावयवं वा ? नाद्योऽतीन्द्रियत्वापत्तेः । नान्त्यः, स्पर्शवत्त्वापत्तेः । न च सावयवं निःस्पर्शमपि तमोवदिति वाच्यम्, तत्रापि सावयवत्वाभावादिति ।२।२।३८।

## [शब्दपरिणामप्रकरणम्]

एवं पृथिव्यादिवृत्तिः शब्दो व्यज्यत इति *सांख्यमतं* निरस्तं, स एव यदि प्रकृतिविकारभावश्रुते मृत्सुवर्णादीनामिव परिणामिनित्यत्वेन प्रत्यवतिष्ठते ततस्तन्निराकरणप्रकरणम् । अनित्यत्वसाधनेन कूटस्थनित्यत्वनिराकरणस्य परिणामिनित्यत्वानुकूलत्वात् । शब्दसामान्यो नित्यः निरूपणस्य तद्विशेषवर्णभेदाविकारित्वनिरूपणहेतुत्वाच्च हेतुहेतुमद्भावः सङ्गतिः ।

अवर्णस्य वर्णोपादानत्वे गुणत्वमेव न स्यादित्युपोद्घातो वा । तत्र विचारहेतुसंशयजनकविप्रतिपत्तिप्रदर्शनाय सूत्रम्—

### विकारादेशोपदेशात् संशयः ।२।२।३९।

इको यणचीत्यादिकं *सांख्या* विकारोपदेशं व्याचक्षते । *अन्ये* त्वचि परभूते संहितायामिकारे प्रयोक्तव्ये यकारप्रयोगरूपमादेशोपदेश

मिति व्याख्यातृविप्रतिपत्तेरत वर्णा विकारिणो न वेति संशयः। विकारित्वं च समवायिकारणत्वं, परिणामित्वं वा ? परिणामिनित्यत्वं च समवायिकारणत्वमतो नाप्रसिद्धिः। एतच्च प्रमाणात् शब्दे साधयिष्यामीत्यभिमानः *परेषाम्*। प्रयोजनं तु वर्णानां समवायिकारणत्वे द्रव्यत्वापत्तौ न श्रोत्रग्राह्यत्वमिति तन्निरासे तत्सामान्यसिद्धिः। पूर्वपक्षस्तु इकारादि यकाराद्युपादानं नियतपूर्वसत्त्वादिति। इको यणचीत्यादेर्विकारोपदेशकतया च शब्दः परिणामिनित्य एवास्त्विति सांख्यप्रत्यवस्थामेवाख्यात् विप्रतिपत्त्या सन्दिग्धासिद्धिप्रदर्शकमिदं सूत्रमिति *प्राञ्चः*।२।२।३९।

**प्रकृतिविवृद्धौ विकारविवृद्धेः ।२।२।४०।**

प्रकृतेः कनकस्य विवृद्धौ विकारस्य कुण्डलादेरपि विवृद्धिर्यतोऽतोऽनेकावयकावयोः [?] प्रकृतिविकृतिभावः। दध्यानयेत्यत्रेत्यादौ प्रकृतिवैषम्येऽपि विकारतौल्यात्। नियतपूर्वसत्त्वमादर्शितत्वेनान्यथा सिद्धमित्यर्थः २।२।४०।

आक्षेपसूत्रम्—

**न्यूनसमाधिकोपपत्तेर्विकाराणामहेतुः ।२।२।४१।**

न्यूनादौ भावप्रधानो निर्देशः। तूलविकारस्तन्तुस्तूलात् न्यूनः, कनकविकारः कुण्डलं कनकसमं, वटबीजविकारो वटतरुः स्वबीजादधिक इत्यनियमोपलम्भात्। अनियमो नाविकारित्वे हेतुरित्यर्थः[1] ।२।२।४१।

समाधिसूत्रम्—

**नातुल्यप्रकृतीनां विकारविकल्पनात् ।२।२।४२।**

१. द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ।२।२।४३। इति सूत्रं नास्त्यत्र।

न्यूनसमेत्यादि न साधनं दृष्टान्तमात्रत्वात् । नापि विकाराणां प्रकृत्यननुविधानेनानैकान्तिकोद्भावनं न्यूनाधिकसमत्वेऽपि विकाराणां प्रकृत्यनुविधानाप्रच्युतेः । तथा तुल्यन्यायाः प्रकृतेर्विकारा विकल्पन्ति । प्रकृते भेदमनुविधीयते । नहि जातु चाम्पेयबीजाच्चम्पकतरुर्नाविर्भवति । अत्र तु न विकारविकल्प इत्यर्थः ।

प्रकृतिविवृद्धिरित्यस्य च भक्त्या प्रकृत्यर्थविधाने प्रयुक्तस्य शक्त्या प्रत्यवस्थानादुपचारच्छलमिति भावः ।२।२।४२।

**द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः ।२।२।४३।**

यथा द्रव्यत्वेन प्रकृतीनां तुल्यत्वे विकारवैषम्यमेवं ह्रस्वत्वदीर्घत्वादि प्रकृतिवैषम्येऽपि वर्णविकाराणां विकल्पो विशेष ऐकरूप्यं स्यादित्यर्थः ।२।२।४३।

समाधिसूत्रम्—

**न विकारधर्मानुपपत्तेः ।२।२।४४।**

विकाराणामयं धर्मो यत् प्रकृत्यनुविधानं, तद्भेदे च भेदः । कारणभेदाभेदयोस्तत्प्रयोजकत्वात् । तस्य चात्रानुपपत्तिः ह्रस्वत्वादिना प्रकृतिभेदेऽपि कार्यभेदाभावादित्यर्थः ।२।२।४४।

इतश्च न विकार इत्याह—

**विकारप्राप्तानामपुनरापत्तेः ।२।२।४५।**

विकारापन्नस्य हि न पुनः प्रकृतिरूपता दृष्टा । नो खलु क्षीरविकारो दधि पुनः क्षीरत्वमापद्यते । यकारस्तु सत्युत्तरपदसमत्वादित्वमापद्यत इति सूत्रार्थः ।२।२।४५।

आक्षेपसूत्रम्—

सुवर्णादीनां पुनरापत्तेरहेतुः ।२।२।४६।

सुवर्णादि कुण्डलं[त्वं]हित्वा रुचक[त्व]मापद्यते । तच्च हित्वा कुण्डलत्वमित्यनेकान्तात् पुनरावृत्तिर्न विकारत्वे हेतुरित्यर्थः ।२।२।४६।

समाधिसूत्रम्—

[न]तद्विकाराणां सुवर्णभावाव्यतिरेकात् ।२।२।४७।

सुवर्णजातीयानामवयवानां पूर्वव्यूहपरित्यागेन व्यूहान्तरापन्नानामपि प्रत्यभिज्ञायमानत्वात् । सुवर्णत्वमेकमस्ति, न तु इहेकारो यकारानुगतो, न वा यकार इकारानुगतः । अन्यः कश्चित् धर्मी दृश्यते य इत्वं हित्वा यत्वमापद्यते । वर्णत्वं तु अनुगतमपि न धर्मि किन्तु धर्मः । धर्मित्वे हि प्रकारो यज्वीति प्रकृतिनियमो न स्यात् । वर्णत्वस्य वर्णमात्रवृत्तित्वात् । न वा निवर्तमान इकारो यकारस्य धर्मो भवितुमर्हति, धर्मधर्मिणोः समानकालत्वादित्यर्थः ।२।२।४७।

इतश्च न वर्णविकार इत्याह—

नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ।२।२।४८।

वर्णानां नित्यत्वे विकारानुपपत्तिः । तस्य कार्यत्वनियमात् । अनित्यत्वे च चिरध्वस्त इकारे यकारः श्रूयत इति नैकान्ततः प्रकृतिरिति सूत्रार्थः ।२।२।४८।

पूर्वपक्षसूत्रम्—

नित्यानामतीन्द्रियत्वात् [तद्]धर्मविकल्पाच्च [वर्ण] विकाराणामप्रतिषेधः ।२।२।४९।

यथानित्यत्वेऽपि केचिदतीन्द्रिया ऐन्द्रियकाश्चेति धर्मविकल्प एवं नित्यत्वेऽपि केचित् प्रकृतिविकारभूताः, केचित्तु न तथा स्युरिति त्वदुक्तोऽप्रतिषेधः ।२।२।४६।

अनित्यत्वे त्वाह—

**अनवस्थायित्वे वर्णोपलब्धिवत् [तद्] विकारोपपत्तिः ।२।२।५०।**

यथानवस्थायिनोऽपि वर्णा इन्द्रियेणोपलभ्यन्ते तथान्विष्यन्नपि [?] [तथा तद्विकारा अपि] इति सूत्रार्थः ।२।२।५०।

उभयं समाधत्ते—

**विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ।२।२।५१।**

भवदुक्तप्रतिषेधोऽप्रतिषेधः। कुतः ? विकारधर्मित्वे नित्यत्वाभावात्। नहि नित्यं विक्रियते व्याघातादिति। न नित्यपक्षे विकारः नाप्यनित्यपक्षे। कुतः ? कालान्तरे विकारोपपत्तेः। अवगुह्य चिरं स्थित्वा यदा स ह्रीयते तदा नेकारस्यावृत्तिगन्धोऽपि चिरातीतत्वात्। उपलब्धिस्तु द्विक्षणावस्थायिनां वर्णानां युज्यत एव श्रोत्रप्राप्तत्वादित्यर्थः ।२।२।५१।

**प्रकृत्यनियमात् ।२।२।५२।**

किञ्चातीन्द्रियविकल्पवत् परिणामविकल्पोऽपि नित्यानामस्त्विति विकल्पसमजातिः। विकाराणां प्रकृतिनियमो दृष्टो यथा क्षीरविकारो दधि न क्षीरस्यप्रकृतिः ००त्तदवृत्तेत्य[ती]कारो यकारस्य

प्रकृतिः विध्यतीत्यत्र व्यधेः संप्रसारणे यकार इकारस्य प्रकृतिरित्यनियमान्न प्रकृतिविकृतिभाव इति सूत्रार्थः ।२।२।५२।

छलवाद्याह—

अनियमे नियमान्नानियमः ।२।२।५३।

योऽयं प्रकृतेरनियम उक्तः स नियतो यथाविषयं व्यवस्थित इति नियतत्वान्नियम एव भवतीत्यनियमो नास्तीति सूत्रार्थः ।२।२।५३।

अत्रोत्तरसूत्रम्—

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ।२।२।५४।

एकत्र विषये नियमानियमौ विरुद्ध्येते तयोस्तादर्थ्यमविरुद्ध्यते न त्वनियमस्य निषेधवार्तापि विरुद्ध्यत इति सूत्रार्थः। वाक्छलं चैतदिति द्रष्टव्यम् ।२।२।५४।

तदेवं प्रकृतिविकारभावं वर्णानां निराकृत्य स्वपक्षे वर्णविकारव्यवहारमुपपादयति ।

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ।२।२।५५।

वर्णविकारा एकस्याप्रयोगोऽन्यस्य प्रयोग इत्येवं रूपा व्यवहर्तव्या। कुतः गुणान्तरापत्त्यादिभ्य एव विशेषेभ्यो वर्णविकारा नानुपपत्तिः। तु शब्दोऽवधारणे तत्र गुणान्तरापत्तिः धर्मिणि सत्येव धर्मान्तरापत्तिः यथोदात्तेऽनुदात्तत्वादिः। उपमर्दः पूर्वधर्मिणि वृत्तावन्यधर्मोपयोगः, यथा अस्तेर्भूः। ह्रासो दीर्घस्य ह्रस्वः। वृद्धिः ह्रस्वस्य दीर्घः। तयोर्वा प्लुतः। लेशो लाघवम्, एकदेशलोपः यथास्त इति। श्लेषः

आगमः प्रकृतेः प्रत्ययस्य वा। एवं सर्वत्र आदेश एव वर्णविकार-पदेनाभिधीयते इति न शब्दानुशासनविरोध इति सूत्रार्थः।

नन्वादेशस्य शब्दान्तरत्वे दध्यत्रेत्यादौ शक्तिग्रहाभावात् पदार्थोपस्थितिर्न स्यादिति चेत्? दधिशब्दे इकारस्य प्रयोगप्रसक्तावपि परतो यथाकारप्रयोग इत्यजानतां दध्यत्रेत्यतो अर्थप्रत्ययो न भवत्येव। व्युत्पन्नानां त्विकारं स्मरतां शक्तिस्मरणादेवार्थप्रत्यय इति सर्वं समञ्जसम् ।२।२।५५।

## [पदार्थनिरूपणप्रकरणम्]

एवं शब्दस्य कार्यधर्मानाश्रयत्वरूपकूटस्थनित्यत्वमनित्यधर्माश्रयत्वरूपं च परिणामिनित्यत्वं निराकृत्योपोद्घातसंगत्या पदार्थनिरूपणप्रकरणम्। न ह्यनिरूपिते पदार्थे शब्दस्य प्रमासंभावनापि। तत्र पदार्थः पदनिरूप्यः पदं निरूपयितुं न शक्य इत्यादौ तल्लक्षणाय सूत्रम्—

### ते विभक्त्यन्ताः पदम् ।२।२।५६

ते वर्णा विभक्त्यन्ता इति तद्गुणसंविज्ञानो बहुव्रीहिः। तेन विभक्तिमन्तर्भाव्य वर्णाः पदम्। बहुवचनेन सर्वेषां वर्णानां पदत्वं सूचितम्।

ननु वर्णाः प्रत्येकमेव न पदार्थमवगमयन्ति वर्णान्तरोच्चारणानभिज्ञप्रसङ्गात् तथाननुभवाच्च। नापि त एव संहताः आशुविनाशिनां क्रमभाविनां स्वरूपसंहतेरभावात्। अत एव न बौद्ध्यपि संहतिः। तस्या विरस्य व्यापारायोगात्। नापि क्रमवत्पूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यवर्णानुभवोऽर्थधीहेतुः संस्कारस्य स्वहेत्वनुभवविषयमात्रगोचरस्मृतिजनकत्वात्।

किञ्चायं संकेतस्मृतिमपेक्षिष्यते नो वा? नान्त्योऽगृहीतसंकेतस्यापि शाब्दधीप्रसङ्गात् । नाद्योऽन्तवर्णानुभवकाले स्मृतेरनागतत्वात् । तत्काले चान्त्यवर्णश्रुतिरुपरता तस्माच्छब्दादर्थोऽनुपपद्यमानो वर्णभिन्नं स्फोटमकारणमाक्षिपति ।

किञ्चास्ति हि भिन्नेष्वपि वर्णेष्वेकं पदमेकं वाक्यमित्यनुभवः । न चासौ वर्णेषु पदेषु च भवितुमर्हति । अनेकार्थकत्वविरोधात् । न चायं भ्रमो बाधकाभावात् । भेदभाने एकत्वारोपविरोधाच्च । किञ्च नदी दीनेत्यादौ वर्णसाम्येऽपि पदवैषम्याच्च तेभ्यो भिन्नान्येव पदानि । न च भेदक्रममात्रात्तद्भेदः तस्याः शब्दरूपतया तदन्तर्भावात् । यदाहुः—

> एकैकवर्णाः सामर्थ्यात् क्षणिकानुपपत्तितः ।
> एकबुद्धिर्नदीदीनतौल्यात् स्फोटः स च द्विधा ।। इति

पदस्फोटो वाक्यस्फोटश्च वर्णास्तद्व्य[ञ्ज]काः । न च तत्रापि प्रत्येकसमुदायविकल्पावकाशः । आद्यवर्णस्य सामान्यतोऽन्त्यवर्णस्य विशेषतस्तद्व्यञ्जकत्वात् । स चायं स्फोटो नित्यतः (नित्यः) तदेव पदं वाक्यं चेत्यनुभवादिति ।

अत्राहुः—औपाधिक एवायमेकं पदमित्यादिप्रत्ययः उपाधिस्तु एकस्मृतिविषयत्वम्, एकार्थधीविषयत्वं वा वर्णानां प्रत्येकमनुभूतानामपि एकसमूहालम्बनस्मृतिगोचरत्वात् । न च पदनिश्चयेऽर्थज्ञानं ततः पदनिश्चय इत्यन्योन्याश्रय इति वाच्यम् । पूर्वमेव पदत्वावधारणानभ्युपगमादिति न प्रत्यक्षविषयः स्फोटः । नाप्यर्थज्ञानानुपपत्त्या तत्कल्पनम्, एकैकमनुभूतानामप्येकस्मृतिविषयाणां क्रमविशेष विशिष्टानां वर्णानामेवार्थप्रत्यायकत्वात् । एतच्च सर्वकृतसमयचेष्टासमूहे स्फोटस्थानीयस्य कस्यचिदभावे परैरप्यवश्याभ्युपेयम्, गत्यन्त-

राभावात्। न ह्यत्रैकार्थधीजनकत्वं नोपाधिः वाक्येऽपि गतत्वात्। नापि संकेतवत्त्वम्, विषयत्वेनार्थस्यापि संकेतवत्तया तत्राभिव्याप्तेः। न च वर्णत्वेनैतद् विशेष्यं वाच्यम् पदसंकेतविषये त(द)विषये वाक्ये-ऽतिव्याप्तेः।

अत्राहुः—शक्तत्वं पदत्वम्। वाक्ये न च शक्तिः अर्थशक्तेः संकेत-त्वे परस्याप्रसिद्धिरित्युभयसाधारणैकरूपाभावेन कथमनुगम इति चेत् न, पदार्थोपस्थित्यनुकूलपदपदार्थसंबन्धत्वेनानुगमात्। नन्वेव-मपि स्वमते शक्तिः संकेत एव। तथा च शक्तत्वं संकेतवत्त्वमेवेति पुनः पूर्वोक्तदोषापत्तिरिति चेत्—न, वाचकत्वस्यैव तदर्थत्वात्। न च लाक्षणिकाव्याप्तिरूपमङ्गादौ द्योतके तदभावश्चेति वाच्यम्, लाक्ष-णिकानामपि किञ्चित् प्रति वाचकत्वात्। उपसर्गाणां तु केवलानाम-पदत्वात्। न चैवं घटमित्यपि वाक्यं स्यात्, प्रातिपदिकद्वितीयाविभ-क्त्योरन्योन्यसंसर्गबोधकपदसमुदायरूपत्वादिति वाच्यम्, अन्वयप्रति-योग्यनि[य]तोपस्थितावेवान्वयव्यतिरेकाभ्यां विभक्तीनां संसर्गबोधक-त्वस्य व्युत्पत्तिसिद्धत्वेनापरान्वयप्रतियोग्युपस्थितिं विना विभक्तेः संसर्गाबोधकत्वात्। अत एवान्वयप्रकार एवार्थो विभक्तीनामित्युच्यते विभक्त्यर्थस्य कर्मत्वस्य क्रियानिरूप्यत्वेन क्रियावाचकं पदं विना-नन्वयाच्च।

*अन्ये* तु घटमित्याद्यपि वाक्यमेव प्रातिपदिकवद्विभक्तेरपि पदत्वेन पदसमूहत्वादित्याहुः।

विभक्त्यन्ताः पदमिति तु शक्तिग्रहोपजीव्यत्वादुक्तम्। *न्याय-लोचनकृतस्तु* न शक्तत्वं पदत्वम् तद्बोद्धजनकतावच्छेदकरूपत्वम्। तच्च रूपे यद्यस्ति तदा तदेव लक्षणम्। नो चेदिदमप्याकाङ्क्षत्करम्। तथा च येन रूपेण यत्रार्थे यस्य शब्दस्येश्वरेणासाधारणी व्युत्पत्तिः कृता तादृगसाधारणव्युत्पत्तिविषयत्वमेव पदत्वम्। व्युत्पत्तिस्तु

क्वचित् संकेतः क्वचिच्छक्यसंबन्धः । न च वाक्येऽतिप्रसङ्गः तत्रासाधारणव्युत्पत्त्यभावात् । यथा घटमानयेत्यादौ उपमानात्, साधर्म्ये वैधर्म्ययोः प्रसिद्धपदसामानाधिकरण्यात् । यथेह सहकारतरावित्यादौ वाक्यशेषात् । यथा यववराहेन्द्रपदादौ व्याकरणात् कोषात् पित्रादिकृताप्तोपदेशाच्चेत्याहुः ।

तत्र पदं द्विविधं नामाख्यातं च । तत्राद्यं विप्र इत्यादि । तल्लक्षणं तु सुबन्तत्वमेव । उपसर्गनिपातौ द्वौ तद्भेदौ । तत्रोपसर्गत्वं प्रपराद्यन्यान्यत्वम् । सर्वविभक्तियोगेऽप्येकरूपपदत्वम् निपातत्वम् । द्वितीयन्तु पततीत्यादि तिङन्तम् । तत्र प्राधान्येन पूर्वापरीभूतक्रियाविधावाख्यातम् । भुङ्क्तेत्यादौ तु भोजनावधिकपूर्वापरीभावावगमे भुजिक्रियोपसर्जनत्वाधिगतेर्नातिव्याप्तिः । साध्योपरक्तभावनावाचकत्वं वाख्यातत्वम् । न च वाक्यमित्यादावतिव्याप्तिः, भावनायास्तत्रोपसर्जनत्वात् । न च भावनापदेऽतिव्याप्तिः, तत्र प्रतीतिसाक्षिकावच्छेदकविशेषरूपसाध्येऽपि रागाभावात् ।

तत्रैकस्मिन् वाक्येनैकनामसंभवात् क्रियाभेदे त्वर्थभेदाद् वाक्यभेद इति प्राधान्यान्नामपदमधिकृत्यात्र विचारः ।२।२।५६।

तत्र संशयाङ्गमाह—

**व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ।२।२।५७।**

व्यक्त्यादीनां सन्निधावविनाभावस्थितावुप[चा]रात् ज्ञानादिति यावत् । तेन गोशब्दात्त्रिस्रुणामपि ज्ञानादविप्रतिपत्तेर्वा किमयमपि पदार्थ उत नेति संशय इति सूत्रार्थः ।२।२.५७।

तत्र पूर्वपक्षसूत्रम्—

**याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः ।२।२।५८।**

व्यक्तिः पदार्थः । कुतः याशब्दादीनां वोपचारात् व्यवहारात् । तथा हि या गौर्गच्छतीत्यादौ व्यवहारो व्यक्तावेव युज्यते न तु जात्याकृत्योरमूर्तत्वात् । एवं समूहोऽपि न जातौ तस्य भेदगर्भत्वात् । नाप्याकृतौ तथाऽप्रतीतेः । त्यागपरिग्रहावपि नैतयोः, तयोः सत्त्वनाशोत्पादनफलकसंकल्परूपफलकतया द्रव्य एवासंभवात् । एवं विंशतिर्गाव इत्यादिका संख्या तत्रैव । एवमवयवोपचयह्रासलक्षणौ वृद्ध्यपचयावपि तत्रैव । एवं वर्णः शुक्लादिरपि । समासो गोहितमित्यादियोगात् । अनुबन्धः सरूपप्रजननसन्तानो गौर्गां जनयतीति । अथ विशेषिका अनुगमिका च जातेरेवेति नागृहीतविशेषणा न्यायात् सैव पदार्थ इति चेत् न गोत्वेनोपाधिनोपाधिलक्षितायाः व्यक्तेः शक्यत्वात् । गोत्वं तु तटस्थमसन्तमेव, यथा गार्गिकया श्लाघत इत्यत्र श्लाघोपाधिविहितोऽपि वुञ् न श्लाघामाहेति ।२।२।५८।

दूषयति—

न तदनवस्थानात् ।२।२।५९।

न व्यक्तिमात्रं पदार्थः । तस्य केवलस्य प्रतीतिविषयत्वेनानवस्थानात् गोशब्दाद् यत् किञ्चिद् युक्त्यज्ञानात् । न च गोत्वमुपाधिः । तस्य प्रत्यायकान्तराभावात् गार्गिकयेत्यत्र वुञनभिहितस्य श्लाघोपाधेः श्लाघत इति पदान्तरेणाभिधानात् । तत्र प्रयोगस्तु विना वुञोऽसाधि[त]त्वात् । न च गोत्वस्य शब्दादेव प्रतीतिः व्यक्तिवत्वान्यतापत्तेः । अथ यथा धेनुपदादशक्यस्य गोत्वस्य ज्ञानम् शक्तिग्रहाहित संस्कारसहकृतात् तदुद्बोधः शक्यव्यक्तिसमवायरूपात् परस्परसंबन्धात् तथा गोत्वस्योपाधेर्ज्ञानं स्यादिति । तन्न, गोत्वविशिष्टधानकर्मव्यक्तेरेव शक्यत्वात् । नियमतो गोपदाद् गोत्वविशिष्टोपस्थितेः धानकर्मव्यक्तिः शक्या गोत्वं च प्रयोगोपाधिरित्यत्र गौरवात् । अन्यथानुप[ग]तविशेषणानां सर्वत्रोपाधित्वसंभवे कारणादिपदानाम-

त्युपाधिकानां विशिष्टशक्त्यभावापत्तेः । गोत्वविशिष्टे च कार्यान्वयाद् गोत्वं विशेषणं, न तूपलक्षणम्। तदन्येन तु रूपेण कार्यान्वये उपलक्षणम्, यथा यो वासस्वी स देवदत्तपदवाच्य इत्यत्र वासः। अथ व्यक्तिः शक्या गोत्वं तु अवच्छेदकम्, कारणत्वे दण्डत्ववदिति न गोपदाद् गोत्वविशिष्टज्ञानानापत्तेः । शक्यतावच्छेदकत्वेनावश्यककत्वाल्लाघवाच्च जातेरेव शक्यत्वात्। धेनुपदे तु गोत्वं न तथातिप्रसङ्गात्। तथा च गोत्वप्रसाधकः शब्द एवेति तदपि वाच्यम् । एवमाकाशपदादावपि शब्दाश्रयत्वयोग्यत्वादिकमूह्यम् ।२।२।५९।

क्वचिच्च व्यक्तिमात्रे प्रयोग उपचारात् । तन्निमित्तोपदर्शनाय सूत्रम्—

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपतिभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ।२।२।६०।**

अतद्भावेऽपि तच्छब्दाभिधेयभेदेऽपि तेन शब्देनोपचारो दृश्यते। यथा सन्धारणादिभ्यो ब्राह्मणादिषु तथा व्यक्तौ प्रयोग इत्यर्थः। तथा हि यष्टिं भोजयेत्यत्र सहचरणाद् यष्टिशब्दाद् ब्राह्मणः प्रतीयते, शक्त्या परम्परया स्मरणात् । स्थानात् यथा मञ्चाः क्रोशन्तीत्यत्र तत्स्थाः पुरुषाः उच्यन्ते। तादर्थ्यात् यथा कटं करोतीत्यत्र कटशब्दः कटार्थेषु वीरणेषु। कटस्य तु निर्वर्त्यस्य कर्मकारकत्वायोगात्। यथा यमो राजेति यमशब्दो दण्डधरे राजनि। मानात् यथा आढकेन मिता सक्तव आढकसक्तवः । धारणात् यथा तुलायां धृतं चन्दनं तुलाचन्दनमिति । सामीप्यात् गङ्गायां गावश्चरन्तीति देशोऽभिधीयते सन्निकृष्टः। योगात् कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते। साधनात् अन्नं प्राणा इति । आधिपत्यात् अयं पुरुषः कुलमयं गोत्रमिति । उपचारपदेनात्र लक्षणोच्यते तद्बीजस्य सत्त्वात् ।२।२।६०।

ननु यदि जात्या व्यक्तिर्नियम्यत इत्यतो जातिर्वाच्या तर्हि साप्याकृत्या नियम्यत इत्याकृतिरेव वाच्येत्याह—

**आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्था[न]सिद्धेः ।२।२।६१।**

आकृतिः पदार्थस्तदपेक्षत्वात् सतो गवादेर्भावो गोत्वादिः[सत्त्वं] तस्य सिद्धिर्ज्ञप्तिर्यत इति सूत्रार्थः ।२।२।६१।

तत्रापि दूषणं न तदवस्थानात्[।२।२।५९]इत्येव सत्त्वनिरूपाया आकृतेर्व्यक्तिरूपत्वादानन्त्यव्यभिचाराभ्यां शक्तिग्रहायोगात् जातिं विना कृताया आकृतेः पदादनुपस्थितेश्च ० ० जातिरेव पदार्थस्तत्रान-न्त्याद्यभावेन शब्दे सुग्रहत्वात् नागृहीतविशेषणान्यायेन चेत्याह—

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ।२।२।६२।**

जातिः पदार्थः । कथम्? व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गात् अनवगमात् । तत्र गोत्वसमवायाद् यत्र गोत्वं तत्र प्रैषसंप्रतिपत्त्या व्यवहाराज्जातेरेव शक्त्या, व्यक्त्याकृत्योस्तु लाक्षणिकः प्रयोग इति सूत्रार्थः ।२।२।६२।

दूषयति—

**नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ।२।२।६३।**

न जातिमात्रं पदार्थः । जात्यभिव्यक्तेराकृतिव्यक्त्यपेक्षत्वात् । नहि तयोरग्रहणे जातिमात्रं पदादुपतिष्ठत इति सूत्रार्थः ।२।२।६३।

सिद्धान्तसूत्रम्—

**व्यक्त्याकृतिजातयस्तु पदार्थः ।२।२।६४।**

न व्यक्त्यादिषु एक एवेति तु शब्दार्थः। पदार्थ इत्येकवचनेन तिसृष्वप्येकै[व] शक्तिरिति सूचितम्। गोशब्दश्रवणानन्तरं नियमेन तिसृणामुपस्थितेर्जात्याकृतिविशिष्टा व्यक्तिः शक्यैव। इयांस्तु विशेषो यद् गौर्गच्छतीत्यत्र व्यक्तिः, गौर्नित्य इत्यत्र जातिः, मृद्गव इत्यत्राकृतिः प्रधानमित्यर्थः।

ननु विशेष्यभेदाद् विशिष्टानामनन्तत्वेन व्यक्तिवद्विशिष्टमपि न शक्यम्, विशेषणैक्येन विशिष्टानामैक्यस्योपलक्षणपक्षवद् दुष्यत्वात्। वस्तुतो व्यक्तौ जातिरनुगमिका विशेषिका चेति नागृहीतविशेषणान्यायात्। सैव वाच्या, व्यक्तिस्त्वाक्षेपलभ्या। अथ वाक्षेप एकवित्तिवेद्यः, तयोः समानव्यक्त्यभाने समानस्याभानादिति चेत्—न, स्वरूपेण जातेः शक्यत्वात्। समानत्वं तु तद्धर्मः। अन्यथा निर्विकल्पके तद्भानापत्तेः। अथ जातावपि विशेषिका व्यक्तिरेवान्यथा व्यक्तिविशेषानाक्षेपापत्तेरिति चेत्—न, प्रत्यक्षादौ तस्य व्यक्तिधीहेतुसमाजाधीनत्वात्। अत एव[न]जातिधीहेतौ व्यक्तिधीहेतुसहकारिता नियमः। समाजस्यार्थत्वात् गोभिन्नभावत्वेन जातिमात्रज्ञानसिद्धेः। अर्थाक्षेपाद्व्यक्तिधीर्न व्यक्तित्वेन न वा रूपान्तरेण व्यक्तेः गौरित्येव प्रतीतेः। नापि गोत्वेन तस्य विशिष्टा भेदेनाक्षेपाभावादिति चेन्न, गोत्वं व्यक्त्याश्रितं जातित्वादिति पक्षधर्मताबलाद् गोत्वाश्रयव्यक्तिसिद्धेः। अर्थापत्तेर्वा व्यक्तिं विनापि गोत्वतज्ज्ञानयोः सिद्धेः। कथं सेति चेत्-न, व्यापकं विना व्याप्यस्यासिद्धेरिति। मैवं गोत्वविशिष्टस्य क्रियान्वयबोधात् गौरित्याकारा गोविशेष्यिका धीः कारणम। सा च न शब्दं विना आक्षेपे हि व्यक्त्याश्रितं गोत्वमितिज्ञानात्। एवं च व्यक्तेः क्रियान्वयोऽपि न स्यात्। गोत्वाश्रिततया निराकांक्षत्वात् राजपुरुषमानयेत्यत्रेव राज्ञः।

किञ्च गोत्वं न व्याप्यम्। नहि यत्र यदा यद्वा गोत्वं तत्र तदा सा वा व्यक्तिरिति नियमः। प्रलये व्यभिचारात। न च जातित्वं

व्यक्त्याश्रितत्वे लिङ्गं जातित्वस्य पदादनुपस्थितेः। तथात्वे वा जाति-विच्छिन्नवेद्यैव व्यक्तिः।

वस्तुतो व्यक्तेरपदार्थत्वे कथं विभक्त्यर्थान्वयस्तत्र, स्वादि-विभक्तीनां प्रकृत्यर्थगतस्वार्थबोधकत्वस्य व्युत्पन्नत्वात्। प्रकृतितात्पर्य-विषये तदन्वयव्युत्पत्तौ लक्षणोच्छेदात्। आख्यातार्थसंख्यापि नानुमिति नान्वेति, किन्तु भावनान्वयिना निर्व्यापारेण प्रथमान्तादुपस्थितेना-लक्षणया व्यक्तिधीरिति चेत् स्वार्थादन्येन रूपेण ज्ञाते लक्षणा, तीरत्वेन ज्ञाते गंगापदस्येव। न चेह गोत्वादन्येन रूपेण व्यक्तेरुपस्थितिः किन्तु गोत्वेनैव, व्यक्तित्वेन चोपलक्ष्यत्वे तत्प्रकारिकैव धीः स्यात्। न च गोत्वसंबन्धिनि तद्विशिष्टे लक्षणा, जातौ मुख्यप्रयोगाभावात्, तस्याश्च तन्मूलकत्वात्। प्रयोगो हि व्यवहारहेतुज्ञानार्थः। न च जातिमात्रनिर्विकल्पकाद् व्यक्तिमनादाय वा केवलजातौ व्यवहारः। तस्य विशिष्टधीसाध्यत्वात्। गास्पश्य गौरस्तीत्यादावपि गोत्व-विशिष्टस्यैव ज्ञानव्यवहारौ। तस्मादेकवित्तिवेद्यत्वात् जातिविशिष्टं शक्यम्। गोगोत्वयोश्च शक्यत्वे गोत्वं व्यक्तिश्चेति धीप्रसङ्गात्। न च जातीनामन्वयो व्यक्तिं विना न संभवतीत्यन्वयप्रकारतया न व्यक्ति-लाभः। षष्ठ्यर्थवत् भविष्यतीत्यादौ व्यक्तेः प्राधान्येनैव भानात्। षष्ठ्यर्थे वा लक्षणं विभज्यते। न चान्वयप्रकारतया ज्ञानानन्तरं प्राधा-न्येन पुनर्भाने भानद्वयकल्पने गौरवात्।

किञ्च तव *भाट्टस्य* शब्दोपस्थितानामेव शाब्दबोधविषयत्व-मित्यभ्युपगमादाक्षेपाद्युपस्थितव्यक्त्यन्वयबोधे स्वसिद्धान्तविरोध इति।

*प्राभाकरास्तु* जातिरेव शक्या। तस्या एव विशिष्टेऽनुगमकाद्-विशेषकत्वाच्च। कुतस्तर्हि व्यक्तिधीः जातिशक्तादेव पदात्। कथमन्य-शक्तादन्यधीः स्वभावात्। शक्तिं विना तत्स्वभावत्वमेव कथम्? इत्थं

गोपदं नियमतो जातिव्यक्ती बोधयति। तत्रास्य जातिशक्तिधीरेव कारणं कल्प्यते, लाघवादावश्यकत्वाच्च न तु व्यक्तिशक्तिधीरपि जातिशक्तिज्ञाने सति तां विना व्यक्तिबोधे विलम्बाभावात्। यथापरस्य-पदार्थशक्तादेवान्वयधीः, जातिशक्तादेव वा व्यक्तिधीरशक्यत्वेऽपि शक्याश्रयत्वस्य नियामकत्वात्। शक्यान्वयत्वस्यैव अन्यथान्वयेऽपि तत्र शक्त्यापत्तेः। जातिशक्तिज्ञानाद् वा जातिधीर्भवन्ती व्यक्तिमपि विषयीकरोति व्यक्तिं विना जातेरज्ञानात्। यो येन विना न भासते तद्धीहेतुस्तमपि बोधयति। यथा यो न धीहेतुस्तद्विषयम् अन्यथापदं जातिमपि न बोधयेत् केवलायास्तवप्रतीतेः। तथा च जातावेव शक्ति-र्वाच्या। तस्माज्जातिज्ञानार्थं क्लृप्ता शक्तिर्व्यक्तिमपि बोधयति, एक-वित्तिवेद्यत्वनियमात्। स एव न स्यात्। ज्ञापका[भावा]दिति चेत् न, जातिशक्तेरेव ज्ञापकत्वात्। ननु जातिं विनापि प्रत्यक्षादिना व्यक्तिर्ज्ञाता तदन्यैव व्यक्तिधीसामाग्री जातिविशिष्टव्यक्तिधीरुभयज्ञापकसमाजा-दायीति चेत् जातिव्यक्तिप्रत्यक्षादिबोधे तथैव सामग्रीद्वयस्य पृथगन्वयव्यतिरेकात्। शाब्दे तु बोधे जातिशक्तिधीरेव हेतुर्लाघवात् न सामग्र्यन्तरम्, तत्सत्त्वे तेन विना विलम्बाभावात्। एवं जातिशक्तत्वेन ज्ञातं पदं जातिविशिष्टस्य स्मारकमनुभावकञ्च। अथ यज्ज्ञाने शक्ति-स्तच्छक्यम् जातिव्यक्तिज्ञाने च शक्तिरिति जातिवद् व्यक्ति-रपि शक्येति चेत् न, यद्विषयतया ज्ञाते ज्ञाने शक्तिरुपयुज्यते तदेव ज्ञाने विषयतया शक्यतावच्छेदकं सच्छक्यं जातिज्ञानं च तस्य तथेति जातिरेव शक्या न तु व्यक्तिज्ञानत्वमप्यवच्छेदकं गौर-वात्। एवं च जातिव्यक्तिधीजनकत्वादुभयत्रापि शक्तिः। जात्यंशे तु सा ज्ञाता हेतुरिति कुब्जशक्तिवादः। परेषामन्वये तदुपगमात्।

यद्वा[1] केवलजातिव्यक्त्योरकारकत्वात् क्रियान्वयो व्यक्तेराश्रय-

---

१. चिन्तामणौ श्रीकरमतरूपेणोल्लिखितं मतमिदम्।

तया जातेरवच्छेदकतया आरुण्यादिवत्। एवञ्च जातिशक्तिपदाज्जातेः शब्दोऽनुभवो व्यक्तेस्त्वौपादानिक इत्याहुः।

तन्न, गोज्ञाने गोत्वज्ञाने वा शक्तं पदमित्याकारः शक्तिग्रहः। तथा च शक्तिज्ञाने विषयतया जातेरवच्छेदकत्वम् व्यक्तिमादायैव प्रतीयते न तु केवलायाः व्यक्तिं विना जातेरप्रतीतेः। तथा जातेरवच्छेदकत्वे व्यक्तेरपि तत्र नियतमिति शक्तिज्ञाने विषयतयावच्छेदकत्वात्। जातिवत् सापि शक्या यद्धर्मवत्तया ज्ञात एव यत्र यस्य ज्ञानं स तत्रावच्छेदको व्यक्तिज्ञानत्वेन ज्ञात एव ज्ञाने शक्तिधीरिति सापि शक्या।

एतेन जातिरेव शक्या लाघवात्। शक्तिग्रहजन्यसंस्कारस्य व्यक्तिविषयकत्वनियमेन पदाज्जातिस्मरणमुत्पाद्यमानं व्यक्ति-विषयकमवश्यं संस्कारस्य नियतोद्बोध[क]त्वेऽपि जात्यंशोद्-बोधकादेव। व्यक्त्यंशोद्बोधकल्पनापदेनोद्बुद्धसंस्कारा[देव] निर्भ्रान्ता शक्तिस्मृतिरिति पदं विनापि सर्वा [जाति] स्मृतिर्व्यक्ति विषया अन्यथा केवलजातिस्मरणापत्तेः। संस्कारसहितात् पदादेव विशिष्टानुभवोऽपीन्द्रियादिव प्रत्यभिज्ञेत्युक्तमतमपास्तम्। उक्तन्यायैर्जातिवद् व्यक्तेरपि शक्यत्वात्। विशिष्टानामा[न]न्त्ये-ऽप्येकत्र विशिष्टे तत्त्वं विहाय गोत्वविशिष्टं शक्यमिति शक्तिग्रहः। यथा क्वचिदेव धूमे धूमो वह्निव्याप्य इति धीः। अवच्छेदकैक्याच्च शक्तेरैक्यम् तद्वदेव। यद्वा गोत्वेन सामान्यलक्षणया ज्ञाते सर्वत्र गवि गोत्वमादाय शक्तिग्रहः। प्रमेयत्वेन सर्वज्ञाने सार्वज्ञमिष्यते एव, नेष्यते तु घटत्वादिना सर्वप्रकारकज्ञानवत्त्वेन सर्वैकोदासी-नस्य गोशक्यत्वात् यत्किञ्चिदेकोपादानेऽपि गोरूपादिना शक्य-त्वमेकोपादानेऽनध्यवसायो वा। अन्यथा त्वन्मतेऽप्येकवित्तिवेद्य-तया सर्वैकपरतायामुक्तदोषापत्तिः। जातिविशेषवदवयवसंयोगरूपा-कृतिरपि पदशक्या गोपदाज्जात्याकृतिविशिष्टस्यैवानुभवात्। जात्या-

कृतिव्यक्तीनां च प्रत्येकमात्रे लक्षणा एकैकस्य विशिष्टादन्यत्वात्। यथा भवतां कार्यशक्ताया लिङो लोके कार्यत्वपरत्वे। ननु लक्षणा न वृत्त्यन्तरं, तीरादौ च गङ्गादिपदानां शक्तिरेव पदजन्यान्वय-प्रतियोग्युपस्थितेः शक्तिसाध्यत्वात्। पदानां संभूयवाच्यार्थान्वय-बोधकत्वव्युत्पत्तेः। शक्तिग्राहकस्य वृद्धव्यवहारस्य शक्यलक्षण (लक्ष्य) साधारणत्वात्। सत्यं, लक्षणीयानामानन्त्येन लक्षकपदस्य प्रत्येकं तत्र शक्तिकल्पने तद्ग्रहार्थं च प्रत्येकवृद्धव्यवहारापेक्षायां गौरवात् लक्षणायाः शक्यसंबन्धत्वेनैकत्वात्, वृद्धव्यवहारान-पेक्षत्वाच्च। लघुत्वेन लक्षणीये वृद्धव्यवहारं पश्यतो वा ल(क्षक)स्य तत्र तात्पर्यमात्रकल्पनौचित्यात्, तीरस्मृत्यनुभवयोः शक्यसंबन्ध-ज्ञानादेवोपपत्तेः। परम्परया गङ्गासंबन्धितीरप्रतिपत्तये अनेनाप्तेन गङ्गापदं प्रयुक्तमित्यस्य खलु प्रतिसन्धानाच्च शक्तेरकल्पनात्। लक्षणा च शब्दादशक्यस्यासदृशस्य परम्परयान्वयप्रतियोगिन उपस्थितिहेतुः शक्यसंबन्ध एव। यत्र च राजपुरुषादौ षष्ठ्यर्थसंबन्धो लक्ष्यस्तत्रापि राजनिरूपितसंबन्धेन। संबन्धस्य स्वरूपमेव संबन्धः। न चैवं मुख्य-परत्वेऽपि शक्यसंबन्धस्य सत्त्वानिबन्धनापत्तिः, लक्ष्ये तात्पर्याभावेन शक्तेरेवान्वयप्रतियोग्युपस्थापकत्वात् तदाकृष्टतात्पर्याद्धि वृत्तिर्न तु वृत्तेस्तात्पर्यमिति।

नन्वेवं तात्पर्यानुपपत्तिरेव लक्षणाबीजम्। पदस्य वृत्तिं विना तात्पर्यनिर्वाहात् न त्वन्वयानुपपत्तिस्तथा। यष्टीः प्रवेशयेत्यत्राजहत् स्वार्थायां च शक्यस्यान्वययोग्यत्वेऽपि लक्षणासत्त्वादिति, न तात्पर्यानुपपत्तिग्रहस्यान्वयानुपपत्तिग्रहव्यतिरेकेणाभावादुपजीव्यत्वेना न्वयानुपपत्तेरेव तद्बीजत्वात्। अजहत्स्वार्थायां च प्रकरणादिना यान्तीत्यस्य छत्रितदितरघटितसमूहगमनपरत्वं, प्रवेशयेत्यस्य च भोक्तृप्रवेशनपरत्वं ज्ञातम्। तादृशगमनप्रवेशनयोरन्वयायोग्यत्वमेव

छत्रियछत्र्योः। लक्षणास्थले चाविनाभावः संबन्धः, यष्टीः प्रवेशय मञ्चाः क्रोशन्तीत्यत्रापि प्रवेशनक्रोशनसमये सास्त्येव । अजहत्स्वार्थायां च छत्रिण एकानुगमनकालेऽविनाभावः। काकेभ्यो दधि रक्ष्यतामित्यत्र च काकादीनां दध्युपघातकत्वेन युगपदुपस्थितिकाले काकस्य कुक्कुराद्यविनाभावः । यत्र तूपघातत्वेन काकमात्रमुपस्थितम्, तत्र दध्युपकघातके लक्षणापि न दध्युपघातकत्वेनातर्कितात्लक्षणोपदेशस्यानर्हत्वात् ।

वस्तुतस्तु संबन्धमात्रमेव लक्षणा लाघवात्। न चातिप्रसङ्गोऽविनाभावेऽपि तुल्यत्वात् । नहि प्रवाहस्य तीरमात्रमविनाभूतम् तात्पर्यनियमानियमश्च तुल्यः।

नन्वेवं गाश्चारयेत्यत्र स्वपरत्वे वृत्त्यन्तरं स्यात् स्वग्राहकमानेनोपस्थितात् प्राणितात्पर्यात् न तु प्रत्यक्षत्वम्। .........र्यमितेऽपि आत्मनि तात्पर्यात्। न तत्रापि अशक्यसंबन्धेन उपस्थितिसंभवात् । अथ तत्र लक्षणा श्रोत्रजप्रत्यक्षोपस्थितस्वपरत्वात्। पदानां तदन्वितस्वार्थाभिधानं च पदान्तरेण । न च वृत्त्युपस्थितेनैवान्वय इति व्युत्पत्तिः किन्तूपस्थितिमात्रेण लाघवादिति चेत् न वर्णानामयोगपद्येन पदगोचरप्रत्यक्षाभावाभावेऽपि योग्यताज्ञानाद्यपेक्षया तस्यातीतत्वात्। गामुच्चारयेत्यत्र विकृतस्यैवोपस्थितत्वेन तस्यैवोच्चार्यतापत्तेः। तथापि निरर्थके कथं स्वमात्रे लक्षणाप्यर्थसंबन्धाभावादिति चेत् न, नहि जवगड़दशमाहेत्यत्र समुदाये क्रियान्वयः, समुदायस्योच्चारणाभावात्। किन्तु द्वन्द्वानन्तरश्रुतक्रियापदेन प्रत्येकवर्णे स्वार्थान्वयबोधः, प्रत्येकं च वर्णानां शक्तत्वेन स्वशक्यसंबन्धिनि स्वस्मिन् लक्षणा।

ननु जवगडदशमनुमिनोमीत्यादौ वर्णानामेतेषां किमपि न शक्यमिति स्वशक्यसंबन्धाभावात् कथमेतेषां मिलिता[ना]मुपस्थिति-

रिति । अत्र निरर्थके स्वपरे स्वस्मिन्नपि शक्तिरिति *केचित्* । सर्वत्रार्थपरे इत्यादिपदस्याभिव्याहारस्तथा चेति पदशक्त्यैव निरर्थकशब्दानामुपस्थितिरित्य*परे* । अन्येनान्यस्य बोधने नियमाय वृत्तिकल्पनम् । अबाधकत्वे तु न तथेति, स्वसंबन्धो घटस्येव भविष्यति, स्वबोधिते च स्वस्मिन् विभक्त्यर्थान्वयोऽपि । न च पदस्य स्वभावात् अबोधकत्वे सर्वत्र तथा स्यात् । जात्यादिपदस्वार्थान्वयानु[प]पत्त्योः सहकारित्वात् । यथा घटस्य स्वबोधकत्वे इन्द्रियादिसहकारित्वमिति *चिन्तामणिकृतः* ।

नन्विदं रजतमिति भ्रमात् शुक्तौ रजतपदप्रयोगे वृत्त्यन्तरं स्यात् । शुक्तौ रजतत्वाभावेन मुख्यार्थत्वाभावात्, शक्यरजतसंबन्धाभावेन लक्षणायाश्च व्यतिरेकादिति चेत् न, यत्र यत्र प्रवृत्तिनिमित्तं तज्ज्ञानात् तत्प्रयोगस्य मुख्यत्वात् न तु यत्र यदस्तीत्यपि तन्त्रं गौरवात् । लक्षणास्थले तु स्मृतशक्येऽन्वयानुपपत्तिज्ञानानन्तरं गङ्गापदात् पुनः शक्त्यर्जितसंबन्धाभावेन मुख्यार्थस्य स्मृतिः । स्मृतशक्यात् संबन्धेन तीरस्मृतिः शक्तेः शक्यस्मृतौ प्रवाहस्य स्वसंबन्धेन तीरस्मृतौ सामर्थ्यावधारणात् । ततः शक्यस्मारिततीरस्येतरपदादेवान्वयधीः । स्वत एव लाक्षणिकं पदं नानुभावकम् । अन्वयप्रतियोग्युपस्थापकत्वेन पदानामनुभावकत्वात् । न च गङ्गापदात् स्वशक्यसंबन्धेन प्रथमं तीरस्मृतिरेव, पुनः स्मरणे गौरवादिति वाच्यम् । पदस्य स्वशक्यसंबन्धितयान्वयप्रतियोगिस्मारकत्वाकल्पनात् । न चेहैव तत्कल्पनं क्लृप्तकारणताकस्मृतिद्वयादेव तीरोपस्थितिसंभवादिति *प्राञ्चः* ।

*नव्यास्तु* गङ्गापदात्तीरस्यानुपस्थितौ सप्तम्यर्थान्वयस्तत्र न स्यात् । सुपां प्रकृत्युपनीतस्वार्थान्वयबोधकत्वव्युत्पत्तेः । न च प्रकृततात्पर्यविषये स्वार्थान्वयबोधकत्वं तेषामित्येव व्युत्पत्तिर्गौरवात्, व्यक्तेरशक्यत्वापत्तेः । ततः शक्यसंबन्ध एव क्लृप्तस्तीरस्मारकत्वेन

कल्प्यते। न चैवं गङ्गापदात्तीरोपस्थितौ शक्तिरेव तां विनापि तत्संभवादित्याहुः।

ननु गौण्यपि लक्षणैव मुख्यार्थव्यवहितपरत्वाविशेषात्। सादृश्याद् गौणी सम्बन्धाल्लक्षणेति चेत् न, सादृश्यस्य तत्त्वं वाच्यमिति गौण्यामपि वाक्यसंबन्धस्यैवोपस्थापकत्वादिति।

अत्राहुः—वृत्तिद्वयेऽपि यद्यपि संबन्धज्ञानमेव तन्त्रम् तथापि सादृश्यत्वेन ज्ञानं गौण्यां, संबन्धमात्रत्वेन तु लक्षणायां हेतुरिति विशेषः। अत एवोपस्थापकान्तरभेदाद् गौणी लक्षणाया अवान्तरभेद इत्यन्ये।

ननु यथा लक्षणास्थले शक्त्योपस्थापितेन शक्येनोपस्थापितस्य तत्संबन्धिनोऽन्वयधीविषयत्वं तथा काकेभ्यो दधि रक्ष्यतामित्यत्रोपलक्षणस्थले काकपदेन काकस्य तेन चोत्तृणत्वस्य तत्संबन्धिन उपस्थापितस्यापि तस्यान्वयधीविषयत्वम्। यदि च लक्षणास्थले गङ्गादिपदादेवाहृत्य तीरादुपस्थितिर्विभक्त्यर्थान्वयानुरोधात्तदा काकादिपदमपि लाक्षणिकमेव स्यात्। न चोपलक्षणस्थले शक्येनोपस्थापितात् कुतश्चिदुपलक्षणादुपस्थितेः। एतावत् प्रणालीकल्पने मानाभावादिति।

अत्राहुः—धिक् करभकमित्यादौ निन्दापरवाक्ये तात्पर्याभावाल्लक्षणा। तथा काकैर्देवदत्तगृहा इत्यादावपि गृहवृत्त्यवच्छेदपरे। अत एव नोपमानसंकरः। समयपरिच्छेदाभावाच्च वाक्यार्थधियश्चातत्वात्। अथ काकैर्घट इत्यत्र घटशब्दसमयपरिच्छेदसंभवादस्तु तत्संकर इति चेत् कुरुणा क्षेत्रम गुरुणा टीका काकैर्देवदत्तगृहा इतिवत् काकैर्घट इत्यत्रापीतरव्यवच्छेदस्यैव [मुख्यार्थत्वात्] समयस्य तदाह-छन्दात् (?) सत्त्वात्।

अथ को घटशब्दवाच्य इति जिज्ञासायां काकैर्घट इत्युत्तर-

वाक्यस्य समयपरिच्छेदकत्वादस्तु तथा, न तत्र समयपरिच्छेदसंभवे वाक्यार्थसामानाधिकरण्याभावेनानुपमानत्वात् । वाक्यार्थसामानाधिकरण्येन च समयपरिच्छित्तिरुपमितित्वात् । काकवन्तो घटा इत्यत्र तु तत्संकरस्येष्टत्वात् ।

वस्तुतस्तु प्रसिद्धपदसामानाधिकरण्यस्थले तदन्यथानुपपत्त्यैव तत्र शक्तिग्रहसंभवे उपमानाकल्पनात् । तस्माद् यत्र शब्दार्थस्मारितस्य मनसान्वयधीस्तत्र शब्दार्थमुपलक्षणम्, यथा काकजटादि । यत्र तु शब्दस्यान्वयधीपरत्वात् तस्य शब्दानुस्मारितस्य तीरादेः शब्देनान्वयधीस्तत्र लक्षणा । यथा गङ्गायां घोष इत्यादौ । यत्र तु तद्वाक्यार्थसमानाधिकरणधर्मे नियतधर्मसमानाधिकरणधर्मे वा वाक्यार्थसंबन्धात् शक्तिधीस्तत्रोपमानम् । यथेह सहकारित्वात्तस्य शब्दानुस्मारितस्य तीरादेः शब्देनान्वयधीस्तत्रलक्षणा तरावित्यादौ[?] यथा गौस्तथा गवय इत्यादौ वेति विवेकः । सा चेयं लक्षणा पदवृत्तिरेव वृत्तित्वात् शक्तिवदिति ।

ननु गम्भीरायां गङ्गायां घोष इत्यत्र नैकपदे लक्षणा, तीरस्या गभीरत्वात् अगङ्गत्वाच्च मुख्यलक्ष्ययोरनन्वयापत्तेः । नापि पदद्वये प्रत्येकं शक्यम्, संबन्धिनो गभीरगङ्गातीरस्याप्राप्तिप्रसंगात् । तस्माद् गभीरगङ्गयोरन्वयबोधानन्तरं वाक्येन स्वज्ञाप्यगभीरगङ्गायास्तीरं लक्ष्यते । वाक्यार्थगभीरगङ्गासंबन्धिनस्तीरत्वेन प्रतीतेः । न च वाक्ये शक्त्यभावाच्छक्यसंबन्धं विना लक्षणा, स्वज्ञाप्यसंबन्धस्यैव लक्ष्यस्मृतौ तन्त्रत्वात् न तु विशेषस्य शक्तिगौरवात् । ज्ञाप्यश्च शक्यवद् वाक्यार्थोऽपि । ननु घोषगङ्गयोरन्वयबोधाद् गभीरगङ्गयोरर्थबोध एव नेति चेत् न, प्रथमोपस्थितत्वेन गभीरगङ्गयोरन्वयबोधस्य शीघ्रत्वात् घोषतदन्वयानुपपत्तिज्ञानाधीनतया तव स्मृतिविलम्बेन गङ्गाघोषार्थबोधे विलम्बात् । न चैवं वाक्यभेदः कर्तव्यान्विताभिधानान्तरानुकूलत्वेन वाक्यैकवाक्यतावदेकवाक्यत्वात् ।

मैवं, वाक्यस्य हि शक्याभावेन शक्यसंबन्धाभावान्न लक्षणा। ननु वाक्यार्थेनान्वयबोधकं पदानि हि सम्भूयान्वयं बोधयन्ति न तु प्रत्येकमात्रमिति चेत्, पदं स्वार्थान्वयं बोधयति न तु समूहः, समूहे स्वार्थाभावात्। न च पदेषु व्यासज्यवृत्तिर्बोधकता। न चेतरपदावच्छिन्न इतरपदे गौरवात्। किञ्च गम्भीरायां गङ्गायामित्यत्र विभक्तिं विनान्वयाबोधात् तदन्तर्भाव्यवाक्यत्वं तथा च लक्ष्ये विभक्त्यर्थान्वयो न स्यात्, लक्षकार्थस्य लक्ष्येऽनन्वयनियमात्। वस्तुतस्त्वेकपदलक्षणयैवोपपत्तौ न वाक्ये लक्षणा। तथा हि तीरान्वयबोधानन्तरं गङ्गापदं गभीरपदं वा स्वशक्यगभीरगङ्गायास्तीरं लक्षयति। न च विनिगमकाभावेनोभयपदे लक्षणाद्वयमत एव वाक्ये लक्षणेति युक्तं पदे क्लृप्तत्वात् वाक्यापेक्षया लघुत्वाच्च। अन्यथा पदे लक्षणाद्वयं वाक्ये चापरा लक्षणेति गौरवं स्यात्।

वस्तुतस्तु गभीरपदात् स्वार्थपरम्परासंबन्धेन लक्ष्योपस्थितौ विलम्बात् गङ्गापदात् स्वार्थसाक्षात् संबन्धेन शीघ्रतीरोपस्थितिसंभवात् तत्रैव लक्षणा।

ननु बहुव्रीहौ चित्रगुमानयेत्यत्र वाक्यार्थकं गोसंबन्धितया अन्यपदार्थप्रतीते वाक्य एवान्यपदार्थे लक्षणा। विग्रहवाक्यस्थं लुप्तं यत्पदमेव स्मृतं तं स्मारयतीति चेत् न, स्मृतयत्पदात् संबन्धितयोपस्थितेऽन्यपदार्थे कर्मत्वोपस्थितिं विनान्वयानुपपत्तेः। विशेषणत्वेनोपस्थिते तु क्रियानन्वयाच्च विभक्तिशून्ययत्पदोपस्थिते च तत्र क्रिया चित्रगुपदयोर्नान्वयः। अन्वयप्रकार [बोधक]विभक्त्यर्थाभावात्। न च चित्रा या गौर्य इति विग्रहे स्मृतप्रथमान्त य इति पदात् तदुपस्थितिः। प्रथमान्तेनानयनाद्यनन्वयात्। प्रथमान्तविग्रहे बहुव्रीहे रसाधुत्वाच्च। तस्मात्तत्र लक्षणा। अत एव समासे नोक्तान्वय यत्पदाप्रयोगः। नहि चित्रापदं गोस्वामिलक्षकं तत्र गोपदार्थानन्वयप्रसङ्गात्। नापि गोपदं, चित्रापदार्थानन्वयापत्तेः, मैवं, वाक्ये निरर्थक

नया स्वार्थसंबन्धाभावेन लक्षणानुपपत्तेः। तथा हि चित्रागोपदार्थयो रन्वयबोधानन्तरं गोपदं चित्रगोस्वामिलक्षकं स्वज्ञाप्यचित्रगोसंबन्धेन तत्स्वामिस्मारकत्वात्। चित्रापदं तु गवान्वितस्वार्थबोधकतया मुख्यार्थकमेव कर्तव्यान्वयबोधानुकूलत्वेन न वाक्यभेदः।

नन्वेवं सति समासो न स्यादेकस्यैव गोपदस्यान्यपदार्थे वृत्तेः। अनेकपदानां चान्यपदार्थवृत्तौ तदनुशासनादिति चेन्न, चित्रापदस्यापि परम्परया अन्यपदार्थबोधकत्वात्। तद्गुणसंविज्ञानबहुव्रीहौ तु कार्यान्वयादजहत्स्वार्था।

एतेन बहुव्रीहावन्यपदार्थे शक्तिः, तत्र तात्पर्यनियमो च क्वचिद्बहुव्रीहेरन्यपदार्थत्वमपि न स्यात्। न च क्वचित्तथैव, यथा लोहितोष्णीषा ऋत्विज इत्यत्र लौहित्यस्य विधेयत्वेन प्राधान्यात् तत्परतयाऽन्यपदार्थे शक्तिस्तत्र तात्पर्यनियमो वेति वाच्यम्। तर्हि तत्रान्यपदार्थे तात्पर्याभावात् तदनुपपत्तिं विना लक्षणाया अप्यभावात्। तथा चान्यपदार्थे शक्तिरेवान्यथा तज्ज्ञानानुपपत्तेरित्यपास्तम्। बहुव्रीहौ वाक्ये न लक्षणा किन्तु पदे तस्य च नान्यपदार्थे तात्पर्यनियमः क्वचिच्छक्येऽपि तात्पर्यात्। बहुव्रीहिस्थपदद्वयस्य तत्र तात्पर्यनियमस्ततोऽन्यत्राप्रयोगादिति चेत् अस्तु तर्हि बहुव्रीहिस्थपदे अनिरूढा लक्षणा, तत एवान्यपदार्थे तात्पर्यनियमोपपत्तेः समुदायशक्तौ मानाभावात्।

अथ बहुव्रीहावन्यपदार्थस्य लक्ष्यत्वे नियमेन लक्षणीयपदलिङ्गता न स्यात्। लक्षकपदस्य तल्लिङ्गाग्राहकत्वात् स्वलिङ्गापरित्यागाच्चेति चेन्न बहुव्रीहेर्लाक्षणिकत्वेऽपि विशेषणपदत्वनियमतो विशेष्यलक्षणीयपदलिङ्गग्रहात् समानाधिकरणस्य समानविभक्तिकस्य च विशेष(ण)पदस्य विशेष्यपदलिङ्गत्वनियमात्। अजहल्लिङ्गे तु लिङ्गनियमानुशासनान्न तथा। बहुव्रीहौ लिङ्गानुशासनाभावेन लिङ्गाभावाद्

विशेषणोपस्थापकवाक्यत्वाच्च विशेष्यपदलिङ्गताया युक्तत्वात् दण्डी पुरुष इतिवत् । शक्तिपक्षे तथा लिङ्गानुशासनाभावात् कथं तल्लिङ्गमिति ।

तत्पुरुषेऽपि राजपुरुष इत्यादौ पूर्वपदस्य षष्ठ्यर्थसंबन्धे निरूढ-लक्षणयैव राजसंबन्धिपुरुषोपस्थितेर्न समासे शक्तिः ।

कर्मधारये तु न शक्तिर्न वा लक्षणा, ताभ्यां विनापि संबन्धिता-बोधोपपत्तेः । अथ नीलपटयोः सामानाधिकरण्यप्रतीतेस्तत्र लक्षणा अन्वयप्रकारत्वेन च तद्भाने राजपुरुषादौ षष्ठ्यर्थोपस्थितिरपि तथा-स्त्विति चेत् कर्मधारयेऽपि सामानाधिकरण्यं नामार्थयोरभेदो वा गुणगुणिनोः समवायो वानुभूयते । स चान्वय एव न त्वन्वयप्रति-योगी । अतोऽन्वयप्रतियोग्युपस्थितिर्नामपदावृत्त्यैवेति न तदर्थं लक्षणा । राजपुरुष इत्यत्र तु राजसंबन्धिपुरुषयोरन्वयोऽनुभूयते तयोश्चोप-स्थितिर्न राजपदे लक्षणां विनेति तत्र सा ।

उपकुम्भमित्याद्यव्ययीभावो अर्धपिप्पलीत्यादि तत्पुरुषस्तु पूर्व-पदार्थप्रधानः । कुम्भस्य समीपे पिप्पल्या अर्द्धं च तात्पर्यात् । अतस्तत्रो-त्तरपदे लक्षणा न तु समासे शक्तिः । नञ्समासे चाब्राह्मण इत्यादौ पर्युदासे पूर्वपदस्य नञः उत्तरपदार्थसदृशे लक्षणा । प्रसज्यप्रतिषेधेन प्रतीत्यादौ नञो मुख्यार्थता । अघटः पट इत्यादौ व्यासे चाभाव-वल्लक्षणा । एवञ्च कर्मधारयः सर्वस्माद् बलवान् अलाक्षणिकत्वात् । अलाक्षणिकत्वेऽपीतरेतरयोगोऽस्मादबलो विशेष्यभेदेन प्रतिपत्ति-गौरवात् । उत्तरपदार्थप्रधानः षष्ठीतत्पुरुषोऽस्मादबलो पूर्वपदार्थ-प्रधानत्वेन क्रियान्वयज्ञानस्योत्तरपदार्थायोग्यत्वप्रतिसन्धानाधीन-त्वात् । उपकुम्भमित्याद्यव्ययीभावश्च पूर्वप्राधान्याविशेषोऽपि पूर्वस्माद-बलोऽधिकरणतान्तर्भावेन प्रतिपत्तिगौरवात् । भेरी पटह इत्यादि समाहारश्च लाक्षणिकत्वाविशेषेऽपि पूर्वस्मादबलः लक्ष्यस्थसाहित्यस्य

प्रधानत्वात्। सर्वस्माद् बहुव्रीहिरबलः, सर्वपदानामन्यतात्पर्यकत्वात्। तत्राप्यतद्गुणसंविज्ञानो बलवान्। उपलक्षितस्य वाक्यार्थत्वाप्रतीतिलाघवात्। तद्गुणसंविज्ञानस्तु न तथा। तत्र विशिष्टस्य वाक्यार्थतया गौरवादिति।

तदेवं निर्णीते पदार्थे प्रसङ्गाद् वाक्यार्थश्चिन्त्यते। तत्र विशिष्टैकार्थपरतयैकवाक्यत्वम्। स चैकोऽर्थः क्वचित् क्रिया, यथा सोमेन यजेतेति। क्वचित् प्रातिपदिकार्थः, यथा यस्य पिता पितामहो वा सोमं न पिबति स व्रात(त्य)इति। क्वचित् कारकं, यथा दध्ना जुहोतीत्यादि। क्वचित् प्रसज्यप्रतिषेधः, यथा न कलञ्जं भक्षयेदिति। तत्र च रागप्रसक्तप्रवृत्तिमान्निवृत्तावधिकारी। क्वचिन्नियमः, यथा याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यादि। तत्र नार्जनं विधीयते। तस्य रागप्राप्तत्वात्। नापि याजनाद्यन्वयोऽर्जनस्य तत एव। किन्तु अप्राप्तो नियम एव। स चार्जनस्य याजनादिप्राप्यतैव। न चापदार्थता, विधेयस्योद्देश्यव्यापकत्वव्युत्पत्तेरन्यत्र सिद्धत्वात्। न च दण्डी पुरुष इत्यादौ पुरुषस्योद्देश्यस्य न विधेयव्याप्यतेति वाच्यम्। विधानकाले तस्यापि दण्डित्वव्याप्यत्वात् लक्षरकाले मञ्चादीनामिव। न च विधेयसामानाधिकरण्यमात्रं प्रतीयते न तु व्याप्यतेति वाच्यम्। विशिष्टार्जनत्वाद्यवच्छेदेन याजनाद्यन्वयात्, संकोचे प्रमाणाभावात्। अत एवार्थतदितरव्युदासः। यथा हि ब्राह्मणस्य विशिष्टेष्टसाधनं धनार्जनं याजनादित्रितयव्याप्यमिति वाक्यार्थेऽवगते व्यापकनिवृत्त्योपायान्तरार्जने विशिष्टेष्टोपायत्वस्य व्याप्यस्य निवृत्तौ सत्यामुपायान्तरस्याप्रवृत्तिलक्षणो व्युदासः सिद्ध्यति।

क्वचित् परिसंख्या, यथा पञ्च पञ्चनखा भक्ष्या इत्यादि। अत्र पञ्चनखभक्षणस्य रागप्राप्तेस्तदितरपञ्चनखभक्षणनिषेधो लक्षणया। अत एवापदार्थत्वाज्जघन्यत्वमस्याः। न च नियमविधिवदुपस्थित-

व्याप्यताविधिनैवेतरनिरासोऽर्थलभ्य एवेति वाच्यम्, पञ्चनखतदितरसमुच्चितभक्षणेनापि व्याप्यतानिर्वाहात्। पञ्चान्यतमपञ्चनखविषयत्वस्याप्रत्ययत्वात्। तस्मात् भक्ष्यपञ्चशब्दयोर्विरोधिलक्षणया अपदार्थोऽपीतरनिषेधोऽत्र वाक्यार्थः। क्वचित् पर्युदासः, यथा यजतिषु ये यजामहं करोति नानुयाजेष्विति। क्वचित्तु प्रसक्तस्यापवादः। यथा ब्राह्मणाय दधि दीयताम् तक्रं कौण्डिन्याय। क्वचिन्निषेधस्य प्रतिप्रसवः। यथा

मासद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः।

इत्यनेन निषिद्धस्यैव नदीस्नानस्योपाकर्मणि चोत्सर्गे इत्यादिना प्रतिप्रसवः। क्वचिद् विकल्पः, यथा नार्षेयं वृणीतेत्यत्र। तथाहि प्राप्तस्यैव निषेधो वाच्यः। न चास्य रागादिपरिप्राप्तिर्दुःखैकरूपत्वात्। अतो बलात् शास्त्रीया प्राप्तिर्वक्तव्या। आर्षेयं वृणीतेति। तथा च विहित निषिद्धत्वेन विकल्प एव। क्वचित्समुच्चयः, यथा स्नानसन्ध्याशौचाचमनादीनाम् प्रयाजादीनां च सम्भूय जनकत्वम्। क्वचिदङ्गाङ्गिभावः, यथा प्रयाजादीनां दर्शसन्निधिश्रुतानामफलानामिति दिक्।२।२।६०।

तत्र के व्यक्त्यादय इत्यपेक्षायां व्यक्तिलक्षणाय सूत्रम्—

## व्यक्तिर्गुणविशेषाश्रयो मूर्तिः।२।२।६१।

व्यक्तिरिति लक्षणनिर्देशः। व्यज्यत इति व्यक्तिर्ज्ञेयमात्रम्। गुणाः रूपादयः, विशेषाः कर्मादयः, आश्रयो द्रव्यम् तेषामिति सन्निधानात्। तेन सर्वसंग्रहः। ज्यात्याकृत्यादेरपि व्यक्तित्वात् पृथगुपन्यासः स्वरूपभेदसूचनार्थः। तेन वाचकव्यक्तिशब्देभ्यो व्यक्तेः प्राधान्यम्,

जात्याकृत्योरुपसर्जनत्वम् जात्याकृतिशब्दयोस्तयोः प्राधान्यमप्राधान्यं व्यक्तेरिति सर्वपदार्थप्रधानो द्वन्द्वः समासः । मूर्तिरिति द्रव्यस्यैव विशेषणम् मूर्च्छितावयवत्वात् । तेन चावयवसन्तानलाभः । यथाश्रुतं न लक्षणमव्यापकत्वादतो वस्तुत्वमेव सामान्यलक्षणम् जात्याकृत्योरपि प्रमेयादिपदवाच्यतया व्यक्तित्वात् ।२।२।६१।

नन्वेवमाकृतेरपि व्यक्तित्वेन संग्रहात् कथं पृथङ्निर्देश इत्यत आह—

## आकृतिर्जातिलिङ्गाख्या ।२।२।६२।

जातिश्च लिङ्गानि च तान्याख्यायन्ते । यथा शिरः पाण्यादिव्यूहरूपा आकृतिर्मनुष्यत्वजातिव्यञ्जिका । तथा चावयवानां संयोग आकृतिरिति लक्षणम् । उपलक्षणं चैतत् मृत्त्वसुवर्णत्वजातेरूपविशेषव्यङ्ग्यत्वात्, ब्राह्मणत्वादेर्जातेर्योनिविशेषव्यङ्ग्यत्वात्, तैलत्वस्य गन्धरसव्यङ्ग्यत्वात् । अत एव सार्षपादीनां न तैलत्वं, तद्व्यञ्जकादेरभावात्, योग्यस्य बाधात् । तस्य जातिप्रसक्तत्वेऽपि स्नेहत्वे रूढ्या नियमात् । रूढियोगयोर्विरोध एव रूढ्या योगापहारात्, अन्यथातिप्रसङ्गात् । न च फलप्रभवस्नेहरूढ्या सार्षपादौ मुख्यस्तैलपदप्रयोगः, जातिनियतधर्मस्यैव तद्व्यञ्जकत्वात्, तस्य तु तथात्वे मानाभावात् । तैलप्रभवस्नेहादेस्तु कारणवैजात्यप्रयोज्ययोस्तद्व्यञ्जकत्वात् । नापि तैलपदे तदेव प्रवृत्तिनिमित्तम्, तदज्ञानेऽपि तैलपदप्रवृत्तिः, सर्षपतैलमिति प्रयोगः । सर्षपस्यायं स्नेह इत्यर्थे स्नेहे तैलमिति तैलच् प्रत्ययात् । तस्मात् तैलपदं योगरूढं क्षीरत्वं रसविशेषव्यङ्ग्यम् । अत एवामिक्षायाः क्षीरत्वं न तु वाजिनस्य तस्य रसविशेषभावात् ।२।२।६२।

जातिलक्षणाय सूत्रम्—

## समानप्रसवात्मिका जातिः ।२।२।६३।

भिन्नेषु समानबुद्धेरनुगतज्ञानस्य, प्रसूते इति प्रसवः प्रसोत्री। स एवात्मा स्वरूपं यस्याः सा जातिरिति प्रमाणमुक्तम्। नित्यानेकसमवेतत्वे तु लक्षणे तात्पर्यम्। यथाश्रुतस्योपाधावतिव्याप्तेः सामान्यव्यपदेशस्तत्र यौगिकः। आकाशपदस्य तु व्यक्तावेव शक्तिः, न तु शब्दाश्रयत्वोपाधियोगात् सह प्रयोगानुपपत्तेः। न चैवमाकाशपदान्निर्विकल्पकापत्तिः, नियमतो यद्धर्मवत्तयोपस्थिते यत्र शक्तिग्रहः तत्र तच्छक्तेन पदेन तस्याप्युपस्थितिरिति फलबलेन कल्पनादित्येके। तन्न, व्यक्तेरप्यवाच्यतापत्तेः। तथा च शब्दाश्रयत्वेऽपि शक्तेरेव पदान्नियतोपस्थितेः शक्तिसाध्यत्वात्। सहप्रयोगस्य वाच्यादिपरत्वेनाप्युपपत्तेरिति पदादपि निर्विकल्पकं संभवतीति केचित्।२।२।६३।

उपदेशातिदेशाभ्यां पदार्थास्तु चतुर्दश।
परीक्षिता इहाध्याये प्रमेयच्छलभेदिनः॥

*इति महामहोपाध्यायश्रीवाचस्पतिमिश्रविरचिते*
*न्यायतत्त्वालोके द्वितीयोऽध्यायः।*

---

# तृतीयोऽध्यायः

## प्रथमाह्निकम् ।

### [ इन्द्रियभिन्नात्मपरीक्षाप्रकरणम् ]

यावद् व्यतिरेकिसामान्यं न परीक्ष्यते तावत् तद्विशेषस्य गमकतौपयिकं रूपं नावधार्येत इति तत्साध्यत्वात् हेतुहेतुमद्भावसङ्गत्या प्रमाणपरीक्षानन्तरं प्रमेयपरीक्षेति *केचित्* ।

तन्न, प्रत्यक्षलक्षणरूपव्यतिरेकविशेषपरीक्षायां व्यभिचारात् ।

किन्तु प्रमाणपरीक्षाजिज्ञासापगमः प्रमेयपरीक्षाहेतुरिति परम्परया हेतुहेतुमद्भावः । न चैवमवसर एव, प्रतिबन्धकाभावज्ञानस्यानुपजीवनात् । तत्रापि क्रमानुरोधादादावात्मादिषट्कपरीक्षा । सैवाध्यायार्थः । न चैतद्रूपस्य प्रयोजनाभावेनाजिज्ञासितत्वान्नाध्यायार्थतावच्छेदकत्वमिति वाच्यम्, प्रतिपाद्यसकलमात्रवृत्तेरेव लाघवेन तदवच्छेदकत्वात् । अत एव छलप्रमेयान्यपदार्थपरीक्षा द्वितीयाध्यायार्थ इति *नव्याः* ।

*प्राञ्चस्तु* कारणरूपप्रमेयषट्कपरीक्षैतदध्यायार्थः । कारणत्वञ्चोत्तरषट्कमिति तं प्रति । न चादृष्टे कार्यप्रवृत्तौ प्रसङ्गः । तस्य भोगतत्साधनमात्रपरतया मोक्षाजनकत्वेन षड्हेतुत्वाभावात् । न चेश्वरप्रयत्ने कारणप्रवृत्तावतिव्याप्तिः, अदृष्टजनकानित्यप्रयत्नस्य प्रवृत्तितया तस्यातथात्वादित्याहुः ।

तत्रापि स्वहेतुत्वेन स्वोन्नायकहेतुत्वेनोपजीव्यत्वात् क्रमानुरोधाच्च बुद्धिमनोभिन्नकारणरूपप्रमेयपरीक्षा प्रथमाह्निके । तत्रापि क्रमानुरोधात् पञ्चभिः प्रकरणैरादावात्मपरीक्षा । शरीरमेव प्रतिसन्दध्यादित्यन्यथासिद्धिनिरासाय शरीरव्यतिरेकप्रकरणोत्थानम् ।

सा च तावन्नोदेति यावत् परैः प्रतिसन्धातुरेकत्वं नाङ्गीकार्येत इति तदर्थमादाविन्द्रियव्यतिरेकप्रकरणम् ।

तत्र वादिविप्रतिपत्तेरात्मा इन्द्रियभिन्नो न वेति संशयः । न च धर्म्यसिद्धिः, इच्छादिसूत्रात् [१।१।८] तत्सिद्धेः । तत्रेन्द्रियाणि चेतनानि तदन्यचैतन्यसाधकमानाभावादित्याक्षिप्तपूर्वपक्षानुमाने स्वरूपासिद्धिविभावनमुखमात्मसाधकं सिद्धान्तसूत्रम्—

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ।३।१।१।**

दृशा गृहीतस्य त्वचा प्रतिसन्धानमुभयद्रष्टारं विनानुपपद्यमानं तमेकं साधयतीत्यर्थः ।३।१।१।

सिद्धान्तानुमानं स्वरूपासिद्ध्या आक्षिपति—

**न विषयव्यवस्थानात् ।३।१।२।**

प्रतिसन्धानं भिन्नेन्द्रियग्राह्यं न, किन्तु एकैकेन्द्रियविषयविषयकमेव । यमद्राक्षं तं स्पृशामीति तु ज्ञानद्वयमित्यर्थः ।३।१।२।

भिन्नेन्द्रियविषयप्रतिसन्धानमाश्रित्य परिहरति—

**तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ।३।१।३।**

यत एवेन्द्रियाणि व्यवस्थितविषयाणि अत एवाव्यवस्थितविषयस्यात्मनः प्रतिसन्धानबलात् सद्भावात् नात्मप्रतिषेधः । न च प्रतिसन्धानमेवासिद्धम्, अबाधितत्वादित्यर्थः ।

किञ्चेन्द्रियव्यापारविनाशेऽपि ज्ञानमस्तीति, ततोऽप्यतिरिक्तात्मसिद्धिः । न च तत्रापि त्वचो व्यापारः, तस्याः सर्वविषयत्वा-

पातात्। न चेष्टापत्तिः, बहिरिन्द्रियत्वात्। कथं तर्हि स्वप्नज्ञाने नियमतस्त्वगपेक्षा? त्वगवच्छेदस्थितत्वस्य मनसि कारणतावच्छेदकत्वात्। न चैवं त्वाच्यामपि प्रमायां त्वचोऽपलापः, मनसो बहिरस्वातन्त्र्यात्। त्वचः सहकारितया करणत्वात्। न च स्वप्नेऽपि तथा तत्र सिद्धायाः सहकारि वादिति भावः। यद्यप्यात्मन इन्द्रियाद्यभेदेऽपि न तल्लक्षणक्षतिरिति न तद्दोषनिर्णजनात्मकपरीक्षासंभवः। तथापि श्रोतव्यो मन्तव्य इति श्रवणानन्तरं तत्समानविषयमननावतारात्। श्रुतौ चेन्द्रियादिभिन्नस्यैवात्मनः श्रुतत्वात् तदेकवाक्यतापन्नैतन्मननशास्त्रस्यापीन्द्रियभिन्नात्मलक्षणे तात्पर्यात्, तत्र चानुपपत्तिरेव ।३।१।३।

## [ शरीरभिन्नात्मपरीक्षाप्रकरणम् ]

एवमपि सर्वग्राहिशरीरमेवैकमादाय विश्वास्यते[1]। प्रतिसन्धानेन ततोऽपि समीहितसिद्धिरिति तन्निरासाय इन्द्रियव्यतिरेकप्रकरणात् पश्चात् स्थिरात्मसाधकत्वेनाभ्यर्हितत्वाच्चक्षुरद्वैतप्रकरणात् प्राक् एककार्यत्वसङ्गत्या प्रकृतस्थिरात्मोपपादकत्वेन निर्वाहकत्वसङ्गत्या च शरीरव्यतिरेकप्रकरणम्।

तत्र ज्ञानादि शरीरवृत्ति गौरोऽहं जाने इत्यादिना शरीरधर्मसामानाधिकरण्येनानुभूयमानत्वाच्छरीरत्ववदित्याक्षिप्तपूर्वपक्षप्रतिक्षेपद्वारकं सिद्धान्तसूत्रम्—

### शरीरदाहे पातकाभावात् ।३।१।४।

शरीरदाहे प्राणिवधे कृते यत्पातकं तस्याभावप्रसङ्गः। हन्तरि ऐहिकशरीरात्मके फलाजनकत्वमहन्तरि चामुष्मिकशरीरे फलजन-

1. विश्राम्यति ने० मा०।

कत्वमिति कृतहानाकृताभ्यागमप्रसङ्गः । ततस्तस्य देहाधिकमात्मे-त्यर्थः ।

न च पूर्वपक्षिणा *चार्वाकेण* पातकपरलोकयोरनङ्गीकारात् तं प्रति पातकाभावप्रसङ्गो नानिष्ट इति वाच्यम्, पुंसां विचित्राभि-सन्धित्वेन तस्यापि तदभ्युपगमसंभवात् । अलौकिकसाधनाद् ऋद्धि संभवेन प्रसञ्जनाच्च ।३।१।४।

तथापि हन्तरि फलाभावस्तुल्य इति शङ्कते—

**तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ।३।१।५।**

तदभावः हिंसानरकयोरभावः । सात्मकप्रदाहेऽपि सात्मक-शरीरवधेऽपि तन्नित्यत्वात् आत्मनो नित्यत्वात् । तथा च नित्यस्य जन्यधर्मानाश्रयतया हन्तुर्नरकाभावो घात्यस्यापि च नित्यतया हिंसा-भाव इत्यर्थः ।३।१।५।

परिहरति—

**न कार्याश्रयकर्तृवधात् ।३।१।६।**

कार्यं भोगस्तस्याश्रय आयतनतया शरीरं तदेव भोगहेतुतया कर्तृ, तद्वधात् तत्प्रमापणात् [ तत्प्रायणात् ] न हिंसानुपपत्तिः । न च नरकानुपपत्तिः, अजन्यस्यापि जन्यधर्माश्रयत्वाविरोधादित्यर्थः ।

न च कार्याश्रयोपदेशेनैव शरीरलाभे कर्तृपदमधिकमिति वाच्यम्, सांघातयतीति घात्यहन्त्रोः सामानाधिकरण्यानुभवात् । सात्मकपक्षे पुरुष एव घात्य इति मन्वानेन परेणानिष्टमुक्तम् । तद् यदि कर्तृपदेन हेतुलक्षणया शरीरमुपस्थाप्यते तदा तत्रापि कर्तृ-विशेषार्हपदेन भोगाश्रयलक्षणया समाधेयमिति सूचितं भवति ।

यद्वा कार्याश्रयः शरीरं कर्तृणि ज्ञानकारणानीन्द्रियाणि । न चैवं देहे प्रायणानुपपत्तिः, आत्ममनोविभागविशेषस्य प्रायणत्वात्तस्य चादेहधर्मत्वादिति वाच्यम्, विनिगमनाविरहाच्छरीरमनोविभागविशेषस्यैव प्रायणत्वादित्यभिसन्धिः ।३।१।६।

## [ चक्षुरद्वैतपरीक्षाप्रकरणम् ]

एवं देहभेदं न्यायसाम्यादर्थाद् बुद्धिभेदं चात्मनः प्रसाध्य यत्केनचिदस्थिरात्मनि प्रतिसन्धानान्तरमेव मानमुपन्यस्तं तन्निरासाय प्रसङ्गाच्चक्षुरद्वैतप्रकरणम् । तत्र दूषयितुं तन्मतमुपन्यस्यति—

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ।३।१।७।**

सव्येन वामेन चक्षुषा दृष्टस्येतरेण दक्षिणेन प्रत्यभिज्ञानात्, न तच्चक्षुश्चैतन्ये सम्भवति भेदादिति । परिशेषादेव स्थिरात्मसिद्धिरित्यर्थः ।३।१।७।

स्वरूपासिद्ध्यैतद् दूषयति—

**नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ।३।१।८।**

चक्षुषो द्वित्वं न, लाघवसहकृताद्धर्मिग्राहकादेकत्वसिद्धेः । तर्हि भेदधीः कथमित्यपेक्षायामाह—एकस्मिन्नित्यादि । एकस्मिन्नेव नायने रश्मौ नासास्थ्ना आवृतमध्ये अनावृतप्रान्तद्वयाद्द्वित्वाभिमानात् व्यवधानरूपाद्भेदसाधकानुमानाद् भेदधीरित्यर्थः ।३।१।८।

आक्षिपति—

**एकविनाशे द्वितीयाविनाशान्नैकत्वम् ।३।१।९।**

विरुद्धधर्मसंसर्गेण भेद इत्यर्थः ।३।१।९।

एकदेशी परिहरति—

अवयवविनाशेऽप्यवयव्युपलब्धेरहेतुः ।३।१।१०।

अवयवविनाशेऽपि शाखादिच्छेदेऽपि अवयव्युपलब्धेः प्रत्यभिज्ञानेन वृक्षादिसत्त्वोपलब्धेः, अहेतुः अवयवनाशोऽवयविनाशेऽहेतुः। तथा च विरुद्धधर्माध्यासः स्वरूपासिद्धो अवयवावयविनोश्च भेदादित्यर्थः ।३।१।१०।

कण्ठत एकदेशिपरिहारं सिद्धान्ती दूषयति—

दृष्टान्तविरोधादप्रतिषेधः ।३।१।११।

दृष्टश्चासावन्तो व्यवस्थितश्चेति दृष्टान्तः । तन्त्वादिनाशे पटादिनाशस्तद्विरोधादप्रतिषेधः । अवयवनाशेऽवयविनाशाप्रतिषेध इत्यर्थः ।

कथं तर्हि विरुद्धधर्माध्यासपरिहारः, नष्टैकरूपत्वात् । रूपोपलब्धिस्तु खण्डचक्षुषः। वस्तुतस्तु गोलकोपघाते चक्षुरुपहन्यत एव न, ततस्तस्य भेदात् कुण्डबदरवदिति भावः ।

न च चक्षुर्द्वयेनोपपत्तिरिति । अणुना मनसा युगपदुभयाधिष्ठानासम्भवात् । न च संसर्गिद्रव्यतया बहिरारम्भः, अन्यचक्षुः साम्यात् घ्राणादिसूत्रविरोधाच्च । द्वन्द्वस्योत्सर्गत एकरूपावच्छेदेन पदार्थोपस्थापकत्वात् । न चैवं श्रवसि का गतिः द्वित्वादिति वाच्यम्, तत्रापि कर्णशष्कुलीद्वयावच्छिन्नस्यैकस्यैवाभ्युपगमात् ।३।१।११।

प्रसङ्गात् प्रकारान्तरेणात्मानं साधयति—

इन्द्रियान्तरविकारात् ।३।१।१२।

कस्यचित् तिन्तिण्यादेरर्थस्य चक्षुरिन्द्रियेण दर्शने सति इन्द्रियान्तरस्य रसनादेर्विकारो दन्तोदकसंप्लवलक्षणो भवति । स च रसेच्छाजन्यः, सा च रसानुमानजन्या, तच्च व्याप्तिस्मृतेः, सा च तदनुभवादिति व्याप्त्यनुभविता तत्स्मर्तानुमातैषिता चैकः सिद्ध्यत्यन्यदृष्टस्यान्येनास्मरणादित्यर्थः ।३।१।१२।

आक्षिपति—

[न] स्मृतेः स्मर्तव्यविषयत्वात् ।३।१।१३।

स्मृतिर्हि विषयतया तं गमयेत् कारणतया वा ? आद्ये सूत्रमुत्तरमन्त्ये संस्कारेणान्यथासिद्धिरित्यर्थः ।३।१।१३।

समाधत्ते—

तदात्मगुणसद्भावादप्रतिषेधः ।३।१।१४।

स्मृतेरात्मगुणत्वेनैव सद्भावो भवति । गुणस्य साधारतानियमात् । अत आश्रयतया तं गमयिष्यतीति नात्मप्रतिषेध इत्यर्थः ।३।१।१४।

## [मनोव्यतिरिक्तात्मपरीक्षाप्रकरणम्]

एवमपि प्रतिसन्धानादीनां स्थिरात्मसाधकानां मनसार्थान्तरवारणाय[1] प्रकृतस्य स्थिरात्मन उपपादकतया निर्वाहकत्वलक्षणसङ्गत्या शरीरभेदप्रकरणेन सममेवान्तरया एककार्यत्वसङ्गत्या च मनोव्यतिरेकप्रकरणम् ।

तत्रात्मा मनोभिन्नो नवेति संशयः । प्रयोजनं तु विभु चेतनसिद्धिः ।

---

१. निरासाय ने० मा० ।

पूर्वपक्षसूत्रम्—

**नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ।३।१।१५।**

अतिरिक्तात्मसिद्धिर्न। कुतः? आत्मप्रतिपत्तिहेतूनामात्मसाधकानां प्रतिसन्धानादीनां मनसि सम्भवात्। तथा च मनसैव स्थिरेणार्थान्तरमित्यर्थः ।३।१।१५।

परिहरति—

**ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ।३।१।१६।**

तन्मनः सकरणं सुखादीनि चेतयेत् निष्करणं वा? अन्त्ये बहिरिन्द्रियादीनामप्यपलापापत्तिः। आद्ये तस्यापि ज्ञातुः ज्ञानसाधनोपपत्तेश्चक्षुरादिव्यभिचारेण मनोऽन्तरस्वीकारे संज्ञाभेदमात्रम्। मया चेतन आत्मेत्यभिधीयते त्वया मन इति। अर्थे पुनर्न विवाद इत्यर्थः ।३।१।१६।

ननु रूपादिसाक्षात्काराणामेव कर्तृभिन्नकरणजन्यतानियमः। सुखादिबोधानां तु न तथा। तथा च न करणभिन्नचेतनसिद्धिरतो नियमं दूषयति—

**नियमश्च निरनुमानः ।३।१।१७।**

च पुनरर्थः। [1]विशेषनियमो निःप्रमाणकः सामान्ये प्रमाणपक्षपातादिति भावः। [2]जन्यज्ञानमात्रस्यैवेन्द्रियजन्यतोपपत्तौ जन्यसुखसाक्षात्कारस्यैव तथात्वमिति नियमो निष्प्रामाणिक इत्यर्थः।

---

१. विशेष नियम इत्यारभ्य इति भाव इति यावत् लण्डनमातृकायां नास्ति।

२. जन्यज्ञान इत्यारभ्य इत्यर्थ इति यावत् नेपालमातृकायां नास्ति।

[1]मनो ज्ञाने च ज्ञेयत्वकरणत्व[योर्न वृत्ति]विरोधोऽदृष्टत्वादिति बोध्यम् ।३।१।१७।

## [ [2]आत्मनित्यत्वपरीक्षाप्रकरणम् ]

सम्प्रत्यात्मनोऽनादिनिधनताप्रकरणम् । तत्रात्मा विषयः । पूर्वत्र करणसिद्धेन्द्रियादिभिन्नत्वात् प्रमेयत्वाद्वा आत्मा नित्योऽनित्यो वेति संशयः। प्रयोजनं च निःश्रेयसार्थिनः प्रवृत्तिः । अन्वाचितं च प्रयोजनं स्वर्गार्थिप्रवृत्तिः । स्थायिनं विना तदनभ्युपपत्तेः ।

ननु शरीरदाहे पातकाभावादित्यनेन [ ३।१।४। ] गतार्थतेति चेत् न, अङ्गीकृतपरलोकं प्रति कर्तृभोक्त्रोरेकत्वस्य तत्र तात्पर्यात् । इह तु परलोकस्यैव साध्यत्वात् । आद्यप्रकरणे चानुभवितृस्मर्त्रो-रेकत्वमात्रतात्पर्यात् ।

पूर्वपक्षस्तु आत्मा कादाचित्कोऽभावप्रतियोगी अश्रोत्रलौकिक प्रत्यक्षगुणवत्त्वात् पटवदिति बाधकाच्च मानाभावाच्चेति ।

अत्र सिद्धान्त सूत्रम्—

**पूर्वाभ्यस्तस्मृत्यनुबन्धाज् जातस्य हर्षभयशोकसंप्रतिपत्तेः ।३।१।१८।**

आत्मा अनादिनिधनः जातमात्रस्य शरीरसंबन्धमात्रस्य तस्य पूर्वाभ्यस्तस्मृत्यनुबन्धहर्षभयशोकेभ्यस्तत्र प्रमाणतया सम्प्रतिपत्ते-रिति । पर्यन्तं ? हर्षभयशोकादि । तत्त्वं तु स्मृतिसाध्यं, सा च पूर्वा-

---

१. इतः बोध्यमिति यावत् नेपालमातृकायां नास्ति ।

२. अत्र मातृकाद्वये विकीर्णतास्ति पाठे । अत एवौभौ पाठौ दीयेते ।

नुभवात् साध्या, स च लिङ्गव्याप्त्यादिस्मृतिसाध्य इति । पूर्वजन्मानुभवसंस्कारेण तज्जन्मन्यपीत्यनादिनिधन आत्मेति सूत्रार्थः ।

यद्यपि सूत्रात् साक्षादनादित्वं प्रतीयते तथाप्यनादिभावत्वेनानन्तत्वमपि । तस्याप्युभयत्रैव तात्पर्यम् । नित्य आत्मा अमूर्तत्वात् व्योमवदिति । अनित्यत्वानुमाने च साधनावच्छिन्नसाध्यव्यापकस्पर्शवत्त्वमुपाधिः ।

कार्यकारणभावमूलकानादित्वसाधकेन ······ इष्यमाणतमविषयप्रार्थनायां तत्प्राप्तौ सुखानुभवो हर्षः । अनिष्टसाधनोपनिपाते तज्जिहासोर्हानाशक्यताज्ञानं भयम् । इष्टवियोगे तत्प्राप्त्यशक्यताज्ञानं शोकः[1] ।३।१।१८।

अथात्मनोऽनादिनिधनताप्रकरणम् । तत्रात्मा विषयः, नित्योऽनित्यो वेति संशयः । तद्बीजं तु देहेन्द्रियादिभिन्नत्वादिः समानो धर्मः । स्थिरात्मसिद्धिप्रयोजनं चापवर्गार्थिप्रवृत्तिरन्वाचयसिद्धा च स्वर्गार्थिप्रवृत्तिश्च परलोकभागितामनुसन्धायात्मनस्तदभावात् । न च शरीरदाहे पातकाभावादित्यनेन [ ३।१।४। ] गतार्थता ? तत्रानुभवितृस्मर्त्रोरेकत्वे तात्पर्यात् । इहैव लोकस्तत्र परलोकस्तयोरेकत्वे तात्पर्यविशेषात् । पूर्वपक्ष आत्मनो नित्यत्वे साधकाभावो बाधकं चात्मप्रागभावप्रध्वंसयोः प्रतियोगी प्रत्यक्षद्रव्यत्वादित्याक्षिप्तपूर्वपक्षप्रतिक्षेपाय सूत्रम्—

**पूर्वाभ्यस्तस्मृत्यनुबन्धाज् जातस्य हर्षभयशोकसंप्रतिपत्तेः ।३।१।१८।**

जातमात्रस्य तज्जन्मानुभूतार्थज्ञानाद् हर्षशोकादिकं स्मितरोदन

1. इण्डिया औफिस लाइब्रेरी लण्डनमातृकायाः पाठः ।

रोमाञ्चाद्यनुमितं दृश्यते । तत्राद्यजन्मान्तरानुभूतहर्षादिहेतुभूतानुभवप्रभवस्मृतिनिबन्धनमनुमानम् । एवं पूर्वपूर्वजन्मादावपीत्यनादित्वेनानादिभावत्वेनाविनाशित्वेनात्मनः सिद्धेः न साधकाभावः। बाधकानुमाने च स्पर्शवत्त्वमुपाधिरप्रयोजकत्वाद्याभासताप्रयोजकमित्यर्थः ।

अर्थनीयप्राप्तिनिबन्धनसुखानुभवो हर्षः । अनिष्टसाधनोपनिपाते तज्जिहासापरिहार्यताज्ञानं भयम् । वियुक्तेषु प्राप्त्यशक्यताज्ञानं शोकः[1] ।३।१।१८।

अत्र शङ्कते—

## पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः ।३।१।१९।

नित्यत्वे साध्ये हर्षादिकं न हेतुरसाधारणत्वात् । न च कार्यत्वात् स्मृतिजन्यत्वम्, पद्मादिप्रबोधे व्यभिचारादिति भावः ।३।१।१९।

दृष्टान्तमात्रस्यासाधकत्वात् परिहरति—

## नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ।३।१।२०।

पञ्चात्मकाः पद्मादयस्तेषामपि विकारा उष्णादिनिमित्ता दृष्टाः । पद्मादिविकारे हि तपनातपादिसम्बन्धतदभावौ हेतू इति साध्यविकलो दृष्टान्तः। न चासाधारण्यम्, यथोक्तक्रमेणानुमानादित्यर्थः। पञ्चात्मकत्वं तु पञ्चभूतानुग्रहजत्वं न तु पञ्चभूतप्रकृतिकत्वमित्यवधेयम् ।३।१।२०।

---

1. नेपालमातृकायाः पाठः ।

लिङ्गान्तरमाह—

**प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ।३।१।२१।**

जातमात्रस्य स्तन्ये प्रवृत्तिस्तदभिलाषजन्या, स चाहाराभ्यासजन्यः, स च पूर्वानुभूतेष्टसाधनतास्मृतिजन्य इत्यनादित्वेऽनादिभावत्वेनाविनाशित्वे सिद्धमात्मनो नित्यत्वमित्यर्थः ।३।१।२१।

प्रवृत्तिरभिलाषं व्यभिचरतीत्याक्षिपति—

**अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् ।३।१।२२।**

अभिलाषं विनैव यथा अयोऽयस्कान्ते नियमेन प्रवर्तते तथा जातस्य स्तनोपसर्पणमपि स्यादित्यर्थः ।३।१।२२।

समाधत्ते—

**नान्यत्र प्रवृत्त्यभावात् ।३।१।२३।**

अयःप्रवृत्तेर्निर्हेतुकत्वं न, अन्यत्र प्रवृत्त्यभावात् । तथा च तत्रापि लौहमाणेयमरीचिसंयोग एव कारणमिति न तद् दृष्टान्तेनाकस्मिकतासिद्धिः ।

वस्तुतस्तु यत्नरूपा प्रवृत्तिरभिलाषसाधनं, सा च नायसीति न व्यभिचारशङ्कापीत्यर्थः ।३।१।२३।

शिष्यधीवैशद्याय प्रकारान्तरेणात्मनोऽनादिनिधनतां साधयति—

**वीतरागजन्मादर्शनात् ।३।१।२४।**

जायमानो न वीतेच्छो दृश्यते प्रवृत्त्या तदनुमानात् । इच्छा चेष्टोपायताज्ञानादिति पूर्ववदनादिनिधनतासिद्धिरित्यर्थः ।

पूर्वं स्तन्ये रागो हेतुरुक्तः सम्प्रति रागमात्रमित्यपौनरुक्त्यम् ।३।१।२४।

अनुद्भूवा देशयति—

**सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ।३।१।२५।**

यथा सगुणं घटादिकमुत्पद्यते एवं रागविशिष्ट आत्मैवोत्पद्यता-मित्यप्रयोजकं त्वत्साधनमित्यर्थः ।३।१।२५।

परिहरति—

**न सङ्कल्पनिमित्तत्वाद् रागादीनाम् ।३।१।२६।**

उक्तमेव स्मरणादिकं विना नेच्छाद्युत्पत्तिरिति नाप्रयोजको मद्धेतुः । अदृष्टादेव रागादीति यदि तथापि सिद्धं तन्निर्वर्तकं पूर्वं शरीरमित्यनादिनिधनत्वमप्रत्यूहमित्यर्थः ।३।१।२६।

## [ शरीरपरीक्षाप्रकरणम् ]

अथोद्देशक्रमसङ्गत्या अनादिश्चेतनस्य शरीरसंबन्ध इत्यनादि-निधनताप्रकरणेन प्रसङ्गसङ्गत्या च शरीरपरीक्षाप्रकरणम् । ननु शरीरस्य नानाप्रकृतिकत्वेऽपि न तल्लक्षणक्षतिरिति, नैष विचारः परीक्षेति चेत् न, विजातीयारम्भसम्भवे हि देहस्येन्द्रियैरप्यारम्भ इन्द्रियसंयोगगर्भतल्लक्षणक्षतेरेव । न चैवमपि घ्राणेनारम्भतादवस्थ्यम् इन्द्रियत्वेन तस्यापि देहानारम्भकत्वानुमानात् । न च विजातीय-त्वमत्रोपाधिः जातिविरोधवत् गुणविरोधस्याप्यारम्भाविरोधित्वात् तुल्ययोगक्षेमत्वाच्च ।

न च बहिरिन्द्रियैस्तदारम्भेऽपि चित्ताश्रयतया न लक्षणक्षतिरिति वाच्यम् बाधकमन्तरेणेन्द्रियाश्रयत्वपरत्वात् ।

तदिह शरीरं विषयः । तस्यैकद्वित्रिचतुःपञ्चप्रकृतिकत्वविप्रतिपत्तेः संशयः। प्रयोजनं तु देहस्य पार्थिवत्वादिभिरितरात्मभेदसिद्धिः।

तत्र पूर्वपक्षः, गन्धवत् क्लेदाद्युपलब्धेर्मानुषशरीरं नानाप्रकृतिकम्। न चान्येषां शरीरे सत्येव विलये गन्धस्य चानाशमनपायात् पार्थिवं तथाभूतगुरुत्वशैत्यशालिभ्यां हेमहिमकराभ्यां व्यभिचारात्। अथ सगन्धनिर्गन्धत्वापत्त्या नैकं द्रव्यं सगन्धनिर्गन्धाभ्यामिति, न सगन्धारब्धत्वेन सगन्धत्वात् न तु तन्निर्गन्धमपि, कार्याभावे कारणाभावस्य तन्त्रत्वात् । प्रकृते च तदभावात्। न चैको गन्धो नारम्भको बाधकाभावादिति ।

राद्धान्तस्तु एकेनैव गन्धेन गन्धारम्भे गन्धवद्भ्यामारब्धे गन्धद्वयापत्तिः। न चैवमेव सौसादृश्यात् तद्भेदाग्रह इति वाच्यम्। एकेनैव गन्धेन तत्प्रतीत्युपपत्तौ गन्धद्वयकल्पने मानाभावात्। न चैकैकस्यारम्भकत्वमेव मानम्, अन्योन्याश्रयात्। गन्धद्वये हि सत्येकैकस्यारम्भकत्वमेकैकस्य चारम्भकत्वे सति गन्धद्वयसिद्धिरिति। न च सर्वत्रैकेनैव गन्धेनारम्भो, गन्धद्वयारम्भस्थले विनिगमनाविरहादुभयोरपि गन्धयोर्गन्धारम्भकत्वात्। अथ गन्धाभ्यामेव गन्धवानारभ्यतेऽतो न गन्धद्वयापत्तिरिति चेत् न तर्ह्येकस्माद् गन्धाद् गन्धः। न च गन्धवद्भ्यां निर्गन्धेन चारम्भाद् गन्धवत्त्वं नाना प्रकृतिकत्वं च स्यादिति वाच्यम्। स्थूलद्रव्ये तथासम्भवेऽपि परमाणूनामनारम्भकत्वेन तत्र तदभवात्। द्व्यणुकवत्तैरपि त्रिभिरारम्भोऽस्त्विति चेन्न तदारब्धस्य महत्त्वापत्तेः। अस्तु तत्रापि महत्त्वं किन्तु द्व्यणुकत्रयारब्धापेक्षया तदपकृष्टमिति चेत् न, बहुत्वसंख्यामात्रारब्धत्वाविशेषेणापकर्षासम्भवात्। आद्यमहत्त्वस्यानियतहेतुकत्वापत्तेश्च। तस्मान्निर्गन्धत्वाद्यापत्त्या विरुद्धगुणैर्जातिसङ्करापत्त्या च विरुद्धजातीयैरारम्भासंभ-

वादेकप्रकृतिकमेव शरीरमिति व्यवस्थिते किमकेप्रकृतिकमित्यपेक्षायां स्फुटत्वान्मानुषादिशरीरमधिकृत्य तावत् सिद्धान्तयाह—

पार्थिवं गुणान्तरोपलब्धेः ।३।१।२७।

अनन्यथासिद्धगन्धोपलब्धिविशेष्यत्वान्मानुषपश्वादिशरीरं पार्थिवमित्यर्थः । हेमादौ तु गुरुत्वादिप्रतिबन्दि[?]रन्यथासिद्धा, देहे क्लेदादिप्रत्ययोऽपि संसर्गिजलाद्युपाधिको विरुद्धारम्भप्रतिषेधात् । इन्द्रियसमवायिकारणवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेन जलत्वादीनामपि पृथिवीत्ववच्छरीरसमवायिवृत्तित्वानुमानाच्चतुर्विधं शरीरम् । न च प्रत्यक्षबाधो वरुणलोकादेस्तत्त्वेनायोग्यतया तदभावादिति भावः ।३।१।२७।

अन्यथासिद्धत्वज्ञानपूर्वकाणि पूर्वपक्षसूत्राणि—

पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ।३।१।२८।

मानुषशरीरं पार्थिवाप्यं, पार्थिवतैजसमाप्यतैजसं पार्थिवाप्यतैजसं तद्गुणोपलब्धेः । गन्धक्लेदगन्धपाकक्लेदपाकगन्धक्लेदपाकोपलब्धेरित्यर्थः ।३।१।२८।

अस्मिन् हेतौ सत्येव—

निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ।३।१।२९।

मानुषशरीरं निःश्वासादितो वायुप्रकृतिकमपीत्यर्थः ।३।१।२९।

गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ।३।१।३०।

दानं प्रत्येकान्वयि । क्लेदो द्रवत्वं पाकोऽण्वादीनां रूपपरावृत्तिशक्तिः, व्यूहो नखादिदन्तयावकादीनां गोलकं प्रतिनयनम्, अव-

काशो रन्ध्रम् । तेषां सत्त्वानुभवः, अवकाशस्यैव दानमिति वा । तस्मात् पाञ्चभौतिकमिति *साङ्ख्यादयः* ।३।१।३०।

क्लेदादीनां तु संयोगिद्रव्यैरेव निर्वाहान्न देहस्य पाञ्चभौतिकत्वादिति समाहितमेवेति तदुपेक्ष्य पार्थिवत्व एव प्रमाणान्तरमाह—

## श्रुतिप्रामाण्याच्च ।३।१।३१।

श्रुतिप्रामाण्यादपि मानुषशरीरस्य पार्थिवत्वम् । श्रुतिस्तु सूर्यं ते [चक्षुः कृणोमि पृथिवीं ते] शरीरमिति । अर्थस्तु सूर्यात् ते चक्षुरुत्पादयामि पृथिव्यास्ते शरीरमिति । शरीरस्य पृथिवीप्रकृतिकत्वे श्रुतिर्मानम् ।

न च पाञ्चभौतिकत्वेऽपि श्रुतिरुपपद्यत एवेति न पृथिवीमात्रप्रकृतिकतामाह । विरोधेन पाञ्चभौतिकत्वबाधात् । न चाहष्टे लोहितं स्पृशामीति श्रुत्यन्तरं शरीरसमवायिकारणं मांससमवायिकरणस्य शोणितस्य जलप्रकृतिकतामाहेति केवलपृथिवीप्रकृतिकत्वे श्रुति विरोध इति वाच्यम् । शोणितस्यान्त्यावयवित्वेन मांसानारम्भकत्वात् । तत्परमाणूनां च मांसारम्भणे जलस्यासहकारित्वात् । दुग्धपरमाणूनामिव दध्नि, अस्थ्नां च संयोगिद्रव्यत्वात् शरीरस्य त्वक् सीमत्वात् ।३।१।३१।

## [ इन्द्रियपरीक्षाप्रकरणम् ]

उद्देशक्रमसङ्गत्या इन्द्रियपरीक्षाप्रकरणम् । तत्रेन्द्रियाणि विषयः । अधिष्ठानान्यभूतात्मकानि न वेति संशयः । न वा पक्षेऽपि अधिष्ठानात्मकान्येव ततोऽन्यान्यभूतानि वेत्याद्यार्थः संशयः । तत्राधिष्ठानान्यभूतमिन्द्रियमिति *नैयायिकाः* । अधिष्ठानमिन्द्रियमिति *बौद्धाः* । अधिष्ठानान्यदभूतमाहङ्कारिकं बुद्धीन्द्रियमिति *साङ्ख्याः* । प्रयोजनं तु अधिष्ठानान्यभूतस्य करणत्वसिद्धौ शरीरसंयोगीत्यादीन्द्रियलक्षणसिद्धिः ।

तत्र संशयमूलविप्रतिपत्तिहेतूपदर्शनाय सूत्रम्—

**कृष्णसारे सत्युपलम्भात् व्यतिरिच्य चोपलम्भात् संशयः ।३।१।३२।**

कृष्णसारे गोलके सत्युपलम्भादन्वयव्यतिरेकिभ्यां गोलकमेवेन्द्रियमिति *बौद्धाः* । व्यतिरिच्य कृष्णसारात् प्राप्तीभूय स्थितस्य वस्तुन उपलम्भात् उत्कटसत्त्वाहङ्कारप्रभवममूर्तं बुद्धीन्द्रियमिति *साङ्ख्याः* । एवं स्फटिकाद्यन्तरितानामपि ग्रहो घटते । भूतत्वे तु स न स्यात् । भूतस्य भूतविष्टभ्यत्वादिच्छादिष्वप्रतिपत्तेः संशय इत्यर्थः ।३।१।३२।

साङ्ख्यसूत्रम्—

**महदणुग्रहणात् ।३।१।३३।**

अण्विति दृष्टान्तः। तेनाणुग्रहणवत् महत्तरत्वाधिकपरिमाणस्यापि ग्रहणान्न गोलकं न वा तदतिरिक्तं भूतं चक्षुः किन्त्वाहङ्कारिकं वैभवाच्च पृथुव्यवहितादिग्राहि। न च गोलकमपि तथोत्पन्नं पृथुव्यवहितादिग्राहि स्यात् । क्षणभङ्गस्य भङ्गादित्यर्थः ।३।१।३३।

एवं *साङ्ख्यमुखेन बौद्धे* निरस्ते सांख्यनिरासाय सिद्धान्त सूत्रम्—

**रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् ।३।१।३४।**

नायनेन रश्मिना अर्थस्य यः सन्निकर्ष विशेषश्चतुरात्मकस्तस्मात् तद्ग्रहणं गोलकाधिकपरिमाणद्रव्यग्रहणम् । तथा हीन्द्रियार्थयोस्तदवयवयोरिन्द्रियावयवार्थयोरर्थावयवेन्द्रिययोश्चतुर्विधः संयोगः । किञ्चाहङ्कारिकत्वे वैभवात् कुड्यान्तरितान्यपि गृह्णीयात् । न च विवादपदं चक्षुः भूताजन्यमिन्द्रियत्वात् श्रवणवदिति अनवयवत्वे-

नोपहितत्वादिति आवरणानावरणयोरग्रहग्रहौ गोलकातिरिक्ते चक्षुषि न लिङ्गं प्रत्यक्षबाधादिति ।३।१।३४।

शङ्कते—

तदनुपलब्धेरहेतुः ।३।१।३५।

उक्तलिङ्गमतिरिक्ते चक्षुष्यहेतुस्तदनुपलब्धेः अतिरिक्तचक्षुषोऽनुपलब्धेः प्रत्यक्षबाधादित्यर्थः ।३।१।३५।

योग्यताव्यतिरेकेण परिहरति—

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ।३।१।३६।

अनुमीयमानस्य नित्यानुमेयस्य प्रत्यक्षतोऽनुपलब्धिर्योग्यानुपलब्धिर्नाभावहेतुर्नाभावावधारणहेतुरित्यर्थः ।

महत्त्वमुद्भूतरूपवत्त्वं च द्रव्यचाक्षुषत्वे तन्त्रम् । तच्च रूपानुद्भवात् चक्षुषि नास्तीति भावः ।३।१।३६।

अत्र *कणाद* सम्मति प्रदर्शनाय तत्सूत्रम्—महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः [वै० सू० ।४।१।६।]

सुगमोऽर्थः ।

महतोऽनेकद्रव्यवत रूपवतश्चक्षुः कुतो न योग्यमित्यत आह—

द्रव्यगुणधर्मभेदाच्चोपलब्ध्यनियमः ।३।१।३७।

द्रव्यधर्मो महत्त्वादिः, गुणधर्म उद्भूतत्वादिस्तद्भेदात् तन्नानात्वात् तद्वैलक्षण्यात् उपलब्ध्यनियमः क्वाचित्कत्वम् । उद्भूतत्वं सौरालोकादौ रूपस्पर्शयोः प्रभायां रूपे उष्माणां स्पर्शे चक्षुषि नैकत्रापीत्यर्थः ।३।१।३७।

तैजसत्वाविशेषे कथमेवं वैचित्र्यमित्यत आह—

**कर्मकारितश्चेन्द्रियाणां व्यूहः [पुरुषार्थतन्त्रः] ।३।१।३८।**

भोजकादृष्टविशेषजनितमिदं वैचित्र्यमित्यर्थः ।३।१।३८।

महतो रूपवतोऽनुपलब्धौ दृष्टान्तमाह—

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ।३।१।३९।**

सुगमोऽर्थः । चक्षुष्यनुद्भवादुल्काभिभवादनुपलम्भ इति विशेषः ।३।१।३९।

दिवाभिभवादनुपलभ्यं लोष्ठादावप्येवं तेजः कल्प्यतामित्यत आह—

**न रात्रावप्यनुपलब्धेः ।३।१।४०।**

लोष्ठं न दिवाभिभाव्य तेजोवद् रात्रावपि तत्त्वतयानुपलभ्यमानत्वादित्यर्थः ।३।१।४०।

नायनो रश्मिरनुद्भवात् नोपलभ्यत इत्यत्र मानमाह—

**बाह्यप्रकाशानुग्रहात् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ।३।१।४१।**

नायनस्य रश्मेरनभिव्यक्तितो रूपानुद्भवादनुपलब्धिरचाक्षुषता, कुतः बाह्यप्रकाशानुग्रहात् विषयोपलब्धेः । ल्यब्लोपे पञ्चमी । बाह्यप्रकाशानुग्रहं प्राप्य विषयोपलम्भकत्वात् । तथा च रूपि चक्षुः उद्भूतरूपरहितं बाह्यालोकसाहित्येन चाक्षुषजनकेन्द्रियत्वात् मनोवदित्यर्थः ।३।१।४१।

अभिभवादेवाग्रहणमस्त्विति मूढदेशनायामाह—

**अभिव्यक्तौ चाभिभवात् ।३।१।४२।**

अभिव्यक्तौ पुनरभिभवादग्रहणं न त्वत्रानभिव्यक्तत्वादित्यर्थः । ३।१।४२।

नन्वनुमीयमानस्येत्यादि यदुक्तं किं तदनुमानमतोऽनुमाने वक्तव्ये दृष्टान्ताय सूत्रम्—

**नक्तञ्चरनयनरश्मिदर्शनात् ।३।१।४३।**

नक्तं रात्रावन्धकारे चरन्ति पश्यन्ति, चरतेर्गत्यर्थत्वेन ज्ञानार्थत्वात् नक्तंचरा बिडालादयस्तेषां गोलके रश्मिदर्शनात् । गोलकत्वेन मानुषगोलकानामपि विषयगोलकस्पर्शिरश्मिवत्त्वानुमानमित्यर्थः । ३।१।४३।

चक्षुर्न प्राप्यकारि सान्तरग्रहणादित्याक्षिपति—

**अप्राप्यग्रहणं काचाभ्रपटलस्फटिकाद्यन्तरितोपलब्धेः । ३।१।४४।**

सुगमोऽर्थः ।३।१।४४।

अत्र प्राप्तिं मनसि कृत्य समाधत्ते—

**कुड्याद्यन्तरितानुपलब्धेरहेतुः ।३।१।४५।**

काचाद्यन्तरिताग्रहणं नाप्राप्यकारित्वे हेतुः । कुड्याद्यन्तरितानुपलब्धेः । अप्राप्यकारित्वे एतदपि न स्यादित्यर्थः ।३।१।४५।

काचादिस्थले सन्निकर्षमुपपादयति—

**अप्रतिषेधात् सन्निकर्षोपपत्तिः ।३।१।४६।**

स्वच्छं काचादि चक्षुर्गतिं न प्रतिबध्नातीत्यत उपपन्नः सन्निकर्ष इत्यर्थः ।३।१।४६।

ननु भौतिकत्वाविशेषात् कथं तदप्रतिघातकमत आह—

**आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ।३।१।४७।**

यथा आदित्यरश्मिर्घटादिना न प्रतिबध्यते तथा नायनोऽपि स्फटिकादिना । तस्मान्नयनाप्रतिबन्धे दाह्यं हेतुरित्यर्थः ।३।१।४७।

अनियमप्रसङ्गादाक्षिपति—

**नेतरेतरधर्मप्रसङ्गात् ।३।१।४८।**

दाह्यं न नियामकमप्रयोजकत्वात् । अन्यथा अविघातः काचादिधर्मः कुड्यादौ, कुड्यादिधर्मो विघातः काचादौ स्यान्मूर्तत्वाविशेषादित्यर्थः ।३।१।४८।

समाधत्ते—

**आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ।३।१।४९।**

यथादर्शोदकयोः प्रसादस्वाभाव्यात् स्वच्छरूपत्वात् स्वमुखस्वरूपोपलब्धिस्तथा स्फटिकान्तरितोपलब्धिरपि मूर्तत्वाविशेषे स्यादित्यर्थः ।३।१।४९।

यदि काचादि न प्रतिबध्नाति कुड्यादिरपि न प्रतिभंत्सीत तथात्वे वा काचादिरपि प्रतिबध्नात्वित्यत आह—

**दृष्टानुमितानां हि नियोगपर्यनुयोगानुपपत्तेः ।३।१।५०।**

प्रमाणसिद्धानां हि त्वमेवं भवेति नियोगः। कथमेवं भूतो-ऽसीति पर्यनुयोगश्चानुपपन्नोऽतिप्रसङ्गात् । तस्माद् दाह्यमेव नियामकमतो न वैपरीत्यं न वातिप्रसङ्ग इत्यर्थः।

एवं चक्षुर्दृष्टान्तेन त्वगादीनामप्यधिष्ठानान्यभूतत्वसाधनात् सिद्धं शरीरसंयोगघटितमिन्द्रियलक्षणमिति ।३।१।५०।

## [इन्द्रियनानात्वप्रकरणम्]

सर्वप्रकरणसाधितयोरिन्द्रियभूतत्वप्राप्यकारित्वयोरिन्द्रियैकत्वेऽनुपपत्तिः । इन्द्रियाणां ह्येकत्वे रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादित्यादौ भौतिकत्वसाधनस्य स्वरूपासिद्धेस्तदसिद्धौ प्राप्यकारित्वस्याप्यसिद्धेः । तस्य भूतधर्मत्वादत उपोद्घातादिन्द्रियनानात्वप्रकरणम् । प्रयोजनं तु नानेन्द्रियसिद्धौ तस्य पृथिवीत्वादिना आत्मभेदसिद्धिः।

संशायकधर्मप्रदर्शनाय सूत्रम्—

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः । ३।१।५१।**

स्थानान्यत्वे नानास्थानस्थितत्वे नानात्वात् अवयविनानात्वाच्चावयविन एकस्यैव नानाकपालादिरूपस्थानस्थितत्वं दृष्टम् । तथा च घ्राणादीनि नानास्थानस्थितत्वादवयविवदेकं घटपटादिवदनेकं वेति सन्देहः। तेन चात्र बहिरिन्द्रियत्वं स्वाधिकरणान्योन्याभावसमानाधिकरणं न वेति पर्यवसितः संशयः ।३।१।५१।

पूर्वपक्षसूत्रम्—

**त्वगव्यतिरेकात् ।३।१।५२।**

त्वगेवैकमिन्द्रियम् । कस्मात् अव्यतिरेकात् विवादपदसर्वा-

धिष्ठानव्यापकत्वात् । अतो घ्राणाद्यभिमतेन्द्रियाणि त्वगभिन्नानि इन्द्रियत्वात्। एवं तानि चक्षुराद्यभिन्नानि इन्द्रियत्वात् त्वग्वदिति पञ्चानां त्वक्तादात्म्यमित्यर्थः ।३।१।५२।

परिहरति—

**न युगपदर्थानुपलब्धेः ।३।१।५३।**

सर्वेषां त्वक्तादात्म्यं न युगपदर्थानुपलब्धेः । तुल्यकाल्यं रूपरसाद्यनुपलब्धेः । त्वन्मते तु सा स्यात् सामाग्र्यविशेषात्। न च कारणधर्मान्नियमस्तथापि सर्वविषयैकज्ञानापत्तेः। तथा च त्वगभेदादनुमाने त्वक्तुल्यविषयत्वमुपाधिरित्यर्थः ।

एकत्र शरीरे नैकमिन्द्रियं, बाधकं विना युगपन्नानाविषयसमवधानेऽपि क्रमवृत्तित्वात्, यन्नैवं तन्नैवं यथा चक्षुः। अत्र देहभेदेन सिद्धसाधनवारणायैकत्रेति । न चैकमेकत्वं संख्यावदिति तन्निषेधे साध्ये बाधः । तद्देहेन्द्रियान्योन्याभावव्याप्यं तद्देहेन्द्रियत्वमिति नानेत्वस्य साध्यार्थत्वात्। केशशैलयोर्द्गर्थानां च युगपत् समाधानेऽपि शैलमात्रग्राहिणा चक्षुषा बुभुत्सितार्थाग्राहिणा श्रवसा च विरोधो मा भूदत उक्तं बाधकं विनेति। तत्र विषयोत्कण्ठ्ये बुभुत्से तु बाधिके इन्द्रियभूतत्वसाधिके इति न वीतहेतोरर्थात् तन्नानात्वसिद्धिरिति भावः ।३।१।५३।

इन्द्रियानेकत्वे कार्यभेदं साधयन्नाह—

**इन्द्रियार्थपञ्चत्वात् ।३।१।५४।**

इन्द्रियार्थानामिन्द्रियग्राह्याणां रसादीनां पञ्चत्वात् परस्पर ग्राह्यावृत्तिपञ्चोपाधिमत्त्वात् ।

तदाह गन्धोपलब्धिः रूपाद्युपलब्ध्यजनकसंयोगिकरणसाध्या

बाह्यविशेषगुणोपलब्धित्वात्। अत्र मनोजन्यया सुखोपलब्ध्या द्वीन्द्रिय जन्यया संख्योपलब्ध्या च व्यभिचारवारणाय बाह्यविशेषपदे। इति। एवं व्यावृत्तकरणसिद्धौ, तत्पृथिवी रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जक-द्रव्यत्वात् वायूपनीतसुरभिभागवदिति।

अत्र प्रत्यासत्त्या व्यभिचारवारणाय द्रव्यपदम्। आत्ममनोभ्यां व्यभिचारवारणाय सत्यन्तम्। न च दग्धभूगन्धव्यञ्जकेनोदकेन स्तिमितकस्तूरीव्यञ्जकेनातपेन च व्यभिचारः। जलसंयोगात्पूर्वं द्रव्य-नाशे द्रव्यान्तरे गन्धोत्पत्तौ जलस्य सहकारित्वात्, आतपस्य च जल-मात्रापनोदकत्वात्। अन्यथा तयोर्गन्धवत्त्वापत्तेः। यद् विशेषगुण-व्यञ्जकं यद् बाह्यद्रव्यं तत्तज्जातीयगुणवदिति नियमात्।

एवं रसनमप्याप्यं परकीयरूपाव्यञ्जकत्वे सति पार्थिवरस-व्यञ्जकत्वात् दन्तोदकवत्। अत्र दृष्टान्तासिद्धिवारणाय परकीयेति। आत्मादिव्यभिचारवारणाय रूपेति। जलरसव्यञ्जिकया हरीतक्या व्यभिचारवारणाय पार्थिवेति।

एवं चक्षुस्तैजसं गन्धाद्यव्यञ्जकत्वे सति रूपव्यञ्जकद्रव्यत्वात् प्रभावत्।

एवं त्वक् वायवीया गन्धाद्यव्यञ्जकत्वे सति परकीयस्पर्श-व्यञ्जकद्रव्यत्वात् स्वेदादिस्पर्शव्यञ्जकपवनवत्। अत्र वायूपनीतशीतो-ष्णद्रव्याभ्यां स्पर्शमात्रव्यञ्जकाभ्यां व्यभिचारवारणाय परकीयेति।

श्रोत्रस्य तु नभस्त्वं परिशेषात्। यद्यपि नभस्त्वं न जाति-स्तथापि शब्दाश्रयत्वे तत्तात्पर्यमिति। तानीन्द्रियाण्यपि पञ्चेत्यर्थः। ३।१।५४।

अबुद्ध्वा आक्षिपति—

न तदर्थबहुत्वात्।३।१।५५।

अर्थभेदप्रयुक्तमिन्द्रियपञ्चत्वं न, तदर्थबहुत्वात् इन्द्रियार्थानां शुक्लादिभेदेन नानात्वात् । अन्यथानेकेन्द्रियकल्पनापातादित्यर्थः । ३।१।५५।

समाधत्ते—

**गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः ।३।१।५६।**

अर्थपञ्चत्वप्रयुक्तकरणपञ्चत्वस्याप्रतिषेधः । कुतः, गन्धादीनां गन्धत्वाव्यतिरेकात् । तथा गन्धत्वादिनोपसंगृहीता गन्धादय इन्द्रियव्यवस्थापका न तु सुरभित्वादिनेति नातिप्रसङ्ग इत्यर्थः ।३।१।५६।

शङ्कते—

**विषयत्वाव्यतिरेकादेकत्वम् ।३।१।५७।**

यद्येकसामान्योपग्रहादेकेन्द्रियग्राह्यत्वम् तदा विषयत्वसामान्येन गन्धरसाद्युपग्रहादेकेन्द्रियग्राह्यत्वमिति प्राप्तमेकमिन्द्रियमित्यर्थः । ३।१।५७।

परिहरति—

**न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ।३।१।५८।**

बुद्ध्यात्मकस्य लक्षणस्य पञ्चत्वादिन्द्रियस्यैकत्वं न किन्तु पञ्चत्वम् । अधिष्ठानं गोलकादि तत्पञ्चत्वात् ।

ननु द्वे गोलके द्वे कर्णशष्कुल्यौ तत्कथं पञ्चाधिष्ठानानि, गोलकादित्वेन विवक्षणात् ।

गतिः प्रकारस्तत्पञ्चत्वात् । नयनं हि निःसृत्य गृह्णाति । त्वक् देहमात्रावच्छेदेन, रसनं मुखावच्छेदेन, घ्राणं नासावच्छेदेन, श्रोत्रं शष्कुल्यवच्छेदेन ।

आकृतिः परिमाणं तत्पञ्चत्वात् श्रोत्रं विभु, नेत्रं क्रोशादिव्यापि, त्वक् देहमात्रव्यापिनी, रसनं पञ्चषाङ्गुलव्यापि, घ्राणं द्वित्राङ्गुलव्यापि। जातिः स्वाभाविको धर्मः पृथिवीत्वादिस्तत्पञ्चत्वात्।

अनुमितिश्चैवं गन्धोपलब्धी रूपाद्युपलब्ध्यजनकसंयोगिकरणसाध्या बाह्यविशेषगुणोपलब्धित्वात्। अत्र मनोजन्यया सुखोपलब्ध्या द्वीन्द्रियजन्यया संख्योपलब्ध्या च व्यभिचारवारणाय बाह्यविशेषपदे इति। एवं व्यावृत्तकरणसिद्धौ तत् पृथिवी रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वात् वायूपनीतसुरभिभागवत्। अत्र प्रत्यासत्त्या व्यभिचारवारणाय द्रव्यपदमात्ममनोभ्यां च व्यभिचारवारणाय सत्यन्तम्। न च दग्धभूगन्धव्यञ्जकेनोदकेन स्तिमितकस्तूरीगन्धव्यञ्जकेनातपेन व्यभिचारः जलसंयोगात् पूर्वं द्रव्यनाशे द्रव्यान्तरे गन्धोत्पत्तौ जलस्य सहकारित्वात्। आतपस्य च जलमात्रापनोदकत्वात्। अन्यथा तयोर्गन्धवत्त्वापत्तेः। यद् विशेषगुणव्यञ्जकं यद्बाह्यद्रव्यं तत्तज्जातीयगुणवदिति नियमात्।

एवं रसनमप्याप्यं परकीयरूपाद्यव्यञ्जकत्वे सति पार्थिवरसव्यञ्जकद्रव्यत्वात् दन्तोदकवत्। अत्र दृष्टान्तासिद्धिवारणाय परकीयेति। जलरसव्यञ्जिकया हरीतक्या व्यभिचारवारणाय पार्थिवेति।

एवं चक्षुस्तैजसं गन्धाद्यव्यञ्जकत्वे सति रूपव्यञ्जकद्रव्यत्वात प्रभावत्। एवं त्वक् वायवीया गन्धाद्यव्यञ्जकत्वे सति परकीयस्पर्श व्यञ्जकद्रव्यत्वात् स्वेदादिस्पर्शव्यञ्जकपवनवत्। अत्र वायूपनीत शीतोष्णद्रव्याभ्यां स्पर्शमात्रव्यञ्जकाभ्यां व्यभिचारवारणाय परकीयेति। श्रोत्रस्य तु नभस्त्वं परिशेषात्। यद्यपि नभस्त्वं न जातिस्तथापि शब्दाश्रयत्वे तात्पर्यमिति।

न चैतत्प्रकरणेनैव भौतिकत्वस्यापि सिद्धेः पूर्वप्रकरणं

गतार्थम्। तत्र स्वातन्त्र्येण तत्साधनादत्र तु नानात्वसाधनतैरश्चीन्येनेति भेदात्।३।१।५८।

## [ अर्थपरीक्षाप्रकरणम् ]

अथोद्देशक्रमसङ्गत्यार्थपरीक्षाप्रकरणम्। यद्यपि तदर्था इत्येव लक्षणं शेषं विभागस्तथापि परित ईक्षणं परीक्षेति विभागपरीक्षापि लक्षणपरीक्षैव। तत्र गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्था इति वाक्ये पृथिव्यादीत्यत्र गन्धादिभिः सह प्रत्येकमन्वयो न वा? आद्ये रसादीनां पृथिव्याद्यगुणता, अन्त्ये गन्धादेरप्यबादिगुणता। कस्यचिदेकः कस्यचिद्द्वयमिति वा। तस्य वाक्यस्यैभिस्त्रिभिः प्रकारैरन्वयप्रतिभासदर्शनात्।

अत्र वाक्यत्वात् केन प्रकारेणान्वयप्रदर्शकत्वमिति संशयः। प्रयोजनं तु निःस्पर्शत्वेनात्मनः पृथिव्यादिभेदसिद्धिः। सा च नियोगसमुच्चययोर्न स्यात्। तथा हि नियोगे पृथिव्यादेरस्पर्शत्वेन पृथिव्यादावेव निःस्पर्शत्वव्यभिचारः। समुच्चये तु वायोश्चातद्गुण्यात् त्वचैव सर्वग्रहे तदेकशेषतयैव प्रतिसन्धानासिद्धौ नात्मसिद्धिरिति न तद्गतस्य भूतभेदवार्तापि।

न चैकैकगुणविरहेणैकैकभेदान्नियोगेऽप्यात्मनः पृथिव्यादिभेदसिद्धिर्निःप्रत्यूहैवेति वाच्यम्। तथापि निःस्पर्शत्वेन तत् साधनस्य नियोगेऽसंभवात्। न चानेनैव सिद्धौ किन्तेन, उपायस्योपायान्तरादूषकत्वात्।

तत्राभिमतपक्षप्रदर्शनाय सिद्धान्तसूत्रे—

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः। ३।१।५९।**

**अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः।३।१।६०।**

एषां मध्ये स्पर्शपर्यन्ताः गन्धरसरूपस्पर्शाश्चत्वारः पृथिव्याः गुणाः। अप्तेजोवायूनां पूर्वं पूर्वमपोह्य त्यक्त्वा स्पर्शपर्यन्ता गुणाः। तथा च जले गन्धस्यैव, तेजसि गन्धरसयोः, वायुषु गन्धरूपरसानामपोहः। गन्धादीनां मध्ये यदुत्तरः परः सर्वशेषोपस्थितः शब्दः स आकाशस्य गुण इत्यर्थः ।३।१।५९-६०।

देशयति—

**न सर्वगुणानुपलब्धेः।३।१।६१।**

विकल्पपक्षो न, कुतः सर्वगुणानुपलब्धेः। घ्राणेन चतुर्णां गुणानामनुपलब्धेः। यदि रसादि पृथिव्यादिवृत्ति स्यात्तदा घ्राणादिना गृह्येत। तस्य प्रकृतिवृत्तियोग्याशेषगुणग्राहकत्वनियमाद् बाध इत्यर्थः ।३।१।६१।

कथं तर्हि गुणविनियोग इति सिद्धान्तजिज्ञासायामाह—

**एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ।३।१।६२।**

उत्तरोत्तराणामबादीनामेकैकश्येन एकैकशः उत्तरोत्तरगुणसद्भावात् रसादिसत्वात् तदनुपलब्धिः। घ्राणेन रसादीनां रसनेन रूपस्पर्शयोश्चक्षुषः स्पर्शस्यानुपलब्धिर्घटते। तथा च स्वप्रकृत्यगुणत्वात् न ते गृह्यन्ते तैरित्यर्थः ।३।१।६२।

कथं तर्हि पृथिव्यादौ रसादिग्रहः, जलादिसंसर्गादिति यदि, जलादावपि गन्धादिप्रसङ्ग इत्यत आह—

**विष्टं ह्यपरं परेण।३।१।६३।**

अपरं पृथिव्यादि परेणोत्तरेण जलादिना विष्टं व्याप्तं यतोऽतो व्यापकगुणा व्याप्ये भान्ति न तु वैपरीत्यमित्यर्थः ।३।१।६३।

सिद्धान्तसूत्रम्—

न पार्थिवाप्ययोः प्रत्यक्षत्वात् ।३।१।६४।

नेति त्रिसूत्रीं व्याचष्टे । पार्थिवजलीयद्रव्ययोश्चाक्षुषत्वात् रूपाभावे तन्न स्यात् । न च व्यापकतेजोरूपात् चाक्षुषता स्वीयरूपे बाधकाभावात् । नियोगार्थकागमस्य प्रत्यक्षबाधेन भाक्तत्वात् । नीलादेरतेजोरूपत्वाच्च ।

यद्वा पार्थिवाप्ययोः षड्विधरसयोरूपयोर्वा प्रत्यक्षत्वादित्यर्थः । पार्थिवाप्यतेजसानां स्पर्शानां प्रत्यक्षत्वान्न नियोगः । समुच्चयोऽपि न प्रत्यक्षबाधादिति भावः ।३।१।६४।

ननु पृथिवीत्वाविशेषात् घ्राणेन गन्धवद्रसादीनामपि ग्रहप्रसङ्गे किं नियामकमिति । तदाह—

पूर्वपूर्वगुणोत्कर्षात् तत्तत्प्रधानम् ।३।१।६५।

पूर्वं पूर्वं घ्राणादि गुणोत्कर्षात् गन्धाद्युत्कर्षात् उत्तररसनाद्यवृत्तित्वे सति पूर्वघ्राणादिवृत्तित्वात् । तत्तत्प्रधानं तेन तेन गुणेन प्रधानं यतोऽतो न सर्वोपलब्धिः । तथा च स्वासाधारणजातीयोद्भूतगुणारब्धप्रवृत्तिकाणि बहिरिन्द्रियाणीति नातिप्रसङ्ग इत्यर्थः । ३।१।६५।

ननु गन्धाभिव्यञ्जकत्वाविशेषे कुतो नान्यत्तज्जातीयं घ्राणात्मकमत आह—

**तदव्यवस्थानं तु भूयस्त्वात् ।३।१।६६।**

भूयस्त्वं ग्राह्यजातीयप्रकर्षः । स चादृष्टविशेषात् । तत एव सर्वं घ्राणत्वेन न परिणतं किन्तु किञ्चिदेवेत्यर्थः ।३।१।६६।

नन्वेवमपि निर्गन्धं घ्राणं कथं पार्थिवमत आह—

**सगुणानामिन्द्रियभावात् ।३।१।६७।**

स्वगुणवतामेवेन्द्रियभावान्न निर्गन्धता । गन्धाग्रहस्तु तदनुद्भवात् । स्वगुणाग्राहकत्वाच्चेन्द्रियाणामित्यर्थः ।३।१।६७।

न तर्हि श्रवसा शब्दग्रहः स्यादित्याक्षिपति—

**न शब्दगुणोपलब्धेः ।३।१।६८।**

इन्द्रियत्वं स्वगुणाग्राहकत्वे न हेतुः, श्रवसि व्यभिचारादित्यर्थः ।३।१।६८।

समाधत्ते—

**तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ।३।१।६९।**

तदुपलब्धिः शब्दोपलब्धिरितरद्रव्यवैधर्म्यमाकाशस्य, इतरगुणवैधर्म्यं शब्दस्य तस्मात् । तथा हि न श्रोत्रस्य गुणमन्तर्भाव्य करणत्वम्, किन्तु शब्दाश्रयत्वेनाकाशमनुमीयते । परिशेषाच्च शब्दसाक्षात्कारकरणतया तदिन्द्रियमतस्तद्ग्राहकत्वेनेन्द्रियीभवत् न तु तदग्राहकं भवितुमर्हति उपजीव्यविरोधात् । घ्राणादि तु न स्वगुणग्राहकतया

सिद्धमिति, तत्र तद्ग्राहकतैव। तथा च बाधकं विनेन्द्रियत्वं स्वगुणग्राहकत्वे तन्त्रमिति न व्यभिचार इत्यर्थः ।३।१।६९।

इति महामहोपाध्यायसन्मिश्रवाचस्पतिविरचिते
न्यायतत्त्वालोके
तृतीयस्याध्यायस्य प्रथमाह्निकम् ।

---

# तृतीयोऽध्यायः
## द्वितीयमाह्निकम् ।

[बुद्ध्यनित्यत्वप्रकरणम्]

अथात्मादिचतुष्कानुकूलनीयत्वात् बुद्धिमनसोस्तत्परीक्षानन्तरं हेतुहेतुमद्भावोपोद्बलितावसरसङ्गत्या एतदाह्निके शरीरान्तर्वर्ति-प्रमेयपरीक्षा ।

शरीरान्तर्वर्तित्वं च शरीरावच्छेदव्याप्यभोगानुकूलमर्थवत्त्व-मेतच्च नात्मादिचतुर्णाम् । तत्र बुद्धिः स्वजन्यत्वेन मनः स्वजन्योन्नेय-त्वेनानुकूलनीयम् । तत्र मनसो बुद्धिक्रमोन्नेयत्वेन बुद्धेस्तदुन्नाय-कत्वेनाभ्यर्हितत्वाच्चादौ पञ्चभिः प्रकरणैः बुद्धिपरीक्षा । तत्राप्युत्तरो-त्तरोपजीव्यत्वात् प्रथमं बुद्ध्यनित्यताप्रकरणम् । तत्र परीक्षाङ्गसंशय-प्रदर्शनाय सूत्रम्—

**कर्माकाशसाधर्म्यात् संशयः ।३।२।१।**

अस्पर्शत्वात् समानधर्मात् बुद्धित्वाश्रयो बुद्धिपदार्थो नित्योऽ-नित्यो वेति संशय इत्यर्थः ।

प्रयोजनं तु बुद्धेर्नित्यत्वे ज्ञानादनित्यात् तद्भेदे बुद्धिरुपलब्धि-र्ज्ञानमिति लक्षणं विरुद्धं ज्ञानभिन्नगामितयेति तन्निरासः ।३।२।१।

साङ्ख्यसूत्रम्—

**विषयप्रत्यभिज्ञानात् ।३।२।२।**

बुद्धिनित्यत्वमिति शेषः। प्रत्यभिज्ञानेन हि यथा विषयस्यैक्यं विषयीक्रियते तथा ज्ञातुरपि। न चात्मा ज्ञाता संभवति जन्यधर्मानाश्रयत्वरूपात् कौटस्थ्यात्, ज्ञानस्य तु जन्यधर्मत्वात्। अतो बुद्धितत्त्वं ज्ञातृ स्थायि सिद्ध्यतीत्यर्थः।३।२।२।

सिद्धान्तसूत्रम्—

**साध्यसमत्वादहेतुः।३।२।३।**

बुद्धेर्नित्यत्वमिव प्रत्यभिज्ञातृत्वमप्यसिद्धमेवातो नित्यत्वे प्रत्यभिज्ञातृत्वमहेतुः। कौटस्थ्यं तु अनादिनिधनत्वं ज्ञानाधारत्वेऽपि न विरुध्यत इत्यर्थः।३।२।३।

बुद्धेरेव स्थायिन्या यथाविषयं ज्ञानात्मिका वृत्तयो वृत्तिमदभिन्ना निश्चरन्तीति *सांख्य*मतं निरस्यति—

**न युगपदग्रहणात्।३।२।४।**

वृत्तिवृत्तिमतोरभेदे वृत्तिमदवस्थानात् वृत्तीनामप्यवस्थानमिति युगपद् विषयग्रहणप्रसङ्ग इति युगपदग्रहणान्नाभेदस्तयोरित्यर्थः।।३।२।४।

अथ वृत्तीनामनवस्थायित्वम्, तत्राह—

**अप्रत्यभिज्ञाने च विनाशप्रसङ्गः।३।२।५।**

प्रत्यभिज्ञानस्य वृत्तिरूपस्याभावे तदभिन्नस्य वृत्तिमतोऽपि विनाशप्रसङ्गोऽविनाशे भेदापात इत्यर्थः।३।२।५।

ननु तवापि कथं ज्ञानायौगपद्यमत आह—

**क्रमवृत्तित्वादयुगपद्ग्रहणम्।३।२।६।**

मनसः क्रमवृत्तित्वात् अणुतया क्रमिकेन्द्रियसम्बन्धशालित्वादयुगपद् ग्रहणम् । युगपदनेकज्ञानानुत्पादो भवतु मनोवैभवात् क्वायौगपद्यमित्यर्थः ।३।२।६।

व्यासङ्गश्चाणुमनः पक्ष एवेत्याह—

**अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ।३।२।७।**

[अप्रत्यभिज्ञानम्] अज्ञानं व्यासङ्गादेव भवति । न च मनोवैभवे व्यासङ्गः । न च वृत्तस्याणुत्वात् सः, वृत्तिमदभेदात्तस्या अपि वैभवात् । न च जायन्त एव युगपज्ज्ञानानि, शष्कुलीभक्षणादौ तथाङ्गीकारेऽपि सर्वत्र तव तथानभ्युपगमादित्यर्थः ।३।२।७।

ननु गतिमन्तीन्द्रियाणि विषयं जहति संबध्नन्ति चेति कुतो न व्यासङ्ग इत्यत आह—

**न गत्यभावात् ।३।२।८।**

अन्तःकरणस्य बहिरिन्द्रियाणां च वैभवान्न गतिरतः सम्बन्धाविशेषान्न व्यासङ्ग इत्यर्थः ।३।२।८।

प्रकृते *साङ्ख्यमत*मुट्टङ्कते—

**स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ।३।२।९।**

यथा जवादियोगात् स्फटिकान्यत्वभ्रमस्तथा घटादिविषयोपरागादभिन्नापि वृत्तिर्वृत्तिमतो भिन्नैव भासते । तथा च वृत्तित्वाभिमता बुद्धिर्नित्यैव नित्याभेदादित्यर्थः ।३।२।९।

दूषयति—

**न हेत्वभावात् ।३।२।१०।**

धियोऽन्तःकरणभेदे न हेतुरस्ति । दृष्टान्तमात्रं त्वसाधकमित्यर्थः । किञ्च धियामनित्यत्वे प्रत्यक्षमेव मानमिति भावः ।३।२।१०।

## [क्षणभङ्गभङ्गप्रकरणम् ]

सम्प्रति *सौगतैर्य*त् समाधानाभासमुक्तं तन्निरासाय प्रसङ्गात् क्षणभङ्गभङ्गप्रकरणम् ।

तत्र विप्रतिपत्तेरेतत्क्षणवर्तिनो भावात्मानस्तत्क्षणवर्तिनो न वेति संशयः । प्रयोजनं स्थिरात्मसिद्धिः ।

*बौद्ध*सूत्रम् —

**स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः ।३।२।११।**

अभिन्ने स्फटिकादावुपरागभेदाद् यथा नानात्वाभिमानस्तथा बुद्धीनामित्ययमहेतुः । स्फटिकेऽपि अपरापरोत्पत्तिर्यतः । न चेयमसिद्धा व्यक्तीनां क्षणिकत्वात् । तथा हि यदेतत् क्षणोत्पन्नं स तत अव्यवहितोत्तरक्षणविनाशि यथा शरीरम् । एतत् चैतत्क्षणोत्पन्नं सत् तस्मात् तथेति । शरीरं तूपचयापचयदर्शनात् क्षणक्षयि यत् प्रतिक्षणं नोपचीयते तत् कालान्तरेऽपि नोपचीयते । यथा गगनम् ।

यच्च कालान्तरे उपचीयते तत्प्रतिक्षणमुपचीयते । यथा वल्मीकमित्यभावहेतोः सिद्धः शरीरे क्षणक्षय इति *जरद् बौद्धाः* ।३।२।११।

*नैयायिकः* परिहरति—

**नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञेति ।३।२।१२।**

घटादिना विनाशकारणसमवहितेनैवोत्पत्तव्यमित्यत्र नियमहेतुः प्रमाणं नास्ति । अतो यत्र दृश्यते विनाशकारणसाहित्यं तत्र विनाशोऽ-

भ्युपेयते नान्यत्र। शरीरे च न प्रतिक्षणमुपचय इति साध्यविकलो दृष्टान्तः ।३।२।१२।

ननु शरीरद्व्यणुकोत्पादतत्कर्मतदभिघातशरीरावयवकर्मतद्विभागशरीरारम्भकसंयोगनाशशरीरनाशशरीरासमवायिकारणसंयोगोत्पत्तिशरीरान्तरोत्पत्तय एवं प्रथमद्व्यणुकोत्पादतृतीयक्षणे द्व्यणुकान्तरोत्पाद एवं चिन्तने शरीरक्षणिकता प्राप्तेति चेत्, भ्रान्तोऽसि। द्व्यणुकाभिहताः शरीरावयवाः विशीर्यन्ते किं? ननु मा भञ्जि शरीरावयवैः। परमसूक्ष्मास्तु तदवयवावयवा भंक्ष्यन्त्येव परम्परयैवं चिन्तनाददूरवर्तिनी देहक्षणिकतेति चेत् दिव्यदृष्टिरसि, यत् प्रतिक्षणं शरीरवृद्धिं पश्यसीति।

ननु यथादर्शनं न वस्त्वभ्यनुज्ञाहेतुः। वस्तुना विनापि ज्ञानादत आह—

**नोत्पत्तिविनाशकारणोपलब्धेः ।३।२।१३।**

उत्पत्तिविनाशौ यत्राङ्गीक्रियेते तत्रोत्पत्तिविनाशकारणोपलब्धेरेव। स्फटिके तु न प्रतिक्षणं तदुपलम्भ इति न प्रतिक्षणमुत्पत्तिविनाशावित्यर्थः ।३।२।१३।

बौद्ध आह—

**क्षीरविनाशकारणानुपलब्धिवत् दध्युत्पत्तिवच्च तदुत्पत्तिः ।३।२।१४।**

यथानुपलभ्यमानमेव क्षीरविनाशकारणं दध्युत्पत्तिकारणं चोपेयते तथा स्फटिकादावपि तदुपेयतामित्यर्थः ।३।२।१४।

समाधत्ते—

**लिङ्गतो ग्रहणान्नानुपलब्धिः ।३।१।१५।**

दुग्धादौ कारणानुपलब्धिर्न लिङ्गतो ग्रहणात् । अत्र तु न तथेत्यर्थः ।३।२।१५।

*साङ्ख्यः* परिहरति—

**न पयसः परिणामगुणान्तरप्रादुर्भावात् ।३।२।१६।**

न क्षीरस्य विनाशो दध्नो वोत्पादः। कुतः ! परिणामगुणान्तरप्रादुर्भावात् । पयसः परिणामस्तिरोभावस्तादृशस्यैव च दध्नः प्रादुर्भावो, न तद्वत् स्फटिकेऽपि कारणकल्पनेत्यर्थः ।३।२।१६।

सिद्धान्ती एतद् दूषयति—

**व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ।३।२।१७।**

व्यूहान्तरादवयवसंयोगविशेषात् या द्रव्यान्तरोत्पत्तिस्तस्य दर्शनमनुमितिरूपं पूर्वद्रव्यध्वंसस्यानुमानमनुमितिकरणम् । नहि पूर्वद्रव्ये सति द्रव्यान्तरमुत्पत्तुमर्हति । मूर्तानां समानदेशताविरोधादित्यर्थः ।३।२।१७।

दधिक्षीरोत्पत्तिविनाशावकारणावित्यभ्युपगम्य सिद्धान्ती *बौद्धोक्तं* दूषयति—

**क्वचिद् विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ।३।२।१८।**

दधिक्षीरयोरुत्पत्तिविनाशावकारणौ [दृष्टौ], घटादौ सकारणौ। तदिह स्फटिके तयोः सकारणत्वाकारणत्वे संशयः स्यान्नैकान्तिकतेत्यर्थः ।

नन्वेतत्क्षणस्थो बीज उत्तरक्षणे अङ्कुरजननसमर्थो न वा ? आद्ये एतत्क्षण एव जनयेत्, समर्थस्य क्षेपायोगात्। अन्त्ये उत्तरक्षणेऽपि न जनयेत्, असमर्थत्वादिति अङ्कुरोपहितानुपहितबीजयोर्भेदसिद्धिः ।

एवं च सति नोत्तरक्षणे तस्यावस्थानं प्रयोजनाभावादिति । सन्मात्रमेकक्षणस्थायिप्राप्तम्। तथा च क्रमाक्रमव्याप्तं कारित्वं तद्-विरहात् स्थिरं न, यतोऽस्थिरे स्थिरीभवत् क्षणिकत्वव्याप्तमित्य-वसीयते। तदेव सत्त्वम्। तथा च यत् सत् तत् क्षणिकम्, यथा विद्युत्, सन्तः घटादय इति स्वभावहेतोः क्षणिकतासिद्धिः ।

न च प्रतिसन्धानप्रत्यक्षबाधः, तर्कविरोधेन तस्य शब्दधीवत्त-ज्जातीयविषयत्वादिति ।

मैवम्, समर्थस्यापि सहकारिविरहादकारणात् । न चाङ्कुरोप-धानानुपधानविरुद्धधर्मसंसर्गाद् बीजस्य भेदः, सहकारितदभावावच्छे-देनोभयस्याप्यविरोधात्। अन्यथा तवाप्यप्रतिकारात्। तथा हि क्षणि-केऽपि बीजं देशान्तरे कुतोऽङ्कुरं न जनयति। तत्रासत्त्वादिति यदि, हन्त इदानीमेवायं सन्नसंश्च भिद्येत । देशभेदेनाविरोध इति यदि, तुल्यं तस्मान्निःप्रत्यूहा प्रत्यभिज्ञैव स्थैर्ये मानमित्यभिसन्धिः ।३।२।१८।

## [ बुद्धेरात्मगुणत्वप्रकरणम् ]

बुद्धेर्नित्यत्वे ह्यात्मगुणत्वं न सिद्ध्यति, किन्तु महत्तत्त्वम्। एवं क्षणभङ्गेऽपि स्थिरमात्रस्याभावादुपादानोच्छेदे स्वाभिमतात्मगुणत्व-सिद्धिरिति [अत] निरास आत्मगुणत्वसिद्धौ हेतुरिति, हेतुहेतुमद्भाव-सङ्गत्या निर्वाहकतया च तदनन्तरमात्मगुणत्वप्रकरणम् ।

बुद्धित्वाश्रयो बुद्धिपदार्थ आत्मगुणो नवेति संशयः। प्रयोजनं स्थिरात्मसिद्धिः। अनात्मगुणत्वे तु प्रत्यभिज्ञाद्याश्रयतया तं स्थिरं न

साधयेदिति क्व स्थिरात्मसिद्धिः। इन्द्रियसंयोगजत्वादिन्द्रियसंयोगवत् ज्ञानं नात्मगुण इति पूर्वपक्षे सिद्धान्तसूत्रम्—

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ।३।२।१९।**

ज्ञानमिन्द्रियार्थयोः प्रत्येकं समुदितयोर्वा गुणो न, तद्विनाशेऽपि ज्ञानस्योत्पत्तेः। अन्धेनापि पूर्वानुभूतरूपस्मरणात्। अन्यदृष्टस्यान्येन स्मरणायोगादित्यर्थः ।३।२।१९।

मनोगुणत्वं निरस्यति—

**युगपज्ज्ञेयानुपलब्धेश्च न मनसः ।३।२।२०।**

युगपज्ज्ञेयानुपलब्धेर्हेतोः करणतयानुमितस्यात्मनो मनसो न ज्ञानं गुणः करणत्वेनैव सिद्धेः, धर्मिग्राहकमानबाधात्। अर्थगुणत्वेऽतीन्द्रियत्वप्रसङ्गाच्चेति चार्थ इत्यर्थः ।३।२।२०।

ननु मनोगुणत्वेऽपि ज्ञानायौगपद्यं न निर्वहति। ज्ञानजनकस्यात्मनो वैभवेन युगपत्सर्वेन्द्रियसन्निकर्षादिति देशयति—

**तदात्मगुणत्वेऽपि तुल्यम् ।३।२।२१।**

तज्ज्ञानयौगपद्यमात्मगुणत्वेऽपि प्रसजतीत्यर्थः ।३।२।२१।

सिद्धान्त्याह—

**[इन्द्रियैर्मनसः] सन्निकर्षाभावात्तदनुत्पत्तिः ।३।२।२२।**

ज्ञानानां युगपदनुत्पत्तिः, मनसा युगपदिन्द्रियाणां सन्निकर्षाभावादित्यर्थः ।३।२।२२।

नन्वात्मेन्द्रियार्थसन्निकर्षादेव ज्ञानमुत्पद्यतामिति किं मनसेत्यत आह—

**नोत्पत्तिकारणानपदेशात् ।३।२।२३।**

मनोनैरपेक्ष्येण ज्ञानोत्पत्तौ ज्ञानायौगपद्यान्यथोपपत्तौ वा त्वदुक्त-सामग्रीतः शरीरानवच्छिन्नेऽप्यात्मनि ज्ञानोत्पत्तिप्रसङ्गस्य निरासे वा त्वया कारणं हेतुर्नापदिश्यते । प्रत्युत मनोऽपेक्षायामेव मान-मस्तीत्यर्थः ।३।२।२३।

मनो पश्यन् देशयति—

**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । ३।२।२४।**

आत्मगुणत्वे बुद्धेर्नित्यत्वप्रसङ्गः । आश्रयनाशविरोधिगुणयो-रभावात् उत्पादयौगपद्यापत्तिश्चेति चार्थ इत्यर्थः ।३।२।२४।

समाधत्ते—

**अनित्यत्वग्रहणाद् बुद्धेर्बुद्ध्यन्तराद् विनाशः शब्दवत् ।३।२।२५।**

अनित्यत्वस्य प्रत्यक्षसिद्धत्वात् परिशेषात् बुद्धिनाश उत्तर-बुद्धित इति कल्प्यते । यथा पूर्वशब्दे उत्तरशब्दस्य मुक्तौ तु चरमबुद्धेर-दृष्टनाशात् । स च भोगात् । अन्त्यशब्दस्य तु उपान्त्यशब्देन तन्नाशेन एकार्थसमवायिना दृढमूर्तसंयोगेन वेत्यर्थः ।३।२।२५।

ननु बुद्धेरात्मगुणत्वे आत्ममनःसंयोगसंस्कारसत्त्वात् युगपत् स्मृतिप्रसङ्गमेकदेशी परिहरति—

**ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ।३।२।२६।**

यत्रात्मप्रदेशे ज्ञानं समवेतं तत्रैव तज्जन्यः संस्कारोऽपीति तत्प्रदेशे मनः सन्निकर्षक्रमात् स्मृतिक्रम इत्यर्थः ।३।२।२६।

सिद्धान्ती तद् दूषयति—

**नान्तः शरीरवृत्तित्वान्मनसः ।३।२।२७।**

आत्मनो निरवयवत्वाद् विषया एव प्रदेशास्तैर्व्यवहितैर्मना न संयुज्यते अन्तःशरीरवृत्तित्वात्, बहिर्भावे मरणापातादित्यर्थः ।३।२।२७।

एकदेशी आक्षिपति—

**साध्यत्वादहेतुः ।३।२।२८।**

शरीरान्तरवृत्तित्वं न दूषणे हेतुः, साध्यत्वादसिद्धत्वात् । न च मरणापातो अदृष्टविशेषस्य जीवनत्वादित्यर्थः ।३।२।२८।

सिद्धान्ती समाधत्ते—

**स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ।३।२।२९।**

स्मरणकाले मनसः शरीरान्तर्वृत्तित्वस्याप्रतिषेधः । स्मरतः शरीरधारणरूपाया उपपत्तेर्युक्तेः । अन्यथा निश्चरिते [निरधिष्ठिते] मनसि यत्नाभावात् गुरु शरीरं पतेदित्यर्थः ।३।२।२९।

पुनराक्षिपति—

**न तदाशुगतित्वान्मनसः ।३।२।३०।**

उत्पतनं न, कुतः? मनसः आशुगतित्वात् । तथा च यत्नमुत्पाद्य स्मरणाय निर्गतं मनः यत्ननाशात् प्रागेव पुनः शरीरमभ्येतीत्यर्थः ।३।२।३०।

दूषयति—

**न स्मरणकालानियमात् ।३।२।३१।**

शीघ्रमेव स्मरतीति नियमो नास्त्यतो यत्र सुस्मूर्षया निश्चरितं मनश्चिरेण स्मरति तत्र देहपातः स्यादेवेत्यर्थः ।

न च देहाभ्यन्तर एव मनः प्रणिदधाति । स्मरणसामग्रीसमकालमेव बहिर्यातीति वाच्यम् । देहस्य भोगायतनत्वभङ्गप्रसङ्गात् । एकदेशावस्थितसंस्कारकलोपेऽप्रतिकाराच्चेति भावः । ३।२।३१।

अमुमेकदेशिपक्षमन्यैकदेशी दूषयति—

**आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः । ३।२।३२।**

मनसो बहिर्गतस्य न संयोगविशेषः प्रदेशविशेषेण बहिर्गमनाभावात् । तद्धि न स्मरणार्थमात्मप्रेरणेन, तस्य स्मरणीयज्ञानपूर्वकतया प्रागेव तदर्थस्य स्मृत्यापत्तेः । न च यदृच्छया, अकस्मात् आकस्मिकत्वस्य निषेधात् । न ज्ञतया मनसस्तत्र तत्प्रतिषेधादतो मनो बहिर्यातीत्ययुक्तमित्यर्थः ।३।२।३२।

सिद्धान्ती एतद् दूषयति—

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ।३।२।३३।**

यत्रान्यत्र निभालयन् पादे कण्टकेन विध्यते तत्र मनः नेत्रं त्यक्त्वा पादमभ्येति । अन्यथा तदवच्छेदेन दुःखोत्पादो न स्यात् । अत्रापि त्वदुक्ता विकल्पा लगन्त्येव । तत्रादृष्टात् कर्मेति चेत् तुल्यं स्मृतावपि ।

तथा च पादव्यथनेनानुमितो यो मनसः पादे संयोगविशेषस्तेन समानं त्वद् दूषणं तत्रापि लगतीत्यर्थः।

किञ्च प्रेरणेन दोषावहं तद्धि बुस्मुर्षया भवति। सा च स्मरणेष्ट-साधनताज्ञानसाध्या न तु स्मरणविषयस्मरणसाध्येति भावः।३।२।३३।

कथं तर्हि स्मृतिक्रम इत्यतः सिद्धान्त्याह—

**प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत् स्मरणम्।३।२।३४।**

प्रणिधानादीनां संस्कारसहकारिणां क्रमात् स्मृतीनां क्रम इत्यर्थः।३।२।३४।

ज्ञानमनादिनिधनं पुरुषस्यैव इच्छादयस्तूपजनापायवन्तोऽन्तः करणधर्मा इति *वेदान्ति*च्छायया *सांख्यैक*देशिदर्शनं,तच्च यावन्न दूष्यते तावदिच्छादिसमानाधिकरणाया धिय आत्मगुणत्वं न सिद्ध्यतीति तदपाकरोति—

**ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः।३।२।३५।**

प्रवृत्तिनिवृत्तियत्नयोर्ज्ञातुर्यौ इच्छाद्वेषौ तन्निमित्तत्वात्। तथा च प्रत्यक्षसिद्धे ज्ञानादीनां सामानाधिकरण्ये उपपत्तिः सूचितेत्यर्थः।३।२।३५।

आरम्भेच्छाधियां सामानाधिकरण्यादारब्धविहस्तादावेव [शरीर-हस्तादावेव ? ] चैतन्यमिति कुत आत्मगुणता बुद्धेरिति मन्वान *श्चार्वाक* आह—

**तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः। ३।२।३६।**

इच्छाद्वेषयोरारम्भनिवृत्तिलिङ्गकत्वात् पार्थिवाद्येषु पाञ्चभौतिकेषु शरीरेषु न प्रतिषेधः । इच्छादिग्रहणं तूपलक्षणं ज्ञानमपि द्रष्टव्यम् । ३।२।३६।

आरम्भनिवृत्ती यत्नौ कर्मणी वा ? आद्यस्तु स्वरूपासिद्ध एवेति । अन्त्ये व्यभिचारमाह—

**परमाण्वा[परश्वा]दिष्वारम्भनिवृत्तिदर्शनात् ।३।२।३७।**

सुगमम् ।३।२।३७।

तदेवं भूतचैतन्यसाधनं दूषयित्वा तदन्यचैतन्ये साधनमाह—

**नियमानियमौ तु तद्विशेषकौ ।३।२।३८।**

एकदेशवृत्तितानियमः प्रसृतता अनियमः । प्रसृतयोरिच्छाद्वेषयोर्विशेषकौ भूतगुणत्वव्यावृत्त्या आत्मगुणत्वव्यवस्थापकौ । तेन ज्ञानादीनां पार्थिवविशेषगुणत्वे केवलदेहगुणता न स्यात्, स्याच्च घटादिवृत्तिवृत्तिगुणवापरजातिप्रसक्तेत्यर्थः ।३।२।३८।

दूषणान्तरमाह—

**यथोक्तहेतुत्वात् पारतन्त्र्यात् स्वकृताभ्यागमाच्च न मनसः ।३।२।३९।**

ज्ञानादि भूतानां मनसश्च न गुणः, यथोक्तानामात्मगुणत्वसाधनानां हेतुत्वात्, भूतानां पारतन्त्र्यात् चेतनस्य पारतन्त्र्यविरोधात् । अङ्गीकृतपरलोकं भूतचैतनिकं प्रति स्वकृताभ्यागमात् स्वकृतं कर्म स्वयं भुज्यते भूतचैतन्ये तन्न स्यात् । भूतानां दाहेन नाशादित्यर्थः ।३।२।३९।

प्रागुक्तहेतूनुपसंहरति—

**परिशेषाद् यथोक्तहेतूपपत्तेश्च ।३।२।४०।**

आत्मगुणा ज्ञानादय इति शेषः। परिशेषात् प्रसक्ततत्तद्गुणता-निषेधे सति गुणत्वाद् यथोक्तहेतोः प्रतिसन्धानस्मृत्यादेरुपपत्तेः। स्वर्गादिबोधकवेदादस्मिन् शरीरे धर्मं चरित्वा कायस्य भेदात् स्वर्गे देवेषूपपद्यते, अधर्मं चरित्वा देहभेदान्नरकमुपपद्यत इति। क्षणिकानां हि भूतानां चैतन्येऽन्यदृष्टस्यान्येनास्मरणादिष्टसाधनताज्ञानाभावात् नैरात्म्यं स्यात्। न चैवमतोऽपीति चार्थ इत्यर्थः ।३।२।४०।

ननु ज्ञानस्य क्षणिकत्वे हेतुत्वाभावात् स्मृतयो नोत्पद्येरन्नित्यत आह—

**स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ।३।२।४१।**

उपपद्यते इति शेषः। तु शब्दोऽवधारणे। आत्मनो ज्ञस्वाभाव्यात् ज्ञानसमवायिकारणतावच्छेदकरूपवत्त्वात्। तेनात्मनो ज्ञानवत्त्वेन तज्जन्यं संस्कारसमानाधिकरणं स्मरणमुपपद्यते। भूतचैतन्ये तन्न स्यात्, संस्कारस्यानवस्थानादित्यर्थः ।३।२।४१।

स्मरणयौगपद्यसमाधानं भूतचैतन्यवादान्तरितम्। तदपगमे लब्धावसरं पूर्वसूत्रस्मारितमुद्बोधकमं दर्शयति—

**प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ।३।२।४२।**

संस्कारोद्बोध इति शेषः। प्रणिधानं तत्तद्विषयग्राहकेष्विन्द्रि-

येषु लग्नस्य मनसो विषयान्तरव्यासङ्गवारणेन सुस्मूर्षितसंबन्धि निर्धारणम्। निबन्ध एकग्रन्थोपग्रहः। यथा न्यायेन प्रमाणादीनाम्। अभ्यासो वृत्तिज्ञानस्य दृढसंस्कारः। यदुद्बोध्यते तद् बोधकादीनि तु प्रणिधानादीन्येव। लिङ्गं व्याप्यं, लक्षणं चिह्नं, सांकेतिकम्, यथा देवदत्तगव्यां शूलादि। सादृश्यं चित्रगतं प्रतिकृत्यादि। परिग्रहः ममेदमिति स्वीकारः। आश्रय उपजीव्यो ग्रामण्यादिः। आश्रित उपजीवकः प्रजादिः। संबन्धो गुर्वन्तेवासित्वादिः गोवृषन्यायात्। आनन्तर्यं क्रमः, यथा मेरुसंकल्पादौ। वियोगो विश्लेषो दारादेः। एकं कार्यं येषां त एककार्याः सहाध्याय्यादयः। विरोधो वैरम्। अतिशयः संस्कारः औपनायनादिः। प्राप्तिर्धनादिलाभः। व्यवधानमावरणम्, यथा कोषादिरस्यादेः। सुखदुःखादिभिस्तद्विषयादेरिच्छाद्वेषाभ्यामेष्टव्यद्वेष्टव्ययोः। भयात् भायकस्य। अर्थित्वाद् दातुः। क्रियया रथादिना तत्कर्तुः। रागात् रञ्जनीयस्य दारादेः। धर्माधर्माभ्यां जातमात्रस्य स्तन्यपानादौ प्रवृत्तिः। निमित्तादौषधविशेषोन्मादादेस्तत्प्रतिसन्धिविषयकसंस्कारोद्बोध इत्यर्थः।३।२।४२।

## [ बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ]

अथोत्पन्नापवर्गित्वेन बुद्धिपरीक्षा, सङ्गतिश्चोपोद्घातः। ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योरिति [ ३।२।३५। ] पूर्वप्रकरणसूत्रेण ज्ञानेच्छायत्नानां सामानाधिकरण्ये [ बुद्धेः ] प्रत्यक्षं प्रमाणं सोपपत्त्युपन्यस्तं, तच्च धियामाशु विनाशित्वे घटते। तथाभूतस्यैवात्मविशेषगुणस्य प्रत्यक्षत्वादिति पूर्वोक्तनिर्वाहकत्वात्।

यद्वा इष्टसाधनताज्ञानमेवेच्छाप्रवृत्ती जनयति। तत्रेच्छासाधनतानुमितिस्तज्जातीयत्वपरामर्शभवा। स च तत्स्मरणजः। तच्च संस्कारजं, स च पूर्वानुभवे स्मरणजनके नन्वेकार्थबलात् कल्प्यत इति। सत्यनुभवे तदकल्पने व्याप्तिस्मृतेः करणस्याभावे प्रवृत्त्यभावे क्व ज्ञानेच्छायत्नानां सामानाधिकरण्यवार्तापीति पूर्वोक्तनिर्वाहात्।

अथ वा हेतुहेतुमद्भावः सङ्गतिः। बुद्धेः प्रत्यक्षपुरुषविशेषगुणत्वेन सुखादिवदुत्पन्नापवर्गित्वसिद्धेः। अनित्यत्वादिसाधारणधर्माद् बुद्धिराशुनाशिनी न वेति संशयः। प्रयोजनं तु प्रत्यक्षत्वसिद्धिः। पूर्वपक्षस्त्वनुभवस्य साक्षादेव स्मृतिहेतुत्वं व्यापारानुपलम्भादिति। तत्र स्थैर्यमाशुविनाशित्वे मानाभावाच्चेति। सिद्धान्तसूत्रम्—

## कर्मानवस्थायिग्रहणात् ।३।२।४३।

क्षिप्तबाणादौ कर्मविभागपूर्वसंयोगनाशोत्तरसंयोगसन्ताना गृह्यन्त इति प्रत्यक्षसिद्धम्। तत्र न तेषां युगपज्ज्ञानमर्थक्रमात्। न च प्रथमैव बुद्धिस्तत्तदर्थोपनिपाते तत्तदर्थग्राहिका, चिरस्य व्यापारायोगादतो ज्ञानसन्तानसिद्धिः। न चोत्तरज्ञानसिद्धावपि पूर्वज्ञानस्थितिः, आश्रयनाशाभावे स्थैर्यापाताद् विरोधिगुणस्यैव नाशकत्वकल्पनादित्यर्थः।

एवं च कर्मादिबुद्धिवत् स्थिरार्थबुद्धीनामपि बुद्धित्वादेव क्षणिकत्वं सुखादिवत् मानसविशेषगुणत्वाद् वा तदिति सिद्धं बुद्धिमात्रस्योत्पन्नापवर्गित्वमिति भावः।३।२।४३।

नन्वाशुविनाशित्वे प्रत्यर्थनियतत्वे च बुद्धीनां विद्युत्प्रदीपाभ्यां तुल्योपलम्भप्रसङ्ग इत्याक्षिपति—

## अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्संपाते रूपाव्यक्तग्रहणवत् ।३।२।४४।

यदि बुद्धिरनवस्थायिनी स्यात् तदा साङ्गोपाङ्गार्थविषया न स्यात्, वैद्युत्बुद्धिवत्। न चैवं, तस्मान्नानवस्थायिनीत्यर्थः।३।२।४४।

बुद्धिमात्रस्यानवस्थायित्वं निषिध्यते प्रदीपादिजनितबुद्धेर्वेति विकल्प्य दूषयति—

हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ।३।२।४५।

वैद्युतबुद्धिदृष्टान्तेनानवस्थायित्वं हेतुरव्यक्तत्वसाधनार्थमुपात्तः । अतो न बुद्धिमात्रस्यानवस्थायित्वं प्रतिषेद्धुं शक्यम् । वैद्युतबुद्धावभ्यनुज्ञानात् । नान्त्यः, न ह्यनवस्थायित्वं साङ्गोपाङ्गाविषयत्वे हेतुः, किन्तु विवेकसामग्र्या अभावः । सा च प्रकृतेऽस्त्येवेति व्यक्तैव स्यादित्यर्थः ।३।२।४५।

किञ्च विद्युत्प्रकाशितार्थधीरपि स[स्व]विषये व्यक्तैव, धीमात्रस्य व्यक्तत्वात् । स्वाविषये तु न व्यक्ता । न चाव्यक्ताप्रकाशास्थैर्यं च न बुद्धेरव्यक्तत्वे हेतुः, प्रदीपार्चिर्विषयकबुद्ध्यादौ व्यभिचारादित्याह—

प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ।३।२।४६।

यथा प्रदीपार्चिषां सन्तत्या वर्तमानानामभिव्यक्तानि ग्रहणानि तथा विद्युत्प्रकाशितार्थग्रहणमपि व्यक्तमित्यर्थः । तत् सिद्धमुत्पन्नापवर्गिणी बुद्धिरिति ।३।२।४६।

## [बुद्धेः शरीरगुणव्यतिरेकप्रकरणम्]

एवं बुद्धेरुत्पन्नापवर्गित्वस्य शरीरगुणत्वाभावसाधकत्वात् हेतुहेतुमद्भावसङ्गत्या तदनन्तरं शरीरगुणत्वव्यतिरेकप्रकरणम् । न च भूतचैतन्यनिरासादनारम्भः । गौरोऽहं जाने इत्यनुभवात् तन्निरासकयुक्तेरेवान्यथासिद्ध्यभिमानात् । ननु सार्वलौकिकं प्रत्यक्षमेव ज्ञानस्य देहगुणतामाहेत्यत आह—

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ।३।२।४७।

जलादौ स्वीयो द्रवादिः परकीय औष्ण्यादिरनुभूयते। अतः शरीरेऽपि चैतन्यं स्वीयमन्यदीयं वेत्युपलभ्यमानधर्मदर्शनात् सन्दिह्यते न त्वन्यतरदव्यवधार्य[त] इत्यर्थः। प्रयोजनं तु ज्ञातुर्देहभेदेन मोक्षार्थ-प्रवृत्तिः।

पूर्वपक्षस्तु ज्ञानगौरिय[?]मसामानाधिकरण्यधियः प्रत्यक्षत्वेनो पजीव्यजातीयतया बलवत्त्वाभिमानात् ।३।२।४७।

सिद्धान्तः—

**यावच्छरीरभावित्वाद्रूपादीनाम् ।३।२।४८।**

न शरीरगुणश्चेतन इति शेषः। ये शरीरविशेषगुणास्ते यावद् द्रव्यभाविनो यथा रूपादयश्चेतनश्च न तथेत्यर्थः ।३।२।४८।

एवं पिठरपाकमते व्यभिचारमपाकरोति—

**न पाकजगुणान्तरोत्पत्तेः ।३।२।४९।**

न व्यभिचारः। कस्मात्, पिठरेऽपि पाकजरूपाद्यन्तरोत्पत्तेः। तथा च शरीरविशेषगुणास्ते शरीरसन्तानव्यापकसन्तानाः, यथा रूपादयः। चेतना च न तथा। तस्मान्न तद्विशेषगुण इति पूर्वसाध-नार्थ इत्यर्थः ।३।२।४९।

अपि च ये शरीरविशेषगुणास्ते स्वसमानजातीयगुणसहानव-स्थायिनः, चेतना च नैवमित्यपि वैधर्म्यमित्यभिप्रेत्याह—

**प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ।३।२।५०।**

पाकजानां प्रतिद्वन्द्वि विरोधि रूपाद्यन्तरं सिद्धम्। अतो रूपा-दिषु व्यभिचारान्न यावद्द्रव्यभावित्वप्रसंग इति न प्रतिषेध इत्यर्थः। ३।२।५०।

अनिष्टप्रसङ्गान्तरमाह—

शरीरव्यापित्वात् ।३।२।५१।

यदि चेतना शरीरविशेषगुणः स्यात् तद्व्यापिनी स्यात् । न चैवं, हस्ताद्यवच्छेदेनानुभवात् । तस्मान्न तथेत्यर्थः ।

यद्वा यदि चेतना शरीरविशेषगुणः स्यात् यावत्तदवयववृत्ति-वृत्तिगुणत्वापरजातिमती स्यादित्यर्थः ।३।२।५१।

देशयति—

न केशनखादिष्वनुपलब्धेः ।३।२।५२।

केशादौ चेतना नोपलभ्यते ततस्तद्दृष्टान्तबलेनावयवान्तराण-मप्यचैतन्यं साध्यमित्यर्थः ।३।२।५२।

दूषयति—

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसंगः ।३।२।५३।

केशादिषु चेतनाया अप्रसंगः । कुतः ? शरीरस्य त्वक्पर्यन्तत्वात् भोगायतनस्य त्वचावरुद्धत्वात् । निस्त्वक्कानि केशादीनि शरीरावयवा एव न भवन्ति । कुतस्तत्प्रयुक्तस्तेषु चैतन्यप्रसङ्गः । तथा च त्वदनुमाने साधनविकलो दृष्टान्त इत्यर्थः ।३।२।५३।

बाधकान्तरमाह—

शरीरगुणवैधर्म्यात् ।३।२।५४।

शरीरगुणा बहिरिन्द्रियग्राह्या अतीन्द्रिया वा भवन्ति । चेतनायां तु तदुभयवैधर्म्यमन्तरिन्द्रियवेद्यत्वमतो न सा तद्गुण इत्यर्थः ।३।२।५४।

आक्षिपति—

न रूपादीनामितरेतरवैधर्म्यात् ।३।२।५५।

शरीरगुणवैधर्म्यं शरीरगुणत्वे न हेतुः । रूपादीनामपि चाक्षुषाचाक्षुषादिरूपवैधर्म्याद् व्यभिचारादित्यर्थः ।३।२।५५।

समाधत्ते—

ऐन्द्रियकत्वात्तद्रूपादीनामप्रतिषेधः ।३।२।५६।

रूपादीनां शरीरगुणत्वस्याप्रतिषेधः, ऐन्द्रियकत्वात् बहिरिन्द्रियवेद्यत्वात् । तथा च [न] वैधर्म्यमात्रं हेतू कुर्मः, किन्तु अतीन्द्रियत्वबहिरिन्द्रियवेद्यत्वयोरभावम् । स च न गुरुत्वरूपादिष्विति न व्यभिचार इत्यर्थः ।३।२।५६।

## [ मनःपरीक्षाप्रकरणम् ]

अथावसरतो मनःपरीक्षा । तत्र एतच्छरीरचाक्षुषज्ञानजनकं मन एतच्छरीररासनज्ञानजनकमनोभिन्नं न वेति संशयः । प्रयोजनं तु मनोऽनेकत्वे व्यासङ्गाभावे तदैक्ये व्यासङ्गसिद्धौ युगपज्ज्ञानानुत्पत्त्यनुमितत्वेन मनस आत्मभेदसिद्धिः । ज्ञानयौगपद्यप्रत्ययो बाधकाभावात् प्रमा । अतस्तज्जनकानि पञ्च मनांसि । व्यासङ्गस्तु मनः पञ्चकस्य एकेन्द्रियसन्निकर्षादित्याक्षिप्तपूर्वपक्षकं सिद्धान्तसूत्रम्—

ज्ञानायौगपद्यादेकं मनः ।३।२।५७।

व्यासङ्गगुणे ज्ञानायौगपद्यात्तावन्मनोऽनुमितम् । तच्च लाघवादेकम् । न च प्रत्यययौगपद्यान्नाना, हेतोरन्यतरासिद्धत्वादित्यर्थः ।३।२।५७।

आक्षिपति—

न युगपदनेकक्रियोपलब्धेः ।३।२।५८।

मनस एकत्वं न, युगपदनेकाः क्रिया गमनदर्शनपठनादिका उपलभ्यन्ते यत इत्यर्थः ।३।२।५८।

समाधत्ते—

अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ।३।२।५९।

यथा भ्राम्यमाणस्याङ्गारस्याशुसञ्चारात् चक्रत्वेन मण्डलत्वेन दर्शनं भवति, तथा ज्ञानयौगपद्योपलब्धिरपि मनस आशुसञ्चारात् न तु ज्ञानयौगपद्यात् । लाघवसहकृतधर्मिग्राहकमानादेकत्वसिद्धेरित्यर्थः ।३।२।५९।

ननु मन एकमेवास्तु किन्तु विभु बुद्धिक्रमस्तु करणधर्मादिति *सांख्य*मतमपाकरोति—

यथोक्तहेतुत्वाच्चाणु ।३।२।६०।

यथोक्तस्य ज्ञानायौगपद्यस्य हेतुत्वात् प्रमाणत्वात् मन एकमणु चेत्यर्थः । किञ्च करणधर्मात् ज्ञानानामनुत्पादेऽपि सर्वेन्द्रियकरणकैक ज्ञानोत्पत्तिः स्यादेव ।

ननु पञ्चानामिन्द्रियाणां परस्परमसहकारित्वात् कथं मिलित-पञ्चेन्द्रियकरणकं गन्धादिपञ्चविषयकमेकं ज्ञानमापाद्यते, आपादका-भावादिति चेत् न, अविरोधात् । न हि सहितानि पञ्चेन्द्रियाणि एकं ज्ञानं जनयन्तु इत्यापादयामः । किन्तु प्रत्येकं संबद्धानि पञ्चापीन्द्रियाणि अहमहमिकया प्रवर्तमानानि करणधर्मनिरोधात् ज्ञानपञ्चकविमुखानि ज्ञानमुत्पादयन्ति एकमुपेयस्त्विति । आर्थस्तु समाजः । यथा प्रत्येका-रोपसामग्र्योः संशय इत्यभिसन्धिः ।३।२।६०।

## [शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम्]

अथ शरीरस्य पुरुषसमवेतादृष्टनिष्पाद्यताप्रकरणम् । मनः

शरीरावच्छेदेन वृत्तिं लभत इति मनःपरीक्षाप्रसङ्गेन स्मारितशरीरस्यात्मगुणादृष्टनिमित्तत्वं स्मृतमुपेक्षानर्हं प्रसङ्गसङ्गत्या निरस्यते । तत्र शरीरं पुरुषसमवेतादृष्टहेतुजं न वेति विप्रतिपत्तेः संशयः । न वा पक्षस्तु त्रेधा संभवति अदृष्टाभावात्, तस्य पुरुषसमवायाभावात्, तस्य देहहेतुत्वाभावाद् वा । तत्राद्यो *नास्तिकानाम्*, मध्यमोऽ*र्हताम्*, अन्त्यो *सांख्यानां*, प्रयोजनं तु [याग] योगाद्यनुष्ठानम् । तत्र दृष्टादेव कारणकलापाच्छरीरोत्पत्तौ नादृष्टकल्पना मानाभावादिति *नास्तिक*मतं निरस्यति—

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ।३।२।६१।

पूर्वकृतं जन्मान्तरकृतं यागादि तस्य फले धर्माधर्मौ तयोरनुबन्धात् अविपक्वयोरवस्थानात् तदुत्पत्तिः देहोत्पत्तिरित्यर्थः ।

तथा च यत् स्वादृष्टोपात्तमहमिति मन्यते तच्छरीरम् । तस्य भोगसाधनं न तु संयुक्तमात्रमिति नातिप्रसङ्ग इति भावः ।३।२।६१।

*नास्तिक* आक्षिपति—

भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ।३।२।६२।

यथा कर्मनिरपेक्षा भूतेभ्यो गैरिकादयो मूर्ता उत्पद्यन्ते अथ च पुरुषार्थसाधनत्वाद्वा दीयन्ते तथा शरीरमप्यकर्मनिमित्तमुपादेयं स्यात् । तथा भोगसाधनत्वं हेतुरनैकान्त इत्यर्थः ।३।२।६२।

समाधत्ते—

न साध्यसमत्वात् ।३।२।६३।

भोगसाधनत्वं गैरिकादौ नानैकान्तिकम् । कुतः ? साध्यसमत्वात्

पक्षसमत्वात् । अनुमानमात्रोच्छेदकतया पक्षसमे व्यभिचारसन्देहस्यादोषत्वादित्यर्थः ।३।२।६३।

सिकतादीनां कर्मनिमित्तत्वेऽपि तत्साम्यं शरीरे निराकरोति—

**नोत्पत्तिनिमित्तत्वान्मातापित्रोः ।३।२।६४।**

**तथाहारस्य ।३।२।६५।**

शरीरे सिकतादिसाम्यं न । कुतः ? मातापित्रोः शुक्रशोणितसम्मिलनद्वारा पुत्रशरीरोत्पत्तिनिमित्तत्वात् । तथा च मातापित्रोः पुत्र फलानुभवनीये कर्मणी पुत्रशरीरमुत्पादयत इत्युपपद्यते बीजानु विधानम् ।

तथाहारस्य इत्यत्रोत्पत्तिनिमित्तत्वादित्यनुषज्यते । मातुराहारोऽपि लोहितादिवद्बुद्बुदकललकण्डरादि क्रमेण पुत्रदेहाद्यारम्भको न चैवं स्थालीस्थितान्नादि । अतोऽपि तददृष्टहेतुतेत्यवसीयत इति सूत्रयोरर्थः ।

प्रयोगस्तु संस्काराजन्यं देवदत्ताद्यशरीरं तद्विशेषगुणजन्यं जन्यत्वे सति तद्भोगसाधनत्वात् तन्निर्मितस्रग्वदिति द्रष्टव्यम् । ३।२।६४-६५।

अत्र विपक्षे बाधकमाह—

**प्राप्तौ चानियमात् ।३।२।६६।**

यदादृष्टनिरपेक्षं दृष्टमेव शरीरहेतुः स्यात् तदा प्राप्तौ दम्पत्योः संयोगे अनियमो गर्भानियमो न स्यात् । अस्ति चेति कार्यत्वमदृष्ट दृष्टत्वे साध्येऽप्रयोजकमित्यर्थः ।३।२।६६।

ननु शरीरसंयोगवद् भूतमात्रजन्यमेव शरीरं प्रत्यात्मनियत-

मस्तु। अन्यथा सर्वात्मनां संयोगाविशेषात् साधारणशरीरत्वप्रसङ्ग इत्यत आह—

**शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म। ३।२।६७।**

यथा शरीरं कर्मसाध्यं तथा तदवयवसंयोगा मुखकण्ठहृदय नाडीसंस्थादियोनिजदेहसंयोगादयश्चेति नातिप्रसङ्ग इत्यर्थः। सरजस्कतया आरम्भकस्वभावा प्रकृतिः स्वयमेव शरीरान्तरमारभते। प्रतिबन्धकशरीरापगमे तु धर्माधर्मावपेक्षते, निम्नाभिसरणस्वभावमुदकमिव बन्धापगम इति *सांख्य*मतमपाकरोति—

**एतेनानियमः प्रत्युक्तः।३।२।६८।**

कर्मसापेक्षाणां भूतानां शरीरसर्गे नियमाभिधानेन तन्निरपेक्षाणां भूतानां विकाराणां शरीरारम्भे प्रकृतेरेकत्वात् सर्वात्मसाधारण्येन यो भोगादेरनियमः सर्वसाधारण्यरूपः स प्रत्युक्तस्तद्दर्शनापाकरणादेवेत्यर्थः।३।२।६८।

पार्थिवादयः परमाणवः स्वस्वादृष्टप्रेरिताः शरीरमारभन्ते। मनस्तु स्वादृष्टप्रेरितं तत्[त्र] प्रविश्य निरदृष्टस्य शरीरस्य सुखदुःखे जनयतीत्य*र्हतां* मतमपाकरोति—

**पुनस्तत्प्रसङ्गोऽपवर्गे।३।२।६९।**

परमाणूनां भोक्तृगुणोपग्रहं विना साधारणत्वात्। तदारब्धं शरीरं साधारणमेवेत्यपवर्गे पुनः शरीरप्रसंग इत्यर्थः।३।२।६९।

अदृष्टस्य मनोगुणत्वं दूषयति—

**मनः कर्मनिमित्तत्वाच्च संयोगाद्युच्छेदः।३।२।७०।**

अदृष्टं मनसो यदि नित्यं तन्निमित्तकश्च शरीरमनः संबन्धस्तदा निमित्तनित्यत्वात् शरीरमनःसंयोगः स्थिरः स्यात् । अथानित्यं तद्वा पुरुषभोगो व्यधिकरणत्वान्न तन्नाशक इति यत्किञ्चित्संयोग नाश्यत्वाज्जीवनानुपपत्तिरित्यर्थः ।३।२।७०।

मनः शरीरसंयोगस्थैर्यदूषणमाह—

**नित्यत्वप्रसंगश्च प्रायणानुपपत्तेः ।३।२।७१।**

जीवनकारणादृष्टानुवृत्तौ प्रायणानुपपत्तिरतो जीवनस्य नित्यत्वप्रसंगः । अथाकस्मिकं मरणं तदा बालादिभेदेन तद्वैचित्र्यं न स्यादिति चार्थ इत्यर्थः ।३।२।७१।

आक्षिपति—

**अणुश्यामतानित्यत्ववदेतत् स्यात् ।३।२।७२।**

यथानादि बन्धे श्यामता पाकान्निवर्तते तथा देहाद्यपि निवर्त्स्यतीत्यर्थः ।३।२।७२।

परिहरति—

**नाकृताभ्यागमप्रसङ्गात् ।३।२।७३।**

अकृतं प्रमाणेनाविषयीकृतं प्रत्युत प्रत्यक्षागमविरुद्धं तस्याभ्यागमोऽभ्युपगमस्तत्प्रसङ्गान्न देहादिसंबन्धप्रयोजकादृष्टसद्भावे तन्नाश इत्यर्थः ।

वस्तुतः परमाणुश्यामतापि नानादिः पार्थिवरूपत्वाल्लोहितादिवदिति । यद्वा दृष्टनित्यत्वे केनचित्तदकरणेऽकृतेनादृष्टेन फलस्याभ्यागम उत्पादः प्रसक्त इति विहितानुष्ठाने जगन्नैर्वीर्यं स्यादित्यर्थः । तस्मादकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुखाद्युप

भोग इति पापिष्ठा मिथ्यादृष्टिर्हेया। कर्मनिमित्तानीमानीति। तत्त्वचारु पादेयेति निर्वहति यागयोगाद्यनुष्ठानमिति भावः।

*इति महामहोपाध्यायसन्मिश्रवाचस्पतिविरचिते*
*न्यायतत्त्वालोके*
*तृतीयोध्यायः समाप्तः ।*

# चतुर्थोऽध्यायः ।

## प्रथमाह्निकम् ।

### [प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम्]

तृतीये कारणरूपप्रमेयषट्कं परीक्षितम् । इहेदानीमवसरसङ्गत्यात्मादीनां प्रवृत्त्यादिकारणतया तत्परीक्षायाः प्रवृत्त्यादिपरीक्षा हेतुत्वेन हेतुहेतुमद्भावसङ्गत्या च कार्यरूपप्रमेयषट्कपरीक्षा । न च कार्यरूपप्रमेयत्वेन परीक्षणीयत्वे शरीरादेरप्यत्र परीक्षापातः । तेनापि रूपेण प्रवृत्त्यादिषट्कस्यैव परिचिक्षिषितत्वात् । प्रतिपाद्यतावच्छेदकधर्मातिप्रसङ्गस्य घटपटौ द्रव्यमित्यत्रेवादोषत्वात् । विभज्यमानसाकाङ्क्षैकार्थावच्छेदस्यैवैकवाक्यत्वे तन्त्रत्वात् । 'भगो वां विभजन्तु पूषा वां विभजत्वि'त्यादि पर्याययोरेकवाक्यत्वं मा भूदित्येतदर्थं विभज्यमानसाकाङ्क्षेत्यर्थ विशेषणम् । अत्र तु न तथा विभजनस्यार्थस्यैक्येऽपि परस्परनिराकाङ्क्षत्वात् । एवं 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामीति' [तै० ब्रा० ।३।७।५।२] सदनप्रकाशकम् । तस्मिन् 'सीदामृते प्रतितिष्ठ व्रीहीणां मेदः सुमनस्यमान' इति सादन—प्रकाशकं तदनयोः साकांक्षत्वेऽपि एकवाक्यत्वं मा भूदत-उक्तम् एकार्थेति । अत्र तु सदनसादनरूपप्रकाश्यार्थभेदान्न तथेति ।

तत्रापरीक्षितविषयस्य तत्त्वज्ञानस्य परीक्षितुमशक्यत्वात् तत्त्वज्ञानपरीक्षातः प्राक् प्रवृत्तित्वादिना धर्मेण प्रवृत्त्यादिषट्कपरीक्षा प्रथमाह्निके । तत्रापि क्रमानुरोधादुक्तरूपवत्तया प्रवृत्तिदोषपरीक्षा

प्रथमप्रकरणार्थः । यथा तथेति सूत्रावयवाभ्यामुक्तरूपत्वज्ञापनात् । न चार्थभेदः, अतिदिष्टरूपवत्त्वस्यानुगतत्वात् ।

सूत्रम्—

**प्रवृत्तिर्यथोक्ता ।३।१।१।**

तथेति शेषः । येन प्रकारेण उक्ता लक्षिता वाग् बुद्धिशरीरारम्भ [१।१।१६] इत्यनेन तथैव तद्धर्मवत्त्वेवेति नासिद्धं लक्षणमतस्तेनेतरभेदादिसिद्धिरित्यर्थः ।

प्रवृत्तिर्हि द्वयी कारणरूपा कार्यरूपा च । तत्राद्याऽनित्ययत्नात्मिका । अन्त्या धर्माधर्माख्या । उभयाप्येकात्मवृत्तिः । आद्या क्षणिकी प्रत्यक्षविभुगुणत्वात् । आत्मैकत्वादावतीन्द्रियत्वान्न व्यभिचारः । विशेषपदाद् वा । अन्त्या स्थिरा विपाककालानियमात् । आद्या प्रत्यक्षसिद्धा । अन्त्या जन्यं सद् यद् भोगसाधनं तत्तदीयाव्यवहित विशेषगुणजन्यम् । यथा देवदत्तभोगसाधनं तज्जन्या स्रगिति व्याप्त्या संस्काराजन्यं तज्जन्माद्यं देवदत्तशरीरम् अव्यवहिततद्विशेषगुणजन्यम् । जन्यत्वे सति तद्भोगसाधनत्वात् तन्निर्मितस्रग्वदिति मानसिद्धा । अदृष्टसिद्धेः प्राक् व्यवहितस्य जनकत्वम् न निरस्तमस्तीति पूर्वसर्गीयज्ञानादिना सिद्धसाधनवारणायाव्यवहितेति गुणविशेषणम् । भावनयार्थान्तरवारणाय पक्षविशेषणम् । गुणभूते च कार्यत्वे सति विभुसमवायात् । सेयं कार्यरूपा प्रवृत्तिर्यागहिंसावदिच्छापरत्वेन क्वचित् कल्प्यते । चिरध्वस्तस्य निर्व्यापारस्य कारणत्वायोगात् । न च पूर्वभावनियमस्यैव हेतुत्वलक्षणत्वात् किं व्यापारेणेति वाच्यम् । चिरध्वस्तं कारणत्वं व्यापारव्याप्तमित्यवधारणात् । व्यापाराभावे कार्यपूर्वभावस्यैवाभावापत्तेः । यज्वायज्वनोरविशेषात् । न च यागोपलक्षितत्वं विशेषः । स हि यागो वा तद्-

ध्वंसो वा ? नाद्योऽसत्त्वात् । नान्त्यस्तस्य स्वर्गहेतुत्वे यागस्य प्रतिबन्धकतापत्तेः । कारणीभूताभावप्रतियोगिन एव तत्त्वात् ।

नन्वस्तु व्यापारः, किन्तु स देवताप्रीतिरेव "तस्य तुष्टः प्रयच्छामि गाणपत्यं न संशयः" इत्यादिना तत्प्रीतेः स्वर्गसाधनत्वश्रवणात् । प्रीतेः सुखत्वेन क्षणिकत्वेऽपि तदनुभवजन्यसंस्कारस्य व्यापारतासंभवादिति चेत् न, भोगनिर्वाहायेह कल्प्यमानो व्यापारस्तदाश्रय एव हि कल्प्यते उपस्थितत्वात् । लाघवात् फलनिर्वाहकत्वाच्च न त्वन्यत्रातथात्वात् ।

ननु व्यापारे न फलाश्रयतानियमो गयाश्राद्धाद्यपूर्वस्य कर्तर्येवोत्पत्तेः । अन्यथैकेन श्राद्धेन षट्सु पुरुषेषु अदृष्टोत्पत्तौ गौरवापत्तेरेवं यस्मिन् जात एतामिष्टिं निर्वपति स पूत एव तेजस्वी अन्नादः पशुमान् भवतीत्यर्थवादोक्तं फलमादाय वैश्वानरं द्वादशकपालं चरुं निर्वपेत पुत्रे जात इति विधिना विहितजातेष्ट्यपूर्वस्य लाघवेन कर्तर्येवोत्पादादिति चेत् न, फलनिर्वाहाय हि तत् फलसमानाधिकरण एव व्यापारः कल्प्यते, लाघवादुपस्थितत्वाच्च । न चैवं गौरवं, तस्य कल्पनोत्तरकालीनत्वेन फलमुखस्य तस्यादोषत्वात् ।

ननु तथापि सन्ध्यानुपासनादौ अभावस्यैव स्थिरस्य नरकजनकत्वसंभवात् न तत्कल्पनमिति चेत्—न, सन्ध्याकालीनस्योपासनाभावस्य तद्धेतोः सन्ध्यापगमेऽपगमात् । ननु सन्ध्यामुपासीतेत्यादिना सन्ध्योपासनस्य विहितत्वादभाव एव नरकहेतुः । स च स्थिर एवेति न तत्कल्पनेति चेत्—न, सन्ध्याकालीनस्योपासनं विहितं न तु सन्ध्योपासनं तस्याः प्राप्तत्वात् । तथा च सन्ध्याविशिष्टोपासनाभावो न स्थिर इति युक्ता व्यापारकल्पना ।

ननु तथापि सन्ध्या प्रतियोगिनि विशेषणं नत्वभावे । उपासनस्य तत्र विधानात् । तथा चैतत्सन्ध्योपासनस्य चैत्रे प्रसिद्धस्य

मैत्रेऽधिकारिणि स न सामान्याभावो नरकायेति [illegible] एव कालस्याभावविशेषणत्वात् । यदा यद् विहितं तदा तदकरणं निषिद्धम्, न तु तदकरणमात्रमतिप्रसङ्गात् । तथा चैतत्सन्ध्यायामुपासन-सामान्याभावोऽधिकारिणि नरकहेतुः स च विशिष्टः सन्ध्यापगमेऽपगच्छतीति तन्निरयहेतुतानिर्वाहाय युक्ताऽपूर्वकल्पना । एवं च पूर्वानुमानं न प्रयोजकम् । न चैवं कारणरूपप्रवृत्तेर्लक्षितताया अपरीक्षणाद लक्षितायाश्च कार्यरूपप्रवृत्तेः परीक्षणान् महद् वैशसमिति वाच्यम् । अदृष्टपरीक्षाद्वारा अदृष्टजनकानित्यप्रयत्नस्य कारणप्रवृत्तेरेव परीक्षणादिति ।४।१।१।

दोषपरीक्षासूत्रम्—

तथा दोषाः ।४।१।२।

दोषा अपि तथा प्रवर्तनालक्षणा [१।१।१७] एवेति लक्षणवन्त एवेति नासिद्ध्यादिरित्यर्थः ।

कार्यरूपप्रवृत्तितुल्यतया बुद्धिसमानाश्रय[ा]णां दोषाणामात्मगुणत्वादिकं परीक्षितमिति तथाशब्दस्यार्थः । द्वितीयसूत्रे [१।१।२।] कारणोच्छेदक्रमेणोच्छिद्यन्त इति परीक्षितम् । वीतरागजन्मादर्शनादि [३।१।२४।] त्यत्रानादिना प्रबन्धेन संसारकारणमिति परीक्षितमिति ।

नन्वियं परीक्षा वा तदर्थकीर्तनं वा । नाद्यः, पूर्वपक्षाद्यभावात् । नान्त्यः, परीक्षकाध्यायबहिर्भावापातादिति । न परीक्षादेशस्यापि परीक्षात्वात् । पूर्वपरीक्षादीनां च विशिष्य सूत्रकृतानभिधानेऽपि तात्पर्यविषयत्वादिति ।४।१।२।

## [ दोषत्रैराश्यप्रकरणम् ]

एवं दोषाः सामान्यतः परीक्षिताः । सम्प्रति त्रैराश्येन विशेषेण

परीक्षणाय हेतुहेतुमद्भावसङ्गत्या तत्त्रैराश्यप्रकरणम् । कामक्रोधौ दोषावित्येके । शोकमोहावित्यन्ये । अविद्या, अस्मितारागद्वेषाभिनिवेशाश्चत्वार इत्यपरे । अविद्यारूपा अस्मिता शरीरादावहंबुद्धिः । अभिनिवेशो मरणभयम् । अविद्यैवेतीतरे । मदमानमात्सर्यादय इति केचित् । रागद्वेषमोहा इति वृद्धाः, इति विप्रतिपत्तेः प्रवर्तनालक्षणा दोषा [१।१।१७] इति लक्षणं सम्यगसम्यग्वेति संशयः दोषा इति बहुवचनेन सूचितः । त्रित्वविभागो मानादीनां दोषलक्षणवतामनन्तर्भावादसम्यक् स्यादिति मानादीनामदोषत्वाभ्युपगमे मानादावेव लक्षणमतिव्यापकमिति पूर्वपक्षः ।

सिद्धान्तसूत्रम्—

## तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ।४।१।३।

तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः । न तु रागद्वेषमोहानामेकत्वम् । तेषामर्थान्तरभावात्—मिथोभेदकधर्मवत्त्वात् । तथा च मानादीनामेतेष्वेवान्तर्भावात् न विभागस्य न्यूनता, न वा लक्षणातिव्याप्तिरित्यर्थः । तत्र प्रत्यक्षमिच्छात्वं रागस्य, द्वेषत्वं द्वेषस्य, अतत्त्वधीत्वं मोहस्य लक्षणम् । तत्र रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति । कामो रिरंसा, मत्सरः स्वप्रयोजनाभिसन्धानं विना परनिवारणेच्छा । स्पृहा धर्माविरोधेन प्राप्तीच्छा । इदं मे न क्षीयतामितीच्छा तृष्णा । उचितव्ययनिपाते धनरक्षणेच्छा कार्पण्यमपि तृष्णाभेदः । धर्मविरोधेन परद्रव्येच्छा लोभः । परबन्धनेच्छा माया । स्वोत्कर्षप्रतिपादनेच्छा दम्भः ।

द्वेषपक्षः—क्रोध ईर्ष्या असूया द्रोहोऽमर्षोऽवमान इति । क्रोधो नेत्रलौहित्यादिहेतुर्द्वेषविशेषः । ईर्ष्या साधारणे वस्तुनि परस्वत्वाभिमानादौ द्वेषः । यथा दायादस्य । असूया परगुणादौ द्वेषः । यथा दाया-

दस्य। द्रोहो नाशाय द्वेषः । अमर्षः कृतापराधेऽसमर्थस्य द्वेषः। अवमानोऽपकारिण्यकिञ्चित्करस्य धिगहमित्यात्मनि द्वेषः।

मोहपक्षः—विपर्ययसंशयतर्कमानप्रमादभयशोका [कहिंसास्मया] इति। अयथार्थनिश्चयो भ्रमः। दोलायमानं ज्ञानं संशयः। व्याप्यारोपे व्यापकप्रसञ्जनं तर्कः। मान आत्मन्यविद्यमानगुणाध्यारोपेणोत्कर्षधीः। प्रमादः कर्तव्येऽकर्तव्यताधीः। भयमनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम्। शोक इष्टवियोगे तल्लाभानर्हताज्ञानम्। हिंसा नाशावच्छिन्नद्वेषरूपा द्रोहभेदः। स्मयो मानभेदः।४।१।३।

आक्षिपति—

**नैकप्रत्यनीकभावात्** ।४।१।४।

रागादीनां भेदो न, किन्त्वेकत्वमेव। एकप्रत्यनीकभावात्। तत्त्वज्ञानरूपैकविरोधित्वादित्यर्थः।४।१।४।

समाधत्ते—

**व्यभिचारादहेतुः** ।४।१।५।

एकविरोधित्वं भेदनिषेधेऽहेतुः, व्यभिचारात्। एकाग्निसंयोगनाश्यत्वेऽपि रूपादीनां भेदादित्यर्थः।४।१।५।

यद्यपि त्रैराश्यप्रकरणे तदेव निरूपयितुमर्हम्, तथापि तत्त्वज्ञानान्मोहनाशे रागद्वेषनाश इति तत्त्वज्ञानस्य कारणकारणत्वादन्यथासिद्धेरेकविरोधिकत्वममीषामसिद्धमित्येतत्प्रदर्शकमपि सूत्रम्।

निदानोच्छेदं विना निदानिनो नोच्छेद इत्यस्यापेक्षिततमत्वात् तत्प्रदर्शनायापि सूत्रम्—

**तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः** ।४।१।६।

यद्यपि बहूनां निर्धारणे पापतम इति युक्तं तथाप्यत्र द्वौ द्वावधिकृत्य निर्धारणं द्रष्टव्यम्। द्वयोरेव निर्धारणे इयसुनोऽनुशासनात्। तेन रागमोहयोर्द्वेषमोहयोर्वा मोहः पापीयान्। कस्मात्? यतोऽमूढस्येतरौ रागद्वेषौ नोत्पद्येते इत्यर्थः। न च रागद्वेषौ विना न हिताहितप्राप्तिपरिहारार्थं प्रवृत्तिनिवृत्ती इति तत्त्वज्ञानिनोऽपि तदुभयहेतू, ताविति तयोर्मोहव्यभिचार इति वाच्यम्। धर्माधर्महेतुयत्नहेत्वोरेव तयोर्दोषत्वमिति। तयोर्व्यभिचारेऽपि दोषभूतयोस्तयोरव्यभिचारादित्यभिप्रायेणैवाद्विषंश्च भुङ्क्तेऽसक्तश्च भुङ्क्ते इति श्रुतिरपीति भावः ।४।१।६।

शङ्कते—

**प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ।४।१।७।**

दोषेभ्य इत्यान्तर्गणिकभेदविवक्षया बहुवचनम्। एवं रागादयो जन्या, मोहो जनक इति सिद्धम्। तथा च [ हेतुत्वाद् ] दोषभेदो मोहस्य प्रसक्तः। अभेदे हेतुत्वाभावादित्यर्थः ।४।१।७।

निराकरोति—

**दोषलक्षणावरोधान्मोहस्य ।४।१।८।**

दोषलक्षणवत्त्वान्मोहस्य दोषत्वम्। न तु तद्धेतुत्वाददोषत्वम्। व्यक्तिभेदेन हेतुत्वे तज्जातीयत्वाविरोधात्। तथा च दोषलक्षणानवरोध उपाधिरित्यर्थः ।४।१।८।

अनैकान्तिकश्च हेतुरित्याह—

**निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ।४।१।९।**

तुल्यजातीयानामपि द्रव्यादीनां निमित्तनैमित्तिकत्वं दृष्टम्, अतो व्यभिचारान्न तुल्यजातीयत्वस्य निषेध इत्यर्थः। न च मोहस्य दोषत्वे प्रातिस्विकतदुपादानवैयर्थ्यं मिथ्याज्ञानत्वेन प्रतिपादनस्योच्छेदक्रमज्ञान उपयोगात्। अत एवेह पापीयान् [४।१।६।] इत्युक्तमिति भावः ।४।१।६।

## [ प्रेत्यभावपरीक्षाप्रकरणम् ]

उद्देशक्रमानुरोधादवसरसङ्गत्या [च] प्रेत्यभावपरीक्षाप्रकरणम्। तत्र प्रेत्यभावो बुद्धेरित्येके, शरीरस्येत्यन्ये, आत्मन इति वृद्धा इति विप्रतिपत्तेः, प्रेत्यभाव आत्मप्रतियोगिको न वेति संशयः। तत्र पुनरुत्पत्तिः प्रेत्यभाव इति [१।१।१८।] लक्षणसूत्रे उत्पादप्रायणपदयोरुत्पत्तिविनाशावर्थः प्रतीयते। न च नित्यस्यात्मनस्तौ स्त इत्यात्मन एव प्रेत्यभाव इति वादिनां पुनरुत्पत्तिरिति तल्लक्षणं स्वरूपासिद्धं स्यादित्युत्पादविनाशपदार्थयोर्देहसंबन्धप्रतियोगिकत्ववर्णनेनासिद्धिनिरासः प्रयोजनम्। पूर्वपक्षस्तु प्रेत्यभावपदस्योत्पादविनाशावर्थौ छलतो वर्णयित्वा सिद्धान्तसूत्रम्—

### आत्मनित्यत्वे प्रेत्यभावसिद्धिः ।४।१।१०।

शरीरसन्तानमूलभूतशरीरयोगो भावः। भोगघटकान्त्यशरीरविच्छेदः प्रायणम्। एतच्च द्वयमात्मनित्यत्वे एव सम्भवति। ल्यपः समानकर्तृकत्वोपस्थापकत्वादित्यर्थः।

ननु भावपूर्वकत्वात् प्रायणस्य कथं प्रेत्यभाव इति ? मुखं व्यादाय स्वपितीत्यत्र सुप्त्वा मुखं व्याददातीतिवत् ल्यपो व्यत्ययाद् भूत्वा प्रायणमित्यर्थात्। एवं प्रयोगस्तु जन्ममरणयोरनादिताख्यापनायेति समानकर्तृकत्वं पौर्वापर्यञ्चोपपद्यते।

अत्र केचित्—समानकर्तृकत्वं क्त्वावाच्यं पौर्वापर्यमाक्षेप-

लभ्यम् । तथा हि एकपुरुषसमवेतनानाकृतिजन्यत्वरूपं समानकर्तृकत्वं कालैक्येऽनुपपद्यमानं क्रिययोः पौर्वापर्यमर्थापयति । तत्र व्रजिक्रियया भुजिक्रियैककर्तृकेत्यनुभवात् प्रधानभुजिक्रियागतमेव पूर्वकालत्वं कल्प्यते, कल्पकसमानाश्रयत्वात् कल्पनाया इति ।

न च देवदत्तीयनानाकृतिजन्ये एकस्मिन्नेव पाके समानकर्तृकतया कालभेदानुमानापात इति वाच्यम् । नानाक्रियाणामेकपुरुषीयनानाकृतिजन्यत्वस्य समानकर्तृकत्वार्थत्वादिति । मैवं, कालभेदानुमानेऽपि भुजिक्रियया उत्तरकालीनत्वेनाप्युपपत्तौ तस्याः पूर्वकालीनत्वस्य नियमेनानाक्षेपात् । तस्या नियतोपस्थितेरनन्यलभ्यत्वाच्च पूर्वकालता क्त्वार्थः कर्त्रभेदस्तु नीलोत्पलतादात्म्यवद् वाक्यार्थ इति प्राञ्चः ।

तन्न, भुक्त्वा व्रजतीत्यतो भोजनानन्तरं व्रजतीत्यनुभवो व्रजनविशेष्यकः पूर्वकालत्वस्य च वाच्यत्वे व्रजनपूर्वकाले भोजनमिति भोजनविशेष्यकः स्यादिति व्रजनक्रियानन्तर्यं तच्छक्यं पूर्वकालत्वन्त्वानन्तर्यनिरूपकत्वेन जघन्यप्रतीतिकम् । नन्वानन्तर्यं न क्त्वा वाच्यम्, तस्य व्रजनधर्मत्वेन प्रकृत्य[र्थ]गततया स्वधर्मप्रकृत्यर्थगतस्वार्थबोधकत्वविरोधादिति चेत्—न, सुपो हि प्रकृत्यर्थमात्रान्वयिनमेव स्वार्थमभिदधते तदन्वयिनमपि वा ? नाद्योऽसम्भवात् । प्रकृत्यर्थद्वाराऽन्यान्वयसम्भवात् । अन्त्येन न नः क्षतिः । सुबर्थानां प्रकृत्यर्थेनैव प्राधान्येनान्वय इति चेत्—न, ग्रामं गतश्चैत्र इत्यादौ निष्ठार्थस्य चैत्रेणैव प्राधान्येनान्वयात् । तस्मात् प्रकृत्यर्थान्वितस्वार्थबोधकत्वं विभक्तीनां व्युत्पन्नम् । तच्चात्राप्यबाधतया भोजनान्वयानन्तर्यं बोधयन्त्याः क्त्वा विभक्तेरक्षतमेव । एवं भोक्तुं व्रजतीत्यादावपि भोजनस्य भविष्यत्वमर्थः । न च यत्र दैवगत्या भोजनं नाभूत् तत्र भोक्तुं व्रजतीति धीरेव न प्रमा स्यादिति वाच्यम् । भोजने भविष्यत् कृत्युद्देश्यत्वस्य तदर्थत्वादिति ।४।१।१०।

ननूत्पत्तिनिरूप्यः प्रेत्यभावः। सा च न सजातीयात्, तस्मात्तदनुत्पत्तेः। नापि विजातीयादतिप्रसङ्गादित्युत्पत्तिप्रकाराज्ञानादुत्पत्तिरेव निरूपयितुं न शक्यते। कुतः, उत्पत्तिनिरूप्यप्रेत्यभावनिरूपणमिति प्रकृतानुकूलित्वेनोत्पोद्घातात् प्रसङ्गाद्वा उत्पत्तिप्रकारं निरूपयति—

**व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात् ।४।१।११।**

उत्पत्तिरिति शेषः। व्यक्ताद् व्यक्तजातीयात् परमाणोर्व्यक्तानां द्व्यणुकादीनामुत्पत्तिः। कुतः, प्रत्यक्षप्रामाण्यात् यज्जन्यं रूपवत् तद्रूपवज्जन्यमिति व्याप्तिप्रत्यक्षमूलकमनुमानं प्रत्यक्षमित्युक्तम्। तस्याश्च प्रामाण्यात्।

तथा च महतो रूपवतस्त्र्यणुकस्य रूपवत्सावयवावयवकत्वानुमानात् कारणत्वेन परमाणुसिद्धौ भवति सजातीयादेव व्यक्ताद् व्यक्तानामुत्पत्तिरित्यर्थः ।४।१।११।

अबुद्ध्वा आक्षिपति—

**न घटाद् घटानिष्पत्तेः ।४।१।१२।**

यदि सजातीयादुत्पत्तिः स्यात् घटादपि घटोत्पत्तिः स्यात्। न चैवं, तस्मान्न सजातीयाद् व्यक्ताद् व्यक्तोत्पत्तिरित्यर्थः ।४।१।१२।

समाधत्ते—

**व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ।४।१।१३।**

सजातीयात् सजातीयोत्पत्तेरप्रतिषेधः। कस्मात्? व्यक्ताद्रूपादिमतः सजातीयात् कपालाद् घटनिष्पत्तेस्तथा च यथा कपालाद् घटोत्पत्तिस्तथा परमाणोरपि घटोत्पत्तिः स्यात्। न च घटाद् घटोत्पत्तिप्रसङ्गोऽन्त्यावयवित्वादिति नातिप्रसङ्ग इत्यर्थः ।४।१।१३।

## [ अभावोपादानतानिराकरणप्रकरणम् ]

व्यक्ताद् व्यक्तानामित्यत्रोपोद्‌घातादष्टौ प्रकरणानि। अभावोपादानादिष्वनिरस्तेषु प्रकृतासिद्धेः। प्रयोजनं तु अष्टानामपि व्यक्ताद् व्यक्तनिष्पत्तिः। तत्रापि शून्यतोपादानत्वे निराकृते अभावोपादानतानिराकरणप्रकरणम्। तत्र समवायिकारणत्वमभावे वर्तते न वेति संशयः।

पूर्वपक्षसूत्रम्—

**अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ।४।१।१४।**

अभावात् [अ]समवायिकारणात् भावस्य कार्यस्य उत्पत्तिः। कुतः, न बीजमनुपमृद्य अङ्कुरस्य प्रादुर्भावो यतः। बीजोपमर्दमन्तरेणाङ्कुरो नोत्पद्यत इति व्यतिरेकनियमः सूत्रेण शब्दत उच्यते। अन्वयव्यतिरेकयोर्नान्तरीयकत्वादर्थतस्तस्मिन्नेव न सत्युत्पद्यत इत्युच्यते। तथा चान्वयव्यतिरेकविषयकं प्रत्यक्षमेवाभावोपादाने मानमतस्तद्‌दृष्टान्तेनान्यत्रापि तदनुमानमिति ।४।१।१४।

अत्रोपमृद्य प्रादुर्भावादिति प्रयोगो मुख्यो भाक्तो वा? आद्यं निरस्यति—

**व्याघातादप्रयोगः ।४।१।१५।**

यथोपमर्दे कारणं नाङ्कुरोऽसत्त्वादेवमसन्निरुपाख्यो बीजाभावोऽपि नाङ्कुरोपादानमिति। तत्त्वे वालीकत्वविरोधात्। तथा चोपमर्दं प्रत्यङ्कुरकारणता प्रयोगो व्याघातादयुक्त इत्यर्थः ।४।१।१५।

दूषणमविद्वान् पूर्वपक्षी भक्त्या प्रयोगं समर्थयति—

**नातीतानागतयोः कारणशब्दप्रयोगात् ।४।१।१६।**

यथाऽतीतेऽभूत् कुम्भः, अनागते भविष्यति कुम्भ इति कारण-शब्दप्रयोगो भक्त्या तथा ममापीत्यतो भाक्तत्वान्न व्याघातः। भक्ति-बीजञ्चानन्तर्यमुपमर्दकमप्युपमृद्योत्तरकालमनुवर्ततेऽङ्कुरोऽपीत्यर्थः। ४।१।१६।

न प्रयोगं व्यासेधामोऽपि तु अलीकस्योपादानत्वम्। तच्च न समर्थितमित्यभिसन्दधानः सिद्धान्ती केवलाभावहेतुत्वं निषेधति—

## न विनष्टेभ्योऽनिष्पत्तेः ।४।१।१७।

भावे क्तः। निरपेक्षश्चेद् बीजनाशोऽङ्कुरकारणं स्यादसत्यपि व्यूहान्तरे मिथो विच्छिन्नेष्वपि बीजावयवेष्वङ्कुरः स्यात्। न चैवं, तस्मात् केवलेभ्योऽङ्कुरानुत्पत्तिर्न केवलो बीजनाशोऽङ्कुरकारण-मित्यर्थः ।४।१।१७।

भावापेक्षोऽभावहेतुरिति मतमभ्युपगमेनोत्तरयति—

## क्रमनिर्देशादप्रतिषेधः ।४।१।१८।

अस्मत्पक्षेऽप्युक्तरूपस्याभावकारणत्वस्य प्रतिषेधः पूर्वव्यूहस्य प्रतिबन्धकस्याभावः क्रमः तत्वेन निर्देशात्। तथा च खण्डपटो-त्पत्त्यादाववस्थितव्यूहापेक्षस्य पटादिध्वंसस्य वस्तुसतः कारणत्व मस्माभिरभ्युपेयत इति मतैक्यादप्रतिषेध इत्यर्थः।

न च यदि बीजावयवा एव पूर्वव्यूहशून्या अङ्कुरारम्भका-स्तर्हि पिष्टबीजावयवा अप्यङ्कुराय कल्पेरन्निति वाच्यम्, कार्यदर्शन-बलेन बीजावष्टब्धानामेव तेषां स्वयमारब्धव्यूहान्तराणामङ्कुर-जनकत्वावधारणात्।

ननु सभागेऽभ्रान्तसमतैकावसाय उपादानत्वनियामको विसभागे प्रकृतिविक्रिये। तथा हि यत्र कपालक्षणेन कपालक्षणो

जन्यते तत्राभ्रान्तसमता वास्तवं तौल्यम्। तेनैकावसायस्ताद्दात्म्योऽवसायः। तथा च यत् कारणं कार्यात्मत्वेन प्रतिज्ञायते तत् सभागसन्ततावुपादानम्, यत्र तु कपालक्षणेन घटक्षणो जन्यते तत्र विसभागसन्ततौ कपालः प्रकृतिः घटो विकृतिरिति। प्रकृतित्वमेवोपादान प्रयोजकम्। अवगतन्तु सजातीयकारणत्वम्। तथा च बीजध्वंसोऽसन्नङ्कुर इत्यादिधीबलाद् भावात्मकस्याङ्कुरस्य सजातीयः प्रकृति श्चेत्यङ्कुरोपादानं स्यादेवेति चेत्—मैवं, सर्वथा साजात्यस्याति प्रसक्तत्वात्। अङ्कुरे बीजध्वंसप्रकृतिकत्वाननुभवेन तत्प्रकृतिकत्वस्याप्यभावात्। अभावस्य चाधिकरणात्मकतानिषेधात् अतिरिक्तस्य च त्वन्मतेऽलीकत्वात्। न च सभागसन्तानोऽपि क्षणभङ्गभङ्गादिति।४।१।१८।

## [ ईश्वरोपादानतानिराकरणप्रकरणम् ]

ईश्वरोपादानत्वे सम्भवति, क्व व्यक्ताद् व्यक्तिनिष्पत्तिरिति निर्वाहायोपोद्घातेन शून्यतोपादानत्वे निराकृते ईश्वरोपादानता शङ्क्यतेऽपीति। तेन समं हेतुहेतुमद्भावेन च सङ्गत्या तदनन्तरमीश्वरोपादानतानिराकरण प्रकरणम्।

कार्यमात्रं ब्रह्मोपादानकं न वेति संशयः। पूर्वपक्षः—

### ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्।४।१।१९।

चिच्छक्तिक्रियाशक्तिरूपेशनायोगादीश्वरो ब्रह्म, कारणं समवायिकारणम्। ब्रह्मैव हि गोघटादिभेदेन परिणमते। श्रूयते हि—'तदैक्षत बहु स्यां प्रजायेये'त्यादि। श्रुत्यर्थस्तु तत् ब्रह्म ऐक्षत अबुद्ध्यत अहं बहु स्यां भवेयं जायेय जन्म कुर्याम्। तदीश्वरस्य बहुत्वप्रजननसामानाधिकरण्यात् कार्याणां चेतनाभेदः प्रतीयते। युक्तश्चैतत् प्राधानिकं ब्रह्म पुमांस्तदासीदित्यादिभिः परमाण्वादीनां प्रलये निषेधादुपादान-

वति कार्यं ब्रह्मण एवोपादानत्वादिति *त्रिदण्डाः*। *एकदण्डास्तु* एक-मेव ब्रह्मानिर्वचनीयानाद्यविद्यावशात् घटादिरूपेण विवर्ततेतथा तथा भ्रमविषयो भवतीति।

ननु जीवकर्मणैव कार्यजातं जन्यतां किं ब्रह्मपरिणामेनात उक्तम्—पुरुषकर्माफल्यदर्शनादिति। अफलस्यापि पुरुषकर्मणो दर्श-नात्। कारणान्तरापेक्षायां तदेवास्तु किं कर्मणेत्यर्थः।४।१।१९।

सिद्धान्तः—

## न पुरुषकर्माभावे फलानिष्पत्तेः।४।१।२०।

ईश्वरो नानपेक्षो जगदुपादानम्। पुरुषकारं विना फला-निष्पत्तेः। अन्यथा सर्वं फलं सर्वदा सर्वस्य च स्यात्, उपादानैक्यात्। सर्वजातीयं [च] स्यात्। न चैवम्। तस्मात् कादाचित्कत्वाददृष्ट-निमित्तमपि जातिप्रतिनियमनान्न ब्रह्मोपादानकं किन्तु व्यक्तोपादानक मेवेत्यर्थः।

यद्यप्येकदण्डा न ब्रह्मोपादानकं कार्यजातं मन्यन्तेऽद्वैतभङ्ग प्रसङ्गात्। तथापि द्व्यणुकादिप्रक्रियायां विरुन्धत एवेत्युल्लिखिताः। ४।१।२०।

नन्वेवं तस्य निरपेक्षत्वोपादानत्वरूपविशेषद्वयनिषेधात् सकल कार्ये सापेक्षहेतुत्वमभ्युपेतम्। तच्चायुक्तम्। अपेक्षणीय एव दण्डा दावहेतुत्वात्। नहि कुलालादीनामपेक्षणीयदण्डादिहेतुतापि दृष्टास्ती-त्यत आह—

## तत्कारितत्वादहेतुः।४।१।२१।

यदप्यपेक्षणीयं तदपि तत्कारितमेव तत्प्रेरितपुरुषकृतमेवेति नापेक्षणीयत्वमजन्यत्वे हेतुर्बाधादित्यर्थः।

[1]*नव्यास्तु* परिणामक्रमेणेश्वरोपादानं जगदित्याक्षिप्तपूर्वपक्षकं सिद्धान्तसूत्रम्—ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्।

ईश्वरः कारणं निमित्तकारणं, पुरुषकर्माफल्यदर्शनात्। पुरुषव्यापारोऽफलोऽपि दृश्यते यतोऽतः कारणान्तरापेक्षेत्यर्थः। न तूपादानं कार्यैकजात्यादिति भावः।

देश्यम्—न पुरुषकर्माभावे फलानिष्पत्तेः।

पुरुषव्यापारमन्तरेण न कार्यमतो दृष्टेनैवोपपत्तौ नातिरिक्तकारणकल्पनेत्यर्थः।

सिद्धान्तः—तत्कारितत्वादहेतुः।

न ह्यचेतनं चेतनानधिष्ठितं प्रवर्तत इति द्व्यणुकादेस्तत्कारितत्वात् तदायोजितपरमाणुजन्यत्वादीश्वरसिद्धौ तन्निषेधोऽहेतुरित्यर्थ इत्याहुः।

अत्र केचित् अदृष्टदृष्टमेव जगदित्यलं कर्तृकल्पनयेति कर्तारमपहस्तयन्ति। तद् विप्रतिपत्त्या द्व्यणुकमुपादानाभिज्ञजन्यं न वेति संशयः। मानं च द्व्यणुकमुपादानाभिज्ञजन्यं जन्यभावत्वात् घटवत्। न चास्मदादयः परमाण्वभिज्ञा इति लोकोत्तरपुरुषसिद्धिः। न च सन्दिग्धसाध्येऽङ्कुरादौ हेतुनिश्चयात् सन्दिग्धानेकान्तः। साधन निश्चयस्य सन्दिग्धसाध्येऽनुमितिसामग्रीत्वेनानुमितेरेवोत्पादात्। न चानुमितेः पक्षतावच्छेदकप्रकारकत्वनियमात् कथं तत्र सेति वाच्यम्, मानपक्षे द्व्यणुकत्वाङ्कुरत्वप्रकारिकायाः समूहालम्बनानुमितेरेवाभ्युपगमात्। न च परानुमाने द्व्यणुकस्यैव पक्षत्वात् कथमङ्कुरेऽनुमितिरिति वाच्यम्, न ह्यवयवपञ्चकं परस्यानुमितिं जनयति किन्तु तज्ज्ञानवतस्तृतीयलिङ्गपरामर्शः। एवञ्च तृतीयलिङ्गपरामर्शकाले-

1. विद्यासागरमतमेतदिति केशवमिश्रः।

ऽनुल्लिखिते हेतुभाने समूहालम्बनानुमितिरेव । अभाने च क्व सन्दिग्धानेकान्तः । न च मतुनैवेहशेनार्थान्तरं, तस्य प्रतिसर्गं भेदात् । न च सर्गासिद्धिः, समयसमवायिकारणान्यावृत्तिप्रागभावप्रतियोगिवृत्तिकार्यद्रव्यत्वम् आरम्भकातिरिक्तकार्यद्रव्यानधिकरणवृत्तिप्रागभावप्रतियोगिवृत्तिकार्यवृत्तिधर्मत्वात् शब्दत्ववदिति तत्सिद्धेः । न चात्र विभुवृत्तित्वमुपाधिः । अन्त्यावयविकर्मत्वादौ साध्याव्यापकत्वात् ।

ननु कार्यद्रव्यानधिकरणत्वं संयोगेन समवायेन सामान्यतो वा । नाद्यान्त्यौ उक्तोपाधेर[न्त्या]वयविकर्मत्वादौ साध्याव्या[प्त्य]प्रसंगात् । द्वितीयेऽनेनैव कालेन सिद्धसाधनमिति । न, कार्यपदेन स्वकार्यस्योक्तत्वात् ।

नन्वेवमप्यन्त्यावयविनि विभुनि चाविशिष्टः संख्यादिव्यावर्तकतया पक्षमात्रव्यावर्तकविशेषणान्यो द्रव्याधिकरणावृत्तिवृत्तित्वमुपाधिरिति चेत्—न, अप्रयोजकत्वात् । न च सन्दिग्धोपाधिरपि स्वभाव संबन्धादिति ।

*सम्प्रदायस्तु* अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादान गोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि न वेति संशये सति एतानि तादृशानि समवेतत्वे सति प्रागभावप्रतियोगित्वात् । यदेवं तदेवं यथा घटस्तथा चैतानि तस्मात्तथा । अत्र कृत्यजन्यानि जन्यानीति पक्षनिर्देशे कृते गगनादिवारणे वृत्तेऽपि स्वमते द्व्यणुकादेरपि कृतिजन्यत्वाच्च सर्वासङ्ग्रह इति तदर्थं जन्येति । जन्यपदं तु स्वमते कृतौ विशेषणम् । परं प्रत्यापातत उपरञ्जकम् । एवमपि शब्दफूत्कारादीनां संग्रहाय उपादानगोचरेति कृतिविशेषणम् । शब्दादिस्तु न गगनादिगोचरजन्यकृतिजन्य इति भवति पक्षः । उपादानशब्दस्य च सम्बन्धिशब्दतया यथोक्तप्रतिज्ञानेऽपि तत्तदुपादानपरतैव । एवमपि

द्व्यणुकाद्यसंग्रह एव तस्याद‍ृष्टद्वारा परमाणुगोचरास्मदादिकृतिजन्यत्वात् । न चास्मदादिकृतेः परमाणुगोचरत्वमसिद्धम् । यन्निष्ठं हि कार्यं यस्याः कृतेरुत्पाद्यम् स तद्विषयस्तेनास्मदादिसंसारजनककृतेः समिदादिरिव परमाण्वादिरपि विषय एव । न च ज्ञानविषयतैव कृतेर्विषयता । तथा च कथं समिदादिविषयकज्ञानजन्यकृतेः परमाणुविषयः स्यादिति वाच्यम् । गोचरता हि द्वयी उद्देश्यतया, अनन्यपरकृतिव्याप्यतया च । तथा च द्वितीया ज्ञानविषयत्वनियता । प्रथमा तूद्देश्यतामात्रेण भोगसाधनतया क्षित्यवयवेऽप्यस्तीति तद्वारणाय युक्तमद‍ृष्टद्वारकेति कृतिविशेषणम् । एवमपि ध्वंसवारणाय समवेतपदं जात्यादिवारणाय जन्यपदम् । अन्यथांशतो बाधः स्यात् ।

ननु स्वार्थानुमाने प्रयोगाभावेन सम्बन्धिशब्दमहिम्नोऽनन्तरं[1] समवेतेति विशेषणं व्यर्थं ध्वंसस्याद‍ृष्टाद्वारकयत्किञ्चिदुपादानगोचरजन्यकृतिजन्यतया तस्यैतावतैव वारणादिति चेत्—न, समवेतेति विशेषणस्यात्र योगात् ।

हन्तैवमुपादानेऽपि शब्दफूत्कारादेर्हि जन्यकृत्यजन्येत्यादितोऽसंग्रहे तत्संग्रहायोपादानेति, तच्चेत्थमपि न युक्तम् । शब्दादेरपि यत्किञ्चिदुपादानमृदङ्गादिगोचरया कृत्या जननादिति चेत् तदपि त्यक्तम् । तच्च[2] द‍ृष्टद्वारकजन्यकृत्यजन्यानि जन्यानीति पक्षः स्यात् । तथा च शब्दार्थे संग्रहो दृढ एवेति चेत् स्वार्थानुमान इत्थमेव पक्षतेति तर्हि परार्थानुमाने एतद्विलक्षणस्य पक्षतेत्यद‍ृष्टमापद्येतेति चेत्—न, परार्थानुमाने सम्बन्धिशब्दमहिम्नाऽधिकसंग्रहसंभवे नाद‍ृष्टचरत्वस्यादोषत्वादिति । साध्यमपि यद्युपादानेत्यादि तदा भोक्त्रा ईदृशेन सिद्धिसाधनमिति तद्वारणायाप्रतियोग्यन्तं ज्ञानादि विशेषणम् । उपादानपदं चात्रोपादानमात्रपरमतो न साध्याप्रसिद्धिः । ज्ञानादीनामपि जनकत्वम् विवक्षितमतो न यत्किञ्चिदुपादानगोचर

१. असम्भवे ने० मा० पा० । २. तद्यदृष्टाद्वारक ने० मा० पा० ।

ज्ञानादिमताऽस्मदादिना सिद्धसाधनं घटाद्युपादानगोचरज्ञानादेः क्षित्यजनकत्वात् द्व्यणुकाद्युपादानगोचरज्ञानादेश्च प्रथमपदेन व्यावर्तितत्वात् । क्षित्याद्युपादानगोचरसामान्यादिप्रत्यासत्तिजन्ये ज्ञानादेरप्यजनकत्वान्न तेनार्थान्तरम् ।

एतेन चरमज्ञानेनाप्यर्थान्तरमपास्तम् । ज्ञानादेरपि जनकत्व विवक्षणात् । न चावयवविभागद्वारा खण्डक्षितावुदबिन्दूत्क्षेपात्, समुद्रे हस्तचालनेन परमाणुमेलनेऽस्मदादिकर्तृत्वादंशतः सिद्ध साधनम् । अवयव्यारम्भकसंयोगजनकस्यैवावयविजनकतया खण्ड क्षितावुपादानगोचरज्ञानाद्यभावेन द्व्यणुके चास्मदादेरकर्तृकत्वात्, बृहत्समुद्रस्तु सपक्ष एव । तत्र हि पूर्वसमुद्रजलबिन्दूपादाने तद्गोचरास्मदाद्यपरोक्षज्ञानादय इति ।

अत्र यथोक्तज्ञानादिमत्त्वं कर्तृत्वमनयोस्तथा कर्तृजन्यत्वे साध्ये न व्यापकगौरवं दोषः । यद्यपि पुंसो व्यतिरेकाभावान्न कारणता किन्तु तद्वृत्तिज्ञानादेरेव तदाप्येकैकाभावव्यापकाभावप्रतियोगिनो हेतोरेकैकं सिद्ध्यत् त्रितयमपि सिद्ध्यति । आर्थस्तु समाजः ।

ननु कार्यस्येष्टसाधनतानुमितिजन्यत्वेन सह व्याप्त्यवधारणात् भगवति सापि स्यात् । न च क्षित्यादिसाधनत्वज्ञानं भगवतः साक्षात्कार्यं वेत्यतो नानुमानमिति ज्ञेयसाक्षात्कारस्य तदनुमित्यपरिपन्थित्वात् । प्रत्यक्षपरिकलितमप्य[र्थम]नुमानेन बुभुत्सन्ते तर्करसिकाः इति *टीका*दर्शनात् । न च कार्येष्टोपायतानुमितिजन्यत्वयोर्विपक्षबाधकाभावेन व्याप्तिरेव नेति वाच्यम्, उपादानगोचरप्रत्यक्षे सत्यपि इष्टसाधनतानुमानाभावे कार्याभावात्, तस्य जन्यत्वावधारणात् । लाघवेन कार्यमात्रस्यैव तज्जन्यत्वावधारणात् । सामान्ये बाधके सत्येव विशेषाश्रयणात् । तस्मादुपादानगोचरप्रत्यक्षमिव निरुपधिसहचारमिष्टसाधनतानुमानमपीति तद्बलात्तदपि स्यादिति

नेष्टसाधनतानुमानं हि दुःखाभावसुखसाधनतानुमानं वा इच्छाविषयकमात्रतनुभुवनादिसाधनतानुमानं वा ? आद्ये बाधात्, भगवतः सुखदुःखाभाव[ा]त् । द्वितीये इष्टसाधनतानुमानस्य तत्त्वेनैव कार्यहेतुत्वम्, इष्टसाधनताज्ञानत्वमात्रेण वा ? अत्राद्ये शब्दात्तदवगमे उपादानप्रत्यक्षेऽप्यप्रवृत्तेः । अन्ते तु तज्ज्ञानमात्रमायाति । तच्चास्त्येव प्रत्यक्षं भगवतीति ।

ननु अन्वयव्यतिरेकगम्यं कारणत्वं कृतिमात्रस्य च व्यतिरेकाग्रहात् कारणताधीर्न स्यात् । न च कृतिव्यतिरेके कार्यं नेति सामान्यलक्षणया तदुभयव्यतिरेकसहचारावसाये कार्यं कृतिजन्यमितिधीः । यद्यपि कृतिव्यतिरेकज्ञानमप्रमैव । मन्मते नित्यकृतेर्देशे काले च विरहाभावात् । तथापि तज्जन्यं कार्यकारणभावावधारणं प्रमैव विषयाबाधाद्यथाशक्तिग्रहणमिति वाच्यम् । अन्वयव्यतिरेकग्रहाप्रामाण्ये कारणताग्रहस्य सर्वत्राप्रामाणिकत्वात् । न चात्रैव व्यभिचारः । अत्रापि ग्राहकप्रामाण्यस्य वक्ष्यमाणत्वात् उत्सर्गतो जनक ज्ञानाप्रामाण्ये जन्यज्ञानस्यापि तथात्वात् । आद्यशक्तिग्रहेऽप्यगत्या तथाङ्गीकारादिति ।

अत्राहुः, कृतिविशेषकार्यविशेषयोरेव विशेषग्रहो बाधकं विना तत्सामान्ययोः कार्यकारणभावग्रह उपायः । न चातिप्रसङ्गः, सामान्यविशेषभावस्यैव नियामकत्वात् ।

ननु चेष्टाश्रयजन्यत्वमुपाधिरिति चेत्—न, लाघवेन जन्यत्वस्यैव कर्तृजन्यत्वावच्छेदकतया व्याप्यत्वे तदव्यापकस्योपाधेः साध्याव्यापकत्वात् । न च व्याप्तिपक्षधर्मतोपनेययोर्ज्ञानत्वनित्यत्वयोर्विरोधाद् विशेषविरोधः सहप्रतिभावप्रतीतौ च विरोधाभावात् । नन्वेवं घटत्वपटत्वयोरपि विरोधादनुपलब्धौ विरोधाप्रतिसन्धानात् । तथा च घटे यदि पटत्वं स्यात् तदा तथोपलभ्येतेति तत्र शङ्क्यमानं यथा विरुद्ध्यते, तथा यदि ज्ञाने नित्यत्वं तदोपलभ्येतेति भवति विरोध

प्रतिसन्धानम् । यदि चैतत् तर्कस्य प्रसिद्धज्ञानविषयत्वात् नाप्रसिद्धेऽनयोर्विरोध इति तदा घटविरोधतर्कस्यापि सिद्धघट मात्रगोचरतया नाप्रसिद्धघटगोचरत्वमिति तत्रापि घटः काम्येत पटत्ववानपि सम्भाव्येतेति न, तत्र तथाभूतघटसिद्धौ मानाभावात् । अत्र तु पक्षधर्मतासहितस्य कार्यत्वस्यैव तत्र मानत्वात् । न च ज्ञान त्वानित्यत्वयोः प्रतिबन्धावधारणादनुमानमेव न प्रवर्त्स्यतेति विपक्षबाधकाभावेन प्रतिबन्धाभावात् ।

ननु यथोक्तजन्यानि न यथोक्तज्ञानादिमज्जन्यानि चेष्टाश्रय-जन्यत्वाभावाद् गगनवदिति प्रतिरोधोऽस्तु इति वाच्यश्चेत्, न, अस्य प्रसिद्धकर्तृजन्यत्वाभावविषयत्वात् । अप्रतीतप्रतियोगिकस्या-भावस्य निरूपयितुमशक्यत्वात् । न च सामान्यरूपेण, प्रत्यनु मानोत्थानात् प्रकृतिकर्तृविशेषप्रतिबन्धसत्त्वादेव । कथमन्यथा साधकाभावात्तवाप्यसौ कार्यानुकूलाद् द्वित्वातीन्द्रियधर्मविशेषा-भावानुमानं स्याद् विषयभेदादिति वाच्यम् । सामान्येनापि हि प्रकारेण प्रतियोगिज्ञानसाध्यमभावज्ञानं न तु प्रतियोगितावच्छेदक प्रकारकप्रतियोगिजातीयज्ञानं साध्यमनभ्युपगमात् । तथा च प्रतियोग्यप्रसिद्ध्या कथं तदभावज्ञानं स्यादिति । कथं तर्हि शक्त्य-भावधीः ? न कथञ्चित्, अधिकं हि साधकेन सिद्ध्यति । न चैवं साधकबाधकमानाभावात् संशयः अत्यन्तापरिदृष्टायाः शक्तेः संशया-योगात् । किन्तु वह्निर्यथोक्तधर्मवान्न वेति संशयो वह्नौ कार्यानुकूलादिकं धर्ममालम्बते । तादृश एव च साध्यते तादृश एव च प्रतिषिध्यते ।

परेषान्तु शक्तिसिद्धिः पक्षधर्मताबलात् । सा च न प्रतिषिध्यते सिद्ध्यसिद्धिव्याघातात् । किन्तु तदनुमानं न तामालम्बतेऽन्यथा-सिद्धेरित्येव बोध्यते । न चैवं सत्प्रतिपक्षोच्छेदः तस्यैकव्यक्तिसाध्य विषयकत्वादिति । तदुक्तमाचार्यैः—

इष्टसिद्धिः प्रसिद्धेंऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥ इति ।

[ न्या० कु० ३।४। ]

किञ्च सत्प्रतिपक्षोऽपि न संभवति । तथा हि यन्निष्ठा यन्निरूपिता व्याप्तिर्यत्र विशेषणेन विना न गृह्यते तत्र विशिष्टं व्याप्यतावच्छेदकम् । अकर्तृकत्वनिरूपितायां चाभावनिष्ठव्याप्तौ शरीरं विनैव लाघवात् प्रतियोगितया जन्यत्वमवच्छेदकं क्लृप्तमिति न शरीरजन्यत्वमवच्छेदकं धूमे नीलधूमत्वमिवातोऽत्रा[त्र ?]प्रतियोगतया जन्यत्वं गौरवेण च शरीरजन्यत्वं न व्याप्यतावच्छेदकमिति शरीरजन्यत्वाभावो व्याप्यतया न ग्रहीतुं शक्यत इति व्याप्यत्वासिद्धोऽपि नीलधूम इव । तदुक्तमाचार्यैरेकामसिद्धिं परिहरतो द्वितीयापत्तेरिति । [आ० वि० अनुपलम्भवादः ।]

इयांस्तु विशेषो यन्नीलधूमादौ व्याप्तिरस्त्येव । अन्यथा विशेषाणामव्याप्यत्वे निराश्रया सा स्यात् । किन्तु नीलत्वमपि न तदवच्छेदकं गौरवात् । तथा च व्याप्यतावच्छेदकस्यैव हेतुतावच्छेदकत्वात् । नीलधूमो हेतुतया न ग्रहीतुं शक्यते । यदि वा तथा गृह्यते तदानुमितिरुदेति किन्तु नीलधूमस्य तत्राप्रयोजकतया तत्र प्रयुक्त साध्यवत् प्रत्ययस्य भ्रमत्वं तच्च हेत्वाभासजन्यत्वादितोऽप्यत्र व्याप्यत्वासिद्धिसिद्धिः । शरीरजन्यत्वाभावे तु व्याप्तिरेव न, क्षितावेव व्यभिचारात् । अपि च जन्यत्वाभावोऽत्रोपाधिर्लाघवेन तस्यैव कर्त्रभावावच्छेदकत्वात् । न च पूर्वसाधनव्यतिरेकतया नासावुपाधिः, अन्यथा सत्प्रतिपक्षोच्छेदापत्तेरिति वाच्यम् । यत्र स्थापनायाः कथञ्चिदाभासत्वं तत्र विशेषादर्शनात् सत्प्रतिपक्षिते स्थापकेन च स्वसाधनव्यतिरेक उपाधीकृतदूषकेण स्थापनायाः असद्व्यक्तावगमे तत्र पूर्वसाधनव्यतिरेकस्यानुपाधित्वात्, साध्याव्यापकत्वात् । न च तत्र तदेवोद्भाव्यं सत्प्रतिपक्षत्वमुपेत्य तदुपन्यासस्यायोगात्, प्रतिज्ञा-

हानिप्रसङ्गात् । तस्मादनाद्यनन्तद्व्यणुकादि ब्रह्माण्डकार्यप्रवाह पक्षीकरणे तावद् गोचरं ज्ञानादि सिद्धं नित्यं सर्वविषयकं च सिद्ध्यति । अन्यादृशज्ञानस्य तत्रोपसंहारासंभवात् नित्यसर्वविषयतया तु तत्सिद्धिः । प्रमाणान्तरात् अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वात् ।

नन्वेककर्तृजन्यत्वे व्याप्त्यभावात् कथमेककर्तृसिद्धिः । लाघवसहकृताद् धर्मिग्राहकमानादेव । अथ लाघवं नानुमानसहकारि तद्विलम्बेनानुमित्यविलम्बादिति चेत् न, यत्र हि प्रमाणे लघुगुरुविषयतासंभवस्तत्रैवं लाघवमेवञ्च गौरवमिति ज्ञापने सति लघ्वर्थपरिच्छेदक प्रमाणस्वभाव इत्येव लाघवसहकारार्थः, न तु प्रसङ्गवत् तर्कोऽसौ ।

ननु लाघवसहकृताप्यनुमितिर्वस्तुगत्यैकं कर्तारमनुगृह्णाति एकत्वेन वा ? नाद्यः, कर्त्रैकत्वे नित्यसन्देहापत्तेः । नान्त्यः, अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वादिति । न, एककोटिनियतस्यैव ज्ञानस्यापरकोटिसंशयनिवर्तकत्वम् । तथा चात्रैकत्वनियतकर्तृज्ञाने कथं तदनेकत्वसंशयः स्यादन्यथा नीलपीतावेव मित्रापुत्राविति जानतोऽयं मित्रापुत्रो न नील इति ज्ञानेऽपि पीतो न वेति संशयापत्तिरिति । कथन्तर्हि एतावन्त्येव रूपाणि तानि च वायौ न सन्तीत्यवधारणेऽपि वायौ रूपं न वेति संशयः । न कथञ्चित्, किन्तु रूपतया भावावधारणे रूपसम्भावनाया असम्भवात् । न चैवं सम्भावितरूपाभाव एव तद्विषयस्तस्यातिरिक्तस्य प्रमितत्वात्, नापि पृथिवी रूपाद्यभावत्रयं तेषां प्रमितत्वात् । रूपत्वावच्छिन्नप्रतियोगिताकाभावाच्चेति । तेन रूपेण तत्प्रतियोगिकोऽतिरिक्त एव संशयानुपपत्त्यायाति । ननु कथमेकत्वनियतकर्तृज्ञानात् तत्संशयोच्छेदः । इत्थं, द्वयं हि ज्ञानं संशयविरोधि समानप्रकारकं तत्समानशीलं च । यथा पुरुषसंशये तन्निश्चयः नियतशिरःपाण्यादिनिश्चयश्च । एवञ्च लाघवसहकारादेकत्वनियत कर्तृज्ञाने कथं तदनेकत्वे संशयः स्यात् । तस्मात् कर्तृत्वप्रकारकमपि ज्ञानमेकत्वोपक्षेपेऽनेकत्वप्रतिक्षेपे कर्तारमवगाहमानं तदेकत्वसंशयं प्रतिरुणद्धीति ।

यत्त्वनुमित्यनन्तरं तदेकत्वसंशयो लाघवसहकारात् तदेकत्वं गृह्णाति, तच्चोपमानं लाघवसहकार्यप्रमाणस्य उपमानत्वादिति तन्न। परिभाषामात्रत्वात्। न हि लाघवं हि प्रमाणस्य लघुग्राहकत्वं स्वभाव विशेषः। स चानुमानादपि न दण्डवारितः। न चैवं गवयपदं सप्रवृत्तिनिवृत्तिकं पदत्वादित्येव लाघवसहकृतं गवयत्वस्य प्रवृत्ति-निमित्ततां परिच्छेत्स्यतीति गतमुपमानमिति वाच्यम्, अनुमिते-र्व्यापकतावच्छेदकमात्रप्रकारकतया गवयत्वप्रवृत्तिनिमित्तत्वप्रकारक सिद्ध्यर्थमुपमानादरणादधिकन्तूपमानलक्षणेऽध्यवसेयम्।

यदि तु धर्मिग्राहकानुमानकाले लाघवावतारो नास्ति तदा द्रव्यत्वादेकत्वं सिद्ध्यतु मानाभावात्तु न नानात्वमिति। यद्यपीच्छा-कृत्योर्जन्यतया न ज्ञानेच्छे भगवति तत्कारणतया सिद्ध्यतस्तथापि कार्यस्य कर्तृजन्यतया कर्तुश्च त्रितयघटिततया ते अपि स्याताम्। न च व्यतिरेकाभावान्न पुंसः कारणता किन्तु तज्ज्ञानानामेवेति वाच्यम्। व्यतिरेकनियता वा कारणता तद्ग्राह्या वा। नाद्यः, प्रमेय-त्वादेर्व्यतिरेकाभावेऽपि स्वधीकारणत्वात्। नान्त्योऽत्र धर्मिग्राहक मानस्यैव तद्ग्राहकत्वात्। न च कुलालदृष्टान्तेनानुमानं भगवतः कारणतां ग्राहयिष्यति, कुलालस्यैव च न कारणताग्रहो व्यतिरेक-ग्रहाभावादित्यनुमानस्यैव न प्रवृत्तिरिति वाच्यम्। यः स्पन्दो व्यधि-करणयद्गुणजन्यः स तत्संयोगासमवायिकारणक इति व्याप्त्या देहस्पन्दस्य यत्नजन्यस्यात्मसंयोगत्वे सिद्धे तद्विशेषणतयात्मनो-ऽपि तत्कारणत्वात्। तर्कापरिशुद्धिस्तु न दूषणम् भगवत्परीक्षणे सिद्ध्यसिद्धिव्याघातात्। क्षित्यादिपरीक्षणे च व्यर्थविशेषणतया व्याप्यत्वासिद्धेरिति। नापि शशशृङ्ग[ः]प्रतिबन्दिः, तत्राप्रयोजकत्वेन व्याप्त्यभावात्। येषां तु ध्वंसादीनां नात्र पक्षे निक्षेपः तेषां प्रयोगा न्तरेण कर्त्रनुमानमिति। सिद्धं सन्दिग्धकर्तृकं सर्वं सकर्तृकमिति द्यावाभूमी जनयन् देव एक इत्यादि श्रुतयोऽप्यस्मिन्नर्थे प्रमाणमिति दिक्॥४।१।२१।

## [ आकस्मिकतानिराकरणप्रकरणम् ]

आकस्मिकत्वे त्वनिराकृते न व्यक्तात् व्यक्तोत्पत्तिर्नवेश्वरनिर्मित्तत्वेत्यनेन चोपोद्घाताभ्यामाकस्मिकतानिराकरण[प्रकरण]म्। तच्च कार्यपूर्ववर्त्ति तन्नियतत्वं वर्त्तते न वेति संशयः। *चार्वाक* आह—

**अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्। ४।१।२२।**

अनिमित्तत इति बहुव्रीहिसमासात् प्रथमान्तात् तसिः। निमित्तं कारणं, भावः कार्यम्, तैक्ष्ण्यमवयवसंयोगविशेषः। आदिशब्दोऽनुपलभ्यमानहेतुविशेषणत्वादिपरः। तथा च कण्टकतैक्ष्ण्यादि अकारणमतस्तद्दृष्टान्तेन कार्यमात्रस्योत्पत्तिकत्वेनाकस्मिकत्वसाधनमित्यर्थः। न च घटादिभिरुपलभ्यमानकारणकैरनैकान्तः। एतेष्वपि तत एव तत्साधनात्। न च कारणाप्रमितौ कथं तन्निषेधः, तस्य प्रमितप्रतियोगिकत्वादिति वाच्यम्, प्रमांशस्य गौरवकरत्वेन प्रतीतत्वमात्रस्य प्रयोजकत्वात्, तस्य चासत्ख्यात्यासम्भवादिति भावः।४।१।२२।

व्याघातेन दूषयति—

**अनिमित्तनिमित्तत्वान्नानिमित्ततः।४।१।२३।**

[अ]निमित्तसाधकप्रमाणस्यानिमित्तप्रतीतौ निमित्तमस्ति न वा ? आद्ये अनिमित्ततो भावोत्पत्तिरिति न। कुतः ? अनिमित्ते अनिमित्तप्रतीतौ प्रमाणस्य निमित्तत्वात्। तथा च प्रमाकरणमभ्युपगच्छतः कारणमात्रनिषेधो व्याहतः। अन्त्ये प्रमाणाभावात् क्व कारणनिषेध इत्यर्थः।

तथा च व्याघातेन *चार्वाकं* प्रत्यनुमानप्रामाण्यं प्रसाध्य व्याघातप्रसिद्धमेव कारणत्वम् पूर्वावध्यवच्छिन्नत्वरूपेण कादाचित्क-त्वेन उत्पत्तिमन्मात्रे साध्यत इति नाकस्मिकत्वगन्धोऽपीति भावः। ४।१।२३।

दोषान्तरमाह—

## अनिमित्तनिमित्तयोरर्थान्तरभावादप्रतिषेधः।४।१।२४।

इदं निमित्तमिदं निमित्तान्यदिति विलक्षणव्यवहारबलेन तयोर्भेदसिद्धौ कारणमात्रं प्रत्याचिख्यासोस्तव निमित्तमात्रप्रत्याख्याने न कारणमात्रनिषेधः किन्तु न्यूनं निग्रहस्थानमित्यर्थः।

न च कारणमात्रनिराकरणानुकूलतया निमित्तनिराकरणम्। अनुकूलनीयमनुपन्यस्यादावनुकूलकोपन्यासस्याप्राप्तकालत्वात्। न च निमितपदेन लक्षणया कारणमात्राभिधानम्। वादिवाक्ये तदयोगात् यथाश्रुते च दोषादिति भावः।

*प्राञ्चस्तु*, एकदेश्युत्तरपदमनिमित्तनिमित्तत्वान्नानिमित्ततः। [४।१।२३] अनिमित्तत इति हेतुपञ्चम्या अनिमित्तस्य हेतुनाप्रतिपाद-नात् व्याघात इत्यर्थः।

परमसिद्धान्ती एतद्दूषयति—

निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः।

तयोश्च नैक्यमित्यनिमित्तत इति तत्पुरुषसमासे हेतुपञ्चम्या अनन्वयादनिमित्तस्य निमित्तत्वं नोच्यते किन्तु बहुव्रीहिसमासात् प्रथमान्तात् सार्वविभक्तिकस्तसिः, ततः कार्योत्पत्तिरनिमित्तेत्यस्य पूर्वपक्षस्य यथोक्तव्याघातोद्भावनेनाप्रतिषेध इत्यर्थः।

एकदेशित्वे तु छलवादित्वं बीजम्, अकर्मनिमित्तः शरीरसर्ग

इत्यस्यैव निरासेनायमपि पूर्वपक्षो निरस्त एवेति सूत्रकृता [न] पृथङ् निराकृत इ यर्थः ।४।१।२४।

## [ सर्वानित्यत्वनिराकरणप्रकरणम् ]

औपोद्धातिकं सर्वानित्यत्वानिराकरणप्रकरणम् । सर्वानित्यत्वे हि नित्यात्मनिरूप्यः प्रेत्यभावो न सिद्ध्येदिति तन्निर्वाहकत्वात् । पूर्वप्रकरणे हि कारणमात्रसमर्थनात् तत्समुच्चयः । सामग्र्येऽपि समर्थितात् तस्याश्चात्र मिश्रसमुच्चयरूपत्वं व्युत्पाद्यमित्यवान्तरहेतुहेतुमद्भावसङ्गतिरपि प्रमेयत्वमनित्यत्वव्याप्यं न वेति संशयः ।

पूर्वपक्षः—

### सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ।४।१।२५।

सर्वं भौतिकं शरीरादि अभौतिकं बुद्ध्यादि वस्तुमात्रमनित्यं, विनाशि उत्पत्तिधर्मकस्य विनाशधर्मकत्वादिति व्याप्तिप्रदर्शनपरम् । तेनोत्पत्तिधर्मकत्वादिति हेतुः । व्योमादावपि वस्तुत्वेनोत्पत्तिसाधनान्न भागासिद्धिरित्यर्थः ।४।१।२५।

सिद्धान्तः—

### [ना]नित्यता नित्यत्वात् ।४।१।२६।

उत्पत्तिमत्त्वं विनाशित्वे न हेतुः। अनित्यता ध्वंसः, तस्य नित्यत्वात्, अविनाशित्वात् । अन्यथा भावोन्मज्जनापातादित्यर्थः । ४।१।२६।

देशयति—

### तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ।४।१।२७।

तस्या अनित्यताया अनित्यत्वं विनाशः । सकलानित्यविना-

शानन्तरमनित्यतापि नश्यत्येव। न चैवमुन्मज्जनमपीत्यत्र दृष्टान्त-माह वह्नेरित्यादि। सप्तमी समर्थादूवृत्तिः। यथा दाह्यं विनाश्य स्थित-स्य वह्नेर्दाह्यविरोधिनो निमित्तेन्धनादिनाशेन नाशेऽपि न दाह्योन्म-ज्जनं तथा घटादि विरोधिन्या अनित्यताया अपि विनाशे घटाद्यु-न्मज्जनं नेत्यर्थः।४।१।२७।

प्राक् प्रध्वंसाभावानाधारकालस्य प्रतियोग्याधारत्वनियमा-दुन्मज्जनप्रसङ्गस्तदवस्थ एवेति देश्यमुपेक्ष्य प्रथमहेतोरेव बाधमाह—

**नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात्। ४।१।२८।**

नित्यताविशिष्टस्याकाशादेरप्रत्याख्यानं प्रत्याख्यानं बाधितम् यथोपलब्धि उपलब्ध्यनतिक्रमेण व्यवस्थापनात् प्रमितत्वात्। तथा च धर्मिग्राहकमानसिद्धं तन्नित्यत्वमिति तदभावसाधने बाध इत्यर्थः।

*प्राञ्चस्तु* एकदेश्याह—नानित्यता नित्यत्वात् ।४।१।२९। अनित्यता रूपादिवद्घटादिधर्मस्तस्यानित्यत्वात् तद्धर्मिणो घटादेरपि नित्यत्वम्, परममहत्त्वनित्यत्वे व्योमादिनित्यत्ववदित्य नित्यता धर्मिणि नित्ये हेतुर्विरुद्धः।

अथानित्यता अनित्या तर्हि तदभावदशायामनित्यतायामन्यो धर्मी नित्य एव स्याद्धेतुश्चानैकान्त इत्यर्थः।

तदेतत् पूर्वपक्षी दूषयति—तदनित्यत्वमग्नेर्दाह्यं विनाश्यानु विनाशवत्।

यथा दाह्यं विनाश्याग्निर्नश्यति तथा अनित्यान् धर्मिणो विनाश्य शेषेऽनित्यता विनश्यतीति उभयमप्यनित्यमित्यर्थः।

आद्ये नित्यसमा जातिरन्त्ये प्रतिदृष्टान्तसमेति द्वयमप्युपेत्य सिद्धान्त्याह—

यथोपलब्धिव्यवस्थापनात् ४।१।२८। पूर्ववदर्थं इत्याहुः ।

*अन्ये* तु प्रेत्यभावो ध्वंसनिरूप्यः । स चानुत्तरावधिरभिमतस्तत्रायमुपोद्घातः सर्वानित्यत्वे ध्वंसस्याप्यनित्यत्वात् । इतरत्तु *नव्यवत्*। ध्वंसस्य नित्यत्वमवश्यवाच्यमन्यथा तदधीनो घटोत्तरत्वव्यवहारस्तन्नाशे न स्यादिति, तन्नित्यत्वादुत्पत्तिमत्त्वहेतोरत्रैव व्यभिचारात्, न सर्वानित्यतासिद्धिरित्याहुः ।

न च प्रायणस्यात्ममनोविभागतामते तस्य ध्वंसनिरूप्यता नेति वाच्यम्, विशिष्टात्ममनःसंयोगाभावस्य तत्त्वात् । विभागस्य च तत्त्वे विभागक्षणे विनश्यतः संयोगस्यापि सत्त्वे युगपज्जीवनमरणापातात् । न च यथा प्रागभावप्रध्वंसस्य घटस्य ध्वंसेऽपि प्राग भावोत्तरत्वव्यवहारस्तथा घटध्वंसध्वंसेऽपि घटोत्तरत्वव्यवहारः स्यादिति वाच्यम्, वैषम्यात् । घटध्वंसकालेऽपि प्रागभावासत्त्वाविशेषाद् भवति प्रागभावोत्तरत्वव्यवहारो, ध्वंसध्वंसकाले तु न घटासत्त्वं प्रागभावप्रध्वंसानधिकरणकालस्य प्रतियोग्यधिकरणतानियमादिति कथं तदुत्तरत्वव्यवहारः स्यात् । नन्वेवमपि 'तदत्यन्तविमोक्ष' [१।१।१८] इत्यत्र प्रध्वंसध्वंसापाकरणादेतस्य तत्रोपोद्घातः स्यादिति चेच्छृणु तावत् तत्रोपोद्घात इत्युक्त्या न सम्भवतीति वा उपोद्घातसङ्गतित्वात्तत्रैवाभिधानं स्यादिति वा ? नाद्यः, अन्यत्र सङ्गतेरत्र सङ्गत्यपरिपन्थित्वात् । नान्त्यः, नहि सङ्गतिरस्तीत्यभिधीयते किं [त्वभि] हिते सङ्गतिरन्विष्यते ।

## [ सर्वनित्यत्वनिराकरणप्रकरणम् ]

सर्वनित्यत्वे हि प्रेत्यभावस्तस्योत्पत्तिघटितत्वान्न वा व्यक्ताद् व्यक्तानामित्यौपोद्घातिकं सर्वनित्यता[ निराकरण ]प्रकरणम् ।

नित्यानित्यसमुच्चयरूपसामग्रीव्यवस्थापनरूपेण तात्पर्यकत्वा च्च पूर्वप्रकरणेनास्यैककार्यत्वरूपा सङ्गतिः । नित्यत्वं प्रमेयत्वव्यापकं न वेति संशयः । पूर्वप्रकरणेन हि किञ्चिन्नित्यसिद्धौ तद्दृष्टा तेनान्येषामपि नित्यत्वं साधयिष्यामीत्यभिमन्यमानः *सांख्यः* पूर्वपक्षयति—

**सर्वं नित्यं पञ्चभूतनित्यत्वात् ।४।१।२९।**

सर्वं विवादपदं गोघटादि, नित्यं सकलकालस्थायि, भूतत्वात् परमाण्वाकाशवत् । पञ्चेत्यादि व्याप्तिग्राहकसहचारदर्शनपरम् । पञ्चस्वपि भूतेषु भूतत्वं [ नित्यत्व ] सहचरितं दृष्टं यत इत्यर्थः । ४।१।२९।

सिद्धान्तः—

**नोत्पत्तिविनाशकारणोपलब्धेः ।४।१।३०।**

घटादीनामुत्पत्तिर्विनाश एतदुभयकारणानि चोपलभ्यन्ते । तथा च न नित्यं न च भूतत्वं स्पर्शवत् परमाण्वाकाशान्यतरत्वरूपमित्यर्थः ।४।१।३०।

*साङ्ख्यो* बाधमपश्यन् विप्रतिपत्तिमुद्धरति—

**तल्लक्षणावरोधादप्रतिषेधः ।४।१।३१।**

गोघटादीनि न भूतानि उत्पत्त्याद्युपलब्धेरिति प्रतिषेधो न युक्तः, तेषां बहिरिन्द्रियग्राह्यजातीयविशेषणगुणवत्त्वरूपभूतलक्षणादित्यर्थः ।४।१।३१।

एतद्भूतत्वमप्रयोजकं बाधञ्चोद्घाटयन् पूर्वसूत्रमेवोत्तरयति—

**नोत्पत्तिविनाशकारणोपलब्धेः ।४।१।३२।**

एतल्लक्षणवतामेव गोघटादीनामुत्पत्त्याद्युपलब्धेः नित्यत्व साधनं बाधितमित्यर्थः । उत्पत्त्याद्यर्थं प्रवृत्तिविरोधश्चेति भावः । ४।१।३२।

ननु *साङ्ख्यानां* प्रकृतिविकारात्यन्ताभेदवादिनां मते भवतु प्रवृत्त्यनुपपत्तिस्तयोस्तु भेदाभेदे सा न । तथा हि त्रिविधः खल्वयं धर्मिणः परिणामो धर्मिरूपो यथा कनकस्य रुचकादिः, लक्षणरूपो यथा रुचकत्वादेरतीतत्वादिः, अवस्थारूपो यथा रुचकादेर्नूतनत्वादिस्त इमे परिणामा धर्मिभिन्नाभिन्ना इति तदभेदान्नित्यास्तद्भेदाश्चोत्पादादिभाज इति *स्वायम्भुव*मतमाशङ्क्य निराकरोति—

**न व्यवस्थानुपपत्तेः ।४।१।३३।**

सर्वनित्यत्वं न, उत्पन्नादिव्यवस्थानुपपत्तिप्रसङ्गात् । प्रकृति विकारयोरभेदात् । न च भेदाभेदो, विरोधादित्यर्थः ।४।१।३३।

## [ सर्वपृथक्त्वनिराकरणप्रकरणम् ]

सर्वपृथक्त्वे हि तत एव परमाणोः स एव पृथक्, तदेव कार्यं ततः पृथगिति, क्व व्यक्ताद् व्यक्तानामिति स्यादित्यौपोद्घातिकं सर्वपृथक्त्वनिराकरणप्रकरणम् ।

यद्वा एकाभावे प्रेत्यभावपदस्यैव सङ्गतिः । क्त्वार्थस्यैक कर्तृकत्वस्याभावात् पूर्वप्रकरणसाधितमपि सामग्र्याः नित्यानित्य-समुच्चयरूपत्वमपि न । न ह्येकाभावे समुच्चय इत्यवान्तरोऽप्युपोद्घातः ।

शून्यत्वसंख्यैकान्तयोरप्ययमेवोपोद्घातोऽवान्तरसङ्गतिः । एत-त्पटभेद एतत्पटवृत्तिर्न वेति संशयः । *सौत्रान्तिक वैभाषिका*वाहतुः—

**सर्वं पृथक् भावलक्षणपृथक्त्वात् ।४।१।३४।**

सर्वं वस्तुमात्रं, पृथक् नाना, भावो लक्ष्यते ज्ञाप्यतेऽनेनेति भावलक्षणं समाख्याशब्दस्तस्य पृथक्त्वं पृथगर्थता समूहवाचिता यतः। प्रयोगस्तु घटः समूहरूपः स्वतन्त्रोऽनेकवाचकपदवाच्यत्वात्। न च घटपदस्य स्वतन्त्रानेकवाचकत्वासिद्धिः। घटपदं स्वतन्त्रानेकवाचकं पदत्वात्, सेनापदवदिति मानात्।

यद्वा घटः पृथक् स्वभावो न वा ? अन्त्येऽद्वैतप्रसङ्गः। आद्ये स्वस्मादपि पृथक्त्वम्। तथा च सर्वं स्वस्मादपि पृथक् भावलक्षणेन स्वभावेन पृथक्त्वात् पृथक् स्वभावत्वादित्यर्थः।४।१।३४।

सिद्धान्तः—

नानेकलक्षणैरेकभावनिष्पत्तेः।४।१।३५।

अनेकविधैर्लक्षणैर्गन्धादिभिः संबद्धस्यैकस्य भावस्य धर्मिणो निष्पत्तेः प्रमाणतः सिद्धेः। अनेकत्वसाधनं न युक्तं बाधादित्यर्थः। सेनादेरप्यसमूहत्वात् तद्दृष्टान्ताभावश्चेति भावः।४।१।३५।

युक्त्यन्तरमाह—

तल्लक्षणव्यवस्थानादेवाप्रतिषेधः।४।१।३६।

तल्लक्षणस्य भावलक्षणस्य यमहमद्राक्षं तं स्पृशामीत्यभिज्ञानादेकत्वस्यैव व्यवस्थानात्। अन्यथा परमाणूनामतीन्द्रियत्वात् प्रत्यभिज्ञैव न स्यादित्यर्थः।

यद्वा तल्लक्षणं समूहलक्षणं तस्य व्यवस्थानम् एकावच्छिन्नानेक समूह इति रूपम्। तत एकैकस्य सिद्धेः। अन्यथा समूह एव न सिद्ध्येदिति।४।१।३६।

## [ सर्वशून्यत्वनिराकरणप्रकरणम् ]

सर्वशून्यत्वे क्व व्यक्ताद् व्यक्तोत्पत्तिरित्यौपोद्घातिकं तन्निराकरणप्रकरणम् । पूर्वप्रकरणेन हि सर्वपृथक्त्वनिराकरणेन व्यवस्थितस्य स्वरूपस्य सिद्धौ तन्निराकारक एतत्प्रकरणपूर्वपक्षोऽवतरतीति पूर्वप्रकरणेन समं हेतुहेतुमद्भावसङ्गतिः । प्रमेयत्वं केवलान्वयि अत्यन्ताभावप्रतियोगि न वेति संशयः ।

*माध्यमक* आह—

### सर्वमभावो भावेष्वितरेतराभावसिद्धेः ।४।१।३७।

सर्वं वस्तुत्वेन विवादपदमभावः तुच्छं भावेषु वस्तुत्वेनाभिमतेषु घटादिषु अघटः पटो अपटो घट इत्यादि प्रतीतेः, परस्परविरहात्मकत्वसिद्धेः । अभावस्य केवलाधिकरणरूपत्वात् तादृशस्यापि तुच्छत्वात् । तथा च प्रत्यक्षमेव शून्यतायां मानम् । अनुमानं च प्रमेयत्वं केवलान्वय्यत्यन्ताभावप्रतियोगि ज्ञेयत्वात् व्योमवत् । न चाप्रयोजकत्वम् । तथा हि वस्तु सन्तः पदार्था नित्या अनित्या वा ? आद्ये क्रमाक्रमाभ्यामर्थक्रियाविरहादसन्त एव । अन्त्येऽपि विनाशस्वभावा न वा ? आद्ये द्वितीयक्षणवत् प्रथमेऽपि क्षणे न स्युः । अन्त्ये सदैव स्युर्न चैवमिति कादाचित्कत्वानुरोधाद् विनाशस्वभावा इत्यभ्युपगमे शून्यतैव पदार्थानां पारमार्थिकी । व्यवहारस्तु शास्वत इत्यर्थः ।४।१।३७।

सिद्धान्त्याह—

### न स्वभावसिद्धेर्भावानाम् ।४।१।३८।

पदार्थानां स्वभावसिद्धेः स्वकीयसत्ताघटादिरूपसाधारणासाधारणधर्मसिद्धेः । तथा च सन्न पटो घट इत्यादि प्रमाणपथावतीर्णाः पदार्था नापह्नोतुं शक्या इति त्वदनुमानं बाधितमित्यर्थः ।

किञ्च तुच्छत्वं तुच्छं न वा ? उभयथाप्यतुच्छसिद्धेः। न तुच्छ स्थितम्। न च नित्यानित्यविकल्पावकाशः। पदार्थानां नित्यानित्यरूपत्वात्। नित्यानामप्यर्थक्रियासामर्थ्यादनित्यानामपि विलक्षणविनाशित्वात् क्षणभङ्गभङ्गादिति भावः ।४।१।३८।

आक्षिपति—

**न स्वभावसिद्धेरापेक्षिकत्वात् ।४।१।३९।**

सर्वे भावाः भिन्नस्वभावाः। भिन्नत्वं च तेषां न स्वाभाविकम्। स्वतोऽपि भिन्नत्वापत्तेः। किन्त्वितरेतरापेक्षम् यच्चेतरापेक्षं तदवस्तुभूतम्। यथा जवापेक्षः स्फटिकारुणिमा। तथा च भावानां भिन्नत्वं तदेव च भावानामात्मा इति तुच्छा एव पदार्था इत्यर्थः। ४।१।३९।

समाधत्ते—

**व्याहतत्वादयुक्तम् ।४।१।४०।**

[आपेक्षिकत्वेन] तुच्छाद्वैतसाधनमयुक्तम् व्याहतत्वात्। तथा हि अपेक्षा तुच्छा न वा। आद्ये, कुत आपेक्षिकत्वम् ? अन्त्ये कुतस्तुच्छाद्वैतम् ? एवं तुच्छत्वतत्प्रमाणादीनां तुच्छत्वातुच्छत्वयोरपि व्याघात इत्यर्थः। ननु यतः परस्परापेक्षितं न सिद्ध्यतीति। भवन्मतानुरोधेनैव ब्रूम इति कुतोऽस्मान् प्रति व्याघातविभीषिका ? अस्माभिर्व्याघातस्याप्यभ्युपगमात्। तथा च कथं तव दीर्घह्रस्वादयो वर्णाः स्युरिति चेत्। इत्थं, नहि दीर्घह्रस्वे परिमाणे परस्परापेक्षजनुषी, नाप्यन्योन्यापेक्षापेक्षे किन्तु काण्डो भुजदण्डमात्रः, कोदण्डो हस्तद्वयमिति इति जानतः काण्डकोदण्डीयपरिमाणयोर्दीर्घत्वह्रस्वत्वजातिधीराविरस्तीति न किञ्चित् परस्परापेक्षमीक्षामह इति भावः ।४।१।४०।

# [ संख्यैकान्तवादनिराकरणप्रकरणम् ]

अथाद्वैते सति न व्यक्ताद् व्यक्तोत्पत्तिर्न वा प्रायणजन्मनी उभयादिमात्रत्वेऽपि जगतो नापेक्षिता द्व्यणुकादिक्रमेणोत्पत्तिर्न वा तद्धेतुरनियततत्कारणसमुच्चयरूपा सामग्री न निर्वहति। द्व्यादिनियमे समुच्चयाविरोधोऽपि क्वचित् पञ्चभिः क्वचिदधिकैरपि समुच्चये विरोध एवेत्यापोद्घातिकं संख्यैकान्तनिराकरणप्रकरणम्।

शून्यत्वे ह्यनिरस्ते नाद्वैताद्यवतार इति तेन समं हेतुहेतुमद्भावो वाऽवान्तरसङ्गतिः।

संख्या एकान्त येषु वादेषु ते संख्यैकान्तवादाः। प्रमेयस्य वास्तवं द्वित्वं त्रित्वं चतुष्ट्वं पञ्चत्वं षट्त्वं न किन्तु एकैकत्वादिकमेवेत्येवं भूता वादा इति यावत्। संख्यात्वं पञ्चत्वव्यभिचारिवृत्ति न वेति संशयः। पञ्चत्वव्यभिचारित्वं पञ्चत्वात्यन्ताभाववद्भासित्वम् नहि षट्के कदाचिदपि पञ्चत्वं वर्तते इतरानादाय एकादौ वर्तत इत्येकत्वादिकं न पञ्चत्वव्यभिचारि किन्तु षट्कादिकमेव। न च संख्यैकान्तवादे पञ्चत्वषट्त्वाद्यप्रसिद्धिः। तैरप्याविधिकषट्त्वाद्यभ्युपगमात्। नहि संख्यैकान्तवादिधियः षट्त्वादिकं न गोचरयन्ति न वा पक्षेऽपि भेदज्ञानं प्रमा न वा, संख्यात्वं द्वित्वव्यभिचारिवृत्ति न वेत्यवेमादिकं पञ्चधा संशयः। एकं ब्रह्मैवेत्येके। सर्वं द्वेधा नित्यानित्यभेदादित्यन्ये। ज्ञातृज्ञेयज्ञप्तिकरणं त्रयमेवेत्यपरे। ज्ञप्तिस्तु ज्ञेयेऽन्तर्भूता। न च ज्ञात्रादेरपि ज्ञेयेऽन्तर्भावः। कर्तृकर्मकरणत्वेन भेदविवक्षणात्। प्रमाता [प्रमेयं] प्रमाणं प्रमितिरितीतरे। एवं द्वित्वादिपक्षेषु उपाधिपरत्वेनास्माकमपि सङ्गतिरेवेति व्यक्तिरेव द्वयी त्रयी चतुष्टयीति पूर्वपक्षनिर्गलनम्।

प्रकृतिपुरुषाभ्यां द्वेधैवेति *सांख्याः*। रूपादिस्कन्धपञ्चकमिति *सौत्रान्तिकाः*। पशुपाशतदुच्छेदेश्वरा इति *पाशुपताः*। अत्र प्रकृतेरेव

प्रेत्यभावो नात्मन इति *सांख्यमते* पञ्चस्कन्धातिरिक्तो नात्मेति *सौत्रान्तिकमते* चानिरस्ते देहादिभिन्नस्यात्मनोऽभिमतः प्रेत्यभावो न स्यादत एतयोरत्रोपग्रहणमित्येके। तन्न, संख्यैकान्तनिरासे तथाप्यनिरसनीयतापत्तेः। प्रकृतिनिरासस्यात्मभेदस्य च साधितत्वात्।

किन्तु ये *सांख्यसौगतपाशुपतैकदेशिनः* संख्यैकान्तं मन्यन्ते त एवात्र पूर्वपक्षिणः। पशुरात्मा, पाशः शरीरादृष्टादिसम्बन्धः, तदुच्छेदोऽपवर्ग एतावन्तं पूर्वपक्षमाक्षिप्य सिद्धान्तसूत्रम्—

**सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ।४।१।४१।**

न संख्यैकान्ताः सिद्ध्यन्ति तेषु कारणस्य प्रमाणस्यानुपपत्तेः। साधनस्य साध्यातिरिक्तस्याभावात्। अतिरेके चैकान्तत्वव्याघातात्। अभेदे च गम्यगमकभावे लोकविरोधादित्यर्थः ।४।१।४१।

देशयति—

**न कारणावयवभावात् ।४।१।४२।**

एकत्वादीनां वा कश्चिदेकदेशः साधनमिति न संख्यान्तरम् न च साधनाभाव इत्यर्थः ।४।१।४२।

उत्तरयति—

**निरवयवत्वादहेतुः ४।१।४३।**

यदि साध्यस्य किञ्चि [कश्चि] दवयवो भवेत् न संख्यैकान्तासिद्धिः स्यात्। सर्वमेकमित्यादिप्रतिज्ञायां सर्वस्य पक्षीकरणे न कश्चिदेकदेशो वर्तते यत्साधनं स्यादिति साध्यस्य निरवयवत्वान्न त्वदुक्तो हेतुरित्यर्थः।

## [ भेदसिद्धिप्रकरणम् ]

ननु न वयमभेदं साधयामः किन्तु भेदं निषेधामः। तथा हि—

अन्योन्यसंशयाद् भेदो न प्रमान्तरसाधनः।
नास्मिन्निदं नायमयमिति भेदं विना न धीः।

अभिन्नतया गृहीताच्च भेदग्रहो विरोधात् किन्तु भिन्नतया। तथा च घटभिन्नतया ज्ञाते पटे तद्भिन्नतया घटो ज्ञेयस्तद्भिन्नतया च घटे ज्ञाते तद्भिन्नतया पटो ज्ञेय इति परस्पराश्रयाद् भेदो न प्रमान्तर-साधनः। नानुयोगिभिन्नत्वप्रकारकप्रतियोगिप्रमाग्राह्य इत्यर्थः। परस्पराश्रयमेव विशदयति—नास्मिन्निदमित्यादि। परस्परात्यन्तान्यो-न्याभावौ परस्परभेदग्रहाधीनग्रहौ इत्यर्थ इति। नैतत् स्वरूपेण गृह्य-माण एव घटपटस्मृतौ दोषाः। भावे तद्भेदग्रहाभ्युपगमात्।

ननु यदद्वैतश्रुतेर्बाधकं भेदप्रत्यक्षं तत्र को भेदः स्वरूपमन्योन्या-भावो वैधर्म्यं च। ननु स्वरूपवैधर्म्यभेदाभेदौ भेदकरूपे इति भाव-लक्षणे भेदोऽन्योन्याभावस्तत्र तस्य किं लक्षणं तादात्म्यावच्छिन्न-प्रतियोगिताकाभावत्वं घटतादात्म्यन्न पटादिरित्यत्र तादात्म्यं प्रति-योग्येव। यद्यपि घटतादात्म्यं पटो नेत्यत्र तादात्म्यं प्रतियोगि तथापि घटतादात्म्ये तादात्म्यं तत्रापि प्रतियोगितावच्छेदकमस्त्येव। न चैव-मनवस्था, प्रामाणिकत्वात्। नहि घटतादात्म्यस्य घटासाधारण-धर्मलक्षणस्य तादात्म्यमसाधारणधर्मलक्षणं नास्ति, व्याघातात्। सर्वेषां स्वलक्षणवत्त्वात्। अन्योन्याभावरूपभेदधीः कथमित्थम्, वस्तुगत्या यो धर्मो घटत्वादिः प्रतियोगितावच्छेदकस्तेन धर्मेण घटे ज्ञाते पटेऽपि स्वरूपेण ज्ञाते पटतादात्म्यानुपलब्धिसहितेन्द्रियेण संबद्धविशेषणतया तदन्योन्याभावविशेष्यकबुद्ध्यनन्तरं पटविशेष्यिका घटाद् भिन्नोऽयमितिधीः।

नन्वयं भेदः स्वानुयोगिप्रतियोगिभ्यां भिन्नो न वा? अन्त्येऽभेदे तत्प्रतियोगिकत्वतदनुयोगिकत्वयोरसंभवात्। नाद्योऽनवस्थानात्।

न्यायतोऽन्येनान्योन्याभावप्रतियोगिकान्योन्याभावप्रसङ्गाच्च । न चान्यो न्याभावान्योन्याभावः प्रतियोगिवृत्तिरसाधारण धर्म एवेति वाच्यम्, अन्योन्याभावात्यन्ताभावः स इति त्वदभ्युपगमात् । न च तस्य स्वरूपमेव भेदः, तस्यैव तद्वैशिष्ट्यासम्भवात् । अतिरिक्तभेदमन्तरेण तदूर्ध्वं तद्धियोऽप्रामाण्यापत्तेः । अन्यत्राप्यन्योन्याभावप्रमाप्रसङ्गाच्च धीतौल्यात् ।

न चान्योन्याभावस्य वैधर्म्यं भेदः तद्धि भावो वाऽभावो वा ? नाद्योऽभावे भावस्यावृत्तेः । अन्त्येऽपि स एव । अतिरिक्तो वा अत्राद्ये तद्वत्त्वविरोधः, अन्त्ये स्वधर्मभूतादभावात् । स्वधर्मिभूतोऽभावः केन भेदेन भिन्नः ? अन्योन्याभाववैधर्म्याख्यं चेदनवस्था । न च प्रामाणिकतया नासौ दोषाय, असिद्धेः । नहि घटादिसाक्षात्कारे एकोऽपि भेदश्चकास्ति किमुत परः शताः । न चानुमानेन सेत्स्यन्ति अद्वैतश्रुतिबाधात् । न च श्रुतेरेवान्यथासिद्धिः अन्योन्याश्रयात् । श्रुतेरन्यथासिद्धावबाधेनानुमानाद् भेदसिद्धिः, भेदसिद्धौ च तदन्यथा- सिद्धिरिति । एतेन प्रतियोग्यादिभिरभावस्यान्योन्याभावो भेद इत्य- प्यपास्तम् निष्प्रमाणकानवस्थाप्रसङ्गात् ।

अथ तत्रातिरिक्तभेदमन्तरेणापि स्वतो विलक्षणाधिकरणादेव भिन्नधीः । किञ्चिद्धि वस्तु स्वत एव विलक्षणमिति चेत् त्यज तर्हि घटादावप्यधिकभेदसंकथा । ओमिति चेत्, हन्तैवमभाववज्जाति- गुणादीनपि जह्याः । तत्रापि विलक्षणाधिकरणैरेव तत्तद्व्यवहारोपपत्तेः । अतिरिक्तपदार्थं विनाऽधिकरणवैलक्षण्यमपि दुर्लभम् ।

किञ्च भेदः कुत्र वर्तते, भिन्ने वा अभिन्ने वा भिन्नाभिन्ने वा ? आद्ये तेनैव भेदेन भिन्ने भेदान्तरेण वा । तत्राद्ये आत्माश्रयोऽन्त्येऽ नवस्था । द्वितीये विरोधः, तृतीयेऽप्यभेदमादाय विरोधो भेदमादायान- वस्थादि । तस्माद् भेदस्य स्वप्रतियोगितः स्वानुयोगितः स्वधर्मतः

भेदान्तरतः भेदानुसरणेऽनवस्था प्रसरन्ती ब्रह्मणापि न निवारयितुमीश्यते। अथ विश्वापरिचितो भेदः कथं भासते न जानीमः। सुहृद्भावेन चेत् पृच्छसि तदा मायागन्धर्वनगरवदित्यवेहि। न च क्वचिदप्यप्रमितस्य भानासम्भवः। भ्रमे आरोप्यभानस्यैव हेतुत्वात्। गौरवेण प्रमांशस्य व्यर्थत्वात्। आरोप्यभानन्तु अनिर्वचनीयानाद्यविद्यावशादेव। एतेन खण्डचखण्डनभेदाज्ञाने खण्डनार्था ते प्रवृत्तिरेव न स्यादिति त्वदनुरोधादायातमौपनिषदस्यापि भेदज्ञानमित्यपास्तम्। मयाप्याविद्यकस्य भेदस्य ज्ञानाभ्युपगमात्।

नन्वाविद्यकी चेद् भेदधीर्ब्रह्माद्वैतधीरपि तथास्तु। अस्तु, किं नश्छिन्नम्। न हि वयं ब्रह्मापि साधयामः। तथा चानिर्वचनगह्वराश्रिता न स्वार्थव्याघातादयः क्षुद्रोपद्रवाः स्पृशन्तीति। तस्मात् 'सत्यं विज्ञानमानन्दं ब्रह्मेति' श्रुति 'रेकमेवाद्वितीय' मित्यनया 'नेह नानास्ति किञ्चने'त्यनया च श्रुत्या सहैकवाक्यतामापन्ना प्रपञ्चमपलपन्ती ब्रह्माद्वैतं परिशेषयन्ती तत्र प्रमाणम्।

वस्तुतस्तु अविद्याविद्यमानं प्रपञ्चमपह्नुवाना श्रुतिर्यत्रैव ते मूकायते तदेव स्वप्रकाशं सच्चिदानन्दात्मकं ब्रह्मेति का तत्र श्रुत्यपेक्षेति।

उच्यते, यस्य किमपि नोद्देश्यं न स लौकिको न वा परीक्षक इत्युन्मत्तवदुपेक्षणीयस्तथा च कथं प्रविशता हेयहानोपायाधिगन्तव्यानि चत्वार्यवश्याभ्युपगन्तव्यानि। न चैषा प्रमाविद्यकेनाभ्युपगमेन कथकत्वनिर्वाहः। वस्तुसतः कस्यचिदप्यनभ्युपगमे पुरुष उपेक्षणीयतापत्तेः। तथा च किञ्चिद् वास्तवं वाच्यमेव। एवञ्च तद्वस्तु भिन्नं वा स्यादभिन्नं बा। अत्राद्ये विधेयम्, अन्त्ये निषेध्यतया सिद्धो भेदः।

किञ्चाभिन्नमित्यभेदविशिष्टम् । अभेदश्च स्वाश्रयाद्भिन्नो न वा ? आद्ये सिद्धं नः समीहितम् । अन्त्ये कथं तद्वैशिष्ट्यं धर्मिणि स्यात् । न चानिर्वचनगह्वरप्रवेशो निस्ताराय । न ह्येष गारुडिकमन्त्रवत् दोषो न भाययति । तस्मात् कथकत्वनिर्वाहायाभ्युपगमे सिद्धो भेदः ।

ननु यद्वचसि वाद्युक्तदूषणावगमः स्थेयस्य, स पराजयीति समयबन्धादेव कथकत्वान्न तदर्थं वास्तवं किमभ्युपेयमिति चेत् न, तस्यापि वास्तवं किञ्चिदनङ्गीकारे कथकत्वायोगेन गले पाशिकयापि वास्तवाङ्गीकारात् । अन्ततः सर्वानभ्युपगमस्यापि वास्तवस्याङ्गीकारात् तथा चोभयथापि व्याघातात् । न चाविचारिताभ्युपगमादेव साध्यसिद्धौ न वास्तवत्वमभ्युपगमविषयः । अविचारितेन हेतुना स्वयमाकुलेन साध्यसिद्ध्ययोगात् । न च साध्यसिद्धिरप्यविचारित सुन्दर्येवाचयोर्विरुद्धविचारासहत्व एव निर्भरादिति । विश्वविचारासहत्वस्य सहत्वासहत्वयोर्व्याघातेनास्य दुरभिमानस्यापास्तत्वात् । तथा च वास्तवाभ्युपगमेन सिद्धः कथकत्वानुरोधेनावयोश्चतुर्वर्गाभ्युपगमः ।

एवञ्च चतुर्वर्गाभ्युपगममादाय कथयति ब्रह्माद्वैतवादिन्यपि भेदेन पदमारोपितमेवेति न तस्य तत् प्रत्याख्यानं शोभते । किन्तु सुहृद्भावेन भेदनियोगप्रश्ने यथा प्रमाणवृत्तिर्भेदोऽङ्गीक्रियत इत्युत्तरम् ।

एवञ्चाभावे स्वरूपमेव भेदस्तस्य स्वतो विलक्षणत्वात् । न च स्वतो वैलक्षण्यासम्भवः । तथा सत्यन्येनापि तदसंभवात् । न ह्यविलक्षणं ब्रह्मणा परिलक्षणीक्रियते न तर्हि विलक्षणमपि सिद्धसाधनादिति चेन्न, स्वतो विलक्षणस्यैव वैधर्म्यादिभिः वैलक्षण्यस्य बोधनात् । स्वरूपभेदव्यपदेशस्तु अभेदधीविरोधित्वविषयतया । न

चाभेदविशेषेण परिशेष्यभावविरोधः प्रमेयत्वे प्रमेयत्ववत् प्रामाणिकत्वेनात्माश्रयस्यादोषतया तत्सम्भवात् तत्सम्बन्धसम्भवाच्च । अभावे च भेदविशिष्टबुद्धेश्च सार्वलौकिकत्वात् अतिरिक्तभेदस्य चानवस्थादिना निरस्तत्वात् सिद्धं स्ववैशिष्ट्यम्। एवं च सति न गोत्वाद्यपलापो विशेषणाभ्युपगमात् ।

*नव्यास्तु*, वैधर्म्यमप्यभावे सम्भवति । अन्ततस्तल्लक्षणस्यापि तत्र सत्त्वात् । तच्च भावत्वात्यन्ताभावरूपमतिरिक्तमेव । अभावानुयोगिकस्याभावस्याभ्युपगमात् । अन्यथा भावत्वात्यन्ताभावस्य प्रागभावप्रध्वंसरूपस्वलक्षयाभिन्नतयोत्पादविनाशापत्तेः। किन्तु भावप्रतियोगिकोऽभावो नाभ्युपेयते प्रमाणाभावात् । ततो भेदबुद्धेस्तु स्वरूपेणैवान्यथासिद्धेः ।

प्रत्ययाविशेषादभावप्रतियोगिकोऽप्यतिरिक्तोऽभावात्मा भेद इत्यतिनव्याः ।

तत्र भावेषु यथासम्भवं त्रयोऽपि भेदाः । प्रतियन्ति हि घटोऽयं न पटो मृण्मयश्चेति । न चानवस्था दोषाय प्रामाणिकत्वात् । न च घटप्रत्यक्षावसर एव सकलभेदप्रत्यक्षापातः । प्रतियोगिस्मरणादिविलम्बात् । तत्र स्वरूपभेदस्य लक्षणं तद्रूपतयाऽप्रतीतत्वे सति प्रतीतत्वम् । भिन्नयोस्त्वभेदभ्रमे तद्रूपतयैव प्रतीतेरिति । वैधर्म्यस्य तु तदवृत्तिधर्मवत्वम् । न च प्रमाणप्रमेयवैधर्म्याव्याप्तिर्दोषाय । तौ हि धर्मौ परस्परव्यभिचारिणौ न वा ? आद्येनाव्याप्तिरन्त्येन विरुद्धौ गोत्वसास्नावत्त्ववदिति । अन्योन्याभावस्य च तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वलक्षणम् । अत्रान्योन्याभावः स्वत एवान्यनिरूप्यः इतरौ तु निरुक्तरूपेण ज्ञायमानौ अन्यनिरूपणापेक्षनिरूपणौ सन्तौ भेदौ । न चाश्रयखण्डनं तद्भेदपरिच्चायिते तद्भेदवृत्तेः । अन्यथा कोऽपि धर्मो न स्यात् । तद्वृत्यतद्वृत्ति वा वृत्त्यनुपपत्तेः । न चाभ्युपगमो

निस्तारायेतीत्यर्थप्रवेशात् । तस्मात् प्रत्यक्षपरिकलितभेदमपह्नुवाना श्रुतिर्मुख्यामपहाय जघन्यां वृत्तिमालम्बत इति सिद्धो भेद इति दिक् । ४।१।४३।

## [ फलपरीक्षाप्रकरणम् ]

तदेवमियता प्रबन्धेन प्रेत्यभावे परीक्षिते सम्प्रत्युद्देशक्रमेणाव-सरसङ्गत्या फलपरीक्षाप्रकरणम् । तत्र कथं सर्वजनसिद्धे फले संशय इत्यतः परीक्षाङ्गसंशयप्रदर्शनाय सूत्रम्—

**सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ।४।१।४४।**

निष्पत्तेरिति षष्ठी, दर्शनादिति शेषः । संशयजनकस्वज्ञान-हेतुतया हेतुपञ्चमी वा । पाकादिक्रियाफलमोदनादि सद्यो दृश्यते। कृष्यादिक्रियाफलं तु सस्यादि कालान्तरे । तथा च फलत्वसमान धर्मदर्शनादग्निहोत्रादि फलं सद्योभावि कालान्तरभावि वेति संशयः। न च लोकपक्त्यादेरनन्तरोपलम्भात् तत्फलत्वनिश्चयः स्वर्गफलत्व-श्रुत्या प्रतिघातात् । न वा श्रुतितोऽपि स्वर्गफलत्वनिश्चयः, कर्तृ-विशेषणतया श्रुतस्य स्वर्गस्याप्रधानतयापाततः साध्यत्वानवगमात् । प्रयोजनं तु संसारापवर्गव्यवस्था सद्यः फलत्वे जन्मान्तरानुबन्धा-भावान्न संसारः । तदभावाच्च नापवर्गः । स्वर्गफलत्वे ह्यदृष्टतत्स्थिति-तत्परिपाकादिकल्पना गौरवमिति ।४।१।४४।

लोकपक्त्याद्येव फलम् । न च स्वर्गकामश्रुतिविरोधः, अति-शयितसुखशक्तेन स्वर्गपदेन हेतुलक्षणया चन्दनादिवदभिधानादित्या-क्षिप्तपूर्वपक्षे सिद्धान्तसूत्रम्—

**न सद्यः कालान्तरोपभोग्यत्वात्[1] ।४।१।४५।**

---

१. कलकत्तासंस्कृतकौलेजसंस्थातः प्रकाशिते न्यायदर्शने नैतत् सूत्रं सूत्रत्वेन परिगणितं भाष्यपंक्तितया परिगृहीतम् किन्तु विदुषा सम्पादकेन टिप्पण्यामभि

होत्रादेर्न सद्यः फलं, स्वर्गो हि फलं श्रूयते स च देशान्तरे कालान्तरे चोपभुज्यते यत इत्यर्थः।

न चातिशयितसुखं शक्यम् अतिशयानामननुगमात्। न च सुखत्वावान्तरातिशयत्वेनानुगमः। अतिशयितसुखमात्रस्य स्वर्गपदशक्यतया तदर्थं मासोपवासादावप्रवृत्त्यापत्तेः। तस्य लौकिकसाधारणत्वात्। ननु [सुख]प्रवृत्त्यर्थं स्वर्गपदस्यार्थवादोपनीते सुखविशेषे तात्पर्यमात्रं कल्प्यते शक्यं तु तस्यातिशयितसुखमेव। तेन चन्दनादौ तल्लक्षणयापि स्वर्गपदप्रयोगः स्यादन्यथा तु न स्यादेव, शक्यसम्बन्धाभावादिति चेत् यथाकथञ्चित् सम्बन्धेनैव लक्षणा। तथा चातिशयितसुखशक्यत्वेऽपि स्वर्गार्थिप्रवृत्त्यर्थमर्थवादस्यावश्योपजीव्यतया तदर्थ एव शक्तिः कल्प्यताम् लाघवाय। अन्यथा कल्पनाद्वयापत्तेः।

एवञ्च मुख्यमेव स्वर्गमादाय विधिप्रवृत्तिर्न तु लाक्षणिकम्। न च कल्पनाभिया लक्षणा प्रमाणसिद्धम्। प्रतिश्रुते हवनहेतुत्वे तन्निर्वाहाय अदृष्टकल्पनाया एवौचित्यात्। न च कर्तृविशेषणत्वेनोपस्थितस्य स्वर्गस्य साध्यत्वानवगमः। स्वर्गकामोऽग्निहोत्रं जुहुयादित्यनेन यागः कृतिसाध्येष्टसाधनमिति बोधित इष्टज्ञानमात्रस्याप्रवर्तकत्वादिष्टविशेषाकाङ्क्षायां पुरुषविशेषणकामनाविषयतया श्रुतस्य स्वर्गस्यैव साध्यस्यासाधनाकाङ्क्षेण इष्टत्वेनावगमादिति भावः ।४।१।४५।

अपूर्वकल्पनमपश्यन्नाक्षिपति—

**कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ।४।१।४६।**

---

हितं यदेतत् सूत्रं परिशुद्धौ वृत्त्यादिषु परिगृहीतं सूत्रत्वेन न्यायसूचीनिबन्धे नास्ति। मया तु गङ्गानाथझा सम्पादिते न्यायसूचीनिबन्धे सूत्रमिदमुपलब्धम्।

कालान्तरेणेति फलाधिकरणकालस्याहेतुत्वविवक्षया। कालान्तरे फलस्य नोत्पादः हेतोर्हवनादेर्विनाशादित्यर्थः ।४।१।४६।

समाधत्ते—

**प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् ।४।१।४७।**

यथा रसार्जनद्वारा फलजनकमूलसेकादि वृक्षफलस्य निष्पत्तेः प्राक् व्यापारानुबन्धेनाव्यवहितपूर्ववर्तीति तथाऽदृष्टरूपव्यापारद्वारा तत्र हवनमपि स्यादिति न यागनाशो दोषायेत्यर्थः ।४।१।४७।

हेतुफलभावसिद्धौ सद्यः कालान्तरे वेति विशेषचिन्ता। स एव सर्वथा विचारं न सहत इत्याक्षिपति—

**नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् । ४।१।४८।**

उत्पत्तेः प्राक् फलं नासत् सदसतोर्वैधर्म्यात्। तथा हि फलोपायताज्ञानेन फलार्थिनः साधने प्रवृत्तिः। तच्च फलज्ञानसाध्यं, फलज्ञानं च फलसत्त्वसाध्यमसतोऽभानादिति। प्रवृत्त्यनुरोधादुत्पत्तेः प्राक् फलस्य सत्त्वमङ्गीकरणीयम्। तथा च सतोऽसत्त्वं विरुद्धमिति तदा न तदसत्। नाप्युत्पत्तेः प्राक् सत् सदसतोर्वैधर्म्यात्। वर्तमानस्योत्पादविरोधात्। तदा तस्यासत्त्वं वक्तव्यमिति न तदा सत्त्वं व्याघातादेव। नापि तदा सदसत् सदसतोर्वैधर्म्यात्। एकस्य विरुद्धद्विस्वभावत्वाभावादित्यर्थः ।४।१।४८।

समाधत्ते—

**प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा[1] उत्पादव्ययदर्शनात् ।४।१।४९।**

१. सूत्रांशोऽयमिति केवलमिहैव। भाष्यांशोऽयमिति सर्वत्र दृश्यते।

उत्पत्तिधर्मकमुत्पादि वस्तु उत्पत्तेः प्रागसदित्यद्धा सत्यम् । कुतः ? उत्पादव्ययौ दृश्येते यतः । न च नित्यं सदुत्पादव्ययौ युज्येते इत्यर्थः ।४।१।४६।

फलसाधनताज्ञानं फलासत्त्वेऽपि सम्भवतीत्याह—

**बुद्धिसिद्धं तु तदसत् ।४।१।५०।**

तत् कार्यमुत्पत्तेः प्रागसदेव, बुद्धिसिद्धं बुद्ध्या विषयीक्रियमाणं परिच्चाययतीति । तथा च तज्जातीयसाधनताज्ञाने तदर्थिनस्तत्साधने प्रवृत्तिरित्यर्थः ।४।१।५०।

देहादिभिन्नं नित्यमात्मानं परलोकमसन्तं मन्वानः प्रकृते देशयति—

**आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ।४।१।५१।**

मूलसेकफलयोरेकवृक्षाश्रयत्वात् परम्पराहेतुहेतुमद्भावो युक्तः । कर्मणस्तु हवनादेरेतच्छरीरमाश्रयः स्वर्गादेस्त्वामुष्मिकं तदित्याश्रयव्यतिरेकात् स्वर्गादेः वृक्षफलोत्पत्तिवदित्यसदृशस्त्वदुक्तो दृष्टान्तः । कर्मणो हवनादेर्न स्वर्गफलत्वसाधने हेतुरित्यर्थः ।४।१।५१।

देहाद्यन्यं नित्यमात्मानं मनसिकृत्य समाधत्ते—

**प्रीतेरात्माश्रयत्वादप्रतिषेधः ४।१।५२।**

वैयधिकरण्यं न, प्रीतेः फलस्य यागयत्नस्य चात्माश्रयत्वादित्यर्थः ।४।१।५२।

[शङ्कते]

**न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ।४।१।५३।**

एवमपि व्यधिकरणानां फलत्वात् सुखस्य फलस्य साधन सामानाधिकरण्यं भागासिद्धमित्यर्थः ।४।१।५३।

समाधत्ते—

## तत्सम्बन्धात् तत्फलनिष्पत्तेस्तेषु फलवदुपचारः ।४।१।५४।

पुत्रादिसंबन्धाद्धि सुखादिकं फलमुत्पद्यत इति फलहेतौ पुत्रादौ फलवदुपचारः । यथा सुखादौ फलप्रयोगस्तथा तत्रापि प्राणहेतुष्वन्नेषु प्राणा इतिवत् । तथा च निरुपधीच्छाविषयत्वाद् दुःखाभावसुखे एव फले । ते च साधनसमानाधिकरणे एवेति न भागासिद्धिः ।

ननु पुत्रनिष्ठेनेच्छाविशेषरूपेण गयाश्राद्धेन पितृनिष्ठस्वर्गस्य न सामानाधिकरण्यमिति न हेतुफलयोः सामानाधिकरण्यनियम इति चेत् अत्राप्यपूर्वस्य पितृनिष्ठतया तत्सत्त्वादिति भावः ।४।१।५४।

## [ दुःखपरीक्षाप्रकरणम् ]

अथोद्देशलक्षणक्रमानुरोधाद् दुःखपरीक्षा[ प्रकरणम् ] । तत्र यद्यपि दुःखे तद्धेयत्वे वा सर्वजनसिद्धे न संशयः । तथापि बाधना लक्षणं दुःखम् [।१।१।२०।] इत्युक्तम् । तत् सम्यगसम्यग्वेति संशयः । प्रयोजनं तु लक्षणस्य सम्यक्त्वसिद्धिः । तत्र मुख्यं दुःखं लक्ष्यमेकविंशति भेदभिन्नं वा ? नाद्यः, तद्बाधनारूपत्वस्य लोकत एव सिद्धेः, तदर्थं शास्त्रवैयर्थ्यात् । बाधनाबुद्धिविषयत्वस्य सुखतत्साधनादिगतत्वेनातिव्याप्तेः । द्वितीये यदि बाधनास्वरूपं लक्षणं तदेन्द्रियादावव्याप्तिः ।

अथ तद्धीविषयत्वम् । तद्धीरन्योपसन्धानेन स्वतो वा ? आद्ये आत्मनोऽपि दुःखसाधनतयान्योपसन्धानकबाधनाधीविषयत्वात्, तत्रातिव्याप्तिः । अन्त्येऽसम्भवः । न हीन्द्रियादि स्वतो बाधनारूपम् ।

न च गौणमुख्यसाधारणबाधनाधीविषयत्वेनेन्द्रियादिषु दुःखत्वोपदेश इति वाच्यम् । सुखसंभेदादुपेयत्वसाधनेन प्रतिरोधात् । अन्यथाऽऽत्मनोऽपि हेयत्वापत्तेः । तस्मात् सुखार्थी दुःखमुद्धृत्येन्द्रियादिसाधनकं सुखं संभोक्ष्यते मांसार्थीव कण्टकमपसार्य मांसमित्याक्षिप्तपूर्वपक्षकं सिद्धान्तसूत्रम्—

**विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ।४।१।५५।**

जायते इति जन्म, शरीरेन्द्रियादीनि । तेषामुत्पत्तिर्दुःखमेव भावनीयेति शेषः । कुतः ? विविधबाधनायोगात् । विविधा बाधना हीना मध्यमा उत्कृष्टा क्रमेण मनुष्यतिर्यङ्नारकिणाम् तया योगात् आसत्यलोकादाचावीचेः सर्वत्र दुःखोपप्लवादित्यर्थः । गौणमुख्य साधारणस्य तु दुःखस्य लक्षणमात्मापवर्गान्यप्रमेयत्वम् । मुख्यस्य तु दुःखत्वं जातिरेव । न च दुःखवर्जनेन सुखोपादानं शक्यमिति तदनुषङ्गात् सुखमपि हेयमेव । दुःखभावनाप्रयोजनं चालं बुद्धिद्वारा तृष्णाविच्छेदादिक्रमेणापवर्ग इति भावः ।४।१।५५।

अथ सुखादिषु दुःखोपदेशो दुःखभावनापरः कथं ? सुखप्रत्याख्यानपर एव कस्मान्न भवतीत्यत आह—

**सुखस्याप्यन्तरालनिष्पत्तेः ।४।१।५६।**

निष्पद्यते खलु बाधनान्तराले सुखमिति तत्प्रत्याख्यानं बाधितमित्यर्थः ।४।१।५६।

इतश्च दुःखभावनोपदेशो न सुखस्य प्रत्याख्यानमित्याह—

**बाधनाऽनिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ।४।१।५७।**

अप्रतिषेध सुखस्येत्यनुषज्यते । वेदयतः इदं मे सुखसाधनमिति जानतो यत् पर्येषणं सुखदुःखार्था प्रवृत्तिस्तद्दोषात् बहुनर

प्रतिबन्धाद्युपप्लवात् । बाधनाया दुःखस्यानिवृत्तिरुत्पादो यतोऽतो दुःखभावनोपदेशोऽयं न तु सुखस्योत्पत्त्यर्थमुपजीव्यस्य प्रत्याख्यान- मित्यर्थः ।४।१।५७।

ननु दुःखभावनोपदेशो व्यर्थः । अयमेव हि विचार्य प्रेक्षया निर्वर्त्स्यतीत्यत आह—

दुःखविकल्पे सुखाभिमानाच्च ।४।१।५८।

दुःखहेतुपरदारगमनादौ रागिणां स्वारसिकात् सुखाभिमानात् तत्र प्रवृत्तिर्मा भूदित्येतदर्थोऽयमारम्भ इत्यर्थः ।

यद्यप्येवमुपदिश्यमाना अपि रागिणो न निर्विण्वन्ति तथापि विवेकिनः प्रत्युपदेशोऽर्थवानिति भावः ।४।१।५८।

## [ अपवर्गपरीक्षाप्रकरणम् ]

अथ क्रमप्राप्तापवर्गपरीक्षाप्रकरणम् । तदत्यन्तविमोक्षोऽपवर्ग [१।१।२१।] इति लक्षणवाक्यं सम्यङ् न वेति संशयः । प्रयोजनमपवर्ग- सिद्धिः । पूर्वपक्षसूत्रम्—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ।४।१।५९।

अप्रत्यक्षेऽपवर्गेऽनुमानम् आगमो वा मानम् ? तच्चानुष्ठान कालाभावेन प्रतिहतमित्यपवर्गाभावे लक्षणमाश्रयासिद्धम् । तथा हि श्रूयते 'जायमानो ह वै ब्राह्मणस्त्रिभि ऋणैऋ र्णवान् जायते ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः' मुच्यत इति शेषः । मृत्युना ह्‌ वेति च श्रुतिः । तथा च जन्मारभ्य मरणपर्यन्तं ब्रह्मचर्यप्रजायज्ञ रूपर्णवानेव पुरुषो भवति । न च ऋणवतैव मोक्षानुष्ठानम् ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षेन मोक्षमिच्छन् व्रजत्यधः ।। [मनु० ६।३५]

इत्यादि वाक्येनापाकृतर्णस्य मोक्षानुष्ठानविधानात् । एवञ्च रागद्वेषात्मकक्लेशानुविद्ध एव पुरुषः सदा धर्माधर्मान्यतरजनक प्रयत्नरूपप्रवृत्तिमानेव सदेत्यनुष्ठानाभावाच्च मोक्षाभाव इत्यर्थः ।४।१।५९।

ऋणानुबन्धं समाधत्ते—

**प्रधानशब्दानुपपत्तेर्गुणशब्देनार्थवादो निन्दाप्रशंसोपपत्तेः ।४।१।६०।**

अयं तावदर्थवादो विध्येकवाक्यतया प्रवृत्तः । विधिश्च न जातमात्रमुद्दिश्य किन्त्वधिकारिणम् । नहि 'यावज्जीवमग्निहोत्रं जुहुयात्' 'अहरहः स्वाध्यायमधीयीत' 'अपत्यमुत्पादये'दिति विधिभिः कुमारा अधिक्रियन्ते । साङ्गप्रधानोपसंहारसमर्थस्यैवाधिकारात् । अवित्तादिना शिष्टानां तदभावात् । तथा च तदेकवाक्यतामापन्नोऽर्थवादोऽपि तस्यैव । तदकरणे निन्दामाह ।

किञ्च पत्न्यवेक्षितमाज्यं भवति । पत्न्य उद्गायन्ति 'क्षौमे वसानावग्नीनादधीयाता'मित्यादि श्रुतिभिर्यैश्च विधीनां गृहस्थपरतैव पर्यवस्यति । एवं प्रजाविधीनामपि ऊर्ध्वरेतसस्तत्रानधिकारात् । ब्रह्मचर्यविधयस्तु यद्यप्यसमावृत्तपरास्तथापि ब्रह्म वेदस्तस्य चरणमध्ययनं ब्रह्मचर्यं तच्च पञ्चमहायज्ञाभ्यन्तरे प्रात्यहिकत्वेन गृहस्थस्यैव विहितम् । यद्यपि प्रथमं वेदोपादानं प्रथमाश्रम एव तथापि तत्रोपादानमात्रं श्रूयते न तु तस्य प्रात्यहिकत्वमपीति । तथा हि श्रौतं जायमानपदं गृहस्थे गौणं गुणश्चापूर्वसम्बन्धः । अपूर्वश्च जरायुबहिर्भागवत्पत्नी । एवमृणपदमपि गौणमेव न तु मुख्यं, प्रतिदेयतया पर विसृष्टस्य स्वत्वोत्पादकस्वीकाराभावात् । गुणश्चावश्यापाकरणीयत्वम् । स्वाधीने शब्दप्रयोगे किमित्यवाचकेनोपन्यास इत्यत आह— निन्दाप्रशंसोपपत्तेः । अनपाकरणे निन्दामपाकरणे प्रशंसां कर्तुं तदनेन

परिणयात् प्रागृणोऽनुबन्धो दर्शितः । नापि गार्हस्थ्यावस्थापि सकला ऋणानुबद्धा । अन्यथा 'मृत्युना ह वे'त्यनेनैव कर्मणो मरणान्तत्वे दर्शिते 'जरया ह वेति' जरान्तत्वं नादर्शयिष्यतोऽवसीयते । सत्यर्थित्वे कर्मणां मरणान्तत्वम् । असति तु जरान्तत्वं बार्द्धकान्तत्वं मुमुक्षावधित्वमिति यावत । न च ऋणवादोऽप्यशक्त्युपलक्षकः क्षीरहोता जुहुयाद्धनेन सपरिक्रीतः अन्तेवासी वा जुहुयात्, ब्रह्मणा हि सपरिक्रीत इत्यादि ब्राह्मणेन स्वयमशक्तस्य बाह्यशक्तिविधानात् ।

एतेन यदुक्तमृणापाकरणेन पुरुषायुषपर्यवसानान्न मोक्षाय प्रणिधानावसर इति तदपाकृतमिति भावः ।४।१।६०।

अर्थित्व एव कर्मणां मरणान्ततेत्यत्र युक्त्यन्तरमाह—

समारोपणादात्मन्यप्रतिषेधः ।४।१।६१।

अपवर्गस्य ऋणानुबन्धेन प्रतिबन्धो न । आत्मनि अग्नेः समारोपणात् समारोपणश्रवणात् । श्रूयते हि प्राजापत्यामिष्टिं निरूप्य तस्यां सार्ववेदसं हुत्वा स्वात्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेदिति । तथा च नाग्निहोत्रादीनां मरणान्ततेति न प्रतिरोध इत्यर्थः ।४।१।६१।

युक्त्यन्तरमाह—

पात्रचयान्तानुपपत्तेश्च फलाभावः ।४।१।६२।

अविशेषेण फलस्य कर्तृप्रयोजकाभावः । कुतः ? पात्रचयान्तानुपपत्तेः । न हि अगृहस्थानां प्रमीतानामन्त्येष्टौ यथोद्देशं प्रत्यङ्गं निबन्धनपात्राणि निधीयन्ते । यदि च कर्मणां मरणान्ततैव स्यात् तदाऽगृहस्थानामपि पात्रचयान्तता स्यात् । नचेष्टापत्तिः, 'ते ह स्म वै पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नायमात्मा नायं लोक' इति । 'ते ह पुत्रैषणाया वित्तैषणाया लोकै-

षणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ती'त्येषणाव्युत्थानश्रुतिविरोधादित्यर्थः।

तथा च पूर्वसूत्रेण प्रव्रज्याविधानश्रुतिर्दर्शिताऽनेन त्वेषणाव्युत्थानश्रुतिविरोधो दर्शित इत्यादौ निरुक्तम्।

पात्रचयश्चैवं यत् प्रमीतयजमानस्य मुखे घृतपूर्णां स्रुचं, नासायां घृतपूर्वं दक्षिणाग्रं स्रुवं, पादयोः प्रागग्रामधरारणिं, शिरसि प्रागग्रामुत्तरारणिं, वामपार्श्वे सूर्पं, दक्षिणपार्श्वे चमसमूरुद्वयमध्ये मुसलोदूखले, जघ्नावनीकं च न्यसेत्। तथा च *छन्दोगपरिशिष्टे*—

ततोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे।
आज्यपूर्णां स्रुचं दद्याद्दक्षिणाग्रं नसि स्रुवम्।
पादयोरधरां प्राचीमरणिं शिरसीतराम्।
पार्श्वयोः सूर्पचमसौ सव्यदक्षिणयोः क्रमात्।
मुसलेन समं न्युब्जमन्तरुर्वोरुदूखलं।४।१।६२।

क्लेशानुबन्धं दूषयति—

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः।४।१।६३।**

यथा सुषुप्तस्य स्वप्नज्ञानविरहदशायां क्लेशाभावस्तथा शून्योऽपवर्गोऽपि स्यात्। जीवन्मुक्तदशायामपि क्लेशो न स्यादित्यर्थः।४।१।६३।

प्रवृत्त्यनुबन्धं समाधत्ते—

**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य।४।१।६४।**

रागादिशून्यस्य पुरुषस्य क्रिया धर्माधर्मोत्पत्तये न प्रभवतीत्यर्थः ४।१।६४।

आक्षिपति—

**न क्लेशसन्ततेः स्वाभाविकत्वात् ।४।१।६५।**

क्लेशसन्ततेर्विच्छेदो न, कुतः ? क्लेशसन्ततेः स्वाभाविकत्वात् अनादित्वेनोच्छेत्तुमशक्यत्वादित्यर्थः ।४।१।६५।

सिद्धान्त्येकदेश्याह—

**प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम् अणुश्यामतानित्यत्ववद्वा[1] ।४।१।६६।**

यथा प्रागुत्पत्तेरभावः प्रागभावोऽनादिरथ च विनाशी एवं क्लेशसन्ततिरपि। यथानादिरणुश्यामता निवर्तते तथा क्लेशसन्ततिरपीति। तथा चानादित्वमनैकान्तिकमित्यर्थः। श्यामं रूपमित्युपक्रम्य यदेव तच्छ्यामं तदग्नस्येत्यागमः। पार्थिवानामणूनां श्यामतामनादिमाह अणुपदेन मृदोऽभिधानात्। मृत्परमाणुरूपैरवयविनियमाभावादिति भावः।

केचित्तु भिन्नवक्तृकमिदं सूत्रद्वयमिति। तदसत् वादिभेदेन वाक्यार्थानुपपत्तेर्मानाभावाच्च ।४।१।६६।

अनित्यता हि भावत्वे सति विनाशिता। न चायं प्रागभावे न चाणुश्यामताप्यकार्येत्युभयमुपेत्य परमसिद्धान्त्याह—

**न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ।४।१।६७।**

कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेत्यनुक्तसमुच्चयार्थश्चकारः। सङ्कल्पो मिथ्याज्ञानं तन्निमित्तका रागद्वेषमोहा इति तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तौ अनादयोऽपि रागादयः कारणोच्छेदात् निवर्त्स्यन्ति।

---

१. वृत्तिकृदयमभिनववाचस्पतिमिश्रः सूत्रद्वयतयान्यत्र प्रसिद्धयोरेकसूत्रत्वमङ्गीकरोति।

तथा चानुच्छेद्यत्वेऽनादित्वमप्रयोजकमित्यर्थः। क्लेशसन्ततिः सन्तन्यमानाः क्लेशा वा तद्वृत्तिधर्मो वा? आद्ये क्वानादित्वं कार्यत्वादन्त्येऽविवादः। क्लेशत्वस्य मयापि विनाशानभ्युपगमादिति भावः।

एवञ्च ऋणक्लेशप्रवृत्त्यनुबन्धे निरस्ते कालात्मान्यावृत्ति दुःखध्वंसः दुःखप्रागभावाधिकरणाधिकरणः ध्वंसत्वात् घटादिध्वंसवदित्यनुमानादपवर्गसिद्धौ तदत्यन्तविमोक्षोऽपवर्ग इति लक्षणं नाश्रयासिद्धमिति फलितः प्रकरणार्थः।४।१।६७।

*इति महामहोपाध्याय श्रीवाचस्पतिविरचिते*
*न्यायतत्त्वालोके*
*चतुर्थाध्यायस्य प्रथमाह्निकम्।*

---

# चतुर्थोऽध्यायः ।

## द्वितीयमाह्निकम् ।

### [तत्त्वज्ञानोत्पत्तिप्रकरणम्]

तदेवं प्रमाणप्रमेयसंशयाः साक्षात् प्रयोजनादयस्तु 'यत्र संशय' [२।१।७।] इत्यतिदेशादिति षोडशापि पदार्थाः परीक्षिताः । यद्यपि प्रथमाध्यायशेषे छलमपि साक्षादेव परीक्षितम् तथापि तत्पूरणार्थमित्यसत्कल्पतया नात्रोल्लिखितमिति द्रष्टव्यम् । सम्प्रति त्ववसरसङ्गत्या तत्तत्त्वज्ञानपरीक्षा । तथा हि अपवर्गसाक्षाद्धेतुत्वेन प्रथमं तत्त्वज्ञानपरीक्षाप्राप्तौ निरूप्यतया प्रमेयपरीक्षाया बुभुत्सिततमत्वेन तया प्रतिबन्धादथ तत्पर्याप्तौ प्रतिबन्धकजिज्ञासापगमात् । न चैतदाह्निकस्य ज्ञानपरीक्षकत्वेन प्रवृत्त्यादिषट्कपरीक्षाध्यायानन्तर्भाव इति वाच्यम् । ज्ञानं हि निर्विषयं परीक्षितुं न शक्यमिति सविषयकमेव परीक्षितव्यम् । तथा च ज्ञानपरीक्षापि तद्विषयं प्रवृत्त्यादि गोचरयत्येवेति नाध्यायबहिर्भावः । नन्वेवं प्रमाणाद्यपि सा गोचरयत्येवेति प्रवृत्त्यादिपरीक्षावत् प्रमाणादिपरीक्षाप्येतदाह्निकार्थः स्यादिति चेत्-न, प्रवृत्त्यादिषट्कपरीक्षकाध्यायैकवाक्यतया प्रवृत्तस्य हि द्वितीयाह्निकस्य तावदेव परीक्षार्थतावच्छेदिका यावती नाध्यायार्थाभ्यन्तरे निविशते । तादृशी च प्रवृत्त्यादिर्यद्विषयतयैव तत्त्वज्ञानपरीक्षा भवतीति सैवाह्निकार्थ इति ।

*प्रभाकरोपाध्यायस्तु* तत्त्वज्ञानविषयत्वेन प्रवृत्त्यादिपरीक्षैतदाह्निकार्थः । प्रवृत्त्यादिपरीक्षायामपि तात्पर्यमिति, तदसत् । अर्थादेव

ज्ञानस्य विषयविशिष्टत्वप्राप्तौ तत्रापि तात्पर्यकल्पने गौरवात्। अन्यथा तत्त्वज्ञानविषयतया प्रमाणादिपरीक्षाप्येतदाह्निकार्थः स्यात्। तद्विषयतत्त्वज्ञानपरीक्षाया अप्याकाङ्क्षितत्वादिति। तत्र किं विषयं किं लक्षणं कथमुत्पद्यते कथं वर्द्धते कथं परिपाल्यते चेत्यपेक्षायां षट्-प्रकरणानि। तेष्वपि प्रथमं निमित्तानुव्यञ्जनसंज्ञा। विषयाणां रूपादीनां दोषनिमित्तताप्रदर्शनद्वारा विषयकथनेन तदुत्पत्तेर्भिन्नलक्षणस्य विषयस्य प्रदर्शनाथादौ तत्त्वज्ञानोत्पत्तिप्रकरणम्।

नन्वात्मादीनां तत्त्वज्ञानं साक्षादुपयोगि प्रमाणादीनां तु तदङ्गतयेत्युक्तं [वार्त्तिके १।१।१] तदयुक्तम्। तथा हि षोडशानामेव पदार्थानां तत्त्वज्ञानमपवर्गहेतुः यस्य कस्यापि वा? आद्ये प्रतिस्विक-रूपेण सामान्यरूपेण वा? नाद्यस्तेषामानन्त्येनाशक्यज्ञानत्वात्। न द्वितीयः, प्राणिमात्रस्य वस्तुतत्त्वादिना तत्संभवात्। अत एव नान्त्यः, तत्त्वज्ञानाविषये मिथ्याधीसत्त्वे संसारतादवस्थ्याच्चेत्यादिकपूर्व-पक्षकं सिद्धान्तसूत्रम्—

## दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः।४।२।१।

आत्मभ्रमविषयीकृताः शरीरादय एव दोषनिमित्तानीति, तेषामेव तत्त्वज्ञानादात्मभेदाध्यवसायादहङ्कारस्य देहादिष्वात्मभ्रमस्य सवासनस्य संसारबीजस्य निवृत्तिरिति तदनुकूलतया प्रमाणादितत्त्व-धीरिति।

तथा च शरीरादित्वेन प्रमेयाणां तदनुकूलानां च प्रमाणादीनां प्रातिस्विकेन रूपेण तत्त्वधीरपवर्गायेति न यथोक्तविकल्पावकाश इत्यर्थः।

एवञ्च स्वभेदेन शरीरादीन्यध्यवस्य तेषु न स्निह्यति प्रत्युत दुःखानुबन्धीन्येतानीति भावयन् द्वितीयसूत्रोक्त [१।१।२।] क्रमेणा पवृज्यत इति भावः।४।२।१।

ननु प्रयतमानस्यापि मनश्चाञ्चल्यान्न समाधिरतः प्रसंख्यानानुपूर्वीकथनाय सूत्रम्—

**दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ।४।२।२।**

सङ्कल्पकृता मिथ्याज्ञानविषयीकृता रूपादयः रञ्जनीय कोपनीयविष[या] दोषनिमित्तं रागादिहेतवः । सुन्दरीयमिति हि मिथ्याध्यवस्यन् रज्यति, शत्रुरयमिति द्वेष्टि । अतः प्रथमं रूपादय एव हेयतया भाव्यास्ततो देहादय आत्मभिन्नतया हेयत्वेन भाव्या इति क्रमेण निश्चलसमाधिरित्यर्थः ।४।२।२।

ननु मृगाक्षीयमित्यादेस्तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तावपि रागादितादवस्थ्यमित्यत आह—

**तन्निमित्तं त्ववयव्यभिमानः ।४।२।३।**

तु यतः, अवयव्यभिमानः उपादेयत्वेनावयविज्ञानं, तन्निमित्तं रागादिजनकं सुदतीयमित्यादिनिमित्तसंज्ञां मृगाक्षीयमित्याद्यनुव्यञ्जन संज्ञां चोपासीनस्य रागादि विवर्धते । तथा हि—

बाला शारदशर्वरीपरिवृढस्पर्धिप्रसन्नानना
खेलत्खञ्जनलोचना मधुसुधानिस्यन्दिदन्तच्छदा ।
निस्सीमस्तनगण्डशैलयुगलव्यालुप्तवक्षःस्थला
यूनामुत्सवमातनोतु वचनव्यापारपारङ्गमम् ॥
एतौ चतुर्दशसु वा भुवनेषु हैमौ
राज्याभिषेककलशौ कुसुमायुधस्य ।
वैदूर्यमण्डितमुखौ नवनीरजाक्षि—
वक्षोरुहौ मनसि सम्पदमारभेते ॥

इति हि मूढा रज्यन्तः प्राहुः ।

इयञ्च शुभसंज्ञा मांसास्थिशोणितपूयोच्चारादिसमाहारो नरक

मिव स्त्रीत्यशुभसंज्ञाभावनेन निवर्त्यते। तथा च संसाररूपबलवदनिष्ट-साधनत्वेनानुपादेयायामेव योषिति मृगाक्षीत्युपादेयत्वज्ञानं भ्रम एवेति न दोष इत्यर्थः।

तथा च प्रथमसूत्रेणात्मनः शरीरादिभेदाध्यवसायस्तत्त्व-ज्ञानमिति स्वरूपमुक्तम्। द्वितीयेनोत्पत्तिप्रकार उक्तः। तृतीयेन शरीरादयस्तद्विषयाः संसारहेतव इति। त एव तत्त्वधीविषया मोक्षहेतव इति वदता तद्विषय उक्त इत्यवधेयम्।४।२।३।

## [ अवयविप्रकरणं प्रासङ्गिकम् ]

तन्निमित्तं त्ववयव्यभिमान [४।२।३] इति सूत्रेण स्मारित मवयविनं *सौगता* न सहन्त इति प्रासङ्गिकमवयविप्रकरणम्। यद्यपि द्वितीयेऽवयवी व्यवस्थापित एव तथापि स्वयुक्तिदार्ढ्येन *सौत्रान्तिक वैभाषिकयो*राभ्यामवयविनि निराकृते परमाणुं निराकरिष्यामी त्ययत्नादेव विज्ञानाद्वैतसिद्धिरित्यभिमानाद् *योगाचारस्य* च प्रत्यव-स्थानम्। तत्र विचारानुकूलसंशयप्रदर्शनाय सूत्रम्—

**विद्याविद्याद्वैविध्यात् संशयः।४।२।४।**

उपलब्धिर्विद्यानुपलब्धिरविद्या। तयोर्द्वैविध्यं विद्यमाना विद्यमानविषयता। तथा हि सदुपलभ्यते यथा तडागतोयम्। असदु-पलभ्यते यथा मरुमरीचिकायामुदकम्। सन्नोपलभ्यते यथा निखात-निध्यादि। असन्नोपलभ्यते यथाश्वे शृङ्गम्। तदेवमुपलभ्यमानत्वेऽ नुपलभ्यमानत्वे च सत्त्वासत्त्वसन्देहः।

यद्वा विद्या तत्त्वधीः, अविद्या भ्रमः। एवं रूपं यद् द्वैविध्यं तस्मात् धियां द्वैरूप्यं दृष्टमिति धीत्वादवयविधीरपि विद्याऽविद्या-वेति संशयः।४।२।४।

यद्यप्यवयविधर्मिकः संशयो न युक्तः सिद्ध्यसिद्धिव्याघातात्। तथापि मूर्तत्वं परमाणुत्वव्याप्यं न वेति प्रथमव्याख्याने पर्यवसितः। अत्र संशयात् पूर्वपक्षो विपरीतावधारणाद् वा ?

आद्य आह—

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ।४।२।५।

द्वितीयाध्यायोक्तहेतुना प्रकर्षेण साधितत्वात् विशेषदर्शनादवयविनि न संशय इत्यर्थः ।४।२।५।

द्वितीयमाश्रित्य पूर्वपक्षयाह—

वृत्त्यनुपपत्तेरपि [तर्हि] न संशयः ।४।२।६।

अपिरवधारणे, प्रतिबोधाभिप्रायेण समुच्चये वा वृत्त्यनुपपत्तेर्व्यतिरेकावधारणादेवासंशयः। तथा हि अवयवी अवयवेषु कात्स्न्र्येन वर्तते एकदेशेन वा। नाद्यः परमाणुवैषम्यात्। अन्त्येऽपि तेनैवान्येन वा ? नाद्यः स्ववृत्तिविरोधात्। नान्त्योऽवयवस्यावयवान्तरावृत्तित्वादित्यर्थः ।४।२।६।

न कात्स्न्र्यैकदेशाभ्यां किन्तु स्वरूपेणावयवी वर्तते इत्याशङ्क्य पूर्वपक्षयाह—

पृथक् चावयवेभ्योऽवृत्तेः ।४।२।७।

चः समुच्चये। अवयव्यभाव इति वर्तते। अवयवेभ्यः पृथगप्यवयव्यभावः, कुतः ? अवृत्तेः। न ह्यवयवी अवृत्तिर्भवति नित्यत्वप्रसङ्गादित्यर्थः ।४।२।७।

न ह्यत्यन्तभेदे गवाश्वयोरिव, नाप्यत्यन्ताभेदे घटस्येव धर्मधर्मिभाव इत्यवयवभिन्नाभिन्नं तद्धर्ममात्रमवयवीति वृत्तिरेव न, क्व विकल्प इति वादिनं प्रति पूर्वपक्षयाह—

**न चावयव्यवयवाः ।४।२।८।**

अवयवाश्च नावयवी अभेदे मत्वर्थीयार्थासम्भवात् । न च भेदाभेदो विरोधादित्यर्थः ।४।२।८।

सिद्धान्त्याह—

**एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ।४।२।९।**

अनेकस्याशेषता कात्स्न्यं । नानाभूतानां किञ्चित्त्वमेकदेशत्वम् । एतच्च भेदनियतम् । न चावयवी भिन्न एकत्वादत एकस्मिन्नवयविनि भेदाभावाद् भेदशब्दप्रयोगः कात्स्न्यैकदेशविकल्परूपो नोपपन्नः । ततश्च वृत्तिप्रश्नोऽयुक्तोऽवयव्यसिद्धिराश्रयासिद्धिश्चेत्यर्थः ।४।२।९।

इतश्च वृत्तिविकल्पो न युक्त इत्याह—

**अवयवान्तरभावेऽप्यवृत्तेरहेतुः ।४।२।१०।**

अवयवी एकदेशेन स्वावयवेन वर्तत इति साध्ये अवयवान्तराभावादित्यहेतुः । कुतः ? अवयवान्तरभावेऽप्यवृत्तेः । अवयवान्तरसंभवेऽपि तस्यैव परं वृत्तिरायाति, न तु तदवच्छेदेनावयविनोऽपि । नागृहीतविशेषणान्यायात् । तथा चावयवान्तरस्य सम्भवेऽसम्भवे च नैकदेशेनावयविवृत्तिरित्यवयवान्तराभावादित्यसमर्थमिति व्याप्यत्वासिद्धो हेतुरित्यर्थः ।

ननु कात्स्न्यैकदेशाभ्यां मा वर्ततां कथं पुनर्वर्तत इति चेत् ? स्वरूपेणैव । तन्तुषु पट इत्यनुभवात् । यथा गोपिण्डे गोत्वं परिसमाप्य वर्तते असमाप्य वा ? आद्ये पिण्डान्तरे तदभावापातोऽन्त्ये संयोग-

वदेकधर्मिग्रहे तदग्रहपात इति दूषणे वर्तत एवोत्तरम्। तथापि अत्र तन्तुषु पटात्यन्ताभावो नास्तीत्यर्थः। ननु यद्यवयवी पृथक् स्यात् तदा तद्रूपमप्यवयवरूपात् पृथगुपलभ्येत। उपलभ्यत एवाचित्रावयवेऽवयविनि चित्रमिति। न च चित्रासिद्धिरप्रत्यक्षत्वापातात्। न च गुणविरोधेनानारम्भः प्रत्यक्षत्वं च रूपवत्समवायात्। कल्पनायाः साक्षादुपपादकविषयत्वात्। त्र्यणुकादारभ्य चित्रगुणे त्र्यणुकपर्यन्तमरूपत्वे रूपाध्यक्षताविरोधात्। गुणविरोधश्च न प्रातिस्विकस्थलेऽवधृतसामर्थ्यान्नानारूपाणामेकत्र प्राप्तौ अहमहमिकया रूपारम्भे समूहालम्बनवदुपपत्तेः। न च तुल्यत्वाच्चित्ररसापातः। तत्र रसाभावेऽप्युपपत्तेरत्र तु न तथेति भावः।४।२।१०।

सर्वग्रहणमवयव्यसिद्धेरिति [२।१।३४] यदवयविसाधनमुक्तम्। तत्र पूर्वपक्षयाह—

## केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः।४।२।११।

यथा तैमिरिकं प्रति प्रत्येकमयोग्या अपि केशाः समूहितास्तैरुपलभ्यन्ते तथाणवोऽपि समूहिता उपलप्स्यन्त इति न सर्वाग्रहणमित्यर्थः।४।२।११।

सिद्धान्त्याह—

## स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः।४।२।१२।

इन्द्रियस्य पटुमन्दभावात् विषयग्रहणस्य पटुमन्दभावः।४।१।१२।

अपि च योऽयमवयवेष्ववयविनो वृत्तिविकल्पानुपपत्त्यावयव्यभाव आपाद्यते स प्रलयाद्वा निवर्तते परमाणुतो वा अनिवर्ती वा ? आद्ये दूषयति—

**अवयवावयविप्रसङ्गश्चैवमा प्रलयात् ।४।२।१३।**

यथा वृत्तिविकल्पो घटादौ तथा तदवयवपरम्परायामपीत्येवं रूपोऽवयवावयविप्रसङ्गश्च शून्यतायां व्यवतिष्ठते । तथा च दर्शनविषयस्याप्यभावे विकल्पः कमालम्ब्य जायेत । एवं परमाणुपर्यवसानेऽपि । तेषामतीन्द्रियत्वेन दर्शनानारोहात् । न च तथोत्पन्नाः परमाणवो दृश्याः क्षणभङ्गभङ्गात् । तथा चोपजीव्यव्याकोपात् व्याहतो विकल्प इत्यर्थः ।४।२।१३।

प्रलयश्च नेत्याह—

**न प्रलयोऽणुसद्भावात् ।४।२।१४।**

समवाय्यसमवायिनाशयोर्द्रव्यनाशकयोरभावान्नाणुनाश इति न प्रलय इत्यर्थः ।४।२।१४।

अन्त्यं दूषयति—

**परं वा त्रुटेः ।४।२।१५।**

वाकारो यथाश्रुतविकल्पस्फोरणाय । त्रुटेस्त्रसरेणोः परमूर्ध्वमपि चेदवयवा अनन्तास्तदा दृश्यमानस्तौल्याधिकस्तौल्यप्रसङ्गः प्रत्यक्षावयवत्वप्रसङ्गश्चेत्यर्थः ।

तथा च वृत्तिविकल्पोऽनन्तः प्रलयान्तो वा न सम्भवति किन्तु परमाण्वन्तः, सोऽपि विकल्पोऽवयविनि न लगति, भेदाभावादिति । सिद्धोऽवयवीति फलितार्थः ।४।२।१५।

## [निरवयवत्वप्रकरणम्]

अथोपोद्घातिकं निरवयवप्रकरणम् । यद्यपि त्रुटेरनित्यत्वे

परमाणोरप्यनित्यत्वेऽप्यवयवसिद्धिर्भवत्येवेति नोपोद्घातः किन्तु प्रसङ्ग एव, तथापि तदनुपपत्तिरिति पूर्वपक्षसूत्रे 'न प्रलयोऽणुसद्भावात्। परं वा त्रुटे'रिति ४।२।१४।१५। सूत्रद्वयार्थस्य प्रकृतस्यैव निरवयवपरमाणोराक्षेपात्। तत्र मूर्तत्वं निरवयववृत्ति न वेत्यादि विप्रतिपत्तौ *योगाचार* आह—

**आकाशव्यतिभेदात्तदनुपपत्तिः ।४।२।१६।**

तस्य निरवयवस्याणोरनुपपत्तिः। कुतः, आकाशव्यतिभेदात् आकाशेनान्तःसम्बन्धात्। यद्ध्यन्तराकाशे सम्बद्धं तत्सावयवमनित्यं च। यथा घटादीत्यर्थः ।४।२।१६।

परमाणोरन्तराकाशमेव नेत्यत्राह—

**आकाशासर्वगतत्वं वा ।४।२।१७।**

यदि परमाणोरन्तर्नाकाशं तर्हि तदसर्वगतं प्राप्तम्। सेयमुभयतः पाशा रज्जुरित्यर्थः।

न चाणोरनवयवत्वेनान्तरेव नास्ति किमसंबन्धादसर्वगतता। अन्तः शून्यस्य द्रव्यस्यानुपलम्भात् तत्त्वव्याघातादिति भावः ।४।२।१७।

सिद्धान्त्याह—

**अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ।४।२।१८।**

अन्तरिति बहिरिति च कार्यद्रव्यस्य कारणान्तरवचनम्। पिहितो ह्यवयवोऽन्तः पिधायको बहिरिति। अतोऽकार्येऽणौ तदभावोऽन्तरभावो निरवयवत्वात्। तथा चान्तः संबन्धो व्यतिभेदः स्वरूपासिद्ध इत्यर्थः।

यद्यप्यन्तःसंबन्धेन पूर्वपक्षे तदेव निरस्यं बहिर्निरसनं त्वधिकम् । तथापि तदनुबलनन्यायान्न तत्पूर्वपक्षाक्षेपाभिप्रायेणेत्य-वधेयम् ।४।२।१८।

आकाशासर्वगतत्वं वेति ।४।२।१७। दूषयति

**शब्दसंयोगविभवाच्च सर्वगतत्वम् ।४।२।१९।**

सर्वे शब्दा आकाशे विभवन्ति जायन्ते सर्वमूर्तसंयोगात्तस्मादा-काशः सर्वगतः । न तु यन्नास्ति तत्संबद्धोऽपि सर्वगतत्वार्थ इत्यर्थः ।४।२।१९।

नन्वाकाशस्य सकलमूर्तसंयोगित्वे तेन प्रसवमूर्तानां व्यूहना-विष्टम्भने स्यातां नावादिनेव जलादेः । न चैवम् । तस्मान्न तत् सर्व-गतमत आह—

**अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ।४।२।२०।**

सावयवेन हि अन्यत् स्वसंयोगि विपरीताकारं प्रतिबद्धगतिकञ्च क्रियते । आकाशञ्च न सावयवमतोऽव्यूहावष्टम्भौ व्योम्नि सिद्धौ । एताभ्यां च विभुत्वमतोऽव्यूहादौ सावयवत्वाभावो हेतुर्न सर्वगतत्वा-भाव इति न व्यूहनादिना असर्वगतत्वसाधनमव्याप्तेरित्यर्थः ।४।२।२०।

पूर्वपक्षयाह—

**मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ।४।२।२१।**

चस्त्वर्थः सिद्धान्तवारणे । मूर्तिमतामिति यद्यपि सम्बन्धि-तयोपात्तं तथापि हेतुपरमेव हेतुगर्भविशेषणत्वात् । तथाभिधानं तु पक्षधर्मताद्योतनाय । मूर्तिश्चापि द्रव्यस्य षोढा परिमाणम्, अणुमहद्-दीर्घह्रस्वपरमह्रस्वपरमाणुभेदात् । संस्थानं त्रिकोणचतुरस्रपरि-मण्डलादिरवयवसंयोगविशेषः । तेन द्व्यणुकावयवाः सावयवाः

मूर्तिमत्त्वात् संस्थानवत्त्वाच्च। घटादिवदिति। पुनः सावयवास्ते प्रसक्ता इत्यर्थः।४।२।२१।

युक्त्यन्तरमाह—

**संयोगोपपत्तेश्च।४।२।२२।**

अवयवसद्भाव इत्यनुषज्यते। मध्ये सन्नणुः पूर्वपराणुभ्यां संयुज्यमानस्तयोर्व्यवधायकः। व्यवधायकत्वं चावयविधर्म इत्यर्थः।४।२।२२।

सिद्धान्त्याह—

**अनवस्थाकारितत्वादनवस्थानुपपत्तेश्चाप्रतिषेधः।४।२।२३।**

मूर्तिमत्त्वं सावयवत्वव्याप्यं न वा? अन्त्येऽप्यवयवधाराविश्रान्तिर्निरवयवे वा प्रलये वा विभागे वा। आद्ये मूर्तिमत्त्वमनैकान्तिकम्। तत्रैव मध्यमे समवायादिनाशानां तन्नाशकानामभावे प्रलयासिद्धिरेव। भावे वा सिद्धो निरवयवोऽवयव इति पुनरनैकान्तिकमेव। अन्त्ये विभज्यमानाभावे कथं विभागस्तस्य साश्रयत्वात्। भावे वा तत्रैवाविभाज्येऽवयवेऽनैकान्तिकमेवेत्यन्त्यत्रयदोषादाद्यपक्षोऽभ्युपेयः। स चानवस्थाकारी तस्मान् मूर्तिमत्त्वादिना न निरवयवत्वप्रतिषेधोऽनवस्थाकारितत्वादनवस्थानुपपत्तेः। अनन्ते ह्यवयवावयविभावे त्रुटेरमेयत्वप्रसङ्ग इत्युक्तमेव। तथा चानवस्थाप्रसङ्गस्त्रुटेरमेयत्वप्रसङ्गश्च बाधकावित्यर्थः।

ननु मध्यमेऽणौ ऊर्ध्वाधश्चतुर्दिक्षु षट्सु परमाणुभिः संयोगा अव्याप्य भवन्ति व्याप्य वा? आद्ये परस्परासङ्कीर्णा षट्संयोगावच्छेदका अवश्यवाच्या प्रतियोगितदभावयोरवच्छेदभेदं विनैकत्रावृत्तेरप्रतिपत्तेश्च। ते च षडवयवा एव। अन्येषामसम्भवात्। अन्त्ये उपविष्टः परमाणुः सर्वावच्छेदेन मध्यमेऽणौ मिलित इति तत्रैव लीयेत। तदसंपृक्तदेशं

न स्पृशेत् । तथा च द्वाभ्यामणुभ्यामेकाणुदेशव्यापने एक एवाणुः स्यात् । एवमितरपञ्चसंयोगेऽपीति क्वावयवावयविवार्तापि । एतदेवाह—

षट्केन युगपद्योगात् परमाणोः षडंशता ।
षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः ॥
[वसुबन्धुकृता विंशतिकाकारिका] इति ।

मैवं पूर्वादिदिगवच्छेदेन तावतां संयोगानामव्याप्यैव मध्यमेऽणौ वृत्तेः । दिगवच्छेदकास्तु प्रभामण्डलादयः ।

ननु दिगपि संसृज्यावच्छेदिका । तथा च तत्संयोगोऽपि व्याप्य वाऽव्याप्य वेति पूर्ववदेव प्रसङ्ग इति चेन्न, तत्संयोगे परमाण्वादीनामवच्छेदकत्वात् । तथा चोदयाचलादायाततेजोमण्डलावच्छेदेन पूर्वाणुर्मध्यमेऽणौ संयुक्तः पश्चिमस्तदेकपरमाण्वधिकतत्तेजोमण्डलावच्छेदेन नहि मध्यमोऽणुरेकपरमाणुमात्रं देशं न व्याप्नोति । तथा चालेपनान्तर्वर्तितण्डुलक्षोदवन्नैकस्य संयोगित इतरस्मिन् संयोगिनि लय एवमुपरिष्टादधिष्टादिष्वपीति भावः ।

ननु त्रसरेणोरवयवस्यानुपलम्भात् कल्पनायां तु प्रमाणाभावात् स एवावधिरिति ।

न तस्य चाक्षुषद्रव्यत्वेन सावयवत्वस्यानुमानात् । न चाप्रयोजकत्वं नेदीयसां क्षोदीयसामग्रहणात्, प्रथीयसां तु ग्रहणात् । तत् प्रत्यक्ष उत्कृष्टमहत्त्वस्य हेतुतया बाह्यप्रत्यक्षमात्रे जन्यसत्त्वमात्रस्य कारणत्वात् । अन्यथा तदुत्कर्षाननुविधानापत्तेः ।

एतेन नित्यमेव तन्महत्त्वमित्यपास्तम् । उक्तयुक्त्या जन्यमहत्त्वस्यैव बाह्यप्रत्यक्षहेतुत्वावधारणात् । एवमवयवोत्कर्षेण महत्त्वो-

त्कर्षात्तस्य तद्धेतुत्वे महत्त्वेन तत्सिद्धौ नाप्रयोजकता। न चैवमपि द्वाभ्यामवयवाभ्यां त्रसरेणुरारभ्यतां न तु बहुभिरिति वाच्यम्। कारणप्रचयमहत्त्वाभावे बहुत्वसंख्याया अप्यसत्त्वे तत्र महत्त्वाभावप्रसङ्गात्।

अथावयवद्वित्वमेव तज्जनकम्। अवयवोऽस्य परमाणुर्वा स्यात् तज्जन्यो वा? नाद्यो जन्यमहत्त्वस्य सावयवावयवत्वाविनाभावात्। नान्त्यस्तस्यैव परमाणुद्वयजन्यस्य महत्त्वप्रसङ्गात्। अत एव त्रिभिरपि परमाणुभिर्न त्रसरेण्वारम्भो महत्त्वानापत्तेः। नापि द्व्यणुकद्वयेन तत एव। न च द्व्यणुकयोः प्रचयसंयोगादेव त्रसरेणौ महत्त्वं स्यात् तत्र तदभावात्। अन्यथा निविडसंयोगजन्यत्रसरेण्वपेक्षया प्रचयसंयोगजन्यत्रसरेणोरधिकपरिमाणत्वे तस्य सर्वापकृष्टमहत्त्ववत्त्वं भज्येत। न च त्रसरेणुमात्रस्यैव प्रचयजन्यता कारणमहत्त्वाभावे सति महत्त्वादिति वाच्यम्, अप्रयोजकत्वात्। अन्यथा क्वाचिदप्यदृष्टकल्पना न स्यात्। अथ दृष्टेनानुपपत्तौ सा तत्रापि प्रचयस्य सन्दिग्धत्वात् कथं न सा। तस्मात् त्रिभिर्द्व्यणुकैस्त्रसरेणुरारभ्यते नत्वधिकैः। कारणत्रित्वादेव महत्त्वोपपत्तौ तत्कल्पने गौरवात्। एवं द्व्यणुकमपि द्वाभ्यां परमाणुभ्यां, तद्बहुत्वकल्पनायां तदवयवकल्पनायां च प्रमाणाभावात्। एवं च सति न त्रिपरमाणुकं न वा द्विद्व्यणुकं द्रव्यं मानाभावादेवेति सिद्धं निरवयवोऽतीन्द्रियः परमाणुरिति ।४।२।२३।

## [ बाह्यार्थभङ्गनिराकरणप्रकरणम् ]

पूर्वप्रकरणार्थयोः सावयवनिरवयवयोः प्रसङ्गेन बाह्यार्थापह्नवनिराकरणप्रकरणम्। *कश्चित्तु* विज्ञानैकशेषे क्वावयव इत्युपोद्घात एव। न च निमित्तानुव्यञ्जनसंज्ञाविरोध्यशुभसंज्ञाभावनोपदेशस्य प्रकृतस्य विज्ञाननये ज्ञानात्मकेऽपि स्त्र्यादावविरोधान्नैर्वार्मित

वाच्यम् । उपदेशो हि न निरवयवप्रकरणविषयः किन्तु तत्पूर्वप्रकरण-विषयः । अस्य च निरवयप्रकरणेनैव प्रसङ्गसङ्गतिर्न तु पूर्वेणापि सा दृश्यते अभिधानानङ्गत्वात् । पूर्वप्रकरणार्थश्च निरवयवोऽवयव इति भवत्येवोपोद्घातः । न च ज्ञानात्मकत्वेऽप्यवयवस्य न किञ्चिदनुपपन्नम् । न च ज्ञानभिन्नत्वमण्ववयवस्य पूर्वमुक्तं यन्निर्वाहायैतत् स्यादिति वाच्यम् । अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभाव [४।२।१८] इति सूत्रेणाणुद्रव्यत्वस्योक्तप्रायत्वात् । तत्र वस्तुत्वं ज्ञानत्वव्याप्यं न वेति विप्रतिपत्तौ *योगाचार* आह—

**बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् [तदनुपलब्धिः] ।४।२।२४।**

तुः प्रकारान्तरव्यवच्छेदे । भवता तावद् बुद्ध्या विवेचनादुल्लेखादेव बाह्यसिद्धिरास्थेया । बुद्धिश्च न बाह्यमुल्लिखति । मम घट इति ज्ञानमित्यनुव्यवसायेन घटतद्धियोरभेदोल्लेखादिति शब्दार्थं स्वरसाच्च । एवञ्च त्वदभिमतस्य भावानां ज्ञानभेदलक्षणस्य याथात्म्यस्यानुपलब्धिः । यथा तन्त्वपकर्षे तन्तुपरिहारे पटो नोपलभ्यत इति न पटस्तन्त्वतिरिक्तस्तथैव तन्तुरपि नांशवतिरिक्तस्तत्परीहारेणानुपलम्भात् । एवं तावद् यावदणुः । अणुरपि यदि दिगादिभिन्नः स्यात्ततो भेदेन गृह्येत । न चैवमिति परमाणोरप्यभावे स्वमात्रमणुमूर्तयो धियः स्वाकारमबाह्यमेव बाह्यत्वेनोल्लिखन्त्यो भ्रान्तय इत्यर्थः ।४।२।२४।

सिद्धान्त्याह—

**व्याहतत्वादहेतुः ।४।२।२५।**

बुद्ध्या विवेचनं बाह्याभावेऽहेतुः व्याहतत्वात् । नहि तन्त्वभावे

ततो विविच्येत इति प्रसङ्गो घटते । तथा चावधिसत्त्वे तदसत्त्वे च न विवेचनाद् बाह्याभावः । एवं ज्ञानभिन्नस्योल्लेखानुल्लेखयोर्बुद्धि-ज्ञानभिन्नं नोल्लिखतीत्यपि व्याहतम् । तथा च व्याघातादेव सिद्धं बाह्यमित्यर्थः ।४।२।२५।

यदि पटस्तन्तुभिन्नः स्यात्तदा ततो विविच्येत । न चैव-मित्यत्रान्यथासिद्धिमाह—

**तदाश्रयत्वादपृथग् ग्रहणम् ।४।२।२६।**

पटस्यापृथग्ग्रहणेन तावद् विलक्षणबुद्धिबोध्यत्वाभावोऽ-सिद्धः। नापि देशभेदाभावः। पटस्य तन्तुदेशत्वात् तन्तूनां चांशु-देशत्वात् । तन्तुरूपदेशस्य अन्यदेशेऽनुपलम्भरूपमपृथग्ग्रहणं चेत् तत्रोत्तरन्तदाश्रयत्वादिति । इदमपृथग्ग्रहणं तदाश्रिततयाऽन्यथासिद्धं नाभेदं गमयितुमलमित्यर्थः ।४।२।२६।

बाह्ये युक्त्यन्तरमाह—

**प्रमाणतश्चार्थप्रतिपत्तेः ।४।२।२७।**

चः समुच्चये । न सर्वबाह्याभावः । प्रमाणतोऽर्थप्रतिपत्तेः। अन्यथा ज्ञानमपि लुप्येताविशेषादित्यर्थः ।४।२।२७।

व्याघातान्तरमाह—

**प्रमाणानुपपत्त्युपपत्तिभ्याम् ।४।२।२८।**

सर्वाभावसाधने व्याघात इति शेषः। यदि प्रमाणमस्ति क्व सर्वाभावः। तस्यैव भावात्। अथ नास्ति तदा नतरां साधनाभावा-दित्युभयथापि व्याघात इत्यर्थः ।४।२।२८।

नन्वसतापि प्रमाणेन संवृतिसिद्धेन साध्य एवेत्याशयेन चोदयति—

**स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः । ४।२।२९।**

यथा स्वप्ने प्रमेयाभिमानोऽसदर्थविषयस्तथा प्रमाणप्रमेयधीरप्यसन्मात्रविषयैवेत्यर्थः ।४।२।२९।

अत्र स्वप्नत्वमेवोपाधिरिति चेत्तत्राह—

**मायागन्धर्वनगरमृगतृष्णिकावद्वा ।४।२।३०।**

सुगमम् ।४।२।३०।

सिद्धान्ती दूषयति—

**हेत्वभावादसिद्धिः ।४।२।३१।**

सर्वबुद्ध्ययथार्थत्वस्यासिद्धिः हेत्वादिबुद्धीनामप्ययथार्थत्वेन हेत्वभावात् । यद्वा जाग्रद्धीवत् प्रमाणादिधीः समीचीनैव कस्मान्नेत्यत्र हेत्वभावात् । यद्वा दृष्टान्तीभूतस्य स्वप्नस्यासिद्धिः हेत्वभावात् । सर्वबुद्ध्ययथार्थत्वे स्वप्नग्राहकधियोऽप्ययथार्थत्वादित्यर्थः ।४।२।३१।

स्वप्नस्य स्मृत्यादिवज्जनकानुभवापेक्षित्वे तत्प्रत्याख्यायकत्वं च न युक्तमित्याह—

**स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ।४।२।३२।**

स्मृतिवत् सङ्कल्पवच्चेत्यर्थः । नन्वनीलादयो विषया ज्ञानात्मका ज्ञेयत्वात् ज्ञानवत्, भेदे ह्यतिप्रसङ्गात् ज्ञेयत्वमेव न स्यात् । न च प्राकट्यं नियामकं, तदाधान एव नियामकाभावात्, अतीतादौ तदभावाच्च । नापि सत्त्वं कारणत्वमेकसामग्र्यधीनत्वं वा विषयत्वम्,

चक्षुरादेरपि घटज्ञानविषयतापत्तेः । सारूप्यं चेत् जडे बाह्ये तदभावात् । न च तन्निर्विषयं व्याघातात् । तस्मात् ज्ञानात्मको घटो ज्ञानेन गृह्यत इति ।

अत्राहुः—ज्ञानात्मा घटस्तज्ज्ञानग्राह्यो वा ज्ञानान्तरग्राह्यो वा ? नान्त्यो भेदे विषयत्वायोगात् । अन्यथाऽवादात् । नाद्योऽभेदे क्रियाकर्मभावाभावात् ।

अत्र *प्राभाकरा*ः—ननु भवन्तु घटादयः स्वभिन्नज्ञानग्राह्याः जडत्वात् सन्तु च स्वीयातीतानागतपरकीयज्ञानानि स्वव्यवहारे ज्ञानान्तरापेक्षाणि तत्र तदन्वयव्यतिरेकानुविधानात् । स्वीयं तु वर्तमानं ज्ञानं स्वयमेव स्वव्यवहारहेतुः स्वस्मिन् सति ज्ञानान्तरमन्तरेण स्वव्यवहारविलम्बाभावात् । तथा वर्तमानदशायां स्वप्रतिबद्धव्यवहारानुकूलशक्तिशालित्वरूपस्य स्वविषयत्वस्याभेदेऽपि सत्त्वात् । तत् स्वप्रकाशमत्यर्यादिदशायान्तु परप्रकाशमेव । किञ्च परिशेषादपि स्वप्रकाशत्वसिद्धिः । तथा हि ज्ञानमतीन्द्रियं वा स्यादैन्द्रियकं वा ? नाद्यो लिङ्गाद्यननुसन्धानेऽपि जानामीत्यवगमात् । अन्त्येऽपि ज्ञानान्तरग्राह्यत्वे सुखवदुत्पन्नमात्रवेद्यं वान्यथा वा । अत्र नाद्यो ज्ञानाविरामापत्तेः । अन्त्येऽपि जिज्ञासाग्राह्यं वा उत्कटविषयानादृतस्य प्राप्तिमात्रग्राह्यं वा घटादिवत् । अत्र नाद्यो, जिज्ञासाया अपि सामान्यज्ञानजन्यतयाऽनवस्थापत्तेः । नान्त्यः, सामग्र्याविशेष उत्कटत्वस्यैवासिद्धेः । तथा च ज्ञानाविरामापत्तिरत्रापि पदमादधातीति भावः । तस्मात् सर्वासामेव धियामिदमहं जानामीत्याकारत्वात् । स्वांशे पुरुषांशे च प्रत्यक्षत्वमेवार्थांशे च साक्षात्कारिणीनामनुमित्यादीनां त्वर्थमात्रे परोक्षत्वमिति सङ्गिरन्ते ।

अत्राहुः, चाक्षुषादीनां धियामिदमहं जानामीत्याकारत्वमानुभविकं यौक्तं वा ? नाद्योऽसिद्धेः । इदं रजतमित्येवानुभवात् तावतैव प्रवृत्तिनिर्वाहाच्च । नापि तद् बलादपि तथा ।

अथ व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वसिद्धौ तदेव ज्ञानं स्वविषयकमपि कल्प्यते लाघवात् ज्ञानधीवेद्य आत्मापि च तद्विषय इत्यात्मस्वार्थविषयत्वं सर्वचित्तीनामिति चेन्न, लौकिकप्रत्यक्ष विषयत्वे तज्जनकेन्द्रियप्रत्यासत्त्याश्रयत्वस्योपाधित्वात् । अथान्यस्यान्यविषयत्वे सन्निकर्षोऽस्तु नियामको न तु स्वविषयत्वेऽप्यनतिप्रसङ्गादिति चेत् जन्यप्रत्यक्षविषयत्वमात्रे ग्राह्यसन्निकर्षस्यैव हेतुत्वादन्यथाननुगमात् ईश्वरज्ञानस्य योगजधर्मजज्ञानानां ज्ञानविषयकव्याप्तिज्ञानानामेतदनुव्यवसायानां चागत्या स्वप्रकाशत्वाभ्युपगमः ।

नन्वन्यत्रापि परप्रकाशोऽनवस्थानादगत्यैव सास्तु न ज्ञानस्य स्वाभिन्नज्ञानवेद्यत्वेऽप्यनवस्थाविरहात् उत्कटविषयबोधसामग्र्याः प्रतिबन्धे घटादिवदग्रहात् तदुत्कटत्वे च कार्यदर्शनस्यैव मानत्वात् । तस्मात् विवादपदं वर्तमानज्ञानं न तद्विषयः जनकेन्द्रियप्राप्त्यनाश्रयत्वात् विप्रकृष्टघटवत् विशेषप्राप्त्यैव चानुमानप्रवृत्तिरतो नेश्वरज्ञाने व्यभिचारः । अथ या धीर्न वेद्या सा मानाभावादसतीति तदधीनसत्त्वं विषयपर्यन्तमसत् स्यात् । न स्यात् सर्वासामेव व्यवहारलिङ्गादिना वेद्यत्वाभ्युपगमात् । अथ ज्ञानविषय एव स्वस्मिन् व्यवहारसंस्कारौ करोति न स्वविषय एव, तस्य तज्जनकत्वात्, अन्यथातिप्रसङ्गात् ।

अथ ज्ञानस्य स्वनिर्विकल्पकेन विनाशान्न वर्तमानात् प्रत्यक्षता स्यादिति चेन्न, पूर्वक्षणवर्तितयैव ज्ञानस्य स्वविषयकप्रत्यक्षहेतुत्वात्, न तु वर्तमानत्वे सति गौरवात् । तथा चादौ घट इति ज्ञानं ततस्तन्निर्विकल्पकं ततस्तत् सविकल्पकं ततो घटमहं जानामीति स्थूलकालोपाध्यवलम्बी चतुर्थक्षण आत्मविशेष्यकोऽनुव्यवसाय इति ।४।२ ३२।

नेदं रजतमित्यादिबाधादस्तु विषयाभाव इति चेत्तत्राह—

**मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमान प्रणाशवत् प्रतिबोधे ।४।२।३३।**

तत्त्वज्ञानाद् बाधकान् मिथ्योपलब्धेस्तदुल्लिखितवैशिष्ट्यस्य च विनाशो भवति न तु धर्मिणोऽपि तदुल्लिखितस्य स्वविषयभ्रमवदित्यर्थः ।४।२।३३।

यस्तु *माध्यमिको* मिथ्याधीदृष्टान्तेन तत्त्वधियामप्यसदर्थतां प्रसाध्य बाह्यापह्नवं कृत्वा तेनैव दृष्टान्तेन विज्ञानापह्नवं कृत्वा विचारासहं जगदाह । तं प्रत्याह—

**बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ।४।२।३४।**

एवमर्थवद् बुद्धेरपि निमित्तमिन्द्रियादिसद्भावः स्वरूपं चोपलभ्यतेऽतो न तदपह्नवः शक्यत इत्यर्थः ।४।२।३४।

बुद्धौ च नैकरूपतैवेत्याह—

**तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ।४।२।३५।**

तत्त्वं पुरोवर्ति प्रधानमारोप्यमेते मिथ्याबुद्धौ कारणे न तु तत्त्वबुद्धौ । तत्रारोप्यस्याभावात् । तथा चानयोः कारणयोर्भेदान् मिथ्याबुद्धेस्तत्त्वबुद्धितो भेद इति युक्तं बुद्धिद्वैविध्यमित्यर्थः ।४।२।३५।

यद्वा मिथ्याबुद्धेस्तत्त्वप्रधानभेदात् प्रकारिप्रकारावच्छेदेन द्वैविध्यं सदसदर्थविषयत्वमिति न मिथ्याधीदृष्टान्तेन तत्त्वधियोऽपि केवलासदर्थविषयत्वसाध्यमित्यर्थः । तदेवं प्रासङ्गिकं बाह्यार्थप्रकरणं समर्थितम् ।४।२।३५।

## [ तत्त्वज्ञानविवृद्धिप्रकरणम् ]

आत्मतत्त्वज्ञानोत्पत्तिप्रकरणे दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्ति [४।२।१] रित्युक्तम् ।

न चैतावता कृतकृत्यता । तस्य साक्षात्कारिदृढभूमिसवासन

मोहोन्मूलनासमर्थत्वात् । अतस्तदवच्छेदकसाक्षात्कारितत्त्वज्ञान पर्यन्तं यौक्तं तत्त्वज्ञानं विवर्द्धनीयमिति प्रकृतितत्त्वसाक्षात्कारोत्पत्त्युपपादकं तन्निर्वाहकत्वसङ्गत्या तत्त्वज्ञानविवृद्धिप्रकरणम् ।

तत्त्वज्ञानविवृद्धौ हेतुमाह—

**समाधिविशेषाभ्यासात् ।४।२।३६।**

सम्यगाधीयते धार्यते इति समाधिः प्रणिधानादिजन्यो मनसः स्थिर आत्मसंयोगः । अयं स्वापेऽपि सुकर इत्यतो विशेषपदम् । तद्विशेषस्तत्त्वबुभुत्सासाध्यस्तादृक्संयोगस्तस्याभ्यास एकाग्रतया प्रणिधानपौनःपुन्यं ततश्चिरनिरन्तरादरसेवितात् सवासनमोहोन्मूलनक्षमस्तत्त्वसाक्षात्कार उत्पद्यते इत्यर्थः ।४।२।३६।

आक्षिपति—

**नार्थविशेषप्राबल्यात् । क्षुदादिभिः प्रवर्तनाच्च[1] । ४।२।३७-३८।**

इन्द्रियार्थविशेषाणां गर्जादीनां प्राबल्येन बुभुत्सितादपि बोध्यान्मनोविक्षेपात् क्षुत्पिपासाभ्यां व्याधिभिश्च प्रवर्तनात् चित्तैकाग्रतानुपपत्तेर्न समाधिसिद्धिरित्यर्थः ।४।२।३७-३८।

अन्यथापि प्रत्यनीकपरिहारमाह—

**अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ।४।२।३९।**

एषु योगाभ्यासः कर्तव्य इत्युपदेशो यतोऽतश्च न गीतादयो विषया व्यासेधका इत्यर्थः ।४।२।३९।

---

१. सूत्रद्वयमेकसूत्रतया परिगृहीतमिह वृत्तिकृता ।
पूर्वकृतफलानुबन्धात्तदुत्पत्तिरिति ।४।२।४१। इति न्यायसूचीनिबन्धपरिगृहीतं सूत्रमिह नास्ति ।

तदस्थः पूर्वपक्षिणमाक्षिपति—

**अपवर्गेऽप्येवं प्रसङ्गः ।४।२।४०।**

यद्यर्थप्राबल्यादेव ज्ञानं तदापवर्गेऽपि प्रसज्येतेत्याहुः ।४।२।४०।

सिद्धान्ती समाधत्ते—

**न निष्पन्नावश्यंभावात् ।४।२।४१।**

निष्पन्ने सति शरीरादौ सहकारिग्रामे ज्ञानस्यावश्यम्भावो मोक्षे च न शरीरादीति न ज्ञानमित्यर्थः ।४।२।४१।

नन्वन्यशरीरादिसहकारिबलादेव मुक्तस्य ज्ञानमस्तु । सामान्यत एव शरीरादीनां ज्ञानकारणत्वावधारणादत आह—

**तदभावश्चापवर्गे ।४।२।४२।**

अपवर्गे तदभावः स्वकर्मोपार्जितशरीराभावोऽन्यशरीरादि च नान्योपकारकमतिप्रसङ्गादित्याहुः ।४।२।४२।

तत् किं समाधिरेव तत्साधनमतस्तत्परिकरं दर्शयति—

**तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ।४।२।४३।**

तदर्थं तत्त्वसाक्षात्कारार्थं तत्त्वज्ञानोत्पत्तिप्रतिबन्धकादृष्टनाशमुखेन सत्त्वशुद्धिद्वारा कर्मणामुपयोगात् । यमनियमाभ्यामात्मसंस्कार आत्मशोधनं कर्तव्यम् । यमो निषिद्धवर्जनं नियमाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि ।

यद्वा अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः । एकैकाश्रमनियतो धर्मोपायो नियमः । योगात् योगशास्त्रात् *पातञ्जलादेरवगतैर-*

ध्यात्मविध्युपायैरात्मसंस्कारः कर्तव्यः। अध्यात्मविधयश्च तपः प्राणायामप्रत्याहारध्यानधारणैकान्तावस्थानाहारनियमनैरन्तर्यानुष्ठानविषयप्रसंख्यानरूपा इत्यर्थः।

तदर्थमपवर्गार्थमिति *केचित्*। तस्यापवर्गस्याधिगमायेति *भाष्या*दिदर्शनात्। तथा चोत्पन्नेऽपि तत्त्वज्ञाने यावन्मुक्ति यमादिकमनुष्ठेयमिति तुल्यकक्षतयैव ज्ञानकर्मणोः समुच्चयः।४।२।४३।

अथ कर्मैव मोक्षजनकं—

कर्मणैव हि संसिद्धिमास्थिता जनकादय इति [ गीता ३।२० ] भगवद्वचनादिति चेत् न, समानविषयकतत्त्वज्ञानं विना मोहानुच्छेदे संसारतादवस्थ्यात्। कर्मणस्तत्रासामर्थ्यात्। गीता च कर्मकारणत्वपरा। तत्त्वज्ञानवन्नासाधारणं कर्म किन्तु परम्परयेत्याशयः।

ननु ज्ञानमेव मोक्षजनकं मिथ्याज्ञाननाशे केवलस्यैव तत्त्वज्ञानस्य सामर्थ्यावधारणात्।

अथापरे न मुनयो मनीषिणः

परं कर्मभ्योऽमृतत्त्वमानशुः। [...... ?]

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्
तमेव विदित्वातिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय।

[श्वेताश्वतरोपनिषत् ३।८]

स ब्रह्मसंस्थोऽमृतत्वमेतीत्यादि [छा० उ० २।२३।१] श्रुतिभिर्ज्ञानमात्रस्यैव तत्कारणत्वाभिधानाच्च। एतेन—

उभाभ्यामेव पक्षाभ्यां खे यथा पक्षिणो गतिः।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्॥ १।३३।

[भवसन्तरणोपनिषत्]

इत्यादिस्मृतेस्तत्समुच्चय इत्यपास्तम् । प्रत्यक्षश्रुतिबाधेन सर्वौदुम्बरीवेष्टनस्मृतिवदप्रामाण्यात् ।

तथा च न कर्म मोक्षजनकमिति चेन्न—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य अविद्यायां रताः ॥९॥
[ ईशावास्योपनिषत् ]

इत्यादिश्रुतेरविद्याकर्मपर्युदासात् ।

विद्या तत्त्वज्ञानम् । अथापि—

विद्याञ्चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।
[ईशावास्योपनिषद् ११]

अविद्यया विद्ययापि अमृतत्वमश्नुते इत्यर्थः ।

कर्मप्रतिषेधश्रुतयस्तु कामनापूर्वककर्मप्रतिषेधपराः ।

नियतस्य तु सन्न्यासकर्मणो नोपपद्यते । इति [गीता १८।७]

भगवद्वचनात् । तथा च सकलाश्रमसाधारणेन यमादिकर्मणाऽकामकृतेनान्येनाप्युपनीतमात्रकर्तव्येन तथाविधेन ज्ञानेन तस्य तुल्यकक्षतया मोक्षो जन्यते न तु गुणप्रधानभावेन तथा श्रवणादिति ।

अत्राहुः—तत्त्वज्ञानात् संसारमूलसवासनमिथ्याज्ञानप्रागभावासहवृत्तिमिथ्याज्ञानध्वंसजनितैवंविधदोषध्वंसजनितैवंविधप्रवृत्तिध्वंस-जनितैवंविधदुःखध्वंसो मोक्षः । तत्र च मिथ्याज्ञानोन्मूलने तत्त्वज्ञानमेव समर्थं न कर्मादि वैयर्थ्यात् । न च तथाभूतमिथ्याज्ञान ध्वंसे कर्मणोऽपि साक्षात् कारणता श्रुतिबलेनास्थेया । कर्मणामपवर्गहेतुत्वप्रतिपादकश्रुतेस्तत्त्वज्ञानद्वाराप्युपपत्तेः । साक्षात्त्वस्य चाश्रवणात् । न च ज्ञानस्यानपायकत्वात् व्यापारत्वाश्रवणाच्च

कर्मव्यापारत्वं मिथ्याज्ञानध्वंसे साध्ये केवलस्यैव तत्त्वज्ञानस्य सामर्थ्यावधारणात् । न योग्यतया तत्कल्पनात् । यमनियमादेरपवर्गवत्तत्त्वज्ञानमपि प्रति कारणत्वश्रवणादेकमूलकतया तत्त्वज्ञानस्य व्यापारत्वपर्यवसानाच्चेति ।

एवञ्चोपनीतमात्रकर्तव्यैः सन्ध्यावन्दनादिकर्मभिस्तत्त्वज्ञानोत्पत्तिप्रतिबन्धकाधर्मे ध्वंसिते सत्त्वे शुद्धेऽष्टाङ्गयोगाभ्यासभुवा धर्मेणोत्पादितं साक्षात्कारि स्थिरं तत्त्वज्ञानमविद्याद्युच्छेदक्रमेण मोक्षं जनयति ।

तथा ह्यागमश्च—कषायपक्तिः कर्माणि ज्ञानन्तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥

इति कषायपक्तिः दुरितध्वंसहेतुरत उभयसाध्यासत्त्वशुद्धिरित्यपरे ।

कल्पे दुरितध्वंसतो लघुत्वादुभयानुकूलमपूर्वमेवेतीतरे । तेषामुपायानामनुष्ठाने तद्साक्षात्कारोत्पत्तावक्सर इत्यत आह—

**ज्ञानग्रहणाभ्यासस्तद्विद्यैः सह संवादः ।४।२।४४।**

तदर्थमित्यनुषज्यते । ज्ञायतेऽनेनेति ज्ञानं शास्त्रं तद्ग्रहणमध्ययनादि तस्याभ्यासः पौनःपुन्यम्, तद्विद्यास्तदभियुक्तास्तैः सह संवादः स्वानुभूतदार्ढ्यार्थं कर्तव्य इत्यर्थः ।४।२।४४।

संवादमेव विशदयति—

**तं शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोऽर्थिभिरभ्युपेयात् । ४।२।४५।**

सब्रह्मचारी सहाध्यायी । शिष्टः गुरुकल्पः । श्रेयोऽर्थी मोक्ष-

माणः। तस्यापि मुमुक्षया प्राक्तनः संस्कारोऽनुमीयते। एभिः सह तमात्मनो देहादिभेदमभ्युपेयात् अभिमुखमुपेत्य संभूय तं वादकथया जानीयादित्यर्थः ।४।२।४५।

ननु वादेऽपि स्वपक्षस्थापनकार्कश्येन गुर्वादीनां द्वेषान्न ते तत्त्वमुपदिशेयुरत आह—

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ।४।२।४६।**

तमभ्युपेयादिति वर्तते। अर्थित्वे बुभुत्सितत्वे सति प्रयोजनार्थं मात्मत्वानुभूतदार्ढ्यार्थं प्रतिपक्षहीनं यथा स्यादेवं तमभ्युपेत्य [सं] भूय तं स्वपक्षं गुर्वादिकात् विचाराान्निर्णयेत्। तथा च शुश्रूषां बुभुत्सां प्रकाशयन्ननहंकुर्वन् स्वपक्षमनवस्थापयन् परयुक्तीरद्विषन् विनयादिना गुर्वादीन् प्रसादयन् तेभ्यस्तत्त्वमवधारयेदित्यर्थः ।४।२।४६।

## [ तत्त्वज्ञानपरिपालनप्रकरणम् ]

तदेवं तत्त्वज्ञानोत्पत्तिक्रमतद्विवृद्धिकथनेन नैरन्तर्येण ये उपाया निरन्तराभ्यासाभियोगातिशयादयो दर्शिताः। यावत् संशयाद्यपाकरणाय च वादो दर्शित इति यद्यपि सर्वं सुस्थं तथापि त्रयीबहिष्कृतै रहंमानिभिः प्रावादुकैरधिक्षिप्ते तत्त्वे सर्वमिदं द्रागेव विघटयिष्यतीति अफल एवैतावान् प्रयासराशिरतः प्रकृतेन तत्त्वज्ञानोत्पत्तिप्रकरणेन चाव्यवहितेन निर्वाहकत्वसङ्गत्या तत्परिपालनप्रकरणम्।

लघु हि परिपालितं वर्धते। तत्र परिपालनोपायमाह—

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोह संरक्षणार्थं कण्टकशाखावरणवत् ।४।२।४७।**

सुगमम् ।४।२।४७।

ननु तत्त्वबुभुत्सावाद एव बहूनां स च कथित एवेति किं जल्प वितण्डाभ्यामत आह—

**ताभ्यां विगृह्य कथनम् ।४।२।४८।**

ताभ्यां जल्पवितण्डाभ्यां पाखण्डैः सह विगृह्य तान् विग्रहे विजित्य साधुभ्यस्तत्त्वकथनं कर्तव्यं विद्यापरिपालनायेत्यर्थः ।४।२।४८।

*इति महामहोपाध्याय सन्मिश्र वाचस्पति विरचिते*
*न्यायतत्त्वालोके*
*चतुर्थोऽध्यायः समाप्तः ।*

---

# पञ्चमोऽध्यायः

## प्रथमाह्निकम् ।

[ सत्प्रतिपक्षदेशनाभासप्रकरणम् ]

यदा नास्तिकः कुतर्कैस्त्रयीमाच्छादयन् ईश्वरान् तदनुयायिनीः प्रजाश्चाधर्मैः प्रवर्तयितुमुद्युक्तो [भवेत् तदैव जल्पवितण्डयोरवसरः। ते च छलजातिनिग्रहस्थानसाधने। तेषु छलस्य उद्देशविभागपरीक्षाः दृष्टचराः। जातिनिग्रहस्थानयोस्तूद्देशसामान्यलक्षणे दृष्टे। विभाग परीक्षे तावदवसिते। तत्प्रपूरणाय पञ्चमाध्यायावतारः। तत्रापि जाति विशेषलक्षणपरीक्षे प्रथमाह्निकार्थः। द्वितीये निग्रहस्थानलक्षण संग्रहः। सप्तदश चात्र प्रकरणानि। तत्रादौ सत्प्रतिपक्षदेशनाभास-प्रकरणम्। जातिप्रकरणे पुनरादिमसूत्रे जात्युत्तराणामवान्तर विभागमाचष्टे[1]]—

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्य-प्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्था-पत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ।५।१।१।**

इति सूत्रम्। तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमिति ।१।२।२०।

---

१. अत्र ग्रन्थपातः। सम्पादकेन यथामति पूरितः।

संक्षेपेणोक्तं प्रपञ्च्यते। समाशब्दः प्रत्येकान्वितः। समेति लक्षणगतं जातिपदं विभक्तिव्यत्ययेनान्वीयते। सामस्त्येन समा स्वपरासाधकयोस्तुल्येति साधर्म्यसमेत्यादि नेयम्।

अथ वा समयितुं प्रयुज्यते समीकरणाय प्रयुज्यते इति समा। तादर्थ्यात्ताच्छब्द्यम्। किं वा समीकरणाभिप्रायेण प्रयुज्यत इत्येव समेति परिभाषा। यद्यपि समीकर्तुमशक्तैव तथापि समीकरणाभिप्रायेण प्रयोगादेव समेत्यर्थः। समेव वा समा न परमार्थतः समा। जातेरसदुत्तरत्वात्। स्थापनायाश्च सदुत्तरत्वात्। तथापि साधर्म्येण स्थापना समैवेति साधर्म्यसमेत्यर्थः। एवञ्चाभिमानिकं साम्यं न वास्तवमित्यायातम्। वास्तवमेव साम्यं साधर्म्यं यस्यां जातौ [सा] साधर्म्यसमा। साधर्म्यमात्रं च समं व्याप्तिविशिष्टत्वन्तु न सममित्यर्थः। विशेषानुक्त्या वा साम्यं त्वदुक्तं साधर्म्यं न मदुक्तमित्यत्र विशेषानभिधानं सममिति। साधर्म्यं समं यस्यामिति साधर्म्यसमा विशेषहेत्वभावस्तु न समः। व्याप्तिरूपस्य तस्य सत्त्वात्।

यद्वा समौ स्यावेति वादिना स्वसमीकरणार्थं प्रयुक्ता जातिः समा। यदि ह्ययं वादी मदुक्तजात्युत्तरेणाकुलीकृतो निःप्रतिभः स्याद् सद्वा ब्रूयात् तदा मम निरनुयोज्यानुयोगवदेतस्य पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो वा स्यादिति समौ स्याव। अन्यथाहमेवापकृष्टः सदुत्तरास्फुरणतः स्यामित्यभिप्रायेण प्रयोगादिति। अत्र स्वसमेति प्रयोगापत्तौ साधर्म्यसमादिः परिभाषा।

यद्वा सममाचष्टे समा तत् करोति तदाचष्ट इति णिचि पचाद्यच् समशब्दः साधारणवाचकः। तथा च जात्युत्तरं स्ववक्तारं समं न न्यूनं न वोत्कृष्टं गमयति। अवचने ह्यप्रतिभयापकृष्टमेव स्यात्। सदुत्तरवचने चोत्कृष्ट एव स्यात्। जातिवचनेन च समस्तिष्ठतीति। तथा च साधर्म्येण समाभिधायिका साधर्म्यसमेति।५।१।१।

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ।५।१।२।**

इति सूत्रम् ।

साधर्म्येण समा साधर्म्यसमेत्यादि समाख्यालभ्यमेव लक्षण-मनूद्यते । साधर्म्यवैधर्म्यसमौ जातिविशेषावित्यर्थवशप्राप्तेनान्वयः। न तु सामान्यलक्षणगतप्रत्यवस्थानमनुवर्तनीयम् । तथापि लिङ्गा-सङ्गतेः ।

न च स्वपक्षसाधनव्यवच्छेदेन प्रतिषेधभागः प्राप्यतामिति सूचनाय पुल्लिङ्गनिर्देश इति युक्तम् । सामान्यलक्षणन्तु प्रत्यवस्थान पदस्य विशेषपरत्वात् तदनुवर्तनेनैव तल्लाभात् ।

किञ्च विशेषलक्षणस्य तत्तद्विशेषपरत्वावश्यकत्वे तेनैव तत् सिद्धेः । एवञ्च सर्वत्रैव विशेषपरतया पुल्लिङ्गनिर्देशो वैचित्र्यार्थः। तत्पदेन साधर्म्यादिपरामर्शः । धर्मपदं साध्यपरं प्रकृतत्वात् । ताभ्यामेव धर्मविपर्यय इति सावधारणम् अब्भक्षन्यायात् । उपपत्ति-रुपपाद्यतेऽनेनेति वचनम् । तथा च साधर्म्येणोपसंहारे पक्षे साध्य-स्योपसंहरणे कृते वैधर्म्येण वा तथा कृते ताभ्यामे[व] केवलाभ्यां व्याप्त्यनपेक्षाभ्यां धर्मस्य साध्यस्य विपर्ययोपपत्तिर्भाषणम् । तस्मात् साधर्म्यवैधर्म्यसमौ जातिविशेषौ व्यवहर्तव्यावित्यर्थः । तेन प्रकरणसमे सदुत्तरे नातिव्याप्तिः ।

*परिशिष्टे* तु साधर्म्यवैधर्म्याभ्यामित्यावर्तनीयम् । तदिति साध्यपरामर्शः । उपपत्तेरिति तादर्थ्ये षष्ठी । सामान्यलक्षणेनैव सदु-त्तरप्रकरणसमव्यवच्छेद इत्युक्तम् । तथा च साधर्म्यवैधर्म्याभ्यामुप-संहारे साधर्म्यवैधर्म्याभ्यां साध्यरूपधर्मविपर्ययार्थं साधर्म्यवैधर्म्य समौ प्रतिषेधाविति तन्मते सूत्रार्थः ।

यथासङ्ख्यमन्वय इति यदुक्तं *परिशिष्टे* तदावर्तितेन साधर्म्य-वैधर्म्याभ्यामित्यनेन साधर्म्यवैधर्म्यसमावित्यस्यैव न तु सूत्रस्थेनापि। तेन येन प्रत्यवस्थानं तत्समा भवति। न तु साधर्म्येणैवोपसंहारे साधर्म्येण प्रत्यवस्थानम् साधर्म्यसमा वैधर्म्येणोपसंहारे वैधर्म्येणैव प्रत्यवस्थानं वैधर्म्यसमा भवतीति यथासङ्ख्यार्थः।

तेन साधर्म्येणोपसंहारे वैधर्म्येणोपसंहारेऽपि च साधर्म्येण प्रत्यवस्थानात् साधर्म्य [समा] भवति। तयोरेव वैधर्म्येण प्रत्यवस्थानाद् वैधर्म्यसमा। तत्र साधर्म्येणोपसंहारे तावत् यथा शब्दोऽनित्यः उत्पाद्यत्वात् घटवदित्यत्र नैतदेवं यद्यनित्यघटसाधर्म्यादनित्यः शब्दस्तदा नित्येनाप्याकाशेन साधर्म्यादमूर्तत्वान्नित्यः स्याद्, विशेषो वा वक्तव्यः। अस्मिन्नेव प्रयोगे यन्नानित्यं तन्नोत्पाद्यं यथाकाशमित्युपसंहृते नैतदेवं यदि नित्याकाशवैधर्म्यादनित्यः शब्दस्तदा अमूर्तत्वान्नित्याकाशसाधर्म्यान्नित्यः स्यादिति।

वैधर्म्येण प्रत्यवस्थानात् वैधर्म्यसमा। यथा शब्दोऽनित्य उत्पाद्यत्वात् घटवदित्यत्र यन्नानित्यं तन्नोत्पाद्यम्, यथाकाशमित्यत्र च यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्यस्तदाऽनित्यघटवैधर्म्याद-मूर्तत्वान्नित्यः स्यादिति।

साधर्म्यमात्रमेव गमकतौपयिकमित्यभिमानेन साधर्म्येण सत्प्रतिपक्षदेशना साधर्म्यसमा। वैधर्म्यमात्रमेव गमकतौपयिकमित्यभिमानाद् वैधर्म्येण सत्प्रतिपक्षदेशना वैधर्म्यसमा। सत्प्रतिपक्षदेशनाभासे चेमे। अत एव लक्षणसौकर्यादेकसूत्रेण लक्षणम्। अनयोरसदुत्तरत्वार्थम् ।५।१।२।

## गोत्वात् गोसिद्धिवत् तत्सिद्धिः ।५।१।३।

अत्र तत्पदेन स्थापनाहेतुरुत्पाद्यत्वं परामृश्यते। तेन तस्मादेव सिद्धिस्तत्सिद्धिः। सिद्धिरिति स्थाप्यसिद्धिः प्रकृतत्वात्। तथा

चोत्पाद्यत्वादेव साधर्म्यादनित्यत्वसिद्धिर्न तु जातिवाद्युक्तसाधर्म्ये वैधर्म्याद्वा केवलात्। गोत्वात् गोसिद्धिवत्। यथा गोत्वादेव गोसाधर्म्यात् गोसिद्धिर्गोव्यवहार इतरभेदो वा। न शृङ्गित्वादेः साधर्म्यात् न वै ककुत्वादवैधर्म्यात् तथेत्यर्थः। व्याप्तेर्हि साधर्म्याद् वैधर्म्याद्वा सिद्धिर्भवति। न तु साधर्म्यादिमात्रात्। अन्यथा भवद्वचनमपि अदूषकं प्रमेयत्वाददूषकसाधर्म्यादिति स्वव्याघातकं त्वद्वाक्यमापतितमिति भावः।

यद्वा तस्मादित्यनेन योग्यतया प्रकृतत्त्वेन च व्याप्तिविशिष्टमेव स्थापनाङ्गं परामृश्यते। तथा चाव्याप्त्या त्वदुक्तान्न सिद्धिरित्यर्थसिद्धमिति ।५।१।३।

## [ उत्कर्षसमादिजातिषट्कप्रकरणम् ]

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ।५।१।४।**

इति सूत्रम्।

अत्रोत्कर्षेण समो जातिविशेष उत्कर्षसमः। एव[म]पकर्षेण समोऽपकर्षसमः। वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः। तेन वर्ण्यत्वादिना समो वर्ण्यसमादिः। वर्ण्यत्वञ्च वर्णनीयत्वं स्वरूपेण साध्यत्वम् सन्दिग्धसाध्यकत्वमिति यावत्। तद् विपर्ययोऽवर्ण्यत्वम्। तेन समोऽवर्ण्यसमः। विकल्पद्वैविध्यम्। तेन समो विकल्पसमः। साध्यत्वं पञ्चावयवसाधनीयत्वम्, तेन समः साध्यसमः। एवं षडपि जातयः समाख्यालब्धलक्षणा एव। अतिप्रसङ्गनिवृत्त्यर्थं पञ्चसु साध्यदृष्टान्तयोर्धर्मविकल्पादित्युत्थापनबीजं कथितम्। षष्ठे चोभयसाध्यत्वादिति। अनेन धर्मविकल्पो धर्मवैचित्र्यं कस्यचित् सत्त्वं कस्यचिच्चासत्त्वम्। तथा च साहचर्यमात्रमेव गमकमित्यभिमानेन हेतुसाध्ययोरन्यतरेण पक्षदृष्टान्तयोरन्यतरस्मिन् अविद्यमानधर्म-

प्रसञ्जनमुत्कर्षसमः । यथा शब्दोऽनित्यः कृतकत्वात् घटवदित्यत्र घटोऽनित्यः कृतको वा रूपादिमान् अश्रौत्रश्च दृष्टस्तथा शब्दोऽप्यनित्यत्वात् कृतकत्वाद्वा तथा स्यादिति साध्येनानित्यत्वेन साधनेन कृतकत्वेन [वा] पक्षे प्रसञ्जनं तत्रैव च दृष्टान्ते प्रसञ्जनम् । यथा शब्दोऽनित्यः कृतको वा श्रौत्रोऽमूर्तश्चेति घटोऽपि तथा स्यात् साहचर्याविशेषादिति विशेषविरोधदेशनाभासेयम् ।

साहचर्यमात्रमेव व्यापकताप्रयोजकमित्यभिमानेन किञ्चिद्धर्मव्यावृत्त्या हेतु[सा]ध्ययोरन्यतराभावप्रसञ्जनमपकर्षसमः । यथा शब्दोऽनित्यः कृतकत्वाद् घटवदित्यत्र यद्यनित्यत्वधर्मसहचरित घटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरित रूपवत्त्वात्मकघटधर्मव्यावृत्तेः कृतकोऽप्यनित्योऽपि च न स्यादिति ।

अत्रादावसिद्धदेशना, द्वितीये बाधदेशना, तदुभयदेशनाभासा चेयम् ।

ननु पक्षधर्मव्यावृत्त्या दृष्टान्तेऽपि हेतुसाध्यापकर्षदेशनात् साधनसाध्यवैकल्यदेशनाभासापीयमस्त्विति चेत् अत्र *परिशिष्टकृतः* दार्ष्टान्तिके व्याप्त्यनभ्युपगमेन दृष्टान्ते तदपकर्षस्यासम्भवदुक्तिकत्वात् धर्मान्तरापकर्षे च प्रकृतादूषणेऽर्थान्तरमतानुज्ञयोरन्यतरेणैव निग्रहादिति ।

तन्न, पक्षधर्मस्य गुणत्वश्रावणत्वादेर्व्यावृत्त्या घटे दृष्टान्ते हेतु साध्यान्यतरव्यावृत्त्या साधनादिवैकल्योद्भावने यथोक्तदोषासंस्पर्शात् ।

अत एव *वार्तिके* शब्दो वा अरूप इति घटोऽप्येवं प्रसक्त इत्यपकर्ष इति विद्यमानधर्मापचयोऽपकर्ष इति सामान्यतो लक्षण मुक्त्वा उदाजहार। *भाष्यकृतस्तु* विशिष्य तथानुदाहरणं विस्तर-

भयात्। यथा चापकर्षसमालक्षणेऽपि पक्षदृष्टान्तयोरन्यतरस्मिन्निति कर्तव्यमेवेति।

वर्ण्यसमादौ तु साध्ये दृष्टान्ते च धर्मस्य विकल्पो वैचित्र्यं सन्दिग्धसाध्यकवृत्तित्वमसन्दिग्धसाध्यकवृत्तित्वञ्च पूर्वस्माद् वर्ण्यत्वापादनं वर्ण्यसमा सन्दिग्धसाध्यकवृत्तिकतयैव हेतोर्दृष्टान्तेऽपि सत्त्वं साध्यसिद्ध्युपयुक्तमित्यभिमानेन दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वापादनं वर्ण्यसमा। प्रयोगस्त्वेवं पक्षे तावद्धेतोः सन्दिग्धसाध्यकवृत्तित्वमेव गमकतौपयिकं रूपं दृष्टान्तेऽपि तादृगेव हेतुर्न वा। आद्ये दृष्टान्तोऽपि साध्यवत्तया वर्ण्यः स्यात् सन्दिग्धसाध्यकत्वाविशेषात्। द्वितीये साधनविकलो दृष्टान्तः गमकसाधनाभावादिति। असाधारणदेशनाभासा चेयम्।

एतद् वैपरीत्येनावर्ण्यसमा। सिद्धसाध्यकवृत्तितामात्रेण गमकत्वं हेतोरित्यभिमानेन पक्षेऽप्यसन्दिग्धसाध्यतापादनमवर्ण्यसमा। प्रयोगस्त्वेवम् दृष्टान्ते हेतोर्यत् सिद्धौपयिकं रूपं सिद्धसाध्यकवृत्तित्वं पक्षेऽपि तादृशो हेतुर्न वा? आद्ये न ख्यापनीयः साध्यसत्त्वेन सिद्धत्वात्। तथा चापक्षधर्मो हेतुः, अन्त्येऽपि न ख्यापनीयः गमकहेत्वसिद्धेरिति असद्धदेशनाभासा चेयम्।

विकल्पसमायां तु हेतोर्धर्मान्तरं प्रति वा धर्मान्तरस्य साध्यधर्मं प्रति वा धर्मान्तरस्यैव धर्मान्तरं प्रति वा व्यभिचारो धर्मविकल्पः। तस्माद् धर्मद्वैविध्येन प्रत्यवस्थानं विकल्पसमा। तथा च कस्यचिद्धर्मस्य व्यभिचारदर्शनेन प्रकृतहेतोः प्रकृतसाध्यव्यभिचारापादनं विकल्पसमा। कस्यचिद् दृष्टान्तवृत्तेः साध्यवृत्तेर्वाऽन्यवृत्तेर्वा व्यभिचारोऽपि साध्यं प्रति वा साधनं प्रति वान्यमेव प्रति वा विवक्षितः। यथेदं व्यभिचारि तथा हेतुरपि व्यभिचरेद्धर्मत्वादित्यस्य दूषणमूलाभिमानस्य सर्वत्र साम्यात्। यथा शब्दोऽनित्यः कार्यत्वा-

दित्युक्ते यथा गुणत्वे समानेऽपि किञ्चिन्नित्यं किञ्चिच्चानित्यं तथा कृतकत्वे समानेऽपि घटोऽनित्यः शब्दस्तु नित्य एव स्यात्। कार्यत्वस्य धर्मत्वाविशेषेण गुणत्ववदनित्यत्वव्यभिचारित्वादित्यादि स्वयमूहनीयम्। अनैकान्तिकदेशनाभासा चेयम्। एवमेताः पञ्च साध्यदृष्टान्तयोर्धर्मविकल्पादेव केवलात्।

साध्यसमा तु तस्मादुभयसाध्यत्वाच्च। समुच्चये चकारः। तथा हि साध्यस्य धर्म एतत् प्रयोगसाध्यत्वम्। दृष्टान्तस्य तु प्रमाणान्तरसिद्धित्वं धर्मविकल्पः। नैतावन्मात्रं दृष्टान्तस्य साध्यत्वापादकम्। भिन्नयोरनयोर्धर्मविकल्पस्यायुक्तत्वात्। किन्तूभयसाध्यत्वसहकृतं साध्यं दृष्टान्तश्चेत्युभयं तयोः साध्यत्वात्। दृष्टान्ते साध्यत्वापादनं संभवति। नाप्येतावन्मात्रात् यदि दृष्टान्तेऽप्येतत्प्रयोग साध्यतैव साध्यवद् भवति तदावादी, न चाप्तापादनादेव नैतत् प्रयोगासाध्यतापादनमित्युभाभ्यामेतत् प्रयोगसाध्यतापादनात् साध्यसमः। तथा चैतत्प्रयोगसाध्यत्वेन पक्षसाम्याद् दृष्टान्तस्योदाहरणविषयत्वमित्यभिमानेन दृष्टान्तस्यैतत्प्रयोगसाध्यत्वापादनं साध्य समा। उदाहरणं क्रियावानात्मा क्रियाहेतुगुणयोगात् यथा लोष्टमित्युक्ते एतत्प्रयोगसाध्यश्चायमात्मा क्रियावानयमिति कामं लोष्टोऽपि तथा साध्यः। अथ नैवं न तर्हि यथा लोष्टस्तथात्मेति यथा *भाष्यमेव* साध्यसम इत्यत्र साध्यपदं सामान्यत एवोक्तं तथापि वर्ण्यसमाभेदनार्थं विशेषपरतावश्यकी।

*सम्प्रदाय*स्त्वेतत्प्रयोगसाध्यस्यैव गमकत्वमित्यभिमानेन पक्षादेवैतत्प्रयोगसाध्यत्वापादनं साध्यसमः। उत्थानमूलं तु पक्षहेतुदृष्टान्तधर्माणां यदि नैतत् प्रयोगसाध्यता तदा न साध्यांशेऽप्येतत्प्रयोगान्तर्गतत्वाविशेषात्।

अथ साध्यांशे तत्प्रयोगान्तर्गतसाध्यत्वमेव हि लिङ्गस्य साध-

कताप्रयोजकम् । तस्माद् दृष्टादेरप्येतत्प्रयोगसाध्यत्वं वाच्यम् । तथा च पूर्वं पक्षहेतुदृष्टान्ताद्यसिद्धावाश्रयाद्यसिद्धयः । इत एव तत् सिद्धावन्योन्याश्रय इत्यसिद्ध्याद्याभासा चेयमिति ।

अत्रैतत्प्रयोगसाध्यत्वं साधनाप्रयोजकमित्यभिमन्यमानः कथं प्रतिवादिनो जात इति चेत्, इत्थं पक्षहेतुसाध्यानामेतदनुमिति प्रयोजकानामेतत्प्रयोगसाध्यत्वात्, लिङ्गोपहितलैङ्गिकवान् हि पक्षोऽनुमितिगोचर इति ।५।१।४।

आसां प्रत्याख्यानसूत्रम्—

## किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ।५।१।५।

किञ्चित्पदं सामान्यवाच्यपि योग्यतयात्र व्याप्यं विशेषमाह । तथा च व्याप्यात् साधर्म्यात् साध्यस्य पक्ष उपसंहारः प्रमा सिद्ध्यति । अतो वैधर्म्यादिति । विपरीताद्व्याप्यधर्मात् भवता कृतः प्रतिषेधो न सिद्ध्यतीत्यर्थः । अन्यथा भवद्दूषणमप्यसम्यक् प्रमेयरूपासाधक साधर्म्यादित्युच्येतेति । एतदित्थमेव सर्वत्र प्रयोज्यमिति ।५।१।५।

## साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ।५।१।६।

सूत्रम् । एतत् साध्यसमाप्रत्याख्यायकम् । यथा लोष्ट इति यथा शब्देन दृष्टान्ते साध्यमात्रमतिदिश्यते । तावतैव दृष्टान्ततोपपत्तिर्न त्वशेषो धर्मो येनैतत् प्रयोगसाध्यताप्यतिदिश्यत इति साध्यसमा स्यात् । सर्वधर्मातिदेशे ह्यभेद एव स्यादिति कोऽयथार्थः स्यादिति को यथार्थः स्यादित्यर्थः ।५।१।६।

### [ प्राप्त्यप्राप्तिसमजातिद्वयलक्षणम् ]

## प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ।५।१।७।

सूत्रम् । हेतोरित्यनन्तरं साधकत्वमिति पूरणीयम् । विकल्पोपक्रमे एते जाती इति भेदविवक्षयैकसूत्रेणोपग्रहः । वस्तुतो भेदविवक्षयैकजातितयाऽप्युपपत्तिः । साधकत्वं च कारकज्ञापकसाधारणम् । शब्दोऽनित्यः कृतकत्वादित्यादौ यदि कृतकत्वं साध्यं प्राप्य साधकं तदा प्राप्तेः सतोरेवेति साध्यमेव सत्त्वाविशेषात् साधनं साधयिष्यति । अथ साध्यमप्राप्यैव साधनं साधकं तदाऽप्राप्तस्य साधकत्वेऽतिप्रसङ्ग इति तद्धेतुः साधक इति प्राप्तिसमा । यदि प्राप्तिसमा लक्ष्यते तदाऽप्राप्तिपक्षः प्रथमं वाच्यः । यदि त्वप्राप्तिसमा लक्ष्यते तदा प्राप्तिपक्षः प्रथममित्येव विशेषः । प्राप्य साधनेऽविशेषेणानिष्टापादनं प्राप्तिसमा । अप्राप्तिसाधनेऽतिप्रसङ्गेनानिष्टापादनमप्राप्तिसमा । अनयोरविशेषातिप्रसङ्गरूपद्वारभेदादेव भेदः । उचितसमयरूपविशेषणाभावाद् विशेषणासिद्धिदेशनाभासाद्या । द्वितीया तु प्राप्तिरूपविशेषणासिद्धिदेशनाभासा । वस्तुतस्तु प्रतिकूलतर्कदेशनाभासे उभे ।

एवं दण्डो यदि प्राप्य घटं जनयेत् तर्हि घट एव दण्डं कुतो न जनयेत् सत्त्वेनाविशेषात् । यदि चाप्राप्यैव घटं जनयेत् पटं कथं न जनयत्यप्राप्तत्वाविशेषादिति ।५।१।७।

अनयोरुत्तरम्—

**घटादिनिष्पत्तिदर्शनात् पीडने चाभि[चाराद]प्रतिषेधः ।५।१।८।**

सूत्रम् । यदिदं भवता दूषणमुक्तं ततः कार्यकारणभाव एवोच्छिद्येत । तच्चानुपपन्नं घटादिनिष्पत्तिदर्शनात् । एवं हि दण्डात् घटोत्पत्तिः सकलप्रत्यक्षा न स्यात् । सापि मा भूदिति चेत्, तर्हि त्वद् दूषणादपि स्थापनादोषो न स्यात् । बहुवचनादपि स्थापनादुष्टत्वबाधो न स्यादिति स्वव्याघातकमुत्तरमिदमुक्तं स्यात् ।

अथ कार्यकारणभाव एव पौर्वापर्यनियमलक्षणः संबन्धः कार्यकारणयोस्तत्रापि नियामकः स ममापि तुल्यः । न केवलं घटादिनिष्पत्तिदर्शनादप्रतिषेधः । किन्तु पीडने शत्रुपीडार्थमभिचारात् श्येनादियागादावपि । न ह्यापाततः संबन्धास्फुरणादेवातिप्रसङ्गभिया प्रमाणसिद्धः कार्यकारणभावः युज्यते । तथा सति श्येनादि यागोऽन्यहेतुः स्यादिति वेदाप्रामाण्यम् ।

अथ तत्रापि श्रौतः कार्यकारणभाव एव, उद्देश्यत्वमेव वा नियामकमिष्यते, तदा प्रकृतेऽपि स एवान्यो वाऽन्विष्यमाणो भविष्यति । अन्यथोक्ता स्वव्याघातकतैवावर्तत इति ।

## [ प्रसङ्गप्रतिदृष्टान्तसमजातिद्वयलक्षणम् ]

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ।५।१।९।**

सूत्रम् । यद्यपि प्रसङ्गपदमापादनमात्रवाचकं तथापि योग्यतयाऽनवस्थापरम् । यद्वा प्रकर्षेणाविच्छेदेन संयुज्यत इति प्रसङ्गोऽनवस्था तदा समा स्वपरपक्षदूषणे तुल्येति प्रसङ्गसमेति समाख्यालभ्यमेव लक्षणमनूद्यते । दृष्टान्तपदमजहत्स्वार्थलक्षणया नियामकमात्रपरं प्रत्यवस्थानादित्युभयान्वितम् । तथा च नियामकस्य कारणानपदेशान्नियामकान्तराभाषणान्निमित्तात् प्रत्यवस्थानाद् दूषणात् प्रतिदृष्टान्तेन च प्रत्यवस्थानात् यथाक्रमं प्रसङ्गप्रतिदृष्टान्तसमौ जातिविशेषौ व्यवहर्तव्यावित्यर्थः । नियामकञ्च कारकज्ञापकसाधारणम् ।

ननु कथं दृष्टान्तपदे लक्षणेति चेत् न, यत्र हेत्वादावपि हेत्वन्तरत्वयोगस्तस्य जात्यन्तरत्वप्रसङ्गनिवृत्त्यर्थत्वात् । एवं वर्ण्यसमादिरप्यधिका न स्यादिति चेन्न, एतत् कालवाच्यत्वेन साधनादेरत्र प्रसङ्ग

नीयत्वात् सूत्रपदभाष्यादितस्तल्लाभः कथमिति चेन्न, हेत्वन्तरादे जात्यन्तरापत्तिबाधकेन तेषामपि तत्तात्पर्यकल्पनात्। तथा च तत्काल व्यवस्थितमेव तदा व्यवस्थापकमित्यभिमानेन व्यवस्थापकानवस्था-प्रसञ्जनं प्रसङ्गसमेति *परिशिष्टकृदादयः।*

वस्तुतस्तु दृष्टान्तानवस्थापादनमेव प्रसङ्गसमेति *टीका* पर्यन्त स्वरसः। साधनानवस्थापादनादिकन्तु कार्यसमाकृतिगणान्त-र्भूतम्। एवं तु प्रवर्तते तदा व्यवस्थितमेव व्यवस्थापकन्नाम। अन्यथा प्रमेयेष्वपि तदा व्यवस्थापकानुसरणं वृथा। तथा च प्रमाणेष्वपि हेतु दृष्टान्तादिष्विदानीमेव प्रमाणान्तरं वाच्यम्। एवं तत्र तत्रापीत्यन वस्था। एवं कारणेऽपि कारणान्तरं वाच्यम्। ननु नेदं जात्युत्तरं बीजाङ्कुरादावनवस्थापादन इष्टापादनेनासदुत्तरत्वाभावादिति चेन्न, तत्काल एवापादनस्य जातित्वादेवानवस्थादेशनाभासा चेयम्। प्रति-दृष्टान्तेनेत्यत्राप्यवधारणे तात्पर्यम्। तेन प्रतिदृष्टान्तमात्रबलेन शब्दोऽ-नित्यस्तदा नित्याकाशबलेन नित्य एवास्त्विति बाधप्रतिरोधकान्त-राभासा चेयं प्रसङ्गसमोत्तरम् ।५।१।९।

## प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः ।५।१।१०।

यथा प्रदीपोपादाने प्रदीपान्तरोपादानप्रसङ्गनिवृत्तिस्तथा निया-मके नियामकान्तराभिधानप्रसङ्गनिवृत्तिरित्यर्थः।

यद् येन विना यन्न ज्ञापयितुं कर्तुं वा पारयति तत्तदपेक्षते। यथा दीपो नयनादि, दण्डश्चक्रादि। न च स्वज्ञापकेन विना प्रमाणं स्वकार-णेन विना कारणं स्वक्रियां प्रत्यशक्तम्। तथा सति स्वज्ञापकादेः सहकारित्वप्रसङ्गे तत्सहकारिविरहात् किमपि न किञ्चित्। तथा च त्वद् दूषणमपि सकारणं विना न दूषणादिसमर्थं स्यादिति स्वव्याघात-कत्वम्। तदपेक्षायां वानवस्था तुल्या। सदपि वा नियामकनियामकं तदेव वाच्यमिति, कुतः, मानाभावात्। तस्मात् त्वयापि नियामकान्त-रापेक्षा तदा न कर्तव्यैव प्रदीपवदित्याशयः ।५।१।१०।

प्रतिदृष्टान्तसमोत्तरम्—

**प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ।५।१।११।**

प्रतिदृष्टस्य त्वया स्वाभिमतहेतुत्वे स्वीक्रियमाणे मदीयो दृष्टान्तो नाहेतुर्नासाधकः । तथा च तेन स्वसाध्ये प्रथममेव साधिते कथं प्रतिदृष्टान्तेन तदपहर्तव्यम्, प्रमितस्य दूरीकर्तुमशक्यत्वात् । तथा च तेनापहृतविषयः दृष्टान्तः स्वयमेवाफलीभविष्यति । अथ न प्रतिदृष्टान्तो हेतुस्तदोपादानमेव तस्याः फलमित्यर्थः ।

यद्वा प्रतिदृष्टान्तस्य हेतुत्वे त्वया स्वीक्रियमाणेऽहेतुर्दृष्टान्तो न भवतीति हेतुरपि त्वया पक्षसाधारणो वाच्यः स च दुर्घट इत्यर्थः । अहेतुत्वे चोपादानमेव व्यर्थम् । अहेतोरपि दृष्टान्तत्वे त्वद्वचनमप्य प्रामाणिकं त्वद् विषाणवदित्यपि स्वव्याघातकतेत्याशयः ।५।१।११।

## [ अनुत्पत्तिसमजातिलक्षणम् ]

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ।५।१।१२।**

अनुत्पत्त्या समेत्यनुत्पत्तिसमेति समाख्यालभ्यलक्षणमनूद्यते । कारणाभावादिति सामान्याभिधानात् कार्यं साधनाङ्गमात्रमेव लभ्यते । तथा चानुमानाङ्गोत्पत्तिपूर्वकाले तदसंबद्धाद्धेतोर्वैकल्यापादनमनुत्पत्तिसमा । तत्र पक्षे तावत् शब्दोऽनित्यः कार्यत्वादित्युक्ते शब्दस्योत्पत्तेः पूर्वं कार्यत्वमसिद्धमित्यकार्योऽप्यनित्य इति विरोधः भागादिसिद्धिश्च । ननु शब्दमात्रपक्षीकरणे न भागादिसिद्धिः । न ह्यनुत्पन्नः शब्दः अनुत्पत्तिदशायामशब्दत्वात् । उत्पन्नानुत्पन्नशब्दपक्षीकरणे भागासिद्धिः सद्दूषणमेव स्यात् । अनुत्पत्तिदशाकस्य पक्षत्वारोपे च छलमेव स्यात् तात्पर्यारोपादिति चेत् न । उत्पन्नानुत्पन्नयोर्भेदे सत्यनुत्पत्तिदशाकस्य पक्षत्वारोपेण भागासिद्धिदेशनाया असद्दोषत्वात् । शब्दातात्पर्यानारोपेण चाच्छलत्वादिति ।

लिङ्गे यथा इदं गुरु पतनवत्त्वादित्युक्ते पतनपूर्वकाले पतनासिद्धौ विरोधः। न ह्यपतनधर्मकं गुरु भागासिद्धिश्च, पक्षस्यैकत्वेऽपि तत्तत्कालविशिष्टं नानेत्यभिमानेन भागासिद्धिदेशनात्।

साध्ये इदं गन्धवत् पार्थिवत्वादित्युक्ते प्रथमलक्षणे बाधः। तथा च्चागन्धवतः पार्थिवत्वमिति विरोधः।

दृष्टान्ते यथा आत्मा द्रव्यं गुणवद् वा घटवदित्युक्ते आद्यक्षणे साधनविकलो दृष्टान्तः। विरोधनादिदेशनाभासा चेयम् ।५।१।१२।

अत्रोत्तरम्—

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः। ५।१।१३।**

उत्पन्नस्य पक्षादेस्तथाभावात् पक्षत्वादिभावात् कारणानामनुमितिकारणानां पक्षादीनामुपपत्तेः संभवात्। न कारणादीनां पक्षादीनां प्रतिषेध इत्यर्थः। न ह्यनुत्पन्नः शब्दादिः पक्षादिर्यदुक्तदोषाः स्युः।

ननु कथं तदानुत्पन्नः शब्द इति व्यपदेशोऽनुपपन्नस्याशब्दत्वादिति चेत् न, शब्दप्रतियोगिकः प्रागभावोऽयमिति तदर्थत्वात्। साधनसाध्यादयस्तु यदा कदाचित् सत्त्वेनैव योग्यतया साधनतां यान्तीति न दोष इति भावः।५।१।१३।

## [ संशयसमजातिलक्षणम् ]

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः।५।१।१४।**

संशेतेऽनेनेति संशयः समानधर्मोऽसमानधर्मो विप्रतिपत्तिश्चेति

तैः समा संशयसमेति समाख्यालभ्यमेव लक्षणमनूद्यते। नित्यानित्य-साधर्म्यादिति । नित्यानित्येति सपक्षविपक्षोपलक्षणं साधर्म्यादिति संशयकारणोपलक्षणमजहत्स्वार्थलक्षणया अवशिष्टमुदाहरणपरम् । साधर्म्यादित्यनन्तरं संशयापादनमिति पूरणीयम् ।

तथा च संशयसामग्र्यैकदेशमात्रात् संशयप्रसञ्जनं संशयसमा। उदाहरण एव सूत्राक्षरार्थौ दर्श्येते । तथा हि शब्दोऽनित्यः कार्यत्वात् घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे चैन्द्रियकत्वे समाने विद्यमाने, तस्मात् समानदृष्टान्तयोः साधर्म्यादैन्द्रियकत्वात् संशय-समेत्यर्थः। यथा त्वया कार्यत्वादनित्यत्वनिर्णयः क्रियते तथा मया नित्यानित्यसाधर्म्यादनित्यत्वसंशय आपादनीय इति भावः ।

एवं यथा कार्यत्वादनित्यत्वनिर्णयस्त्वया क्रियते तथा मया नित्यानित्यव्यावृत्ताच्छब्दत्वात् त्वयि संशय आपादनीयो विप्रतिपत्त्या वेति । एवं शब्दो गुण उद्भवयोगात् रूपवदित्यत्र यथा त्वयोद्भव-योगाद् गुणत्वनिर्णयस्तथा मया गुणागुणसाधर्म्यात् साक्षात् संबन्ध-वेद्यत्वाद् गुणत्वसंशय आपादनीय इति सत्प्रतिपक्षदेशनाभासा चेयम् । ५।१।१४।

अत्रोत्तरम्—

**साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामा-न्यस्याप्रतिषेधः ।५।१।१५।**

अत्यन्तसंशय आपाद्यमानेन संशयः संशय एव न स्यात् । कुतः, वैधर्म्याद् वैधर्म्यदर्शनात् । वैधर्म्यस्य कार्यत्वस्य विशेषस्य मया प्रदर्शनादित्यर्थः ।

विशेषविशेषदर्शनसहकृतं समानधर्मदर्शनं हि संशायकम् । तच्चात्र नास्तीति भावः । ननु विशेषदर्शनेऽपि संशयो भवत्येवेति यदि ब्रूयात् तत्राह—उभयथा वेति । उभयथा समानधर्मदर्शने विशेषदर्शनेऽपि संशये ह्युपगम्यमानेऽत्यन्तसंशयप्रसङ्गः । यदा संशयोऽनुच्छेद्य एव स्यात् । उच्छेदकस्यापि विशेषदर्शनस्य जनकत्वाभ्युपगमादित्यर्थः ।

अत्रापि धाष्टर्याद्यदीष्टापत्तिमेव कुर्यात्तत्राह नित्यत्वानभ्युपगमाच्च सामान्यस्येति । समानधर्मदर्शनस्य त्वयापि नित्यत्वाभ्युपगमान्नित्यसंशयकारणत्वानभ्युपगमादित्यर्थः । अन्यथाऽनिर्णायकसाधर्म्यात् प्रमेयत्वात् तवापि नित्यत्वसाधकता संशय एव स्यात् । अतः परपक्षप्रतिषेधकतैव न स्यादिति भावः ।

सर्वत्र साधर्म्यादौ विपर्ययेण विपर्ययज्ञानमत्र लक्ष्यते नित्यत्वेन च नित्यसंशयकारणत्वम् ।५।१।१५।

## [ प्रकरणसमजातिलक्षणम् ]

### उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ।५।१।१६।

प्रक्रियते प्रकृतीक्रियते स्थाप्यतयाऽनेनेति प्रक्रिया संशयः । तेन सम इत्यर्थे सूत्रयोजना प्राप्तैव किन्तु संशयसमातो भेदो न भवतीत्यन्यथा व्याख्यायते । प्रशब्दोऽत्र प्राथम्यद्योतकः प्रथमा वा क्रिया । प्रयोगः प्रक्रिया पूर्वमेव साधनं तेन समा स्वपरपक्षदूषणे तुल्या प्रकरणसमेति समाख्यालभ्यमेव लक्षणमनूद्यते । पक्षसाधनरूपायाः सिद्धेर्यतः प्रत्यवस्थानं अर्थतो वा बाधदेशनारूपं तत् प्रकरणसमेत्यर्थः ।

तथा चारोपिताधिकरणेन बाधाभिधानं प्रकरणसम इति *परिशिष्टम्* ।

एतन्मते तूभयसाधर्म्यादिति मानमात्रोपलक्षणमेव । अभ्युपगतं वस्तुगत्यानभ्युपगमस्यैव प्राथमिकत्वस्य बलवत्त्वमुत्कर्षाधायकं यत्र तादृशेत्यर्थः । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नैतदेवम् श्रवणत्वेन नित्यशब्दत्वसाधर्म्येण नित्यत्वस्य पूर्वमेव साधिततत्त्वादिति *परिशिष्टमते* प्रत्यभिज्ञया पूर्वमेव नित्यत्वासाधनादित्यपि वाच्यम् । बाधनादेशनाभासा चेयम् ।५।१।१६।

अत्रोत्तरम्—

**प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ।५।१।१७।**

इति सूत्रम् । उभयसाधर्म्यं ज्ञात्वापि यत्प्रकरणम् पूर्वप्रयोगः साधनीयः स प्रतिपक्षात् प्रतिपक्षसाधनात् श्रावणत्वादेः, तत्र प्रतिपक्षात् प्रतिपक्षसाधनात् प्रकरणसिद्धेर्यत्त्वया मदीयस्थापनाया बाधरूपः प्रतिषेधः क्रियते तस्यानुपपत्तिः । कुतः, प्रतिपक्षोपपत्तेः द्वितीयपक्षापेक्षया प्रतिपक्षः स्था[प]नैव तदुपपत्तेः । यादृशेन हेतुना त्वया पूर्वप्रयोगः साधनीयः तदविशिष्टेनैव हेतुना स्थापनाया अपि साधितत्वात् । प्रतियोगिनं दृष्ट्वा प्रतियोगि निवर्तते इति न्यायेन पूर्वसाध्यस्यैव वृत्तेः । नहि गमकरूपाविशिष्टेऽपि प्राथमिकत्वमेव बलं तदपोह्य प्रवृत्तत्वेन उत्तरस्यापि बलवत्त्वापत्तेः । न चानादौ संसारे शब्दानित्यत्वसाधनं पूर्वं न प्रवृत्तमित्यत्र मानमस्ती[ति] भावः । अन्यथा त्वद्दूषणमसत् तत्पूर्वमेव मया तद् विपरीतसाधनादिति तवापि दोषापत्तेरिति । ५।१।१७।

## [ अहेतुसमजातिलक्षणम् ]

**त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ।५।१।१८।**

अहेतुना हेत्वभावेन समाहेतुसमेत्यन्वर्थसंज्ञाप्राप्तं लक्षण

मनूद्यते बीजप्रतिपादनायैव हेतोस्त्रै[का]ल्येऽपि कालत्रयेऽप्यसिद्धेः प्रत्यवस्थानमहेतुसमेत्यर्थः । समयसम्बन्धमात्रानुपपत्त्या हेतोरहेतुतापादनमहेतुसमा । हेतुरत्र कारकज्ञापकसाधारणः । उत्थानं तु साधनत्वम् साध्यपूर्वभावितयोत्तरभावितया साधनस्य भवेत् । प्रथमे साध्यमेव नास्तीति किं प्रति साधनं स्यात् । न ह्यसति साध्ये साधनत्वं नाम । अत एव न द्वितीयः । तृतीये तु समानकालीनयोः सव्येतर विषाणयोरिव न कार्यकारणभाव इति प्रतिकूलतर्कदेशनाभासा चेयम् ।

ननु साध्यसाधनभावाप्रतिषेधाविशेषात् प्राप्त्यप्राप्तिसमाभ्यामस्याः को भेद इति चेत् न, तत्र सन्निकर्षासन्निकर्षखण्डनेन हेतुताप्रतिषेधादिह तु कालसंबन्धखण्डनेन हेतुताखण्डनात् । तत्र सहकारिणः संबन्धस्य खण्डनादिह तु पूर्ववर्तितामेकस्य कारणत्वस्वरूपस्यावखण्डनादिति ।५।१।१८।

अत्रोत्तरम्—

## न, हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ।५।१।१९।

न त्रैकाल्यासिद्धिः । कुतः हेतुतः । साध्यसिद्धेस्त्वयापि अभ्युपगन्तव्यत्वादिति शेषः । यदि भवता नैतदभ्युपगन्तव्यम् तदा तवापि दूषणम् तद् दूषकं वचनं चाप्रतिपादकं स्यादिति स्वव्याघातकता । तस्माद् बुद्धिस्तयोरेव कार्यकारणयोरन्योन्यनिरूपकता त्वयापि वाच्या अन्यथेतरेतराश्रयप्रसङ्ग इत्यर्थः ।५।१।१९।

अस्यैव जात्युत्तरत्वख्यापनार्थं सूत्रान्तरम्—

## प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ।५।१।२०।

प्रतिषेद्धव्यस्य हेतोरप्रतिषेधः प्रतिषेधो नोपपद्यत इत्यर्थः । कुतः प्रतिषेधानुपपत्तेरेव । त्वदुक्तरीत्या प्रतिषेधहेतुरपि खण्डित एवेति स्वव्याघातकतापत्तिरित्यर्थः ।५।१।२०।

## [ अर्थापत्तिसमजातिलक्षणम् ]

### अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ।५।१।२१।

अर्थापत्तिवदनुपपत्तिरर्थापत्त्याभासस्तेन समार्थापत्तिसमा । अर्थापत्तितयाभिमन्यमानत्वात् । प्रतिपक्षस्य प्रतिपिपादयिषितविरोधिनः सिद्धेः प्रत्यवस्थानमर्थापत्तिसमेत्यर्थः ।

उक्तस्यानुक्ताक्षेपकत्वनियम इत्यभिमानेन दोषाभिधानमर्थापत्तिसमा । यथा शब्दोऽनित्य इत्युक्तेऽर्थादापद्यते नान्यदनित्यम । विशेषविधेः शेषनिषेधफलकत्वात् । तथा च साध्यविकलो दृष्टान्तः ।

विरुद्धता च हेतोः कृतकत्वादनित्य इत्युक्तेऽर्थादापद्यते अन्यस्मान्नित्य इति । बाधः सत्प्रतिपक्षो वा । एवं प्रत्यक्षादनित्य इत्युक्तेऽर्थादापद्यतेऽनुमानान्नित्य इति बाध एव । किञ्च कृतकत्वादनित्य-इत्युक्ते हेत्वन्तरं सव्यभिचारं न वेति द्रष्टव्यम् । अन्त्ये अन्यस्य तदभाव इदमेव तथा प्राप्तम् । आद्ये तुल्ययोगक्षेमत्वात्, इदमपि तथा कथं न स्यात् । एवमेव हेत्वन्तरं विरुद्धत्वादिना विकल्प्यान्यथात्वमापादनीयमिति । सर्वदोषदेशनाभासा चेयम् ।५।१।२१।

अत्रोत्तरम्—

### अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ।५।१।२२।

अनुक्तस्यैव चेदर्थादापत्तिस्तदा त्वत्पक्षस्य नित्यत्वस्य हानेरुपपत्तिः । नहि त्वयाऽनित्यत्वमुक्तं किन्तु नित्यत्वम् । तथा च नित्यत्वाक्षेपे नित्यत्वहानिरित्यर्थः ।

ननु तवैवार्थापत्त्याऽनुक्ताक्षेपो न ममापीति चेदत्र ब्रूयात्,

तत्राह—अनैकान्तिकत्वाच्चार्थापत्तेरिति । न ह्येकस्मिन्नेवान्ते स मत्प्रतिपक्षमात्र एवेयमर्थापत्तिः । किन्तु त्वत्पक्षेऽपि विशेषाभावात् । यदि तूक्तोपपादकमनुक्तमर्थादापद्यते नानुक्तमात्रमिति नित्यत्वस्योक्तस्यानुपपादकमनुक्तमप्यनित्यत्वं नायास्यतीति ब्रूषे—तदा शब्दोऽनित्य इत्यस्योक्तस्यानुपपादकं नित्यत्वमिति तदपि नायास्यतीत्यर्थः । ५।१।२२।

## [ अविशेषसमजातिलक्षणम् ]

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ।५।१।२३।**

विशेषो भेदो न विशेषोऽविशेषोऽभेद इत्यर्थः । तेन समा अविशेषसमा । तथा चान्वर्थसंज्ञालब्धं लक्षणमनूद्यते । एकस्य धर्मस्य कृतकत्वादेः पक्षे दृष्टान्ते चोपपत्त्या सत्त्वेन पक्षदृष्टान्तयोरनित्यत्वेना विशेषे वादिनोच्यमाने सर्वेषामविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमेत्यर्थः ।

ननु कथं सर्वाविशेष इत्यत आह—सद्भावोपपत्तेः । सतां प्रामाणिकाणां भावानां वा ये धर्माः प्रमेयत्ववाच्यत्वसत्त्वभावत्वादयस्तदुपपत्तेरित्यर्थः । एकपदेन यत्किञ्चित् साधारणधर्ममात्रमुक्तम् । तेन साधारणधर्ममात्रस्यानिष्टापादनसामर्थ्यमित्यभिमानेन यत् किञ्चित्पक्षदृष्टान्तसाधारणधर्माणां विशेषः स्यात् । तथा च तादात्म्ये पक्षाद्यविभागस्तज्जातीयत्वेन विशेषे जातिसङ्करः । विरुद्धजात्योः समावेशाङ्गीकारे विरोधश्चेत्यादि । उत्कर्षसमाव्यावृत्त्यर्थं यत्किञ्चिदिति । तत्र साध्यसाधनाभ्यामेव प्रसञ्जनमत्र तु येन केनापीति प्रतिधर्मेणाप्रत्यवस्थानाच्च न साधर्म्यसमासाङ्कर्यमपि । नापि विकल्पसमासंभेदः । विकल्पेनानुपक्रमादनुपसंहाराच्चेति । सर्वदोषदेशनाभासा चेयम् ।५।१।२३।

अत्रोत्तरम्—

**क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ।५।१।२४।**

त्वदुक्तस्य प्रतिषेधस्यातिप्रसङ्गेन कृतकत्वं नानित्यत्वं, न शब्द-घटयोरविशेषबोधकमित्येवंरूपस्याभावोऽसंभवः । कुतः, क्वचिच्चो-पपत्तेः । क्वचिदेव व्याप्ये कृतकत्वादौ सति तस्य धर्मस्यानित्य-त्वेनाविशेषस्योपपत्तेः । नहि व्यापकं विना व्याप्यं संभवतीत्यर्थः ।

ननु धर्मत्वाविशेषात् सत्त्वादेरपि सति तथास्त्वित्यत आह—क्वचित्तु धर्मानुपपत्तेरिति । क्वचिदव्याप्ये सत्त्वादौ सति तद्धर्मस्या-नुपपत्तेः । कथमयं विशेष इति चेत् न, व्याप्तेरेव नियामकत्वात् । अन्यथा त्वद्दूषणमदूषकाद् विशिष्टं प्रमेयत्वादि स्थापनावदित्यपि स्यादिति भावः ।५।१।२४।

## [ उपपत्तिसमाजातिलक्षणम् ]

**उभयकारणोपपत्तेरुपपत्तिसमः ।५।१।२५।**

उपपद्यतेऽनेन साध्यमित्युपपत्तिः प्रमाणम् । तेन समा उपपत्ति समेति समाख्यालभ्यमेव लक्षणमनूद्यते । कारणपदेनात्र ज्ञप्तिकारणं योग्यतामहिम्नोच्यते । तथा चोभयस्य पक्षप्रतिपक्षबोधकस्य कारणो-पपत्तेः कारणसद्भावात् प्रत्यवस्थानमुपपत्तिसमेत्यर्थः । परपक्षे साधनसाधारणधर्मबलेन स्वपक्षसाधनोपपादनाद्दोषाभिधानमुपपत्ति-समेति फलितम् ।

यत्र परपक्षसाधनसाधारणेन सत्त्वादिना स्वपक्षस्यापि साधनं साधयति तत्रोपपत्तिसमा भवति । यथा शब्दोऽनित्यः कृतकत्वा-दित्युक्ते यथा त्वत्पक्षेऽनित्यत्वसाधनं तथा मत्पक्षेपि नित्यत्वसाधनं भविष्यति, सत्त्वादेः त्वत्पक्षवदिति नित्य एव स्यान्नानित्य इति । अनया परम्परया बाधप्रतिरोधौ दर्श्येते इति तदाभासा चेयम् ।

प्रकरणसमसंशयसमयोस्तु व्यवस्थितेन हेतुना साक्षात् स्वपक्षे साध्यमेव साध्यते। अत्र तु साक्षात् साधनं साध्यते परम्परयार्थात् साध्यं सिद्ध्यतीति ताभ्यां भेदः ।५।१।२५।

अत्रोत्तरम्—

**उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ।५।१।२६।**

अयं विपरीतसाधनोपन्यासमुखेन परपक्षनिराकरणात्मा प्रतिषेधो न संभवति। कुतः, परपक्षोपपत्तिकारणस्याभ्यनुज्ञानात्। यथा त्वत्पक्षे साधनं मत्पक्षेऽपि तथैवेति वदता त्वया परपक्षोपपत्तिकारणं स्वीकृत्य स्वपक्षे साधनं साध्यते। तथा चाप्रतिषेधः। न ह्येकत्र स्वीकारनिषेधौ युगपद् भवतो विरोधात्। अननुज्ञाने वा स्वीयमपि नानुजानीयादविशेषात्। किञ्चोभयसम्प्रतिपन्नत्वेन बलीयसा मत्साधनेन साध्यमानेऽन्यतरासिद्धेनाल्पबलेन त्वत्साधनेनापहृतविषयतया किं साधनीयम्। यदि वा स्वपक्षस्यैव बलवत्तामभ्युपैषि तर्हि मत्पक्षे दूषणान्तरं वद। न च वक्तुं शक्यसि योग्यस्यानुपलब्धिबाधितत्वात्। अयोग्यदोषशङ्कया तु दूषणमप्यदूषकं स्यादिति स्वव्याघातकता। ५।१।२६।

## [ उपलब्धिसमजातिलक्षणम् ]

**निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ।५।१।२७।**

उपलब्धिपदमत्र सामान्योक्तमपि साध्योपलब्धिमाह। तदर्थमेव न्यायप्रवृत्त्या तस्या एव प्रकृतत्वात्। उप अधिके लब्धिर्लाभः। साध्यादेरुपलब्धिर्विधीयमानातिप्रसक्तिरिति यावत्। 'उप समीपवाचि स्यादुप हीनेऽधिकेऽप्युपे'ति *धरणिकोषात्।*

तथा चोपलब्ध्या समोपलब्धिसमेति समाख्यालभ्यमेव लक्षण-

मनूद्यते। कारणं ज्ञप्तेर्ज्ञापकम् पक्षसाधनादि। तथा च निर्दिष्टज्ञापकाभावेऽपि ज्ञाप्योपलम्भात् प्रत्यवस्थानमुपलब्धिसमा। उत्थानबीजं तु वाक्यस्यावधारणगर्भत्वाभिमानः।

तथा च वाक्यार्थावधारणविकल्पदोषेण प्रत्यवस्थानमुपलब्धिसमा। यथा पर्वतो वह्निमानित्यत्र किमवधार्यते। किं पर्वत एव वह्निमान् किं वा वह्निमानेव पर्वतः। अथ पर्वतो वह्निमान् भवत्येवेति विशिष्टप्रतीतिर्हीयमवश्यं किञ्चिद्व्यवच्छेदिका स्यात्।

आद्येऽपर्वतोऽपि वह्निमानिति व्याघातः। द्वितीये वृक्षादिमान्न स्यात। तृतीये निर्वह्निः पर्वतो न स्यादेव। एवं धूमवत्त्वादेव वह्निमान् किं वा धूमवत्त्वात् पर्वत एव वह्निमान्। आद्ये नालोकवत्त्वात्तथा स्यात्। अन्त्ये नान्यो धूमवत्त्वात् तथा स्यात्। एवं यथासंभवं विकल्प्य बाधादिर्वाच्यः। बाधादिदेशनाभासा चेयम् ।५।१।२७।

अत्रोत्तरम्—

## कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ।५।१।२८।

धूमवत्त्वादेवाग्निमत्त्वादिप्रतिषेधो नोपपद्यते। कुतः, कारणान्तरादप्यालोकादेस्तस्य धर्मस्य साध्यस्योपपत्तेः। न ह्यवधारणगर्भं धूमवत्त्वादि वाच्यं यदुक्तदोषः स्यात्, मानाभावात्। धूमवत्त्वात्तावदस्य वह्निमत्त्वमवबोध्यते। अन्यस्मादप्यस्यैवान्यस्य वावगम्यताम्। तावता न मद्वाक्यमसंबद्धं भवति। अन्यवादजल्पयोर्भवदीयस्थापनायामप्येतादृशदोषसंभवस्तवापि स्यात्। वितण्डायामप्येवं, तवासाधकतानुमानभङ्गापत्तेः। न हि तस्यापीदमसाधकमेवेत्यर्थः। एवकारस्याप्रयोजकत्वात्। असाधकमित्येतावन्मात्रेणैव समीहितसिद्धेः। न चेदमेवासाधकं, दोषान्तरवदुक्तस्याप्यसाधकत्वात्। तस्यापि वा साधकत्वे इदमपि साधकं स्यादविशेषादिति ।५।१।२८।

## [ अनुपलब्धिसमजातिलक्षणम् ]

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपलब्धेरनुपलब्धिसमः ।५।१।२६।**[1]

अत्र तदिति सर्वनाम्नः प्रस्तुतप्रत्ययमर्शित्वात् प्रतिषेधात्मिकाया अनुपलब्धेः प्रतिषेध्याकाङ्क्षितत्वाच्च *भाष्यकृत्* सूत्रादस्माद् पूर्वमेव निषेध्यमाह—न प्रागुच्चारणाविद्यमानस्य शब्दस्यानुपलब्धिः किन्तु सत एवेत्यर्थः । कस्मात् आवरणाद्यनुपलब्धेरिति । यद्येवन्तर्हि जलादेर्विभागादिवच्छब्दस्यावरणमुपलभ्येत तदावरणसद्भावः स्यादिति, तदपनयायोच्चारयितुः प्रयत्नो घटेत । तच्च नोपलभ्यते । अनुपलम्भाच्चावरणाभावे निश्चिते बहुप्रयत्नः शब्दोत्पादक एवेति *भाष्यार्थः* ।

अत्र जातिवादिनामनुपलब्धिसमसूत्रोत्थानम् । तस्यार्थः तदनुपलब्धेर्द्वारणानुपलब्धेः अनुपलम्भाद्धेतोरभावस्य सिद्धौ सत्यां तद्विपरीताया उपलब्धेरावरणोपलब्धेर्यत् प्रत्यवस्थानं प्रागुच्चारणाद् विद्यमानस्यैव शब्दस्यानुपलम्भ इत्येवंरूप तदनुपलब्धिसमेति ।

नन्वनुपलब्धेर्यद्यनुपलब्धिः स्यात्तदैवं स्यादेव नत्वेवम्, अनुपलब्धेर्ज्ञानाभावरूपाया आत्मनिष्ठाया मनसैव साक्षात् कारणादिति चेत् न । साप्यनुपलब्धिरनुपलब्ध्यन्तरेण चेद् ग्राह्या तदानवस्था स्यादिति । सैव स्वात्मन्यनुपलब्धिर्वाच्या । तथा च स्वात्मरूपया अनुपलब्ध्या तस्या एवानुपलब्ध्यानुपलब्ध्यसंभवात् । आत्म[नि]चानुपलब्धिरूपत्वाभावेऽनुपलब्धित्वस्यैव व्याहृतिः । सविषयकधर्मस्य विषय इव स्वस्मिन्नपि स्वरूपाविशेषनियम इति वादिनोऽभिमानादिति *टीका*पर्यन्तस्वरसः ।

---

१. °तोपपत्तेर° इत्यन्यत्र पाठः ।

*परिशिष्टकृतस्तु* जातिवादिनो यथोक्ताभिमानादेवानुपलब्धि पदेन विषयी धर्मः सर्वोऽप्युपलक्षितः । तेनानिष्टसमादेरप्युपग्रह इत्याहुः ।

तेषां [चायमाशयः] अनुपलब्धीत्यत्र पर्युदासे नञ् । तेनोपलब्धि-सदृशं विषयिमात्रमुच्यते, अब्राह्मण इति न्यायात् । तेनोपलब्ध्यनुपलब्धी इच्छानिच्छे शक्त्यशक्ती द्वेषाद्वेषौ कृत्यकृतीत्यादिसंग्रहः । अन्यथा आसां जात्यन्तरप्रसङ्गो विभागव्याघात इति । तथा चात्मनि तदतद्रू-पताविकल्पेन स्वव्याघातकदोषाभिधानमनुपलब्धिसमेति लक्षणपर्यव-सानम् ।

अयन्तु न सूत्राक्षरार्थः । एतन्मते त्वियमेवं प्रवर्तते । उपलब्धं लिङ्गादि गमकं, उपलब्धश्चोपलब्धिविषयः, उपलब्धिश्च स्वात्मन्युप-लब्धिरूपा न वा ? आद्ये त्वात्माश्रयः । उपलब्धेरुपलब्धत्वे घटादिवद-नुपलब्धित्वप्रसङ्गः । द्वितीये तूपलब्धेरेवानुपलब्धिरिति तदभावा-ल्लिङ्गाद्युपलब्धिमेव न स्यादित्यसिद्ध्यादिप्रसङ्गः । एवमनुपलब्धिः स्वात्मन्यनुपलब्धिश्चेत् तदानुपलब्धत्वात् तदभाव एव । तथा चानु-पलब्ध्या यदभावोऽभ्युपेयते तस्यैव सिद्धिः स्यादिति विरोधः । यदि वा स्वात्मनि नानुपलब्धिरूपा तदानुपलब्धिरेव मूलभूता न स्यादिति । तथापि यस्यानुपलब्धिरुच्यते तत्सिद्धिरेवेति वैपरीत्यमेव । अथानुप लब्ध्याप्यनुपलब्धिः स्यादेव तदा घटादयोऽनुपलब्धाः स्युरेवेत्यनुप-लब्धेरभावसिद्धिरित्यपि न स्यात् । एवमन्यत्रापि विकल्पे दूषणमूहनी-यम् । सर्वदोषदेशनाभासा चेयम् ।५।१।२९।

अत्रोत्तरम्—

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ।५।१।३०।**

तदनुपलब्धेरनुपलम्भादित्यादिकमहेतुः । कुतः, अनुपलब्धेः उपलब्ध्यभावस्यानुपलम्भात्मकत्वात् उपलम्भाभावमात्रात्मकत्वात् ।

तथा च न तस्याः स्वात्मापि विषयो यदनुपलब्धेरनुपलम्भादावरणो पलब्धिपर्यवसानादावरणसत्तायां प्राप्तायां प्रयत्नेन तदपनयादुच्चारणपूर्वं विद्यमानस्यैव शब्दस्यानुपलब्धौ शब्दनित्यता स्यादित्यर्थः।

न वा विषयी धर्मो यथा विषये तथात्मन्यपि स्वस्य स्वाविषयत्वात्। विषयविषयिभावस्य भेदगर्भत्वात्। अनुपलब्धेश्च मनसात्मनि साक्षात्करणाच्चानुपलब्धिः। यथा च नानवस्थादि तथा *प्रामाण्यवादे*ऽन्वेष्टव्यम्। अन्यथा त्वद्वचनान्यनुपलभ्यमानदोषाण्यपि दोषवन्त्येव स्युः। दोषानुपलब्धेरनुपलम्भदोषानुपलब्धय भावे सदोषता स्थैर्यात्। एवं सर्वत्रोपलब्ध्यादावप्युपलम्भात्मकत्वादुपलब्धेरहेतुरित्यादिक्रमेण सूत्रविपरिणाम ऊहनीयः[1] ।५।१।३०।

## [ अनित्यसमजातिलक्षणम् ]

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वनित्यत्वप्रसङ्गादनित्यसमः ।५।१।३१।**

अनित्येति भावप्रधानो निर्देशः। तेनानित्यत्वेन समाऽनित्यसमेत्यन्वर्थसंज्ञाप्राप्तमेव लक्षणमनूद्यते। दृष्टान्तसाधर्म्यादेव चेद् दृष्टान्तेन तुल्यो धर्मोऽनित्यत्वं पक्षे स्यात्तदा सर्वेषामेव दृष्टान्त साधर्म्यं सत्त्वादि सम्भवतीति। सर्वेषामनित्यत्वमायातमित्याकारेण प्रत्यवस्थानमनित्यसमेति सूत्रार्थः।

*परिशिष्टे* तु साधर्म्यवैधर्म्यस्याप्युपलक्षणमुक्तम्। तेन वाद्युक्त प्रयोजकसामान्यमात्रेण विपक्षत्वाभिमतस्य सपक्षत्वप्रसञ्जनमनित्य समेति फलितम्। मात्रपदं प्राप्त्यनपेक्षार्थकं जातितानिर्वाहाय।

---

1. ज्ञानाविकल्पान च भावाभावसंवेदनादध्यात्मम् सूत्रमेतदत्र नोपलभ्यते।

यथा शब्दोऽनित्यः कृतकत्वाद् घटवदित्युक्ते, यथा घटसाधर्म्यात् कृतकत्वाच्छब्दस्यानित्यत्वं तथा तत्साधर्म्यात् सत्त्वात् सर्वमेवानित्यं स्यात्। एवं यथाकाशवैधर्म्याच्छब्दोऽनित्य एवं सर्वमेतद्वैधर्म्यात् शब्दानाश्रयत्वान्नित्यं प्राप्तमिति।

न चेयमविशेषसमैव धर्ममात्रबलेनानिष्टापादनादिति वाच्यम्। अविशेषस्य सप्रतियोगिकत्वादन्यस्य चातथात्वात्। तत्र पक्षादेरप्यविशेषापादनमिह तु विपक्षमात्रस्यैव सपक्षतापादनमित्यतोऽपि भेदात्।५।१।३१।

अत्रोत्तरम्—

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्।५।१।३२।**

असिद्धेरित्यनन्तरस्वीकार इति पूरणीयम्। नित्यसाधर्म्यात् सत्त्वादनित्यत्वस्यासिद्धेः स्वीकारे प्रतिषेधस्यापि भवदुच्यमानस्यासिद्धिः स्यात्। कुतः? प्रतिषेध्यसाधर्म्यात् प्रतिषेध्येन स्थाप्येन साधर्म्यात्। अस्त्येव हि मतस्थाप्येन तव प्रतिषेध्येन प्रतिषेधस्य त्वद्वचनस्य प्रतिज्ञाद्यवयवयोग्यत्वं साधर्म्यमिति। अथ साधर्म्यमात्रं न साधकं किन्तु साधर्म्यविशेषो नियतं साधर्म्यं तन्मतप्रतिषेधे नास्तीति ब्रूषे, तदा सत्त्वमपि न नियतं नित्यत्वेनेति न नित्यत्वसिद्धिरपीति प्रत्यूहेनानित्यत्वनियतेन कार्यत्वेन नित्यत्वमेव सेत्स्यतीत्यर्थः।

यद्वा कृतकत्वमनित्यत्वासाधकं दृष्टान्तसमानधर्मत्वात् सत्त्ववदिति तद्वाक्यार्थः। तथा च साधर्म्यादसिद्धेः समानधर्मत्वादनित्यत्वादनित्यत्वासिद्धेरसिद्धेरभ्युपगमे प्रतिषेधस्यापि त्वद्वचनस्याप्यसिद्धिरसाधकता। कस्मात्? प्रतिषेध्यसाधर्म्यात् प्रतिषेध्येनैव

साधर्म्यात् समानधर्मात्मकत्वात्। मदुक्तसाधर्म्यस्य कार्यत्वस्य यथा साधकत्वं तथाऽसत्त्वस्यापि समानधर्मत्वाविशेषात्। प्रतिषेध्यं च तत् साधर्म्यं चेति कर्मधारयो वा। तथा च यथा मत्साधर्म्यं त्वया असाधकमुच्यते तथा त्वदुक्तं मयापीत्यर्थ इत्याहुः।

अत्र सामान्यमात्रमुक्तं भवति न तु स्वव्याघातक इति नायमर्थः ।५।१।३२।

एवं जातिवादिनो व्याघातमुक्त्वा स्वपक्षसाधनाय परमार्थदोषमाह—

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः ।५।१।३३।**

न साधर्म्यमात्रं गमकं येनाविशेषः स्यात्। किन्तु दृष्टान्ते साध्य साधनभावेन साध्यव्याप्तत्वेन प्रज्ञातस्य प्रकर्षेण ज्ञातस्य प्रमितस्य तादृशस्य हेतुभावो हेतुत्वं यतोऽतो नाविशेषः।

ननु मदुक्तसाधर्म्यस्यापि नभसि दृष्टान्ते साध्यसाधनभावेन[1] [?] एवेति यदि ब्रूयात्तत्राह—तस्य चोभयथाभावात्। सहचारदर्शनव्यभिचारादर्शनाभ्यां सहचारदर्शनतर्काभ्यां वा सम्भवात्। एतच्चोभयकृतकत्वानित्यत्वे नास्ति। स तु सत्त्वस्यानित्यत्वेन व्यभिचारस्य स्फुटत्वादित्यर्थः।

*परिशिष्टमते* तु दृष्टान्तेऽन्वयदृष्टान्ते चोभयथान्वयव्याप्तिव्यतिरेकव्याप्तिभ्यामित्यर्थः ।५।१।३३।

---

१. अत्र ग्रन्थपातः प्रतिभाति। वाक्यस्य साकाङ्क्षत्वात्।

## [ नित्यसमजातिलक्षणम् ]

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः । ५।१।३४।**

नित्येति भावप्रधानो निर्देशः । तेन नित्यत्वेन समा नित्यसमेति समाख्यालभ्यलक्षणमनूद्यते । अनित्ये वस्तुनि नित्यं सर्वदाऽनित्यभावाद् नित्यत्वात् नित्यत्वोपपत्तेर्नित्यत्वापत्तेः प्रत्यवस्थानं नित्यसमेत्यर्थः ।

*परिशिष्टमते* तु नित्यपदेनाजहत्स्वार्थलक्षणया सर्वे पदार्थविशेषेण धर्मा उपलक्ष्यन्ते । नित्यमनित्यभावादित्यनेन तदतद्विकल्पः । स च सारूप्यवैरूप्याभ्यां द्विरूपः । नित्यत्वोपपत्तेरित्यनेन विवक्षितानुपपत्तिमात्रम् । तेन विवक्षितरूपस्य यत्किञ्चिद्विरुद्धविकल्पद्वारा धर्मिणि तद्वैशिष्ट्यनिराकरणेन प्रत्यवस्थानान्नित्यसमा । प्रकृत विवक्षितधर्मस्य साध्यादेः किञ्चिद् विरुद्धं विकल्पद्वारा तद्विकल्प द्वारा धर्मिण्यपेक्षितस्य साध्यवैशिष्ट्यस्य निराकरणेन प्रत्यवस्थान मित्यर्थः ।

तेन नित्यानित्यभिन्नाभिन्नकार्याकार्याश्रितानाश्रित[सत्या] सत्यसदसत्स्थिरास्थिरैकानेकानुवृत्ताननुवृत्तविशेषणाविशेषणादिसंग्रहः । यथा अनित्यः शब्द इत्युक्तेऽनित्यत्वयोगादनित्यस्तत् किं शब्देऽनित्यत्वं नित्यमथानित्यमिति । आद्ये शब्दोऽनित्य एव स्यात् । न हि सम्भवति सामान्यसमवायाभ्यामन्यो धर्मो विद्यते धर्मी च नास्तीति । अन्त्येऽनित्यत्वात् पूर्वं पश्चाद्वाऽनित्यत्वं नास्तीति बाधः स्यादतः कथं वा तदाऽनित्योऽनित्यत्वाभावात् । किञ्चानित्यत्वयोगादनित्यः । तच्च यदि नित्यं कथं नित्याकारं परस्या नित्यतां कुर्यात् । नहि श्वेताकारं वस्त्रादौ मेचकत्वमादधाति । नाप्य-

नित्यं तद्धि शब्दे तथाकारतामापादयतीति । भानकारणस्य स्फटिके-ऽरुणिमवदयथार्थत्वापत्तेः ।

तदाकारस्यान्यत्र तदाकारताप्रतिपादने घटे पटस्यापि पटाकारताप्रतिपादकत्वप्रसङ्गः । अपि चानित्यत्वस्यानित्यत्वं यद्यनित्यत्वान्तरयोगात्तदानवस्था । अथ स्वभावादेव तदाऽतत्स्वभावानां घटत्वादीनामनित्यत्वापत्तिः । अनित्यत्वे वा द्रव्यत्वव्याघात इति न प्रतिज्ञातार्थनिर्वाहः ।

एवं स्वरूपे स्वरूपान्तरवृत्तिं विकल्प्य दूषणमूहनीयम् । तथा विरूपे विरूपान्तरावस्थानविकल्पनाद् दोषः । यथा नित्यः शब्द इत्यत्र नित्यत्वयोगान्नित्यो भवति । तन्नित्यत्वं शब्दाद् भिन्नमभिन्नं वा । भिन्नं चेत्तदपि भिन्नत्वयोगाद् भिन्नमित्यनवस्था । अभिन्नमेव चेत् कथमाश्रयाश्रयिभावस्तथा च बाधः । एवं घटत्वयोगाद् घट उच्यते । घटत्वं नित्यमनित्यं वाऽन्त्ये न सामान्यरूपता । आद्ये घटस्यापि नित्यत्वप्रसङ्गः, नित्यधर्मित्वात् आत्मत्वाधारवदित्यादि । प्रतिकूलतर्कदेशनाभासा चेयम् ।५।१।३४।

अत्रोत्तरम्—

**प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ।५।१।३५।**

योऽनित्यत्वस्य प्रतिषेधस्त्वया नित्यत्वापादनेन कृतस्तस्याभावोऽसंभवः । कुतः ? प्रतिषेध्येऽनित्यतया त्वया प्रतिषेधनीये शब्दे नित्यमेवानित्यतावदनित्ययोगादनित्येऽनित्यत्वस्योपपत्तेः सम्भवादित्यर्थः ।

यत एवानित्ये सदैवानित्यत्वयोगो तत्र वा नित्यत्वमुपपद्यते । अनित्यत्वं ह्युभयान्तावच्छिन्नसत्तायोगित्वम् । तद्धि नित्यमेव सम-

वायात्मकत्वात्। न चैवं शब्दस्यापि नित्यता समवायभिन्नत्वात्। न ह्यन्यस्य नित्यतयाऽन्यस्य नित्यता भवति अतिप्रसङ्गात्। सम्बन्धयन्तरस्यासत्त्वे कथं सत्ता समवाय इति चेत् न। एकस्य शब्दस्य नाशे शब्दान्तरमादाय तत्संभवादिति।

यद्वा नित्यत्वोपपत्तेरित्यनन्तरं विरोधादिति पूरणीयम्। तथा च प्रतिषेधस्य भवदुक्तस्याभावोऽसंभवः। कुतः, प्रतिषेध्ये नित्यमनित्यभावात् नित्यत्वोपपत्तेर्विरोधात्। यत्र नित्यमनित्यं भवति तत्र नित्यत्वं विरुद्धम्। यदि नित्यत्वं, कथं नित्यमनित्यभावोऽथानित्य भावः, कथं नित्यत्वम्। अनित्यस्य नित्याधिकरणत्वं विरुद्धमिति चेत्! तत् किमनित्यस्यानित्यत्वाधिकरणत्वं मन्यसे नित्यस्य वा नित्यत्वाधिकरणत्वम्? नाद्यः, अनित्यत्वस्य नित्यत्वानित्यत्वयोस्त्वदुक्तदोषग्रासात्। न द्वितीयः, तद्धि नित्यत्वयोगात् पूर्वमेव नित्यं तदुत्तरं वा? आद्ये नित्यत्वयोगात् पूर्वमेव स्यादित्यग्रे नित्यत्वसंबन्धानुपपत्तिः। अन्त्ये किं नित्यत्वस्याग्रेऽपि संबन्धेन तं विनापि नित्यतानिर्वाहात्। तदपि नित्यत्वं नित्यमनित्यं वा? आद्ये, नित्यत्वान्तरयोगान्नित्यं स्वयोगाद्वा नित्यत्वायोगादपि वा? प्रथमेऽन्योन्याश्रयाद्यनवस्थापर्यन्तम्, द्वितीये त्वात्माश्रयस्तृतीये त्वतिप्रसङ्गः।

अथ न मया प्रतिषेध्ये नित्यमनित्यभावोऽभ्युपगम्यते यन्मे-विरोधः स्यात्। किन्तु यदि त्वया तथाभ्युपगन्तव्यं तदा नित्यत्वं स्यादित्यनिष्टं तवापद्यते। तत् कुतो मे साधनस्वीकारकृतो विरोध इति चेत् न, विकल्पस्यैवास्योत्थानासंभवात्। उभयान्तावच्छिन्न सत्ता समवायो ह्यनित्यता। नित्या च प्राप्तिः समवायः। तथा च नित्यः संबन्धो नित्योऽनित्यो वेति पर्यवसितः प्राप्तोऽनुन्मत्तस्य न संभवतीति।

*परिशिष्टे* तु अनित्ये अनित्यत्वोपपत्तेः हेतोर्यः प्रतिषेधस्तस्याभाव इति योजनेत्यक्षरार्थ इति योजनीयम्।५।१।३५।

## [ कार्यसमजातिलक्षणम् ]

**प्रयत्नकार्यानेकत्वात् कार्यसमः ।५।१।३६।**

कार्यशब्दोऽत्र कार्यविशेषपरः सामान्यवाचकस्य विशेषेऽपि शक्तत्वात् । तथा च कार्यविशेषेण कार्येण समा कार्यसमेति समाख्यालब्धमेव लक्षणमनूद्यते । कार्यस्यानेकत्वात् सामान्यत उक्ते हेतावभिमतैकविशेषोपपत्त्यर्थं शङ्कितस्यानभिमतविशेषस्य निराकरणेन प्रत्यवस्थानं कार्यसमा । यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं कार्यत्वमपि भवति प्रयत्नानन्तरमुपलभ्यमानत्वमपि । तदत्र प्रथममसिद्धमेव, अनित्यत्वासिद्धेः । अथ प्रयत्नानन्तरमुपलभ्यमानत्वरूपं यत् प्रयत्नानन्तरीयकत्वम् तेन तत्तत्साध्यं तत्सत्त्वेऽप्यावरणापाकरणे मूलककीलकोदकादाविवान्यथासिद्धम् । आवरणाद्यसंभवे सति प्रयत्नानन्तरीयकत्वादिति तु कार्यत्वसाधकं भवति । तत्त्वया नोक्तमेवेति ।

अत एव वाद्युक्ते दोषमाशङ्क्य तदुद्धाराय स्वोत्प्रेक्षितस्य प्रमाणस्य दूषणेन वाद्युक्तस्य साधनस्यासामर्थ्यप्रतिपादनं कार्यसमेति वदन्ति । असिद्धिदेशनाभासा चेयम् ।

वस्तुतस्तु कार्यशब्दः कृत्यर्हत्वं कर्तव्यत्वमभिदधानः कृतलक्षणानां जातीनामन्यत् स्वव्याघातकमुत्तरमाह । तथा च कार्येणानुक्तलक्षणेन समा कार्यसमा । तथा चेदस्य स्वव्याघातकमुत्तरं कार्यसमा । तथा चास्या आकृतिगणत्वात् सूत्राक्षरानुपदर्शितानां लक्षणया परिगृहीतानामन्यासां च जातीनामुपग्रहः ।५।१।३६।

अत्रोत्तरम्—

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः । ५।१।३७।**

शब्दस्य कार्यान्यत्वेऽकार्यत्वे प्रयत्नस्य त्वद्दूषणस्याहेतुत्वम कारणत्वं स्यादित्यर्थः। नन्वभिव्यक्तावेव शब्दस्य कारणं यत्नः स्यादित्यत आह—अनुपलब्धिकारणोपपत्तेरिति। अनुपलब्धेः कारणं शब्दस्यानुत्पाद एवावरणाद्यभावात् तस्योपपत्तेः सम्भवादित्यर्थः। अभावादिति वा शेषः। यद्वा कार्यान्यत्वे यदि प्रयत्नस्याहेतुत्वं तर्हि कार्यान्यत्वपक्षे कस्माद्धेतुत्वं स्यादित्यत आह—अनुपलब्धिकारणोपपत्ते रिति। अनुपलब्धिकारणोपपत्तौ सत्यां तथा स्यादित्यर्थः। आकृति गणपक्षे तु कार्याणां जातीनामन्यत्वे परस्परभिन्नत्वे प्रयत्नस्य तव दूषणप्रयत्नस्याहेतुत्वम्। परासाधकतायामसाधकत्वम्। कुतः। अनुपलब्धिकारणोपपत्तेः। उपलब्धेर्यत् कारणं निर्दोषं वाक्यं तस्यानुपपत्तेः। स्वव्याघातकत्वादेवेत्यर्थः।५।१।३७।

## [ षट्पक्षीरूपकथाभासप्रकरणम् ]

तदेवं जात्युत्तरवादिनं प्रति स्थापनावादिना सर्वत्रैव समीचीनं समाधानं वक्तव्यम्। एवमेव सति कथाफलं तत्त्वनिर्णयो वा विजयो वा भवति। समाधाने तु सदोषेऽभिहिते षट्पक्षी भवतीति न तत्त्वनिर्णयो न वा विजयः। किन्तूभावपि वादिनावस्वज्ञौ ज्ञायेते इत्युभयो र्भङ्गे मध्यस्थ एव विजयते। अकुशलद्यूतकारयोर्भङ्गे सति क इव[?]स्व स्वज्ञत्वबोधनादिति शिष्यान् शिक्षयितुं *सूत्रकारः* षट्पक्षीमवतारयितुमाह—

### प्रतिषेधेऽपि समानो दोषः ।५।१।३८।

यथानैकान्तिकत्वात् प्रयत्नानन्तरीयकत्वं कार्यत्वासाधकं तथायमप्यनैकान्तिकत्वदोषोऽनैकान्तिक एवेति न साधकः। न ह्यनै कान्तिकत्वात्मको दोषः सर्वस्यैवासाधकत्वं साधयति। स्वस्यैवासाधकत्वासाधकत्वात्। अत एव तस्मिन्नदूषकतांश एव न नियत इत्यनैकान्तिकत्वात् प्रतिषेधेऽपि समानो दोष इति।

यद्वा शब्दे प्रयत्नानन्तरीयकत्वं न कार्यत्वं गमयति अभिव्यङ्ग्ये मूलककीलकादावनैकान्तिकत्वादिति त्वयास्मासु दोष उच्यते। तथा भिव्यङ्ग्यत्वमपि न गमयिष्यति। प्रयत्नकार्येणानैकान्तिकत्वादिति भवत्स्वपि मया दोषो वाच्य इत्यर्थः।५।१।३८।

यद्वा यथा मम पक्षः सदोषमेवाह सूत्रकारः।

## सर्वत्रैवम् ।५।१।३६।

सर्वस्यामपि जातावेवंविधमसदुत्तरं षट्पक्ष्याद्यापादकं भवतीत्यर्थः।

तथा हि ऐन्द्रियकः शब्दः कार्यत्वात् ऐन्द्रियकत्वाद् वा घटवदिति सदसत्प्रयोगयोस्तद्वदाकाशे सर्वस्मादस्पर्शत्वादस्पर्शः किं न स्यादिति साधर्म्यसमः। अस्पर्शत्वादाकाशं परममहद् दृष्टं शब्देनापि तादृशेन परममहता भाव्यमित्युत्कर्षसमा। एवं नेयं सदोषत्वमात्रेण साम्यं सर्वत्र सुलभम्। यद्यप्येतत्सूत्रं षट्पद्यनन्तरं कर्तुमर्हति तथापि त्रिपद्यादिसूचनाभिप्रायेणाध्वोक्त एव कृतम्। उभयास्वज्ञत्वविरोधिवादिप्रतिवादिवाक्यपरम्परा हि षट्पद्युच्यते। तादृशं च त्रिचतुः पक्षीष्वपि समानम्।

ननु यदि त्रिपद्यामेव द्वयोरस्वज्ञत्वबोधस्तदा किं चतुःपद्या द्यवकाशदानेनेति चेत् न, मृदुमध्यादिमात्रभेदेन पुंसां स्फुरणवैचित्र्यात्। स्फुरणेऽपि निष्ठुरानिष्ठुरहृदयत्वात्। निष्ठुरहृदयत्वेऽपि वावदूकावावदूकत्वात्। अवसरापेक्षया वा। तथा हि सभ्यैस्तावत् पर्यनुयोगोपेक्षणमेवोद्भाव्यम्, अन्यत्तु तन्नान्तरीयकतया। तच्च तत्साधनोपक्रमायां कथायां प्रथमद्वितीयपक्षयोरसंभावितमेव। तृतीये तु सम्भावितमिव नियुक्तैरुद्भाव्यं नियोगकालातिपाते त्वनियुक्तैरेवेति नियमः। त्रयश्च नियोक्तारो वादिप्रतिवादिमध्यस्थाः। तत्र प्रतिवादि

नियोगमपेक्षमाणाश्चतुर्थं पक्षमनुमन्यन्ते । तस्मिन्नपि यत् किञ्चन वादिनि पर्यनुयोज्योपेक्षणमापतितमिति । वादिनियोगमपेक्षमाणाः पञ्चमं पक्षमनुमन्यन्ते । वादिन्यपि प्रलपत्यनुविधेयप्रश्नावसरमुभयोः स्तम्भरूपमपेक्षमाणा षष्ठमपि पक्षं समीक्षन्ते इति ।

एवं प्रश्नसमयातिक्रमे सत्येव त्वदुक्तावपि वादिनौ निवार्य क्व कथात्वमावेदनीयम् । अन्यथा तेषामप्यवसरप्राप्तस्य पर्यनुयोज्यस्योपेक्षायामज्ञत्वप्रसङ्गात् । एतदुत्तरकालं सद्वादोऽपि नोपयुज्यते । प्राप्तोद्भावनावसरदोषोपेक्षणस्य समाधेयत्वात् । कुतः ! पुनः सभ्यानां प्रश्नोपेक्षेति चेत् कथायास्तदकर्तृकतया तेषामुत्थाप्य विवक्षात्वात् । सा च प्रश्नेन वा, उभयोरपि प्रतिभया वा, कथाभासप्रतिबन्धेन वा । तत्प्रतिवादिप्रश्ने त्रिपक्षी, वादिप्रश्ने चतुःपक्षी, उभयोरपि प्रतिभायामनुविधेयप्रश्ने पञ्चपक्षी, प्रतिबन्धेन षट्पक्षी । वादे तु तृतीयपदे परेण निरनुयोज्यानुयोगोद्भावनं, चतुर्थे स्वयमपि स्वदोषोद्भावनं तत्त्वबुभुत्सात्वात् । पञ्चमेऽपि तथा । षष्ठे त्वप्रतिभाप्रतीत्यर्थमवकाशः ।

यद्वात्र नानयोः परस्परमसदुत्तरोद्भावनं नापि स्वदोषं स्वयमुद्भाव्य सदुत्तरोद्भावनं तत्त्वबुभुत्सात्वात् । नाप्यप्रतिभा, तदा सभ्यावसरः । यदि तु सदुत्तरादौ सदुत्तरं स्यात् तदा वादे दुष्टत्वपरिहारेण कथा प्रवर्तत एव । अन्यत्र तु हेत्वन्तरहानिसन्न्यासवदुत्तरान्तरप्रवृत्तेर्निग्रह एव । तस्याप्यनुद्भावने त्ववष्टम्भविजयमात्रमेकस्यातिशयेनापकृष्टत्वात् । तदपेक्षया द्वितीयस्योत्कृष्टत्वादिति । ५।१।३९।

## प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद् दोषः ।५।१।४०।

तुल्यबलविरोधो विप्रतिषेधः । तथा च प्रतिषेधस्य तुल्यबलविरोधी विप्रतिषेधस्तृतीयो द्वितीयसमस्तृतीयः पक्षः । तत्रापि प्रतिषेधदोषसम एव दोष इत्यर्थः ।

स च सजातीयो वा यथा कथञ्चित् तन्नामको वा दोषत्वेनैव वा तुल्य इति पूर्ववन्नेयम् ।५।१।४०।

षट्पक्षी वैचित्र्यप्रतिपादनार्थं छलजाती विहाय निग्रहस्थानोद्भावनेन पञ्चमपक्षमाह सूत्रकारः—

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो-दोषप्रसङ्गो मतानुज्ञा ।५।१।४१।**

द्वितीयः पक्षः प्रतिषेधः तं सदोषमभ्युपेत्य तत्र मदुक्तं दोषमनुद्धृत्य प्रतिषेधविप्रतिषेधे तृतीये पक्षे मदुक्ते समानं दोषं प्रसञ्जयतो भवतो मतानुज्ञा नाम निग्रहस्थानमापतितमिति पञ्चमः पक्षः। ५।१।४१।

सेयं मतानुज्ञा तवापि मदुक्तं दोषमनुद्धृत्य तृतीये पक्षे समानं दोषं प्रसञ्जयतो भूतेति प्रतिवादिनः षष्ठं [पक्षं] सूत्रकृदाह—

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्ष-दोषाभ्युपगमात् समानो दोषः ।५।१।४२।**

पञ्चपक्षवादिनः स्वपक्षः प्रथमः पक्षस्तं लक्ष्यीकृत्य प्रवर्तत इति। स्वपक्षलक्षणो द्वितीयः पक्षः स्वपक्षमेव कार्यसमा जातिरत्र द्वितीय पक्ष एव। तदपेक्षया तदनुपेक्षया य उपपत्त्युपसंहारौ युक्ति भाषणं साम्यापादनरूपं प्रतिषेधेऽपि समानो दोष इत्येवं रूपं, तस्य हेतुनिर्देशः। कथं प्रतिषेधेऽपि समानो दोष इत्याकाङ्क्षानिवर्तकोऽयमप्यनैकान्तिको यत एवं रूपः। तस्मिन् क्रियमाणे परपक्षस्य प्रतिवादिनो द्वितीयपक्षस्य यो दोषोऽनैकान्तिकत्वलक्षणस्तस्याप्रतिषेधेनार्थतोऽभ्युपगमात् समानो दोषो मतानुज्ञात्मक इत्यर्थः।

अत्र स्थापनावादिनः प्रथमतृतीयपञ्चमपक्षाः प्रतिवादिनस्तु

द्वितीयचतुर्थषष्ठाः । अत्र साध्वसाधुतायां जिज्ञास्यमानायां चतुर्थषष्ठयोरर्थाविशेषात् पुनरुक्तदोषप्रसङ्गः समानः, तृतीयपञ्चमयोः पुनरुक्तदोषः प्रथमषष्ठयोः पुनरुक्तदोषः तृतीयपञ्चमयोर्मतानुज्ञा दोषः प्रथमतृतीययोर्विशेषहेत्वभाव इति । तदेवं षट्पक्ष्यामुभयोरसिद्धिरयुक्तवादित्वात् । यदा तूपलब्धिकारणाभावे प्रयत्नानन्तरमुपलब्धेरिति विशेषहेतुरुच्यते । तदा न षट्पक्षी प्रवर्तत इत्येतदर्थं षट्पक्षी प्रकरणमिति ।५।१।४२।

*इति महामहोपाध्याय श्रीवाचस्पतिमिश्र विरचिते*
*न्यायतत्त्वालोके*
*पञ्चमाध्यायस्य प्रथमाह्निकम् ।*

## पञ्चमोऽध्यायः ।

### द्वितीयमाह्निकम् ।

विप्रतिपत्त्यप्रतिपत्त्योर्बहुत्वात् निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तं तद्विभागमाह सूत्रकारः—

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ।५।२।१।**

निग्रहः खलीकारस्तस्य स्थानान्यधिकरणानीत्यर्थः । एतावता कथकाकौशलख्यापकत्वं निग्रहस्थानत्वमिति समाख्यालभ्यं सामान्यलक्षणं वैचित्र्यार्थम्, न तु स्वकार्ये परस्परानपेक्षत्व-सूचनार्थम् । प्रमाणादिविभागेऽपि तथाकरणप्रसङ्गात् । चकारोऽप्यर्थः । तेन हेत्वाभासानां पृथगुद्दिष्टत्वेन निग्रहस्थानत्वं नास्तीति भ्रमनिरासार्थं हेत्वाभासा अपि निग्रहस्थानानीत्युक्तम् । एते सामान्य-लक्षणाक्रान्ता एवेत्येषामुपादानं, छलजाती तु न सामान्यलक्षणाक्रान्ते किन्तु निरनुयोज्यानुयोगरूपतद्विशेषलक्षणाक्रान्ते इति नात्र निर्दिष्टे । कथाबहिर्भूतानामेषामकौशलख्यापकत्वेऽपि न कथकाकौशल-ख्यापकत्वम् । तदा कथकत्वाभावादिति न निग्रहस्थानत्वम् । अत एव

कथायामेव हि निग्रह इत्याहुः। झटिति संवरणे स्वाकौशलस्य स्वयमेवानिवारितत्वात् न निग्रहस्थानत्वम् ।५।२।१।

## [ प्रतिज्ञाहानिलक्षणम् ]

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः। ५।२।२।**

हीयतेऽनेनेति हानिर्वचनविशेषः। प्रतिज्ञा स्वनिर्वाह्यनिर्देशः। स्वनिर्वाह्यविशेषविरोधिवाक्यम् प्रतिज्ञाहानिः। सिद्धान्तस्तु न निर्वाह्य इति नापसिद्धान्तसाङ्कर्यम्। तथा च समाख्यालभ्यमेव लक्षणम्। पूर्वभागस्तु निर्देशनाभिप्रायेण केवलम्। स्वदृष्टान्ते विरोधिदृष्टान्तधर्माभ्यनुज्ञापकं वचनं यथेति पूरणीयम्। शब्दोऽनित्य इत्यत्र ऐन्द्रियकत्वात् घटवदित्युक्ते, सामान्यमैन्द्रियकं नित्यम् कस्मान्न तथा शब्द इति प्रतिवादिनाभिहिते, तर्हि घटोऽप्येवमस्त्विति यथेत्यर्थः। यथा शब्दोऽप्येवमस्त्विति प्रतिज्ञा[हा]निस्तथेयमपि। स्वनिर्वाह्य निर्देशविरोधिवचनत्वात्। पक्षवद् दृष्टान्तोऽपि स्वनिर्वाह्य इत्थं घटोऽनित्य इति। नित्योऽस्तु इत्येतद्विरोधिवचनमिति भावः।

यद्वा प्रतीपो दृष्टान्तो यस्मिन्निति प्रतिदृष्टान्तः परपक्षः। स्वः स्वीयो दृष्टान्तो यस्मिन्निति स्वदृष्टान्तः स्वपक्षः। तेन स्वपक्षे परपक्षधर्माभ्यनुज्ञेत्यर्थः। पक्षेऽपि स्वनिर्वाह्य एवेति पक्षहेतुदृष्टान्ततद्विशेषणदोषादिहानयः सङ्गता भवन्ति। अत एव विशिष्टोक्तित्यागः प्रतिज्ञाहानिरिति वदन्ति।

अपसिद्धान्तवारणार्थं विशेष्येति। सामान्याकारेण नैयायिकोऽहमित्यनेन सिद्धान्तस्याप्युक्तत्वादिति ।५।२।२।

## [ प्रतिज्ञान्तरलक्षणम् ]

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ।५।२।३।**

पूर्वप्रतिज्ञाया अन्यादृशी प्रतिज्ञा प्रतिज्ञान्तरम् । यदि तु पूर्वप्रतिज्ञान्यत्वमात्रेण प्रतिज्ञान्तरं स्यात् तदा प्रतिज्ञापुनरुक्तावतिव्याप्तिः । तथा च समाख्यालभ्यमेव लक्षणमुक्तिसंभवनिर्देशनार्थं मनूद्यते । प्रतिज्ञातो योऽर्थो वादिना तस्य प्रतिवादिना दोषाभिधानान्निषेधे कृते धर्मस्य विशेषणस्य भेदात् विशेषस्य विशेषणपक्षे तदर्थं तद्दोषप्रतिषेधार्थं यो निर्देशः पूर्वप्रतिज्ञाया अन्यादृशं भाषणं तत् प्रतिज्ञान्तरमित्यर्थः । यदि नान्यादृशीं प्रतिज्ञां कुर्यात् तदा पूर्वदोषोद्धारो न स्यादिति भावः ।

अत्रापि प्रतिज्ञानिर्वाह्यनिर्देश एव । हेतुश्च न निर्वाह्यनिर्देशः, किन्तु निर्वाहकनिर्देश इति हेत्वन्तरे नातिव्याप्तिः । अत एव परोक्तदोषोद्धाराय पूर्वानुक्तविशेषणवतो हेत्वन्यपूर्वोक्तस्य वचनं प्रतिज्ञान्तरमित्याहुः ।

निगमनव्यावृत्त्यर्थं परोक्तेत्यादि । निर्विशेषणभ्रमाद् दूषिते पूर्वोक्तमेव विशेषणं यत्राभिधत्ते तद् वारणाय पूर्वानुक्तेति । इदञ्च पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपात् चतुर्विधम् । यथा शब्दो नित्य इत्युक्ते ध्वनिभिरनैकान्तिक इत्युक्ते वर्णात्मकः शब्दो नित्य इत्यत्रोदाहरणान्तरं प्रयोज्यान्तरं निगमनान्तरञ्च प्रतिज्ञान्तरमेव साध्यांशविशेषणात् । प्रयोजकान्तरमुपनयान्तरं दूषणान्तरं हेत्वन्तरप्रपञ्चः ।

नन्वियं प्रतिज्ञाहानिरेव पूर्वप्रतिज्ञात्यागादिति चेन्न, तदत्यागो विशेषणान्तरदानात् । विशेषणाभावस्य च पूर्वमप्रतिज्ञानात् । विशे-

षणान्तरोपादानेन स्वयमेव प्रतिज्ञाय स्वयमेव स्वप्रतिज्ञाया दुष्टत्व स्वीकारात् । प्रतिज्ञान्तरं निग्रहस्थानान्तरम् ।५।२।३।

## [ प्रतिज्ञाविरोधलक्षणम् ]

### प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ।५।२।४।

प्रतिज्ञा निर्वाह्यनिर्देशस्तस्य विरोधो येन केनापीति प्रतिज्ञाविरोधः । एतेन प्रतिज्ञापदप्रतिज्ञाहेतुप्रतिज्ञोदाहरणप्रतिज्ञोपनय प्रतिज्ञानिगमनहेतुपदहेतूदाहरणहेतुदृष्टान्तदृष्टान्तपदादिप्रतिज्ञातर्कादि विरोधाः सङ्गृहीताः । समाख्यालब्धमेव लक्षणं, शेष उदाहरणार्थः । यथेति पूरणीयम् । यथाकस्मिकी घटो न कार्यः कारणवत्त्वात् व्योमवदित्यादि । अत एवैकवाक्यांशयोर्विरोधः प्रतिज्ञा विरोध इत्याहुः ।

अपसिद्धान्तेनैव शास्त्रकारस्य सिद्धान्तरबहुत्वात् । विरुद्धस्तु हेत्वाभासोऽर्थयोर्विरोधो न वाक्ययोरिति विशेषः । यद्यपि विरोधेऽवश्यं हेत्वाभासत्वप्रवेशस्तथापि विरोध एवोद्भाव्यो वचनगतत्वेनोच्यमानग्राह्यत्वादिति ।५।२।४।

## [ प्रतिज्ञासन्न्यासलक्षणम् ]

### पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः । ५।२।५।

सन्न्यस्यतेऽनेनेति सन्न्यासोऽपह्नववाक्यम् । प्रतिज्ञाया निर्वाह्य निर्देशस्य सन्न्यास उक्तापह्नववचनमित्यर्थः । एवं समाख्यालब्धमेव लक्षणमनूद्यते । उक्तिसम्भवप्रदर्शनाय पक्षो बोधनीयोऽर्थोऽभिहितोऽर्थः । तस्य वाद्यन्तरेण दोषे दत्ते तत्त्यागाभिहितापह्नववाक्यं प्रतिज्ञा सन्न्यासः । उक्तेऽनुक्तत्वाध्यारोपेण दोषपरिहाराभिधानं प्रतिज्ञा

सन्न्यास इति *नवीनाः*। सोऽयं चतुःप्रकारकः—क एवमाहेति स्वोक्त एव, त्वयैवेदं दूषणमुक्तमिति वा, परोक्ते न मयेदमुक्तमिति वेति, छले प्रतिवादिना तात्पर्यारोपोऽत्र तूक्त एवारोपो वादिनेति विशेषः। यथा अनित्यः शब्द ऐन्द्रियकत्वात् घटवदित्युक्ते सामान्ये व्यभिचारोद्भावनेन मया अनित्यत्वं प्रतिज्ञातमिति अपह्नवेन स्वयमेव स्ववचनस्य सदोषताभ्युपगमान्निग्रहः।५।२।५।

## [ हेत्वन्तरलक्षणम् ]

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्।५।२।६।**

हेतुवद्धेतुः प्रयोजनवचनं पूर्वप्रयोजकवचनादन्यादृशं प्रयोजकवचनं हेत्वन्तरमिति। समाख्यालभ्यमेव लक्षणमुक्तिसम्भवार्थमनूद्यते। निर्विशेषणे हेतावुक्ते परेण प्रतिषिद्धे पूर्वस्माद्धेतोर्विशेषं भेदमिच्छतो वादिनो वचनमिति पूरणीयं तदेदमाहुः।

उक्तस्य प्रयोजकस्यानवसरे पूर्वानुक्तविशेषणवत्तयाभिधानं हेत्वन्तरमिति झटिति संवरणव्यावृत्त्यर्थमनवसर इति तत्ववसर एव। न च विशेषमन्तरवचनेऽव्याप्तिः। किञ्चिद् व्यवच्छेदकत्वेन तस्यापि विशेषणत्वात्। यथा शब्दोऽनित्यो बाह्यकरणप्रत्यक्षत्वादित्यत्र सामान्ये व्यभिचारोक्तौ सामान्यविशेषवत्त्वे सतीति हेतुविशेषणात्। यदस्मदादिबाह्यकरणप्रत्यक्षं तदनित्यमित्यत्र प्रयोजकांशन्यूनतया प्रत्युक्ते सामान्यविशेषवत्त्वे सतीत्युदाहरणप्रयोजकांशविशेषणात्। अस्मदादिबाह्यकरणप्रत्यक्षश्चायमित्युक्ते तथैव दूषिते सामान्यविशेषवत्त्वे सतीत्युपनयविशेषणात्। हेतावुक्तेऽसाधकोऽयं सपक्षत्वान्नित्यत्वे प्रमेयत्ववदिति दूषणे जातितया परिहृते विपक्षसत्त्वे सतीति दूषणविशेषणाद्वेति। अत्रापि विशिष्टाभिधानादविशिष्टासामर्थ्यस्य स्वयमेव प्रतिपादनान्निग्रहस्थानत्वम्।५।२।६।

## [ अर्थान्तरलक्षणम् ]

### प्रकृतादर्थादसंबद्धार्थमर्थान्तरम् ।५।२।७।

अर्थ्यते इत्यर्थो विद्याद्याकाङ्क्षितस्तस्मादन्तरमन्यविषयतया यस्मिन् वाक्येऽनाकाङ्क्षितवाक्यत्वमिति समाख्यालब्धमेव दूषणं स्फुटत्वार्थमनूद्यते । प्रकृतमाकाङ्क्षितमर्थमपेक्ष्यासंबद्धार्थो यस्य प्रकृतसम्बन्धार्थाप्रतिपादकमिति यावत् । तथा च कथाङ्गसमय विषयसम्बन्धानुपदर्शकं वचनमर्थान्तरम् । त्वया स्थापनीयं मया दूषणीयमित्यादिकथाङ्गसमयविषयेण सम्बन्धो यस्यार्थो न भवति । यदा शब्दोऽनित्यः कार्यत्वादित्युक्ते स्वमतेन शब्दो गुणः, स चाकाशस्येत्यादि । परमतेन तु शब्दो द्रव्यमित्यादि । उभयमतेन तु अनुमानगम्यमस्यानित्यत्वमनुमानं च मानमित्यादि । अनुभयमतेन तु शब्दोऽभाव एव । स च [स] प्रतियोगिकः । हेतुश्च हिनोतेः प्रयोग इत्यादि । न चेदमसम्भवदुक्तिकम् । दोषं दृष्ट्वा प्रतीकारमपश्यतोऽन्यत्र सञ्चारेण तत्प्रतिबोधित्सया प्रथमकक्षादितः सर्वत्रोक्तिसंभवात् । सिद्धसाधनमपि अर्थान्तरमेवातो नातिव्याप्तिः ।५।२।७।

## [ निरर्थकलक्षणम् ]

### वर्णक्रमनिर्देशवन्निरर्थकम् ।५।२।८।

निर्गतस्त्यक्तोऽर्थो यस्मात् तन्निरर्थकमिति समाख्यालभ्यं लक्षणमनूद्यते वर्णक्रमनिर्देशवदिति । यथा वर्णस्य क्रमेण निर्देशाभिधान मात्रं जबगडदशेति तादृशमर्थशून्यमित्यर्थः ।

यदिदमुच्यते यो यस्याप्रतिपादकस्तं प्रति तस्य निर्देशो निरर्थकमिति । अस्य चतुर्धा प्रयोगः । प्रमादाद्वा, यथा लिङ्गवचन विपर्यासः । वाचकाभिमानाद्वा, यथा कृत्तद्धिताख्यातविपर्यासः । अभ्यासाद्वा, यथा संस्कृताभिधानमारभ्यापभ्रंशाभिधानम् । अपभ्रंश-

स्य परम्परया प्रतिपादकत्वेऽपि समयलङ्घनान्निग्रहस्थानत्वम् । विकल्पितशेषोक्तेर्वा, यथा शब्दार्थपरताखण्डने वाङ्मात्रमेतदिति । ५।२।८।

## [ अविज्ञातार्थलक्षणम् ]

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ।५।२।६।**

न विज्ञातो विशिष्य ज्ञातोऽर्थो यस्य सामान्यतस्तु ज्ञातार्थमपि वाचकाभिधानार्थत्वात्तदविज्ञातार्थमित्यर्थः । एवं समाख्यालभ्यमेव लक्षणमनूद्यते । त्रिरभिहितमपि वादिना परिषदा प्रतिवादिना चाविज्ञातार्थमित्यर्थः ।

सदर्थकत्वान्निरर्थकादनन्वयानिश्चयादेवापार्थकाद् विशेषः । त्रिरभिधानं व्यासङ्गादिनाऽबोधनिरासाय । परिषत्प्रतिवाद्यन्तरेणाविज्ञाने तु मा विज्ञानम् । तदिदमुच्यते अवहिताविकलपरिषत्प्रतिवादिबोधानुगुणार्थोपस्थित्यजनकवाचकपदप्रयोगोऽविज्ञातार्थमिति । निरर्थकव्यावृत्त्यर्थं वाचकेति । अपार्थकव्यावृत्त्यर्थं परिषदित्यादि । अस्य पराज्ञाननिग्रहापादनव्यामोहादुक्तिसम्भवः । ननु हसित्वापि परो जेतव्य इत्यज्ञानापादनं कार्यमेवेति चेन्न, भङ्गकाले परमदुर्बोध किञ्चिदभिधानेनैव भङ्गिनो निस्तारे कथाफलविप्लवापत्तेः । एतच्च त्रिधा प्रवर्तते । असाधारणतन्त्रसमारूढं—यथा पञ्च स्कन्धाः, द्वादशायतनानि, चतुरार्यसत्यमित्यादि बौद्धानाम् । अत[त्र] रूपादयः पञ्चेन्द्रियाणि रूपस्कन्धः सविकल्पकं संज्ञास्कन्धः रागद्वेषाभिनिवेशाः संस्कारस्कन्धः सुखदुःखवेदनास्कन्धः निर्विकल्पकं ज्ञानस्कन्धः षडिन्द्रियाणि षड्विषया द्वादशायतनानि दुःखं समुदयो निरोधो मार्गश्चेति चतुरार्यसत्यं संसारोऽस्याः समुदेतीति समुदयस्तृष्णा-

निरोधः सहेतुकदुःखापगमः मार्गः सम्यग् ज्ञानं मोक्षोपायत्वात् । पञ्च स्कन्धादि निरर्थकमेव स्कन्धशब्दस्य समूहवाचकत्वात् ।

द्वितीयमतिप्रसक्तयोगमनपेक्षितरूढिकम् । कश्यपतनयाधृतिहेतुरयं त्रिनयनतनय[ यान ]समाननामधेयवान् तत्केतुमत्त्वात् विसनीवदित्यादि ।

अपरं पदविवेकोपायसमासप्रकरणाद्यपायापादितसन्देहम् । यथा श्वेतो धावतीत्यादि । अत्र [प्रथममुभयानुमत्या] क्वचिदुपादीयतेऽपि तदुत्तरं तु सर्वथैव नेति ।५।२।९।

## [ अपार्थकलक्षणम् ]

## पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ।५।२।१०।

अपगतोऽर्थो वाक्यार्थो यस्मात् तदपार्थकं वाक्यम् । संसर्गाबोधकं वाक्यमिति यावत् । एवं समाख्यालभ्यमेव लक्षणमनूद्यते अप्रतिसंबद्धार्थमिति । प्रति पदार्थं प्रति वाक्यार्थं वा संबद्धं प्रति संबद्धार्थं न तथा अप्रतिसंबद्धार्थम् । तेनावान्तरवाक्ये सम्बन्धसत्त्वेऽपि यदि वाक्यैकवाक्यता न भवति तदप्यपार्थकमेव । यथा दश दाड़िमानि षडपूपा इति । अत्र प्रतिवाक्यं संबन्धेऽपि न वाक्यार्थयोः संबन्धः । एतावतैव लक्षणे सिद्धे अनर्थवाक्यत्वाविशेषेऽपि एतदेव कथमिति शिष्यजिज्ञासामाशङ्क्याह—पौर्वापर्यायोगादिति । पौर्वापर्यं कार्यकारणभावः । विशेषणज्ञानं कारणं विशिष्टज्ञानं कार्यम् । विशिष्टज्ञानं च शब्दसमुदायरूपेण वाक्येन जन्यते । तदेकदेशेन तु तज्जनकं विशेषणज्ञानमिति । सद्वाक्ये पौर्वापर्येण योगोऽसद्वाक्ये त्वाकाङ्क्षादिविरहात् न तथेत्यर्थः । निरर्थकस्य त्वन्वयप्रतियोग्युपस्थापकतैव नेति ततो भेदः । अत एव समभिव्याहृतान्वयबोधाजनकोपस्थितिजनकं वचनमपार्थकमित्याहुः ।

निरर्थकव्यावृत्त्यर्थमुपस्थितिजनकमिति। अनेन पदार्थ उपस्थाप्यते, अन्वयबोधः परत्र जन्यते। एतद् द्विधा—पदापार्थकं वाक्यापार्थकञ्च। एतदपि प्रत्येकं त्रिधा—अनाकाङ्क्षयानासत्यायोग्यतया च। अनाकाङ्क्षया कुण्डमजाजिनं गौरश्वः इत्यादि। अनासत्त्या गच्छति पयसाश्वेन भुक्त्वा नगरं चैत्र इत्यादि। अयोग्यतया अग्निरनुष्ण इत्याद्येवं नेयम् ।५।२।१०।

## [ अप्राप्तकाललक्षणम् ]

## अवयवविपर्यासवचनमप्राप्तकालम् ।५।२।११।

अप्राप्तः कालो वचनकालो येन वाक्यैकदेशेनेत्यप्राप्तकाल मिति समाख्यालभ्यमेव लक्षणमनूद्यते। अवयवस्यैवावयवसमुदायैकदेशस्य विपर्यासेन वैपरीत्येन वचनमित्यर्थः। एवञ्च न्यायैकदेशवत् कथैकदेशस्यापि विपर्यासेनाभिधानमप्राप्तकालमेव। अत एव स्वसिद्धान्ताभ्युपगतकथाभिधानक्रमविपर्यासेन कथायामभिधानमप्राप्तकालमित्याहुः।

तदेतच्चतुर्विधम्, पादपादांशावयवावयवांशभेदात्। तत्र वादिना साधनं वाच्यम्। तत्र सामान्यतो हेत्वाभास उद्धरणीय इत्येकः पादः। कथायाः प्रतिवादिना तस्योपालम्भो द्वितीयः पादः। ततः प्रतिवादिनैव स्वपक्षसाधनं वाच्यम्। तत्र हेत्वाभासश्चोद्धरणीय इति तृतीयः पादः। ततो जयादिव्यवस्थेति चतुर्थः पाद इति कथाक्रमः। तत्र यदि प्रथमं प्रतिवादी स्वपक्षे साधनमुक्त्वा परपक्षे दोषं वक्ति तदा पादविपर्यासः। यदि च वादी प्रथमत एव हेत्वाभासानुद्भावयति पश्चाद्धेतुं ब्रूते तदा पादांशविपर्यासः। यदि हेतुमुक्त्वा प्रतिज्ञां वक्ति तदावयवविपर्यासः। अवयवांशविपर्यासस्तु यथा नित्यः शब्द इति सभाक्षोभादर्थप्रत्यायने न क्रमानुरोध इति व्यामोहादुक्तिसंभवः। न च क्रमो

नादरणीय एव। अनुपस्थिते साधने साध्ये च दोषसाधनयोराश्रयासिद्धेः ।५।२।११।

## [ न्यूनलक्षणम् ]

### हीनमन्यतमेनाप्यवयवेन न्यूनम् ।५।२।१२।

नियते स्वशास्त्रनियमिते च वक्तव्ये ऊनं न्यूनम्। तथा च कथायां सिद्धान्तवक्तव्यत्वाभिमताभिधानं न्यूनमिति । अन्यथा *बौद्धनैयायिकयोः* न्यूनाधिकापत्तिरेव स्यात्। तदुपेक्षणे च पर्यनुयोज्योपेक्षणात् कथैव न स्यादिति ।

ननु शास्त्रमतावयवाभिधानेऽपसिद्धान्त एव स्यादिति चेन्न, तद्विपरीताचरणमात्रत्वेन सिद्धान्तविरोध्यभ्युपगमाभावात् । न चाचरणमेव नाभ्युपगमं विनेति वाच्यम्। सभाक्षोभादिनापि तथा चरणसंभवात् ।५।२।१२।

## [ अधिकलक्षणम् ]

### हेतूदाहरणाधिकमधिकम् ।५।२।१३।

अधिकमधिकवदित्यर्थः, अर्श आदित्वादच्। आधिक्यं च सापेक्षमित्यन्वयोऽभिमतप्रतिपादकात् । तथा चापरकृतार्थाभिधानमधिकमिति समाख्यालभ्यं लक्षणं पुनरुक्तेऽतिव्याप्तं तस्यापि गतार्थाभिधानत्वादत आह—हेतूदाहरणाधिकमिति । हेतूदाहरणावधिकौ यत्र ता···[?]गतार्थाभिधानमधिकं नत्वन्यदपि । तत्र पुनरुक्तादिसाङ्कर्यात्। तथा हि शब्दोऽनित्योऽनित्यः विनाशीत्यत्र पौनरुक्त्यमेव, शब्दोऽनित्यः शब्दो गुण इत्यत्रार्थान्तरमेव, हेत्वाकाङ्क्षायां प्रतिज्ञान्तरकारणात्। एवं निगमनेऽपि। उपनयाधिक्यं तु हेत्वाधिक्यादेव। हेतूदाहरणाधिकयोः कयोश्चिदप्यसाङ्कर्यं भवति । तत्र हेतौ यथा

पर्वतो वह्निमान् [धूम]वत्त्वादालोकवत्त्वादिति । अत्र न पुनरुक्तं धूमालोकयोर्भेदादव्याप्तेश्च । नाप्यपार्थकमर्थान्तरत्वात् । उभयोरपि प्रकृतान्वितत्वात् । एवं यथा पाको यथा महानसमित्यत्रापि अनुवादाधिकदूषणाधिकयोस्तु संग्रह एव । पौनरुक्त्याद्यभावात् । अत एवापुनरुक्तकृतकर्तव्याभिधानमित्याहुः ।

तदेतत् क्वचित् स्वशब्देन क्वचिदप्याद्यादिपदेनेति द्विधा प्रौढिख्यापनव्यामोहादुक्तिसम्भवः । दार्ढ्यव्यामोहो वा । यत्र बहुसाधनाभिधानशक्तिजिज्ञासा भवति तत्राधिकं गुण एव ।५।२।१३।

## [ पुनरुक्तलक्षणम् ]

## शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ।५।२।१४।

पुनः पुनरुक्तं भाषणं पुनरुक्तमित्यनेनैव समाख्यानिर्वचनेन लब्धं लक्षणमनूद्यते । अनुवादेन प्रयोजनान्तरं लक्षयति । तथा च प्रयोजनान्तरं पुनर्वचनं पुनरुक्तमिति सामान्यलक्षणे लब्धे शब्दार्थयोरिति । विभागार्थं शब्दपुनरुक्तमर्थपुनरुक्तं चेति ।५।२।१४।

एवञ्चार्थापन्नस्य शब्दे पुनरभिधानेऽव्याप्तिः । न चार्थादापन्नमुक्तमित्यतः सूत्रान्तरमाह—

## अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् ।५।२।१५।

पुनरुक्तमिति वर्तते । तथा च पुनः शब्दो न शब्दावृत्तिमाह किन्तु प्रतिपत्त्यावृत्तम् । तथा च प्रतिपन्नस्य प्रयोजनान्तरं विना पुनः प्रतिपत्तये शब्दप्रयोगः पुनरुक्तमिति सामान्यलक्षणम् । अत एव यथा प्रतिपादितस्य तत्प्रतिपादनादनधिकप्रयोजनकं भाषणं पुनरुक्तमित्याहुः । तदेवं सूत्राभ्यां द्विधा पुनरुक्तं शब्दपुनरुक्तमर्थपुनरुक्तञ्च । शब्दपुनरुक्तमपि । द्विधा तच्छब्दपुनरुक्तं पर्यायपुनरुक्तञ्च । यथा

शब्दोऽनित्योऽनित्यो विनाशीति। अर्थपुनरुक्तमपि चतुर्द्धा पूर्वपदाक्षिप्तपुनरुक्तम्। यथाग्निनोष्णेन पर्वतो युक्त इति। इयमेव विपर्ययेणोत्तरपदाक्षिप्तोक्तिः। विध्याक्षिप्तोक्तिर्यथा बहिरस्तीत्युक्त्वा गेहे नास्तीति। इयमेव विपर्ययेण निषेधाक्षिप्तविध्युक्तिः। स्फुटो दृढश्च भवत्विति व्यामोहादुक्तिसम्भवः।५।२।१५।

## [ अननुभाषणलक्षणम् ]

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्।५।२।१६।**

अर्थबोधाविष्कारात् पश्चाद् भाषणमर्थात् वाद्युक्तस्यानुभाषणं तद्विरोधी व्यापारोऽननुभाषणम्। विरोधे नञ्, एवं समाख्यालभ्यमेव लक्षणमनूद्यते। परिषदा विशिष्य ज्ञातस्य बुद्धार्थस्य वादिना त्रिरप्युक्तस्य बोधाविष्कारात् पश्चादप्रत्युच्चारणं प्रतिपदोच्चारणस्य विरोधी व्यापारोऽननुभाषणं परिषदा विज्ञातस्येति। यद्यविज्ञातार्थत्वादेव नानुभाषते तदा नास्य दोष इति तद्व्यावृत्त्यर्थं त्रिरभिहितस्येत्यनेनाननुभाषणयोग्यः कालो दर्शितः। तथा च प्रथमवचनेऽननुभाषणे वारत्रयपर्यन्तं वादिना वाच्यमिति दर्शितम्। योग्यश्च कालो बोधाविष्कारोत्तरः। ततो नाज्ञातेन सङ्करः। अत एवानुवादयोग्यकाले तद्विरोधी व्यापारोऽननुभाषणमित्याहुः।

अप्रतिभा तूत्तराप्रतिपत्तिरूपानुभाषणोत्तरकालीने तदसाङ्कर्यम्। विक्षेपेण साङ्कर्यं भवति। तदर्थं कथामविच्छिन्दत इत्यध्याहार्यम्। तदयं पञ्चधा सर्वनामानुवादाद्वा, एकदेशानुवादाद्वा, अधिकानुवादाद्वा, केवलदूषणोक्त्या, स्तम्भेन वेति। न च स्तम्भेन विरोधी व्यापार इति वाच्यम्। मूकीभावस्य शरीरेन्द्रियाद्यवस्थाभेदस्यैव वा तादृशत्वात्। न चाधिकानुवादेऽधिकमेव निग्रहस्थानमिति वाच्यम्। अधिकानु-

वादस्याननुवादत्वेनानुवादविरोधिमात्रत्वात् । यत्रैवानेकं प्रकृतं तत्रैव सर्ववादानुवादो दोषः । विशिष्य दूष्यानुपस्थापनात् । न च योग्यतया नियमोऽन्येषामपि योग्यत्वात् ।

ननु कथमिदं निग्रहस्थानम् यत्रारभ्यानुवादं न निर्वाहयति तत्रारब्धानिर्वाह एव दोषः । यत्रासदुत्तरं करोति तत्र तेनैव निग्रहः । यत्र सदुत्तरं तत्र निग्रह एव न स्यात् । अनुवादेऽपि परपक्षदूषणसंभवादिति चेन्न, निराश्रयस्य दोषस्यासंभवात् । वादिवाक्ये चाक्षेपासम्भवात् । दूष्यैकदेशानुवादे च दूषणस्य भागासिद्धेः । अधिकानुवादे च दूषणस्य भागासिद्धेः ।

ननु दोषमनाविष्कृत्य जयीभावेऽज्ञानाननुभाषणाप्रतिभासाङ्कर्ये को दोष इति चेन् अननुभाषणस्य प्रत्यक्षत्वेन निश्चयात् तस्यैवोद्भाव्यत्वात् । तदुत्तरयोस्त्वन्ययोः साधनज्ञानोत्तरस्फुरणसंभवेऽपि वचन……कुण्ठत्वेन सभाक्षोभेणान्यथासिद्धत्वेनानिश्चयात् । अस्य सभाक्षोभादुक्तिसंभवः ।५।२।१६।

## [ अज्ञानलक्षणम् ]

## अविज्ञातञ्चाज्ञानम् ।५।२।१७।

अज्ञातमित्यनेन विषयेण विषयिवचनं लक्ष्यते । निग्रहस्थानस्य ज्ञातस्योद्भावनीयत्वात् । परनिष्ठस्य ज्ञानविरहस्याशक्यज्ञानत्वात् । तथा च वाक्यार्थाज्ञानवचनमज्ञानमिति समाख्यालभ्यमेव लक्षणमनूद्यते । विज्ञातमिति भावे क्तः । न विज्ञातमविज्ञातमविज्ञानमित्यर्थः । चकारः पूर्वसूत्रस्थाभिहितस्येति पर्यन्तानुकर्षार्थः । अविज्ञातमित्यनेनापि विषयेण स्वविषयं वचनं लक्ष्यते । तथा च परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञाताभिधानमज्ञानमित्यर्थः ।

तदुच्यते कथायां प्रकृतविषये स्वाज्ञानाविष्करणमज्ञानमिति ।

आविष्करणं न जानामीत्याद्याकारेण चकारानुकृष्टस्य प्रयोजनादि पूर्ववदेव । सभ्यवाद्यनुवादानन्तरं बोधानाविष्करणमज्ञानमित्याहुः ।

तथा च किं वदसि ज्ञायत एव नेत्यभिधानेऽकिञ्चिदभिधानेऽप्यज्ञानमेव बोधमाविष्कृत्याननुभाषणे त्वननुभाषणं सुविशदवादिताविभावनव्यामोहादुक्तिसम्भवः ।५।२।१७।

## [ अप्रतिभालक्षणम् ]

### उत्तरस्याप्रतिपत्तिरप्रतिभा ।५।२।१८।

प्रतिभात्यनया वक्तेति प्रतिभा स्फुरदुत्तरता तदभावोऽप्रतिभेति समाख्यालभ्यमेव लक्षणमनूद्यते । उत्तरस्याप्रतिपत्तिः वक्तुरस्फुरणमित्यर्थः ।

एतच्चावसरेऽन्यथातिप्रसङ्गात् । अप्रतिपत्तिपदेन तज्ज्ञापको व्यापारो लक्ष्यते । अन्यथा परनिष्ठायास्तस्याः दुर्ज्ञानत्वात् । अत एवोत्तरावसर उत्तरविषयाज्ञानोन्नायककथकव्यापारोऽप्रतिभेत्याहुः ।

एवंविधश्च श्लोकपाठमूकीभावखसूचनादिः । अवसरश्चास्या अनुभाषणानन्तरं तच्चानुभाषणसंभेदः । न चाज्ञानमेवेदम्, अनुवादबोधाविष्कारात् । न विक्षेपो व्याजाभावात् । नाप्यर्थान्तरं कथञ्चिदन्वयपरत्वानिर्द्देश्यकत्वात् । नापार्थकम् अन्वयप्रतियोग्यनुपस्थापनात् । न न्यूनम्, अस्योपजीव्यत्वात् । यद्वोत्तरावसरे तद्विरोधी व्यापारोऽप्रतिभा । तथाविधश्च खसूचनादिः स्फुरदुत्तरस्यापीति । इयञ्च सम्यक् साधनोपन्यासे द्रष्टव्या । साधनाभासोपन्यासे तु पर्यनुयोज्योपेक्षणमेव ।५।२।१८।

## [ विक्षेपलक्षणम् ]

**कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ।५।२।१९।**

विच्छिद्य विशिष्य व्यवस्थावयवाक्षेपः कालान्तरनयनं विक्षेपः । अत एवोभयानुमत्या प्रवृत्तकथयोर्व्याजेन कथायाः कालान्तरनयनं विक्षेप इत्यर्थः । यथेदानीं मम काचिद् व्यावृत्तिर्वृत्तास्तीति कालान्तरे कथा कार्येति । अस्य समयानन्तरमवसानपर्यन्तमवसरः । समयबन्धानन्तरमेव त्वसङ्कीर्णावसरः । तदा हि नाप्रतिभा उत्तरावसराभावात् । न न्यूनं किञ्चिदभिधानाभावात् । नार्थान्तरं कथाविच्छेदविरोधानुद्देश्यकत्वात् । अवसरान्तरे साङ्कर्येऽप्यदोषः ।५।२।१९।

## [ मतानुज्ञालक्षणम् ]

**स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा । ५।२।२०।**

अभ्यनुज्ञायतेऽनेनेति अभ्यनुज्ञा इष्टापादनम् । मतस्येष्टस्याभ्यनुज्ञा इष्टापादनं मतानुज्ञेति समाख्यालभ्यमेव लक्षणमनूद्यते । परोक्तमनिष्टम स्वपक्षेऽनुद्धारादभ्युपगम्यास्यैव दोषस्य प्रसञ्जनं मतानुज्ञेत्यर्थः । दोषशब्देनानिष्टमात्रस्याभ्युपगमेनानुद्धारमात्रस्य लक्षणात् । पक्षशब्देन चाभ्युपगमविषयमात्रमुक्तम् । तेन साध्यहेत्वोरपि संग्रहः । यथा त्वं चौरः पुरुषत्वादित्युक्ते, वक्ति त्वमपि चौर इति । अत्र हि परेणापादितं चौरत्वमनिष्टमनुद्धृत्य परस्यापादयति । अनभ्युपगमे हि कथं पुरुषत्वं हेतुः स्वस्मिन् परानैकान्तिकीकृतं तेन स्यात् ।

न च सचेताः स्वोक्तं दूषयति । तस्मात् काममहं चौर इत्येव ब्रूयात् । परस्तूपहासाय किञ्चि·················परमाधेत इति । न तु स्वव्याघातकत्वाज्जात्युत्तरमेवेदमिति चेत् न, इतरत्वाभावात् स्वव्या-

घातकत्वाभावाच्च । न स्वेतरं वा मौनमप्यसाधकी करोति ·········
·················धिसाम्यापादनव्यामोहादुक्तिसंभव इति ।५।२।२०।

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । ५।२।२१।**

पर्यनुयोज्यः पर्यनुयोगार्हो निग्रहो ··· ········· ·पन्ननिग्रह स्थानस्य तदनुद्भावनं पर्यनुयोज्योपेक्षणमिति समाख्यालभ्यमेव लक्षणमनूद्यते । निगृह्यतेऽनेनेति निग्रहो निग्रहस्थान··· ··········
···························निग्रहोद्भावनादेव साध्यसिद्धावाधिक्यभिया निग्रहान्तरानुद्भावनेऽतिप्रसङ्गः । एवं पर्यनुयोज्योपेक्षणोपेक्षणमपि तथा स्यात् ···························· स्वोद्भाव्यानुद्भावन-स्य दोषत्वात् । अन्यथातिप्रसङ्गात् । न चेदमपि वाद्युद्भाव्यमेव न सभ्योद्भाव्यं स्वकौपीनविवरणस्यायोग्यत्वात् । ·····················
·····················वाये स्वकौपीनमपि वाच्यमिति युक्तम् । स्वप्रमाद-स्यापि व्यक्तीकरणात् । युक्तानुस्मरणे तदभिधानेनैव परपराजय-सिद्धावयुक्ताभिधानरूपान् ·······································
तानुद्भावनमपि तथा स्यात् । तस्याप्युद्भावितत्वेन यद्यपेक्षोत्कर्षाना-धायकत्वात् । एवं प्रतिज्ञासंभृतमपि तथा स्यात् । यद्यप्यत्र नार्हं······
········ ···नेनाप्यनुद्भावने सामान्याज्ञानौचित्यनिवारणादिति चेत् न, प्रशब्देनैव निरासात् । निग्रहप्तस्येति वक्तव्ये प्रशब्दस्य ·· ······
·······························चोक्तस्थले तथा त्वदुक्तयुक्तेरेव । अत एवानवसरेऽपि तदनुद्भावने नातिप्रसङ्गः । अनवसरे प्राप्तिप्रकर्ष-स्याभावात् ।·······························मित्याहुः ।

अवसरश्चास्य यत्र प्रतिज्ञाहानिप्रतिज्ञासन्न्यासादिकमुपेक्ष्य सदुत्तरमसदुत्तरं वा वक्ति तत्र तत्राप्रतिभादेरभावात् । ············
···································पेक्षितवान् किमेतावता

निग्रहमर्हति अर्हत्येव प्रतिज्ञासन्न्यासादीनामवश्योद्भाव्यत्वात् अन्यथा पूर्वोपात्तं दुष्टं त्यजन् विशेषयन् च........................................ न स्यात् । नन्वस्य न स्थेयोद्भाव्यता नियमः वीतरागकथायां स्वोद्भाव्येऽप्यदोषादिति चेत् न वाद उपेक्षांशोद्भावनवैयर्थ्यात् ।........................................ ........................स्वसम्भवात् ।५।२।२१।

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ।५।२।२२।**

अनुयुज्यत इत्यनुयोज्यः भावप्रधानो निर्देशः । अनुयोज्यत्वान्निष्क्रा[न्तः]........................................ इति यावत् । तस्यानुयोग उपलम्भो निरनुयोज्यानुयोगोऽतद्दोषस्य तद्दोषोद्भावनं निरनुयोज्यानुयोगः । एवं समाख्यालभ्य [ मेव लक्षणमनूद्यते........................................स्थानेऽपि तन्निग्रहस्थानाभियोगो निरनुयोज्यानुयोग इत्यर्थः ।

तेन निग्रहस्थानपातेऽपि निग्रहस्थानान्तराभियोगो........................................ छलं जातिराभासाऽनवसरग्रहणं चेति । छलमुक्तं जातिश्च । आभासश्च छलादृश्याऽसदभियोगः । प्रतिज्ञाहानि........................................ नवसरग्रहणं तु अकाल एवोद्भावनम् । यथा त्यक्ष्यसि चेत् प्रतिज्ञाहानिः स्यादित्यादि ।........................................ कक्षान्तरितमिति ।५।२।२२।

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः । ५।२।२३।**

अपगतः सिद्धान्तो [ऽपसिद्धान्तः]........................ ....................मेव लक्षणमनूद्यते । सिद्धान्तमभ्युपेत्य स्थितस्यानियमात् सिद्धान्तातिक्रमेणापि कथायाः प्रसञ्जनं करणमपसिद्धान्तो निग्रह.........................................................................

ननु पूर्वापरव्याघाताद्वयं विरोध एवेति चेत् न शास्त्रकाराभ्युपगममनुभाव्य स्ववाक्यविरोधस्य उद्भावयि .. ........................................................................भौतिकानीन्द्रियाणीति वचनमिन्द्रियाणि भूतेभ्य इति गौतमवचनमवधार्य व्याहतमिति.................................................................................बोधोऽपि वाऽपसिद्धान्त एव स्यादिति चेत् न, बाधकस्योभाभ्यां प्रामाण्योपजीवने बाधः । अन्यतरा ................................................................................

नैयायिकमीमांसकयोर्वेदविरोधे बाधो बौद्धेन सह बाधेऽपसिद्धान्तः । एक दर्शन ............................................................कदेशिनामिति । अस्मन्मतानभिज्ञोऽयमित्यादि व्यामोहादुक्तिसम्भवः ।

## हेत्वाभासाश्च यथोक्ताः ।५।२।२४।

[ हेत्वाभासाः यथा येन प्रकारेण उक्ताः लक्षितास्तथैव तेनैवरूपेण निग्रहस्थानानि । तथा च येन रूपेणासिद्धत्वादिना तेषां हेतुदूषणत्वं तदेव रूपं पुरस्कृत्य हेत्वाभासप्रयोक्तृतया कथकाशक्त्युद्भयनमपीति सूत्रार्थः । यद्यनुक्तमपि किञ्चिदवशिष्यते निग्रहस्थानं तच्चकारेण समुच्चेय[1]म् ]

*इति महामहोपाध्याय मिश्र वाचस्पति विरचिते*

*न्यायतत्त्वालोके*

*पञ्चमोऽध्यायः*

*समाप्तश्चायं ग्रन्थः*

---

१. अत्र ग्रन्थपातः । अत एवान्वीक्षानयतत्त्वबोधस्य तात्पर्यटीकायाश्च पंक्त्या वृत्तिः पूरितेत्यवधेयम् ।

## परिशिष्टम् (१)

# न्यायसूत्रपाठविमर्शः

न्यायदर्शनस्य सूत्राणां पाठप्रसङ्गे तदीयसंख्यानिर्णयविधौ च षड्दर्शन व्याख्याकृतः वाचस्पतिमिश्रतः प्राक् मन्ये न्यायाचार्येषु नासीदैकमत्यम्। अत एव सूत्रपाठे तत्संख्यायां प्रकरणे च निर्धारणस्यावश्यकतामनुभवन् तात्पर्याचार्यः वाचस्पति-मिश्रः न्यायसूचीनिबन्धं प्रणीय पश्चाद्भवान् विदुषो महदुपाकरोत्। तत्र च सूत्रगतानि पदान्यक्षराणि चापि परिसंख्यातानि सन्ति। बौद्धधर्माणामभ्युदयेन सह सनातन-शास्त्रस्योपरि तदाक्रमणतः राजनैतिकोत्थानपतनयोः दुःप्रभावादन्यविधबाधायाश्च सनातनशास्त्रेषु समजायत विक्षोभोऽस्तव्यस्तता चेति न तिरोहितं विद्वल्लोचनेभ्यः। अत एव न्यायसूत्राण्यधिकृत्य परवर्तिषु विद्वत्सु भ्रमप्रमादादिनिरासार्थमयं मिश्रवर्यस्य प्रयासः सर्वथा स्तुत्यः। अस्य न्यायसूचीनिबन्धस्य प्रामाणिकं सम्पादनं प्रकाशनं च पुण्यश्लोकेन म० म० डा० सर गङ्गानाथझामहाभागेन स्वकीयया न्यायभाष्य-व्याख्यया खद्योताभिधानया साकं कृतम्। अत्र चतुरशीतिः प्रकरणानि, त्रिंशदधिकानि पञ्चशतानि सूत्राणि, षडधिकानि द्विसहस्राणि पदानि, अष्टौ सहस्राणि एकादशाधिक-चतुःशतानि चात्राक्षराणि सन्ति तेन परिगणितानि। पञ्चाध्यायी शास्त्रं प्रत्येकमध्याय आह्निकद्वये विभक्त इति तु विदितमेव। म० म० फणिभूषणतर्कवागीशचरणस्तु स्वकीय-न्यायभाष्यव्याख्यायामष्टाविंशत्यधिकानि पञ्चशतानि सूत्राणि न्यायसूचीनिबन्धगतानि मनुते। न चैकदेशोपलब्धिरवयविसद्भावात् २।१।३३। न सद्यः कालान्तरोपभोग्यत्वात् ४।१।४५। इति सूत्रद्वयं झा महाभागेन परिगृहीतं नायमङ्गीकरोति।

अर्वाचीनास्तु न्यायदर्शनस्य वृत्तिकारा नानुगच्छन्ति न्यायसूचीनिबन्ध-मित्याश्चर्यम्। द्वितीयवाचस्पतिमिश्रः ख्रिष्टीयपञ्चदशशतकीयः न्यायसूत्रोद्धारनामकं ग्रन्थं विरचय्य न्यायसूत्रपाठनिर्धारणाय यतते। अत्र कानिचित् निबन्धधृतानि सूत्राणि सन्त्युपेक्षितानि कानिचित् पुनस्तत्रानिर्दिष्टान्यपि परिगृहीतानि विद्यन्ते। तथा हि न्यायसूचीनिबन्धे द्वितीयाध्यायगतानि सूत्राणि अष्टत्रिंशदधिकं शतं समुपलभ्यन्ते

न्यायसूत्रोद्धारे तु चतुस्त्रिंशदधिकं शतं तानि सन्ति । तस्माच् चतुर्णां सूत्राणां न्यूनतोपेक्षा वेह स्फुटं परिलक्ष्यते । एवं तृतीयाध्याये पञ्चचत्वारिंशदधिकं शतं सूत्राणि न्यायसूची-निबन्धे परिगृहीतानि, पञ्चाशदधिकं शतं च तानि न्यायसूत्रोद्धारे विद्यन्ते । तस्मात् पञ्चानां सूत्राणामिहाधिक्यम् । प्रथमचतुर्थपञ्चमेष्वध्यायेषु सूत्रसंख्यामधिकृत्य विवादो यद्यपि नास्ति तथापि सूत्रपाठमधिकृत्य यथास्थानं भेदोऽवलोक्यते सर्वत्राध्यायेषु । तद्यथावसरमिह प्रदर्शयिष्यते । प्रकरणस्य पदानामक्षराणां वा परिगणनं न्यायसूत्रोद्धारे नास्ति । अस्य सम्पादनं प्रकाशनं च प्रथमतः म० म० गङ्गाधरशास्त्रिमहाशयेन स्वकीयन्यायभाष्यटिप्पण्या सह कृतं, पश्चात् पण्डितवरेण्येन सूर्यनारायणशुक्ल महाशयेन न्यायमञ्जर्या सह तद् विहितम् । उभयत्र टिप्पण्यां सम्पादकाभ्यां सूत्रजातस्य सूत्रत्वसमर्थनाय प्रमाणसंग्रहो विहित इति तद्रहस्यं नावगच्छामः । अस्माकं मते तु वाच-स्पतिनामा कश्चिदन्य एव न्यायसूत्रोद्धारप्रणेता न तु द्वितीयवाचस्पतिमिश्रो न्यायतत्त्वा-लोककृदिति ।

विश्वधरसूनुः केशवमिश्रतर्काचार्यो गौतमीयसूत्रप्रकाशनाम्न्यां न्यायसूत्रवृत्तौ उभयोर्ग्रन्थयोर्गजनिमीलनं विधाय स्वतन्त्रमेवात्मविचारं प्रस्तौतीति तद्ग्रन्थावलोक-नेन परिज्ञायते । अयं तर्काचार्यः न्यायसूत्राणां पाठं संख्यां प्रकरणं चाधिकृत्य नितरां जागरूकः प्रतिभाति । अत एवाध्यायान्ते उपसंहारपद्येषु स्वकीयमेतद्विषयकं विचारं विशदयति स्फुटं निर्भीकञ्चेति तत एवावसेयम् ।

द्वितीयवाचस्पतिमिश्रस्यैव प्रकाश्यमाना कृतिरियं न्यायतत्त्वालोकाभिधाना न्यायसूत्रवृत्तिः पश्चाद्भवेन प्राक् प्रकाशितेन गौतमीयसूत्रप्रकाशेन सह सूत्रपाठविधौ मतैक्यमाचरति न्यायसूत्रोद्धारेण चास्याः वैमत्यमिति दृष्टम् । तस्मादेतयोर्वृत्त्यो-रुपलब्ध एव पाठः समुचितः साधीयानिति धारणास्माकम् । अस्यां परिस्थितौ न्यायसूत्रोद्धारस्य कर्तृत्वे जागर्ति संशयः । एक एव सुधीः एकमेव विषयमादाय स्वकीयरचनयोर्द्विरूपतां विदध्यादिति नारोहति विश्वासपदवीम् ।

अत एवात्र न्यायतत्त्वालोकस्य प्राधान्यं मन्यमानः न्यायसूत्रपाठमधिकृत्य यथामति प्रस्तूयते विचारः ।

न्यायसूत्राणां पाठस्यालोचनावसरे न्यायसूचीनिबन्धन्यायसूत्रोद्धाराभ्यां सहा-निरुद्धाचार्यस्य विवरणपञ्जिकायाः, आचार्योदयनस्य परिशुद्धेः, केशवमिश्रस्य गौत-मीयसूत्रप्रकाशस्य, विश्वनाथसिद्धान्तवागीशकृतौ न्यायसूत्रवृत्तेः न्यायतत्त्वालोकस्यास्य, म० म० डा० गङ्गानाथ झा सम्पादितस्य न्यायभाष्यस्य, तदीयखद्योतटिप्पण्याः, म० म० फणिभूषणतर्कवागीशकृतवंगभाषामयटीकया युतस्य न्यायभाष्यस्य न्याय-

भूषणस्य, न्यायमञ्जर्याः, वंशधरोपाध्यायप्रणीताया अन्वीक्षातत्त्वपरीक्षायाः मातृकायाः, डा० प्रबालकुमारसेनलिखितस्य न्यायरहस्यमधिकृत्य निबन्धस्य, न्यायालङ्कारस्यान्येषां च संबद्धग्रन्थानामवलोकनमावश्यकम् । एतेषां ग्रन्थानां पर्यालोचनं विधाय यथामति सूत्रपाठस्थितेरिहोपस्थापनाय विधीयते यत्नः ।

सूत्रसंख्यामधिकृत्य वृत्तिकृत्स्वपि प्रायः मतैक्यं नास्ति । द्वितीयवाचस्पतिमिश्रः न्यायतत्त्वालोके पञ्चदशाधिकपञ्चशतमितानि सूत्राणि स्वीकरोति । न्यायसूचीनिबन्धस्य चतुर्दश षोडश वा सूत्राणि नायं मनुते, 'न हेत्वाभावादिति' सूत्रमधिकमङ्गीकरोति च । तथा च प्रथमाध्यायस्यैकं द्वितीयाध्यायस्य पञ्चषानि तृतीयाध्यायस्य चत्वारि चतुर्थाध्यायस्य त्रिचतुराणि पञ्चमाध्यायस्य चैकं सूत्राणि नात्र स्वीकृतानि सन्ति ।

केशवमिश्रतर्काचार्यस्तु नव सप्त वा सूत्राणि न्यायसूचीनिबन्धगतान्यस्वीकृत्यैकं 'न हेत्वभावा'दिति योजयति । यद्यप्यत्र द्वितीयाध्यायद्वितीयाह्निकस्यानुपलब्ध्या तद्भागस्थसूत्रसंख्यावधारणानुमानिक्येव । द्वाविंशत्यधिकानि पञ्चशतान्यनेन स्वीकृतानि सूत्राणि । प्रथमाध्यायस्यैकं, द्वितीयाध्यायस्यैकं, तृतीयाध्यायस्य चत्वारि, चतुर्थाध्यायस्य द्वित्राणि सूत्राणि न्यायसूचीनिबन्धधृतान्यत्र परित्यक्तानि ।

विश्वनाथसिद्धान्तपञ्चाननस्य वृत्तौ त्रयोविंशत्यधिकानि पञ्च शतानि सूत्राणि स्वीकृतानि सन्ति । सूत्रसंख्यामधिकृत्य प्रथमाध्याये न्यायसूचीनिबन्धतोऽस्य वृत्तिकृतः नास्ति वैमत्यं, द्वितीयाध्यायस्य द्वितीयाह्निके सूत्रमेकं न्यायसूचीनिबन्धस्यास्वीकरोत्ययम् । सूत्रत्रयं तृतीयाध्यायगतमस्वीकरोति । चतुर्थाध्यायप्रथमाह्निके सूत्रमेकमधिकं मनुते ततः । द्वितीयाह्निके तु सूत्रद्वयं तत्रत्यमस्वीकरोति । पञ्चमाध्याये नानयोर्विवाद इति संकलनेन षट्सूत्राणि न्यायसूचीनिबन्धस्यास्वीकृतानि एकमधिकं तत्र योजितञ्चेति सविवरणमस्य प्रकाशनमनुपदमेवात्र यथावसरं भवेदिति ध्येयम् ।

१।१।२। अत्र 'तदनन्तरापायादपवर्गः' 'तदनन्तराभावादपवर्गः' इति पाठद्वयमुपलभ्यते । कतरश्च पाठः साधीयान् सूत्रकाराभिप्रेतश्चेति जिज्ञासा स्वाभाविकी समुदेति । उभयोः पाठयोरर्थसङ्गतेर्दृष्टचरत्वात्, इदमित्थन्तया कोऽपि किमप्यत्र वक्तुं नार्हतीति मदीया धारणा । किन्तु इदानीं यावत् कादृशी स्थितिरमुं पाठमधिकृत्य सञ्जातेति समीक्षार्थं यथामति प्रयत्नोऽत्र विधीयते । जिज्ञासा तु मन्ये न भवति समाहिता ।

तदनन्तरापायादित्येव प्राचीनपाठः गौडपाठः मैथिलातिरिक्तपाठो वेति-

समीक्षया प्रतीयते । शङ्करभगवत्पादः सूत्रमदस्तथैवोद्धरति[1], म० म० फणिभूषण तर्कवागीशस्तथैवाङ्गीकरोति पाठं स्वारस्यं चात्रैवात्मनः प्रकाशयति[2]। विश्वनाथस्य न्यायसूत्रवृत्तिः न्यायतात्पर्यदीपिका[3] गौतमीयसूत्रप्रकाशश्च समर्थयन्तीमं पाठम्[4]। न्यायभाष्यस्याप्येवंविध एव पाठे विद्यते स्वारस्यम् । भाष्यस्य प्रसन्नपदाव्याख्यातुः सुदर्शनाचार्यस्याप्यत्रैव विद्यते सम्मतिः । न्यायभूषणेऽप्यस्यैव पाठस्य समुल्लेखोऽस्ति[5]।

मैथिलपाठस्तु 'तदनन्तराभावा'दिति मन्ये विद्यते । अत्र तात्पर्यटीकाकृतः[6]

---

१. द्र० शाङ्करभाष्यम् १।१।४।

२. न्यायसूचीनिबन्धेऽनेकेषु च भाष्यपुस्तकेषु तदनन्तराभावादिति पाठो दृश्यते किन्तु तदनन्तरापायादित्येव पाठोऽत्र समीचीन इति मदीया मतिः । अपायपदं केवलमत्रैव वारद्वयं महर्षिणा प्रयुक्तम् । भामत्यां शाङ्करभाष्ये उद्द्योतकरस्य वार्त्तिके चापायपदमेवात्र प्रयुक्तमस्ति [वङ्गलान्यायभाष्यटिप्पणी पृ० ६६ प्र० सं०] ।

३. न्यायतात्पर्यदीपिकायां वृत्तौ तदनन्तराभावादित्येव लिखितं विद्यते, किन्तु सूत्रं तु तदनन्तरापायादिति रूपेण तत्र पठितमस्ति ।

४ 'यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयन्तीति' भाष्यव्याख्या तदैव सङ्गच्छते यदा तथाविधः सूत्रपाठः स्यादिति मदीया मतिः । वर्त्तिके पाठो यथा वा भवतु तन्मातृकासु प्रकाशितपुस्तकेषु वा किन्तु तन्न किमपि ब्रवीति ।

५. द्रष्टव्यं न्यायभूषणं पृ० ७२, काशीसंस्करणम् ।

६. अतः सिद्धे कार्यकारणभावे उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इत्यनेन योगेन कारणोच्छेदक्रमेण कार्योच्छेदक्रमप्रतिपादनेनापवर्गः प्रतिपाद्यते इति तात्पर्यटीका पृ० १९७ [न्यायदर्शनम्, प्रो० ए० एल० ठाकुरसम्पादनम्] ।

उदयनाचार्यस्य[1] वर्धमानोपाध्यायस्य[2] द्वितीयवाचस्पतिमिश्रस्य[3] मैथिलानां मातृकायाश्च[4] स्वारस्यं पश्यामो वयम्। यद्यपि गौतमीयसूत्रप्रकाशकृतोऽत्र पाठोऽन्यादृशोऽस्ति तथापि सोऽपवादो बोध्यः।

सुन्दरानन्दमहाबुद्धोपासकेन लिखिता म० म० डा० उमेशमिश्रमहाशयेन संगृहीता सम्प्रत्यस्माकं विद्यापीठे विद्यमानैका न्यायसूत्राणां मातृका विद्यते। यस्यामपायादित्येव पाठोऽस्ति न त्वभावादिति।

त्रिवेन्द्रम्ग्रन्थागारतोऽस्माभिः संगृहीतायां न्यायसूत्रमातृकायामप्येवमेव स्थितिरर्थात् अपायादित्येव पाठोऽस्ति।

न्यायमञ्जर्यान्तु 'अभावादिति' पाठस्य समादरोऽस्ति। तथा च तत्पंक्तिः— 'तदिदमुक्तमुत्तरोत्तरापाये तदनन्तराभावादिति'। सूत्रमपि तत्राभावघटितमेवोद्धृतमस्ति[5]।

१।१।४। प्रत्यक्षलक्षणसूत्रमिदमनन्तरं न्यायसूत्रविवरणकृद् राधामोहनगोस्वामी सूत्रमेकं पठति—

'संस्कारोद्भवा प्रत्यभिज्ञे'ति। कुत्राप्यन्यत्र सूत्रमिदं न्यायस्य ग्रन्थेषु न सन्दृश्यत इति नारोहति विचारपदवीम्।

---

१. तेषामेवोत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति। उत्तरोत्तरापाये तदनन्तराभावादिति च पदद्वयमिति परिशुद्धिपंक्तिस्तस्मादुदयनाचार्यस्याभावादिति पाठे स्वारस्यम्। (द्र० न्यायदर्शनं दरभंगाप्रकाशनं पृ० १७३)।

२. अन्वीक्षानयतत्त्वबोधस्य त्रिसूत्रीप्रकरणस्य ग० झा० के० सं० विद्यापीठेऽस्मिन् तालपत्रीयमातृकायाम् अभावादित्येवोपलभ्यते पाठः।

३. न्यायतत्त्वालोके न्यायसूत्रोद्धारे च तथैव विद्यते पाठः। तदनन्तरापायादिति पाठान्तरमुल्लिखति म० म० गङ्गाधरशास्त्री न्यायसूत्रोद्धारटिप्पण्याम्।

४. म० म० विन्ध्येश्वरीप्रसादद्विवेदी न्यायवार्त्तिकं सम्पादयन् टिप्पणयत्यत्र मैथिलस्य चण्डीझामहाशयस्य गृहे स्थितायां न्यायवर्त्तिकमातृकायाम् अभावादित्येव पाठ उपलभ्यत इति।

५. द्र० न्यायमञ्जर्याः द्वितीयो भागः पृ० ८२, पण्डित सूर्यनारायणशुक्लसम्पादनम्।

१।१।५। अत्राथपदं सूत्रगतं विद्यते न वेति विप्रतिपत्तिः । भाष्यमथपदेन विनैव सूत्रगतानि पदानि विवृणोति । वार्त्तिकतात्पर्यटीकयोः स्फुटमिह विधिकोटिरस्ति समर्थिता । परिशुद्धिरत्र मौनं भजते । न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे न्यायतत्त्वालोके विश्वनाथवृत्तौ गौतमीयसूत्रप्रकाशे चाथपदं सूत्रांशतया परिगृहीतमस्ति ।

न्यायमञ्जर्यां न्यायभूषणे न्यायतात्पर्यदीपिकायां चाथपदं सूत्रांशतया नास्ति स्वीकृतम् । अतोऽत्र विप्रतिपत्तिर्विनिगमकाभावेन समाहिता न भवति ।

१।१।८। स द्विविधः दृष्टादृष्टार्थत्वात्, अस्य सूत्रस्य सूत्रत्वे विद्यते विवादः । न्यायतत्त्वालोककृद्वाचस्पतिमिश्रः गौतमीयसूत्रप्रकाशकारः केशवमिश्रश्च[1] नेदं सूत्रत्वेन परिगणयतः न चास्य तन्निरस्यतोऽपि । न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च समुल्लेखोऽस्य विद्यते । यद्यपि न्यायसूत्रोद्धारटिप्पण्यां म० म० गङ्गाधरशास्त्री पण्डित सूर्यनारायण-शुक्लश्च टिप्पणयतः—वङ्गाक्षरलिखितपुस्तके (न्यायसूत्रोद्धारे) त्रुटितमिदमिति तथापि देवाक्षरलिखिते न्यायसूत्रोद्धारपुस्तके समुपलब्धस्यैव ताभ्यां सम्पादकाभ्यां विद्वद्वरिष्ठाभ्यां समावेशः कृतो भवेदिति तर्क्यते ।

तात्पर्यटीकायां सूत्रत्वेनास्य परिग्रहोऽस्ति[2] । परिशुद्धिरत्र मौनमवलम्बते[3] । जयन्तभट्टस्तु सूत्रत्वमस्य स्फुटं समर्थयति[4] । सुन्दरानन्दमहाबुद्धोपासकलिखितायां न्यायसूत्रमातृकायां नेदं सूत्रं सन्दृश्यते, त्रिवेन्द्रम्मातृकायां पुनर्दृश्यते ।

तर्कवागीशचरणः सूत्रत्वं समर्थयति । किन्तु तदीया टिप्पणी भ्रममपि जनयति[5] ।

---

१. नवीनवाचस्पतिमिश्रः न्यायतत्त्वालोके केशवमिश्रश्च गौतमीयसूत्रप्रकाशे न्यायसूत्रमिदं न व्याख्याति । केशवमिश्रस्तु पञ्चभिः सूत्रैरेव प्रमाणलक्षणप्रकरणं स्फुटमभिदधाति । तस्मादस्य सूत्रत्वं निरस्तं भवति ।

२. स द्विविध इति सूत्रस्य तात्पर्यमाहेति ता. टी. ।

३. परिशुद्धिरत्र भाष्यवार्त्तिकतात्पर्यव्याख्याप्रतीकमपि न गृह्णाति ।

४ व्याप्तिप्रदर्शनायैव सूत्रकृता स द्विविधः दृष्टादृष्टार्थत्वादित्युक्तम् । दृष्टार्थशब्दे गृहीताविनाभावमाप्तोक्तत्वमदृष्टार्थेऽपि प्रामाण्यं साधयतीति । (न्यायमञ्जरी पृ० २२६ ।)

५. तर्कवागीशचरणः कथयतीह—पञ्चानां भाष्यं विधाय प्रमाणभाष्यनाम्ना प्रमाण-प्रकरणं समाप्तिमेतीति भाष्यकृत् (बङ्गलान्यायभाष्यम्, प्रथमखण्डः, पृ० १६० पृ०, प्रथमसंस्करणम्) द्वाभ्यां सूत्राभ्यामिह पूर्वप्रकरणमस्ति । पञ्चभिः सूत्रैः

न्यायभूषणमस्य सूत्रत्वमुपपादयति औचित्यं चात्र प्रदर्शयति । तथा च तत्रत्या पंक्तिः—भूतेभ्य इत्याहङ्कारिकत्वप्रतिषेधार्थम् । अहङ्कारोऽपि भूतशब्दवाच्यस्तस्य त्रिगुणत्वात् बहुवचनमपीत्याशङ्क्याह—पृथिव्यापस्तेजोवायुराकाशमिति भूतानीति । तत्र चतुर्णामिन्द्रियकारणत्वमाकाशस्य तु विशिष्टप्रदेशस्येन्द्रियस्वभावत्वज्ञापनार्थमिति तत्त्वमुपचर्यते । यद्वा कर्णशष्कुलीसंयोगापेक्षया करणत्वम् । तेन भूतेभ्य इति निमित्त-पञ्चमी न विरुध्यते । न ह्येकप्रकृतित्वे व्यवस्थितविषयत्वमुपपादयितुं शक्यते दृष्टान्ता-भावादिति । नानाप्रकृतित्वे तु प्रदीपादि दृष्टान्तः प्रागुक्तस्तस्मात् भौतिकानि पञ्च बाह्येन्द्रियाणि'[1] ।

म० म० फणिभूषणतर्कवागीशचरणः सूत्रत्वमस्य समर्थयति ।

यद्यपि कस्यामपि वृत्तौ कस्यापि सूत्रस्याव्याख्यानं तदस्वीकृतिं न विद्योतयितु-मर्हतीति सत्यम् तथापि वृत्तिकारस्य व्याख्यातुर्वा शैली यत्सूत्रमुल्लिख्य वृत्तौ व्याख्यायां वा तस्याव्याख्येयताबोधनाय सुगममिति कथयति । फिलोसौफिकल एसे नाम्नि प्रो० अनन्तलालठाकुरस्याभिनन्दनग्रन्थे डा० प्रवालकुमारसेनमहाशयस्य निबन्धे रामभद्र सार्वभौमप्रणीतन्यायरहस्याभिधां न्यायसूत्रवृत्तिमधिकृत्य लिखिते प्रतिपादितं यदेतस्य सूत्रत्वं तत्रापि नास्ति स्वीकृतमिति ।

१।१।१३। 'पृथिव्यापस्तेजोवायुराकाशमिति भूतानि' सूत्रमिदं भाष्ये न्याय-सूचीनिबन्धे तात्पर्यटीकापरिशुद्ध्योः न्यायसूत्रोद्धारे न्यायतत्त्वालोके गौतमीयसूत्रप्रकाशे न्यायतात्पर्यदीपिकायामन्यत्र च वृत्तिषु सूत्रत्वेन परिगृहीतमस्ति ।

परमिह न्यायसूत्रोद्धारसम्पादकौ म० म० गङ्गाधरशास्त्रि पं० सूर्यनारायणशुक्लश्च टिप्पणयतः—'कानि पुनरिन्द्रियकारणानीति प्रश्नस्योत्तररूपं पृथिव्यापस्तेजोवायु-राकाशमिति भूतानीति भाष्यं न सूत्रम्, वार्त्तिके तात्पर्यटीकायां च सूत्रत्वानुक्तेः । गन्धरसेत्यादेरेव वार्त्तिके सूत्रत्वोक्तेरिति । न्यायमञ्जर्यामस्य सूत्रत्वं समर्थितं नास्ति । विश्वनाथवृत्त्यनुसारेण च सूत्रत्वेनास्य परिग्रह इति केचित् । न्यायसूचीनिबन्धे दर्शनेनास्य सूत्रत्वमित्यन्ये । रामभद्रसार्वभौमः न्यायरहस्ये सूत्रत्वमेतस्य नाभ्यु-पगच्छतीति प्रबालकुमारसेनमहाशयस्य निबन्धतोऽवसीयते ।

---

प्रमाणलक्षणप्रकरणं यदि तर्हि सूत्रस्यास्य समावेशो भवितुं नार्हति । यदि चेदं सूत्रं स्वीक्रियते, पञ्चभिः सूत्रैः प्रमाणप्रकरणमिति न संगच्छते । स्वयं चास्य सूत्रत्वं समर्थयति युक्तिभिरयमिति भ्रमोऽस्माकं मनसि भवति ।

१. द्र० न्या० भू० पृ० ४३८ ।

१।१।२७। अत्र 'स चतुर्विधः' इत्यंशः सूत्रस्य भाष्यस्य वेति विप्रतिपत्तिः। न्यायभूषणे न्यायतत्त्वालोके न्यायसूत्रोद्धारे गौतमीयसूत्रप्रकाशे केरलमातृकायां च भाष्यांशतयैतत्पदस्य परिग्रहः। भाष्यवार्त्तिकतात्पर्यटीकापरिशुद्धिषु न्यायमञ्जर्याञ्च सूत्रांशतया स्वीकृतस्तदंशः। तारानाथतर्कतीर्थस्त्वत्र न्यायदर्शनसम्पादकः टिप्पणयति—'स चतुर्विध' इति सूत्रांशः, ल-झा-ग-आ-ज मातृकासु भाष्यपाठरूपेण परिगृहीतः। किन्तु सूत्रकारस्यात्र अर्थान्तरभावादिति हेतुनिर्देशस्य साध्यनिर्देशमन्तरेणासङ्गतेः। १।१।५ सूत्रस्य विभागवचनादेवेत्यादितस्तथा चार्यामित्थंभूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते च्छले शब्दादिषु च बहुलं समाचारः शास्त्रे इत्येतावत्पर्यन्तस्य पाठस्यालोचनेन भाष्यकारस्याप्येतादृशसूत्रपाठे सम्मतिबोधात् न्यायसूचीनिबन्धे वाचस्पतिमिश्रैरपि एतदंशस्य सूत्रपाठतया परिगृहीतत्वाच्च सूत्रांशतैवास्य समीचीना प्रतिभाति। यद्यपि वार्त्तिकपाठधारणे विश्वनाथवृत्तिव्याख्याने च पर्यालोच्यमाने पुनस्तदंशस्य भाष्यपाठतैव प्रतीयत इति पाठावधारणं प्रति महदसौकर्यं तथापि प्राचीनतमानां भाष्यकाराणां ।१।१।५ तमसूत्रभाष्यीयनिरुक्तपाठार्थबलमेव प्राधान्येनावलम्ब्य सूत्रपाठतया सम्पादनमस्माभिराहृतम्[1]।

म० म० फणिभूषणतर्कवागीशचरणस्तु कथयति[2] स चतुर्विध इति भाष्यांश इति केचनाभिलपन्ति किन्तु वस्तुतः सूत्रांशोऽयम्। वाचस्पतिमिश्रः न्यायसूचीनिबन्धे सूत्रांशतया परिगृह्णाति। पञ्चमसूत्रस्थभाष्यकारवचनेन च तथा प्रतिपद्यते यथा महर्षिवचनमेवायमंश इति। तस्मात् सूत्रांशतया परिग्राह्योऽयमंश इति मदीया मतिः।

१।२।४। 'समातीतकाला' इत्यत्र केशवमिश्रः भट्टवागीश्वरः सुन्दरानन्दमहाबुद्धोपासको न्यायभूषणकृत् न्यायमञ्जरीकृच्चैवं पठन्ति। 'समकालातीता' इति न्यायसूचीनिबन्धे डा० गङ्गानाथझासम्पादिते खद्योतयुते न्यायभाष्ये च पाठः। तारानाथतर्कतीर्थः फणिभूषणतर्कवागीशश्चानुव्रजतः कालातीतपदम् नत्वतीतकालपदम्। अत्र कालातीत इत्येव साधु प्रतिभाति। यतो हि लक्षणसूत्रे कालातीतपदमेव विद्यते सर्वत्र वृत्तिषु भाष्यादिषु चेति।

१।२।१५। तमे सूत्रे केशवमिश्रः स्वकीयवृत्तौ संलपति यदत्र तदविशेषादिति सूत्रबहिर्भूतमिति जयन्तस्तन्न साधु, अयमंशोऽपि सूत्रान्तर्गत एव। किन्तु कृतेऽप्यन्वेषणे

---

१. मुन्शीराममनोहरलालसंस्करणं न्यायदर्शनम् पृ० २६१।

२. द्रष्टव्यं वङ्गभाषामयं न्यायदर्शनं पृ० २२५ द्वि० सं०।

जयन्तकृतौ नोपलभ्यते विषयोऽयमिति । मन्ये जरन्त इति वक्तव्ये जयन्त इति प्रमादात् प्रतिलिपिकृता लिखितम् । केषाञ्चन प्राचीननैयायिकानां मतं तथासीदिति संभाव्यते यदिदानीं लुप्तमभवत् संप्रदायबहिर्भावात् एकदेशित्वाद् वेति ।

१।२।१७। अविशेषे वा किञ्चित्साधर्म्यादिति न्यायरहस्याभिधायां न्यायसूत्रवृत्तौ सूत्रांशतया नाभ्युपगतमस्ति । किमत्र कारणं तन्नास्ति निर्दिष्टम् । अस्माभिस्तु डा० प्रबालकुमारसेनमहाशयनिबन्धतोऽवगतोऽयं विषयः ।

तस्मात् प्रथमाध्यायस्य प्रथमाह्निके कस्यचिन्मते चत्वारिंशदेकचत्वारिंशच्चापरस्य मते सूत्राणि विद्यन्ते । १।१।८। सूत्रमधिकृत्य विवादोऽत्र विद्यते । द्वितीयाह्निके विंशतिः सूत्राणि सन्ति । अस्मिन्नाह्निके नास्ति तत्संख्यामधिकृत्य विसंवादः ।

द्वितीयाध्यायस्य प्रथमाह्निकेऽष्टषष्टिसूत्राणि वाचस्पतिमिश्राभ्यामभ्युपगतानि गौतमीयसूत्रप्रकाशस्य सम्मतानि सन्ति । वृत्तिकृद्विश्वनाथः राधामोहनश्च न्यूनमेकमिह सप्तषष्टिसूत्राणि स्वीकुरुतः । न्यायतत्त्वालोकः त्रिचतुराणि सूत्राण्यस्वीकुर्वन् पञ्चषष्टिमितानि सूत्राणि संलपति । न्यायतात्पर्यदीपिकायां त्रिसप्ततिमितानि सूत्राणि दृश्यन्ते । भाष्यपंक्तिजातमिह सूत्रतया परिगृहीतमिति सूत्रसंख्याधिक्यस्य कारणम् । सूत्रपाठालोचननिकषे नास्य कृतिः स्थातुमर्हतीति धारणास्माकी ।

२।१।५। अत्र तथेति पदं सूत्रगतं विद्यते न वेति विप्रतिपत्तिः । वाचस्पतिमिश्रयोः सूत्रपाठात्मिके कृती, तर्कवागीशचरणः, तारानाथतर्कतीर्थसम्पादितं न्यायदर्शनं, केशवमिश्रः, विश्वनाथसिद्धान्तवागीशः, राधामोहनगोस्वामी, भट्टवागीश्वरश्च तथा पदमत्र सूत्रांशतयाभ्युपगच्छन्ति । रामभद्रसार्वभौमस्याप्यत्रैव सम्मतिरस्ति । अत एवायम भिलपति न्यायरहस्ये—'तथाशून्यमपि सूत्रमिच्छन्ति' । तस्मात्तदानीं केषाञ्चन वृत्तिकाराणां मते तथापदरहितमप्येतत्सूत्रमासीदिति ज्ञायते । २।१।६। सूत्रभाष्ये तथा पदघटितमेवैतत्सूत्रमुद्धृतमस्ति ।

सूत्रस्य केरलमातृका न्यायतत्त्वालोकश्च निषेधकोटिमवलम्बेते अर्थात् तथा पदं सूत्रांशं नाङ्गीकुरुतः । न्यायमञ्जर्यां न्यायभूषणे वा नोद्धृतमिदं सूत्रमिति तयोरभिप्रायं नावगन्तुमर्हामः । भाष्ये तथापदघटितस्य सूत्रस्य समुल्लेखेन बहुभिर्व्याख्याकृद्भिः समर्थितेन च विधिकोटिरेवेह साधीयसीति मतिरस्माकम् ।

२।१।८। अत्र प्रत्यक्षोत्पत्तिः प्रत्यक्षसिद्धिरिति पाठद्वयमुपलभ्यते । कतरः पाठः साधीयानिति जिज्ञासा । न्यायसूचीनिबन्धः न्यायसूत्रोद्धारः न्यायतत्त्वालोकः गौतमीय-

सूत्रप्रकाशः विश्वनाथवृत्तिः प्रथमकल्पस्य समर्थकाः विद्यन्ते । विवरणं केरलमातृका च द्वितीयकल्पस्य । प्रथमकल्प एव साधीयान् बहुभिः स्वीकृतत्वादिति मदीया धारणा । न्यायभूषणे न्यायमञ्जर्यां च नोद्धृतमेतदिति तयोराशयः नाभूत् ज्ञातचरः । न्याय-सूत्रोद्धारे तु सम्पादकयोर्भेदेन पाठेऽपि भेदः । म० म० गङ्गाधरशास्त्री प्रथमकल्पं समर्थयति, सूर्यनारायणशुक्लस्तु द्वितीयकल्पमभिलपति ।

२।१।१२। ०नुपपत्तिः ०नुपपत्तेर्वेति विचारे केवलं न्यायतत्त्वालोकस्य द्वितीय-कल्पे पक्षपातः ।

२।१।१३। 'प्रतिषेधानुपपत्तिः प्रतिषेधासिद्धिर्वेति विचारे विश्वनाथ एव वृत्तिकृत् केवलं द्वितीयकल्पस्य पक्षपाती । राधामोहनगोस्वामी नाङ्गीकरोति सूत्रमिदम् । म० म० गङ्गाधरशास्त्री न्यायसूत्रोद्धारे टिप्पणयति—अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । केरलमातृकायामन्यत्र च सर्वत्र सूत्रत्वेनास्य परिग्रहो विद्यते ।

२।१।१४। अत्र विप्रतिषेधघटकं विवर्णमस्ति न वेति विप्रतिपत्तौ भाष्यं विधिकोटिं समर्थयन् तस्य विशेषमर्थमभिदधाति । केशवमिश्रः राधामोहनः भट्टवागीश्वरः विधिकोटौ मतैक्यमिह भजन्ते । विश्वनाथवृत्तिः न्यायतत्त्वालोकश्च निषेधकोटि-मवलम्बेते । किन्तु न्यायतत्त्वालोकपंक्तिः 'वि' वर्णं समर्थयति—'तदा न सर्वप्रमाण-विप्रतिषेधः तेषामेव सत्त्वाभ्युपगमादिति पंक्तिस्तत्र । न्यायसूत्रं विवर्णं विनैव समुल्लिखति व्याख्यानायेति तत्र प्रतिलिपिकत्रुटिरपि भवितुमर्हति ।

न्यायसूत्रविवरणाभिधायाः वृत्तेः सम्पादक इह टिप्पणयति—'वीत्यक्षरमादर्श-पुस्तके नास्ति' इति ।

२।१।१५। अत्र 'त्रैकाल्याप्रतिषेधश्चेति' सूत्रगतं विद्यते न वेति विप्रतिपत्तिः । वाचस्पतिमिश्रौ वृत्तिकृद्विश्वनाथराधामोहनभट्टवागीश्वराः म० म० फणिभूषण-तर्कवागीशः[1] म० म० डा० सर गङ्गानाथ झा[2] सूत्रस्य केरलमातृका च विधिकोटि-

---

१. तर्कवागीशचरणष्टिप्पणयति—नव्यवाचस्पतिमिश्रः नामुमंशं सूत्रत्वेन स्वीकरोति किन्तु भाष्यकृत् प्रत्याचष्टे इत्यादिना सन्दिग्धमंशं सूत्रत्वेन व्याख्याति । न्याय-सूचीनिबन्धे तात्पर्यटीकायां च सूत्रत्वेनायमंशः परिगृहीतः बहुभिर्वृत्तिकृद्-भिरभ्युपगतश्चेति सूत्रांश एव तत्पदमिति । (द्र० वङ्लान्यायदर्शनम् द्वि० ख० पृ० ७१, प्रथमसंस्करणम् ।)

२. किमर्थं पुनरिदमुच्यत इति भाष्यप्रतीकमादाय खद्योतोऽभिदधाति—एतत्प्रश्न-

समर्थकाः । न्यायालङ्कारे कण्ठतोऽस्य समर्थनं विद्यते ।

सुन्दरानन्दमातृकायां गौतमीयसूत्रप्रकाशे न्यायतत्त्वपरीक्षायां न्यायतत्त्वालोके न्यायरहस्ये चात्र निषेधकोटिसमर्थनं विद्यते । रामभद्रसार्वभौमस्तु[1] न्यायरहस्येऽभिलपति—वार्त्तिकटीकादौ तु त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धिरित्यवे सूत्रम् । वस्तुतस्तु त्रैकाल्याप्रतिषेधश्चेति सूत्रादिस्थं भाष्यम् । भास्करतत्त्वबोधादौ तच्छून्यस्यैव सूत्रस्य पाठादिति ध्येयम् । एतावता वर्धमानोपाध्यायस्यान्वीक्षानयतत्त्वबोधकृतः न्यायभास्करकृतश्चाप्यत्र निषेधकोटावेव समर्थनमिति ज्ञायते ।

तत्सिद्धेरित्यस्य स्थाने तत्सिद्धिरिति न्यायतत्त्वालोके केरलमातृकायां च पाठो विद्यते । तर्कवागीशचरणोऽत्र कथयति—न्यायवार्त्तिकस्य मातृकायां तत्सिद्धेरित्यंशो नास्ति सूत्रगतः किन्तु मुद्रापिते पुस्तकेंऽशोयमुपलभ्यते । कस्यचिन्नव्यव्याख्यातुर्मते तत्सिद्धिरित्येव पाठोऽत्र संगत इति ।

२।१।१६। प्रमेया च प्रमेयता चेति वा पाठ इति विप्रतिपत्तौ प्रमेयता चेति पक्षे समर्थनस्याल्पीयस्त्वम् । राधामोहनगोस्वामी विश्वनाथसिद्धान्तवागीशश्च प्रमेयतेति पाठसमर्थकौ विद्येते । वाचस्पतिमिश्रो केशवमिश्रः वंशधरः भट्टवागीश्वरः फणिभूषणतर्कवागीशः गङ्गानाथझा च प्रमेया चेति पाठस्य समर्थकास्तस्मादयमेव पाठः साधीयानिति मम मतिः ।

२।१।१८। अत्रान्तिमं पदं प्रमेयसिद्धिस्तत्सिद्धिर्वेति विप्रतिपत्तिः । अत्र प्रमेयसिद्धिरित्यस्य समर्थनं प्राचुर्येण वर्तते । केवलं केशवमिश्रः राधामोहनगोस्वामी वंशधरोपाध्यायश्च तत्सिद्धिरिति पठन्ति ।

---

बलेनैव पूर्वोक्तं वाक्यमुपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावनियमाद् यथादर्शनं विभागवचनमिति सूत्रत्वेनाभिप्रयन्ति केचित् । एवं सत्येवात्रत्यं त्रैकाल्याप्रतिषेधश्चेति वाक्यं प्रति पौनरुक्त्याक्षेपः स्यादिति तेषामाशयः । किन्त्वेतन्मतं भाष्यस्थस्यैवाग्रिमपंक्त्या पूर्वोक्तनिबन्धनार्थमित्यादिरूपया पराहतमेकादशसूत्रभाष्ये यदुक्तं तस्य बीजमत्रत्यसूत्रमेवेति ब्रुवता भाष्यकारेण पूर्ववाक्यस्यासूत्रत्वमत्रत्यस्य च सूत्रत्वं स्पष्टीकृतमिति ।

१. द्रष्टव्य प्रबालकुमारसेनमहाशयस्य निबन्धः, फिलोसोफिकलएसेज इत्यत्र पृ० १५५ (कलकत्तासंस्कृतपुस्तकभण्डारसंस्करणम्) ।

प्रमाणसिद्धिवदित्यस्य स्थाने प्रमाणान्तरसिद्धिवदिति पाठः केवलं विश्वनाथ-वृत्तौ दृश्यते ।

२।१।१९। 'न प्रदीपप्रकाशसिद्धिवत् तत्सिद्धेः' इति सूत्रस्वरूपं बहुसम्मतम् ।

वृत्तिकृद् विश्वनाथः राधामोहनश्च 'न प्रदीपप्रकाशवत् तत्सिद्धे'रिति पठतः । भट्टवागीश्वरकेशवमिश्रौ तु यथाश्रुतपाठसमर्थकौ । न्यायसूचीनिबन्धादौ प्राचीनग्रन्थे यथाश्रुतपाठ एवोपलभ्यते ।

नकाररहितं पाठमस्य सूत्रस्य न्यायतत्त्वालोके न्यायरहस्ये च दृश्यते । न्याय-रहस्यमभिदधात्यत्र—'क्वचिदेतदादौ नकारोऽपि पठ्यत' इति ।

केरलमातृका त्वत्र न प्रदीपप्रभावत् तत्सिद्धेरिति पठति । अत्र शब्दभेदो भवतु नाम, नार्थस्य वक्तुरभिप्रेतस्य वा क्षतिरिति विभाव्यम् ।

२।१।२०। वृत्तिकृद्विश्वनाथराधामोहनयोर्मते न्यायसूत्रोद्धारदृष्ट्या च नैतत्सूत्र-मपि तु भाष्यपंक्तिः । न्यायरहस्ये सूत्रमिदं प्रामाणिकं मत्वा व्याख्याति रामभद्रसार्व-भौमः । अनेकान्त इत्यस्य स्थाने अनैकान्तिक इत्यपि पठति । किन्तु पश्चादयम-भिलपति—'नेदं सूत्रं तत्त्वबोधादावभावात् किन्तु भाष्यमिति वस्तुगतिः' । वर्ध-मानोपाध्यायस्यान्वीक्षानयतत्त्वबोधोऽत्र तत्त्वबोधपदेन परिगृह्यते । अयमात्मविचारं वर्धमानविचारेण सम्यगुपोद्बलयतीति सिद्धयति ।

न्यायसूचीनिबन्धादौ बहुत्र सूत्रत्वमस्य समर्थितमिति सूत्रतया परिग्राह्यतां याति । न्यायतत्त्वालोककृत् केशवमिश्रोऽस्य सूत्रतामभ्येति ।

२।१।२४। अत्र नानवरोधः नावरोधः नानवबोध इति पाठत्रयमुपलभ्यते । कतमः साधीयानिति जिज्ञासा नैव समाहिता भवति । उपपत्तिस्तु सर्वस्यैव पाठस्य सञ्जायते । म० म० डा० सर गङ्गानाथझा खद्योते टिप्पणयति—नानवरोध इति न्यायसूचीनिबन्धधृतः पाठः । नावरोध इति बहुषु पुस्तकेषु धृतः । उभयथापि नासंग्रह इत्येवार्थः पर्यवस्यति । नानवबोध इति विवरणसम्मतः पाठः, नान्यथा सिद्धत्वमिति तस्यार्थः । विवरणकृदयं राधामोहनगोस्वामी । केरलामातृका न्याय-तत्त्वालोकश्च विवरणकृत एव पाठमभ्युपगच्छतः ।

२।१।२३-२४। तमे सूत्रे तात्पर्यटीकाकृन्मते सूत्रत्वं भजतः अनिरुद्धाचार्यः विवरणपञ्जिकायां कथयति इति मञ्जरीमतेऽर्थात् त्रिलोचनाचार्यस्य तत्कर्तुर्मते भाष्य-

पंक्तित्वेनानयोर्वाक्ययोः परिग्रह इति[1]। जयन्तभट्टस्य न्यायमञ्जरी नात्र मञ्जरीपदेन ज्ञेया, यतस्तत्रैतादृशविचारस्यादर्शनात्। अस्य सम्पुष्टिस्तारानाथतर्कतीर्थमहाशयेनापि न्यायदर्शनटिप्पण्यां कृतास्ति।

२।१।२५। अत्र नकारः सूत्रगतो विद्यते न वेति संशये केरलमातृका वंशधरश्च नकाररहितं सूत्रं मन्वाते। म० म० तर्कवागीशचरणः विवरणवृत्तिसम्पादकश्च कथयतः नकाररहितोऽप्युदयनसंमतः पाठ इति। अन्यत्र सर्वत्र नकारसहितस्यैवोपलभ्यते पाठः।

२।१।२६। सूत्रमेतत् न्यायतत्त्वालोकः गौतमीयसूत्रप्रकाशः अन्वीक्षातत्त्वपरीक्षा च नाङ्गीकुर्वन्ति। अन्वीक्षातत्त्वपरीक्षायामत्र भाष्ये इति कथयन् वृत्तिकृद्वाक्यमदो निर्दिशति। तस्मादयमदः वाक्यं भाष्यपंक्ति मनुते।

रामभद्रसार्वभौमः विश्वनाथः राधामोहनश्च स्वशब्देन वचनमित्यस्य स्थाने पृथग्वचनमिति पठन्ति।

अलङ्कारेऽस्य सूत्रत्वं समर्थितं स्फुटम्। तर्कवागीशचरणोऽत्र टिप्पणयति[2]—केनचिदस्य सूत्रत्वं नाङ्गीकृतम्। किन्तु तन्न सङ्गतम्। सूत्रत्वमस्य स्वीकरणीयं न्याय सूचीनिबन्धादौ दर्शनात्। केचन स्वशब्देन वचनमित्यस्य स्थाने पृथग्वचनमिति पठन्ति तदपि न साधु उद्योतकरादिभिः स्वशब्देन वचनमिति पाठ एव स्वीकृतः।

२।१।३२। न चैकदेशोपलब्धिरवयविसद्भावादिति सूत्रं न्यायसूचीनिबन्धे तात्पर्यटीकायां च सूत्रत्वेन परिगृहीतं नास्ति। अत एव तर्कवागीशचरणोऽपि नाभ्युपगच्छति। किन्तु न्यायतत्त्वालोकः गौतमीयसूत्रप्रकाशः अन्वीक्षातत्त्वपरीक्षा न्यायरहस्यं च सूत्रत्वमस्य स्वीकुर्वन्ति। गङ्गानाथझासम्पादिते न्यायभाष्ये सूत्रत्वमस्य स्वीकृतम्। झामहाभागः खद्योते कथयति तात्पर्यकारास्त्वेतत् सूत्रत्वेन न परिगृह्णन्ति न्यायसूचीनिबन्धेऽस्यानुपलम्भः। तदेतद्भाष्यमनुभाष्य वार्त्तिककारो व्याचष्ट इति व्याख्यानं यद्यपि तत्रोक्तं विद्यते। एवं च न चैकदेशोपलब्धिरिति भाष्यमवयविसद्भावादित्येतन्मात्रं सूत्रमिति सम्भाव्यते। अत एव क्वचिदवयविसद्भावादित्येव पाठो दृश्यते। तथापि वाचस्पतिदृष्ट्या नैतत्सूत्रमित्येव सम्प्रदायः।

---

१. द्र० विवरणपञ्जिका पृ० ११।

२. द्र० वङ्गलान्यायदर्शनं प्रथम संस्करणं द्वि० ख० पृ० १२८।

२।१।४२-४४। सूत्राणि वर्तमानकालपरीक्षापतितानि न्यायतत्त्वालोके नोपलभ्यन्ते। ग्रन्थपातोऽत्र बुद्ध्यैव परित्यक्तानि वेति न विद्मः। अप्राकरणिकविचारस्तत्र समाविष्टोऽस्ति। एतेषां सूत्रत्वे कस्यापि विसंवादो नास्ति।

२।१।४२। [न्यायतत्त्वालोकसूत्रसंख्या] °दोषानुपपत्तिरित्यस्य स्थाने न्यायतत्त्वालोके °दोषानवकाश इति पाठस्तदनुरूपमेव च व्याख्यानं तत्र दृष्टमिति विशेषः। सर्वत्र °दोषानुपपत्तिरित्येव पाठो विद्यते।

२।१।४६ [न्या०त०सू०सं०] अत्र शब्दादर्थसम्प्रत्यय इति वाचस्पतिमिश्राभ्यां तात्पर्यटीकातत्त्वालोककृद्भ्यामनुमतः पाठः।

शब्दादर्थे सम्प्रत्यय इति विश्वनाथराधामोहनमहाशयाभ्यां वृत्तिकृद्भ्यां स्वीकृतः। परिशुद्धिकृतापि तथैव पठित इति विवरणवृत्तिसम्पादकः। शब्दार्थसंप्रत्यय इत्यपि पाठो बहुत्र दृश्यते। केरलमातृका विश्वनाथवृत्तिमनुगच्छति।

विश्वनाथः स्वकीयवृत्तावनन्तरं सूत्रमेकं पठति प्रमाणतोऽनुपलब्धेरिति। नैतत्सूत्रं केनापि कुत्राप्यभिहितम्। तर्कवागीशचरणस्त्वपाकरोति सूत्रत्वमस्य स्फुटम्। भाष्ये पंक्तिरियमुपलभ्यते।

२।१।५०। अत्र चकाररहितं पाठं मनुते न्यायतत्त्वालोकः। विश्वनाथस्तु स्वकीयवृत्तौ चकारमङ्गीकृत्यानुपपत्तेरित्यस्य स्थाने अनुपलब्धेरिति पठति।

२।२।२। राधामोहनगोस्वामी °सम्भवाभावानामर्थान्तर° इति पठति। अन्यत्र °सम्भवाभावानर्थान्तर° इति पाठो विद्यते। द्वितीयेऽत्र कल्पे बहूनां सम्मतिरिति पाठोऽयं साधीयान्।

२।२।३। अस्य पाठे कस्यापि विसम्वादो नास्ति। किन्तु राधामोहनगोस्वामिप्रणीतवृत्तिसम्पादकोऽत्र टिप्पणयति—केचिदस्य सूत्रत्वे प्रमाणाभावं पश्यन्तीति।

२।२।८। पाठेऽत्रान्येषां सर्वेषामविसंवादः। भट्टवागीश्वरः एकमिदं सूत्रं द्विधा विभज्य पठति 'नाभाव इति चेदित्येकम्, नान्यलक्षणोपपत्तेरित्यपरम्। भट्टवागीश्वरस्यैवंकरणे कोऽभिप्राय इति न ज्ञायते।

२।२।१३। इतः पूर्वमेकमधिकं सूत्रं 'विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशय' इति विश्वनाथसिद्धान्तवागीशः पठति। काशीमुद्रितपुस्तके सूत्रत्वेनास्योल्लेखो दृश्यते। तर्कवागीशचरणस्तु नेदं सूत्रमित्यभिदधाति। नास्य सूत्रत्वमन्यैः वृत्तिकृद्भिः प्राचीनैः

भाष्यादिकृद्भिर्वा स्वीकृतम् । केवलं भट्टवागीश्वरः सूत्रत्वं स्वीकरोति । भाष्यपंक्तिरियमेतत्सूत्रोपक्रमस्था ।

खद्योते म० म० गङ्गानाथ झा कथयति—कारणद्रव्यस्येत्यादि अभिधानादित्यन्तमेव सूत्रम् । नित्येष्वप्यव्यभिचार इति तु भाष्यग्रन्थ एव सूत्रेणान्वित इति ।

म० म० तर्कवागीशचरणोऽभिलपति—प्रचलितेष्वनेकेषु पुस्तकेषु उद्धृतसूत्रपाठस्यान्ते नित्येष्वप्यव्यभिचार इत्यतिरिक्तः पाठो दृश्यते, किन्तु नायमंशः सूत्रस्य । नायं सङ्गच्छत इति अनावश्यकोऽयम् । तात्पर्यटीकापरिशुद्ध्यादौ न्यायसूचीनिबन्धे चायमंशो नास्ति सूत्रतया परिगृहीत इति । क्वचिदन्ते नित्येष्वपीत्यादि अधिकं दृश्यत इति विवरणसम्पादकस्यापि विद्यते टिप्पणी ।

अत्र सूत्रमध्ये समागतस्य प्रदेशपदस्य स्थाने राधामोहनः विशेषपदं प्रयुंक्ते

२।२।१७। अत्रान्ते नित्येष्वप्यव्यभिचार इत्यधिकं पठति न्यायसूत्रोद्धार इति विशेषः ।

अत्र म० म० गङ्गाधरशास्त्री मौनमवलम्बते टिप्पण्यां, सूर्यनारायणशुक्लमहाभागस्तु कथयति भागोऽयं न सूत्रान्तर्गत इति बहवः ।

२।२।१८। अत्रादर्शपुस्तके चकाररहितः पाठ इति विवरणवृत्तिसम्पादकटिप्पणी ।

२।१।१९। अत्रान्ते उपपत्तिपदं सर्वत्र दृश्यते । विवरणे केवलं तत्स्थाने उपलब्धिपदं प्रयुक्तमस्ति ।

२।२।२८। न्यायतत्त्वालोके सूत्रमध्यपतितमन्यतरस्येति पदं नास्ति । न्यायसूत्रोद्धारे सूत्रमिदं नास्ति परिगृहीतम् किन्तु तत्त्वालोके वर्तते इत्याश्चर्यम् । तर्कवागीशचरणोऽत्र विवृणोति कस्मिँश्चित्पुस्तके भाष्यपंक्तिरूपेणास्य सूत्रस्योल्लेखोऽस्ति किन्तु तदसाधु । महर्षेः सिद्धान्तसूत्रमिदम् । एतत्सूत्रेण निरस्यति महर्षिः पूर्वसूत्रोक्तमुत्तरम् । सर्वत्र सूत्रतया परिग्रहोऽप्यस्य दृश्यते । केचिदाधुनिकनैयायिकंमन्या अस्य सूत्रत्वं न मन्यन्ते इति विवरणसम्पादकष्टिप्पणयति ।

२।२।३०। अत्रान्ते उपचारादिति पाठः सर्वत्र । केवलं न्यायतत्त्वालोकः उपचारादित्यस्य स्थाने उपपत्तेरिति पठति । विचारे सति तत्त्वालोकपाठ एव साधीयानिति विदुषां धारणा ।

२।२।३७। अस्य सूत्रत्वे विसंवादः । विश्वनाथः द्वितीयवाचस्पतिमिश्रः

राधामोहनः वंशधरोपाध्यायश्च नैतत्सूत्रं मन्वते । न्यायसूचीनिबन्धे भाष्यवार्त्तिकादौ तु सूत्रमिदं स्वीकृतमस्ति । तर्कवागीशचरणोऽत्र ब्रवीति—वृत्तिकृतः विश्वनाथप्रभृतयः सूत्रं नैव व्याकुर्वन्ति मन्ये तेषां मते नैतत्सूत्रमिति । किन्तु प्राचीनैः भाष्यादिकृद्भिः सूत्रत्वेनास्य परिगृहीतत्वात् सूत्रमिदमङ्गीकर्तव्यम् । रामभद्रसार्वभौमस्तु न्यायरहस्ये-नैतत्सूत्रं व्याख्याति समुल्लिखति वा । निषेधार्थमपि न किमपि ब्रवीति, मौनं भजति ।

२।२।४०। अत्र चकारान्तपाठः न्यायसूचीनिबन्धे दृश्यते । किन्तु द्वितीय वाचपतिमिश्रः वंशधरोपाध्यायः भट्टवागीश्वरः विश्वनाथसिद्धान्तवागीशः म० म० डा० सरगङ्गानाथ झा म० म० फणिभूषणतर्कवागीशचरणश्च चकाररहितमेव पाठं-मन्वते । तर्कवागीशमहाभागः कथयति—उद्योतकरप्रभृतिभिरुद्धृते पाठे चकारोऽत्र न दृश्यते, चकारस्यार्थसङ्गतिरपि नास्ति । अत एव चकारोऽत्र परित्याज्य इति ।

२।२।४२। अत्र उपलब्धेरित्यस्य स्थाने उपपत्तेरिति न्यायतत्त्वालोके न्याय-विवरणे च पाठो दृश्यते । कतरः पाठः साधीयानिति विचारणीयम् ।

२।२।४३। द्विविधस्यापीति सूत्रस्य सूत्रत्वे विसंवादो दृश्यते । वृत्तिकृतः द्वितीय वाचस्पतिमिश्रः विश्वनाथः राधामोहनगोस्वामी वंशधरोपाध्यायः भट्टवागीश्वरश्चास्य सूत्रत्वं न समर्थयन्ति न वा व्याकुर्वन्ति ।

तर्कवागीशरणोऽभिलपत्यत्र भाष्यपुस्तकेषु भाष्यपङ्क्तितयैवास्य समुल्लेखः । उद्योतकरः विश्वनाथश्च नादः सूत्रं मन्वाते किन्तु तात्पर्यटीकायां सूत्रत्वेनास्य स्वीकारः । न्यायसूचीनिबन्धे चास्य पाठः सूत्रत्वं समर्थयति । म० म० डा० सरगङ्गानाथझा सूत्रत्वमस्य समर्थयति । अत एव स्वसम्पादितभाष्ये सूत्रत्वेन निर्दिशति न वा विसंवादं कस्यापि टिप्पणयत्ययम् ।

२।२।४४। अत्रान्ते सर्वत्र विकल्पादिति पाठः । न्यायतत्त्वालोकस्तु विकल्प-नादिति पठति । वृत्तिस्तु विकल्पपाठ एव स्वारस्यं दर्शयति न तु विकल्पनपाठ इति ध्येयम् ।

२।२।४६। न तद्विकाराणामिति सूत्रं न्यायसूत्रोद्धारे नास्ति, किन्तु म० म० गङ्गाधरशास्त्रिणोऽत्र टिप्पण्येवंविधा – एतदुत्तरं तद्विकाराणां सुवर्णभावाव्यतिरेकादिति सूत्रमेकमेव सूत्रोद्धारे दृश्यते । सूत्रत्रयं मुद्रितपुस्तके विद्यते तेषां सूत्रत्वे प्रमाणं नोपलभ्यते । मन्ये वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः, सामान्यवतो धर्मयोगो न सामान्य स्येति सूत्राभ्यां सह वर्णत्वाव्यतिरेकादित्यस्य योगेन सूत्रत्रयसङ्गतिरिह शास्त्रिवर्यस्य

भवति । सूर्यनारायणशुक्लस्तु कथयतीह—एतदुत्तरं तद्विकाराणां सुवर्णभावाव्यतिरेकादिति सूत्रमेकं न्यायतत्त्वालोके । न तद्विकाराणामित्यादिर्नकारसहितपाठ इति राधामोहनः । किन्तूभौ सम्पादकौ न तद्विकाराणामिति सूत्रं न्यायसूत्रोद्धारे न समावेशयतः ।

न्यायतत्त्वालोकः भट्टवागीश्वरः वंशधरः रामभद्रश्च नकाररहितं सूत्रमिदं स्वीकृत्य स्वकीयवृत्तिषु व्याख्यान्ति । राधामोहनः विश्वनाथश्च नकारसहितं सूत्रं पठन्तौ तद्व्याख्यानं कुरुतः । विश्वनाथस्य भट्टवागीश्वरस्य च वृत्त्योरुक्तसूत्रद्वयं वर्णत्वाव्यतिरेकादित्यादि दृश्यते किन्तु ते भाष्यपंक्ती न तु सूत्रे इति बहुसम्मतिः ।

रामभद्रसार्वभौमः न्यायरहस्येऽभिलपति –वस्तुतस्तु वर्णत्वाव्यतिरेकादित्यादिद्वयं न सूत्रं भास्करादावभावात् किन्तु भाष्यमिति मन्तव्यम् ।

तर्कवागीशचरणस्तु सूत्रद्वयं विसंवादितमधिकृत्य न किमपि ब्रवीति किन्तु नकारपाठमधिकृत्य स्वमन्तव्यमुपस्थापयति टिप्पण्याम्—

बहुपुस्तकेषु प्रथमतः नकारस्योल्लेखो नास्ति भाष्यकारस्तु पूर्वोक्तवाक्यस्यान्त एव नकारमभिधत्ते किन्तु न्यायवार्त्तिके न्यायसूचीनिबन्धे सूत्रस्य नकारादेव प्रारम्भः स चात्र समीचीनतां भजत इति नकारादिपाठः सूत्रस्य स्वीकृत इति ।

२।२।५४। प्रकृत्यनियमादिति सूत्रं वाचस्पतिमिश्रौ तात्पर्यटीकायां न्यायतत्त्वालोके च स्वीकुरुतः । रामभद्रसार्वभौमः न्यायसूत्रोद्धारः विश्वनाथ भट्टवागीश्वरश्चात्रान्ते वर्णविकाराणामित्यधिकं पठति । तर्कवागीशचरणोऽत्र निगदति—प्रचलितपुस्तकेषु वर्णविकाराणामित्यधिकपाठोऽन्तेऽत्र दृश्यते किन्तु न्यायसूचीनिबन्ध एतावन्मात्रं सूत्रत्वेनाङ्गीकरोतीत्ययमेव पक्ष आश्रयणीयः ।

२।२।५६। व्यक्त्याकृतिजातीति सूत्रं सर्वसम्मतं नास्ति । केचनास्य भाष्यवाक्यत्वं प्रतियन्ति । किन्तु तात्पर्यटीकान्यायतत्त्वालोकयोरस्य सूत्रत्वं समर्थितं व्याख्यातञ्चेति सूत्रत्वं सिद्धयति न्यायसूचीनिबन्धेऽस्य पाठो विद्यत ।

अत्रारम्भे तदर्थे इति योजयति राधामोहनः । किन्तु अवतरणभाष्यस्यांशोऽयं न तु सूत्रघटकमिति तर्कवागीशचरणः, न्यायरहस्ये रामभद्रसार्वभौमश्च ।

२।२।६६। व्यक्त्याकृतिजातयस्तु पदार्थ इति बहुसम्मत. सूत्रपाठः राधामोहनस्तु जात्याकृतिव्यक्तयस्तु पदार्थ इति पठतीति पदव्यत्ययोऽवलोक्यते ।

३।१।३। तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेध इति बहुसम्मतं पाठं रामभद्रसार्वभौमः किञ्चित् परिवर्त्य पठति—'० त्मसद्भावान्नाप्रतिषेध' इति । कारणमनुक्त्वैव सम्प्रदायस्वातन्त्र्यं प्रतिष्ठापयति । अत्र तदीयं व्याख्यानमेवम्—तेषां चक्षुरादीनां चाक्षुषादिहेतुत्वव्यवस्थापनाद् आत्मनि चक्षुरादिभिन्नत्वस्य यः प्रतिषेधोऽभिहितः, स न, उक्तानुकूलतर्काच्चक्षुरादिभिन्नस्यात्मनश्चाक्षुषादिसमवायिनश्च सद्भावात्सिद्धेरिति ।

३।१।६। अत्र खद्योते म० म० डा० सर गङ्गानाथ झा कथयति—न्यायसूत्रविवरणकृतस्तु बधादित्यत्र बाधादिति पठन्तीति ।

३।१।१३। अत्रादौ नकारः सर्वत्र, किन्तु न्यायतत्त्वालोके तद्रहितपाठः। अत्र वृत्तिस्वारस्यं तु नकारसहित पाठ एव ।

३।१।१४। तदात्मगुणत्वसद्भावादिति बहुसम्मतपाठः । किन्तु न्यायतत्त्वालोककृत्, केशवमिश्रः, वंशधरोपाध्यायश्चात्र त्वरहितं पाठमभ्युपगच्छन्ति । न्यायसूत्र विवरणसम्पादकोऽत्र टिप्पणयति एतादृशोऽपि (त्वरहितोऽपि) पाठ उपलभ्यते इति ।

अत्र प्रकरणमधिकृत्य विसंवादः । चक्षुरद्वैतप्रकरणमिति द्वितीयवाचस्पतिमिश्रः केशवमिश्रश्चाभिलपतः । चक्षुरद्वैतनिराकरणप्रकरणमिति न्यायसूचीनिबन्धः । तरणिमिश्रस्तु भिन्नमवलम्बते पन्थानम् । वंशधरोपाध्यायः केशवमिश्रश्च तन्मतमेवं समुद्धरतः—'तरणिमिश्रास्तु भाष्ये अनुमीयते चायमित्युपक्रमस्येद्रियान्तरविकारादित्यादि त्रिसूत्रीं व्याख्यायातोऽस्त्येक इत्युपसंहारात् प्रतिसन्धानानुमेयत्वप्रकरणमन्यदेवेदमित्याहुस्तन्न प्रसङ्गसङ्गत्याप्येकवाक्यत्वे सम्भवति, वाक्यभेदस्यान्याय्यत्वादिति' ।

इतः परं सूत्रमेकं विश्वनाथवृत्तौ न्यायसूत्रविवरणे न्यायसूत्रोद्धारे चाधिकं दृश्यते—'अपरिसंख्यानाच्च स्मृतिविषयस्ये'ति । किन्तु म० म० फणिभूषणतर्कवागीशचरणः वाक्यमिदं भाष्यस्येति निगदति । न्यायसूचीनिबन्धे वृत्तिषु च विविधासु नास्य सूत्रत्वेन परिगणनम् । म० म० गङ्गाधरशास्त्री टिप्पणयति वङ्गीयमातृकायां सूत्रमिदं नास्ति । अस्य सूत्रत्वे विवरणवृत्तिकृतोऽपि विद्यते संशय इति तदुक्त्या परिज्ञायते । तथा ह्ययं कथयति—'इदमपि सूत्रं मुनेरिति कश्चित्' । विश्वनाथसिद्धान्त पञ्चाननोऽप्येवमेव ब्रवीति—'इदं न सूत्रं किन्तु भाष्यमिति केचित्' । सुन्दरानन्दमातृकायां नास्तीदं किन्तु केरलमातृकायां वर्तते । म० म० गङ्गानाथ झा महाभागः खद्योते कथयति—'भाष्यकारीयं सूत्रमेतदिति विवरणकृतः' । तस्मादस्य सूत्रत्वं न निष्पद्यत इति मदीया मतिः ।

३।१।२७। सूत्रेऽस्मिन् पाठमधिकृत्य साधारणविसंवादः। पार्थिवं गुणान्तरोपलब्धेरिति बहुसम्मतः पाठः। परिशुद्धौ तु पार्थिवं तद्विशेषगुणोपलब्धेरिति।

इतः परं सूत्रत्रयं पार्थिवाप्यतैजसमिति, निःश्वासोच्छ्वासेति, गन्धक्लेदेति विसंवादं भजति। न्यायसूचीनिबन्धः, न्यायतत्त्वालोकः, विश्वनाथवृत्तिः, गौतमीयसूत्रप्रकाशः, केरलमातृका, सुन्दरानन्दमातृका, म० म० फणिभूषणतर्कवागीशचरणश्च सूत्रत्वमेषां समर्थयन्ति। न्यायसूत्रोद्धारे नास्त्येषामुल्लेखः। न च वार्तिकदृष्ट्या सूत्रत्वम्। न्यायरहस्ये रामभद्रसार्वभौमस्तु सूत्रत्वमेषामनङ्गीकुर्वन् व्याख्याति एतानि। कथयति चैतानि मतानि सूत्रकृता तुच्छत्वान्न दूषितानि।......पार्थिवाप्येत्यादीनि त्रीणि न सूत्राणि किन्तु भाष्यमिति वस्तुगतिः। म० म० गङ्गाधरशास्त्री टिप्पणयति—'अस्याग्रे वङ्गाक्षरलिखितपुस्तके उक्तसूत्रत्रयमस्ति तद्गौतमप्रणीतं न भवतीति भाष्यालोचनात् प्रतीयते'।

३।१।३७। अत्रान्ते उपलब्धिनियम इति न्यायसूचीनिबन्धन्यायसूत्रोद्धारयोः पाठः। केशवमिश्रोऽनुगच्छति पाठमिमम्। न्यायतत्त्वालोकः, न्यायसूत्रविवरणं, भट्टवागीश्वरः केरलमातृका च उपलब्ध्यनियम इति पठन्ति। म० म० तर्कवागीशचरणः झामहाभागश्च मौनमिहावलम्बेते न्यायसूचीनिबन्धपाठमनुसरतश्च।

इतः परं सूत्रमेकं न्यायसूचीनिबन्धे 'अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धि'रिति विद्यते। अत्र मतद्वैधं पश्यामः। केरलमातृका, सुन्दरानन्दमातृका न्यायतत्त्वालोककृत्, वंशधरोपाध्यायः, केशवमिश्रः, विश्वनाथः, राधामोहनः, रामभद्रसार्वभौमश्च नैतत्सूत्रमङ्गीकुर्वन्ति। न्यायसूत्रोद्धारः न्यायभाष्यादिः म० म० फणिभूषणतर्कवागीशचरणः म० म० डा० गङ्गानाथझामहाभागश्च विना कयाप्युक्त्या सूत्रत्वं स्वीकुर्वन्ति। तारानाथतर्कतीर्थस्तु न्यायदर्शनसम्पादक इह संलपति टिप्पण्याम्—इदं सूत्रं वैशेषिकदर्शनेऽपि (४।१।८।), ३८ तमेऽत्र सूत्रे तात्पर्यटीका नोपलभ्यत इति। पश्चादस्माकं गुरुवर्यः प्रो०श्रीअनन्तलालठाकुरमहाभागः स्वनिबन्धे[1] प्रत्यपादयत्—सूत्रमिदं वैशेषिकस्य न्यायभाष्ये समुद्धृतं न्यायसूत्रतयात्र परिगृहीतमिति।

न्यायतत्त्वालोके तु ३।१।३७ तमसूत्रवृत्तेः प्रागेव कणादर्षिसम्मतिप्रदर्शनाय तत्सूत्रमिति कथयित्वा वैशेषिकसूत्रं महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिरिति (४।१।६।) समुद्धृतम्।

---

१. द्र० मिथिलासंस्कृतशोधसंस्थानपत्रिका, महारानीराजलक्ष्मीअभिनन्दनग्रन्थ, दरभंगा।

३।१।३८। कर्मकारितश्चेति सूत्रेऽपि मतभेदोऽवलोक्यते । पुरुषार्थतन्त्र इत्यन्तिमोंऽशः न्यायतत्त्वालोके नास्ति, किन्तु सूत्रं तत्रास्ति स्वीकृतम् । बहुभिर्वृत्तिकृद्भिः सूत्रत्वमस्य समर्थितं यद्यपि तथापि विश्वनाथवृत्तिरस्य भाष्यवाक्यत्वमभ्युपगच्छति । तथा च तदीया पंक्तिः—'चक्षुरादावुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यमित्युक्त्वा उपसंहारे कथयति सूत्रमेवेदमिति केचित् । तस्मादस्य सूत्रत्वे तदीयमस्वारस्यं सूच्यत इति ।

३।१।३९। एतत्सूत्रात्पूर्वं सूत्रमेकम् 'अव्यभिचाराच्च प्रतिघातो भौतिकधर्म' इति पठति न्यायसूत्रोद्धारः, समर्थयति च न्यायतात्पर्यदीपिका । किन्तु न्यायतत्त्वालोके नास्ति सूत्रमिदम् । सुन्दरानन्दमातृका, केरलामातृका, गौतमीयसूत्रप्रकाशः, विश्वनाथवृत्तिः, न्यायतत्त्वपरीक्षा, न्यायरहस्यं च नास्य सूत्रत्वं समर्थयन्ति । म० म० फणिभूषण तर्कवागीशचरणोऽत्राभिलपति—वार्त्तिकं यद्यपि समर्थयति सूत्रत्वमस्य तथापि बहुभिर्नैयायिकैरपरिगृहीतमतो भाष्यवाक्यमेव मन्तव्यमिति । भाष्यपंक्तिमध्य एव म० म० डा० झा महाभागः वाक्यमिदं पठतीति दृष्टम् ।

३।१।४५। अत्रान्ते °रप्रतिषेध' इति पाठः सर्वत्र समुपलभ्यते । केवलं न्यायतत्त्वालोके °रहेतु°रिति पाठोऽस्ति । आदि पदं चाधिकमिह । तस्मात् कुड्यान्तरितानुपलब्धेरिति सार्वत्रिकः पाठः । कुड्याद्यन्तरितानुपलब्धेरिति न्यायतत्त्वालोकपाठः । आदि पदमिह केरलमातृकायामपि वर्तते । अस्य पूर्ववर्तिन्यपि सूत्रे आदि पदमस्ति न्यायतत्त्वालोके ।

३।१।४६। अत्रादावप्रतिघातादिति पाठोऽधिकस्थले न्यायतत्त्वालोके तु अप्रतिषेधादिति पाठः । नात्र कस्यापि कापि समुपलभ्यते टिप्पणी ।

३।१।५०। अत्र 'नियोगप्रतिषेधानुपपत्ति'रिति सर्वत्र पाठः । केशवमिश्रः न्यायतत्त्वालोककृच्च 'नियोगपर्यनुयोगानुपपत्ते'रिति पठतः ।

३।१।५३। अस्मात् सूत्रात्प्राक् सूत्रत्रयं 'नेन्द्रियार्थान्तरानुपलब्धेः, त्वगवयवविशेषेण धूमोपलब्धिवत् तदुपलब्धिः, व्याहतत्वादहेतुरिति कस्यचिन्मते स्वीकृतमासीत् । अत एव रामभद्रसार्वभौमः न्यायभाष्यवाक्यत्वमेषामुपपाद्य सूत्रत्वं निरस्यति । मन्ये तदानीं सूत्रत्वमेषां केनापि स्वीकृतमासीदतस्तन्निरासाय न्यायरहस्यकृतो यत्नः संगच्छते । सूत्रपाठेऽनुपलब्ध्या वृत्तिकृद्भिस्तात्पर्याचार्येण चाव्याख्यातत्वान् नैषां सूत्रत्वमिति निश्चयः ।

३।१।५३। इतः परं सूत्रमेकं. न्यायसूचीनिबन्धे 'विप्रतिषेधाच्च न त्वगेके'ति सम्प्रदायस्वीकृतं विद्यते। परन्तु सूत्रमिदं बहुभिर्वृत्तिकृद्भिरस्वीकृतम्। केरलमातृका, सुन्दरानन्दमातृका, न्यायतत्त्वालोकः, न्यायरहस्यं, न्यायतत्त्वपरीक्षा, गौतमीयसूत्रप्रकाशः, न्यायतात्पर्यदीपिका च नैतस्य सूत्रत्वं समर्थयन्ति। न्यायसूत्रोद्धारेऽस्य समुल्लेखोऽस्ति। म० म० डा० झा, म० म० तर्कवागीशचरणश्च नात्र किमपि निगदतः।

३।१।५८। इतः परं 'भूतगुणविशेषोपलब्धे'रिति सूत्रं सम्प्रदायस्वीकृतं केशवमिश्रः न्यायतत्त्वालोककृत् वंशधरोपाध्यायश्च नाङ्गीकुर्वन्ति।

३।१।६२। अत्रानन्तरं 'संसर्गाच्चानेकगुणग्रहणमिति' न्यायसूत्रोद्धारः सूत्रत्वेनोल्लिखति परन्तु सम्प्रदायेऽस्य नास्ति समावेशो न वान्यत्रवृत्तौ समुपलब्धिः।

३।१।६८ पूर्वपूर्वगुणोत्कर्षादिति न्यायसूचीनिबन्धः न्यायतत्त्वालोकश्च। पूर्वं पूर्वमिति वर्धमानोपाध्यायः, वंशधरोपाध्यायः, केशवमिश्रः, राधामोहनः, भट्टवागीश्वरः, विश्वनाथस्तर्कवागीशचरणः झा महाभागश्च पठन्ति।

३।१।७१। तेनैव तस्याग्रहणाच्चेति सूत्रं द्वितीयवाचस्पतिमिश्रः, केशवमिश्रः, वंशधरोपाध्यायः, भट्टवागीश्वरश्च नैव मन्वते। अन्यत्र संप्रदाये च स्वीकृतमस्ति।

३।२।१०। न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च नास्य सूत्रतया परिगणनम्। केशवमिश्रः गौतमीयसूत्रप्रकाशे सूत्रत्वमस्य युक्त्या समर्थयति। अत एव कथयति 'केचित्तु नैतत्सूत्रं, तन्न, पूर्वविचारासमाप्तौ उत्तरविचारानवतारात्। न चाक्षेपलभ्यः सिद्धान्तः। शाब्दे पूर्वपक्षे सिद्धान्तस्यापि तथौचित्यात्। हेत्वभावादिति भाष्यमिति टीका च सूत्रव्याख्यानभाष्याभिप्रायेण। अत एवाद्याक्षरशून्यं तत्राहेति वृद्धाः'। परिशुद्धिव्याख्यायां न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायः सूत्रत्वमस्य समर्थयति। विश्वनाथवृत्तिः सूत्रत्वमस्य मनुते। न्यायरहस्ये रामभद्रोऽपि सूत्रत्वं समर्थयन् संलपति—'न हेत्वभावादिति भाष्यमिति टीकादृष्टेर्नेदं सूत्रं किन्तु सौत्रसिद्धान्ताभावेन न्यूनतापरिहाराय भाष्यमिदमित्येके इति भाष्यमिति टीकाया इत्यस्य भाष्यमित्यर्थ इति सूत्रमेवेदमिति परे। नानेकान्तादिति वार्त्तिककृल्लिखितमेव सूत्रम्। सर्वस्य सूत्रस्य भाष्यकृदनुवादानियमात्, नानात्वाभिमानस्यैकत्वे व्यभिचरितत्वादिति तस्यार्थ इत्येके। फलतः सूत्रत्वेनास्य परिगणनं तु कृतं रामभद्रसार्वभौमेन व्याख्यातञ्चेति दृष्टम्। न्यायतत्त्वालोके सूत्रमिदं स्वीकृतं व्याख्यातञ्च किन्तु सूत्रत्वसमर्थने नात्र किमप्यभिहितम्। तर्कवागीशचरणः झा महाशयश्चात्र न किमपि ब्रूतः भाष्यवाक्यत्वेनेदं परिगृहीतश्च।

३।२।१४। अत्र न्यायतत्त्वालोकतः न्यायसूत्रोद्धारे पाठस्य भेदोऽवलोक्यते। 'क्षीरविनाशकारणानुपलब्धिवत् दध्युत्पत्तिवच्च तदुत्पत्ति'रिति न्यायतत्त्वालोकस्य पाठः। 'क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्ति'रिति न्यायसूत्रोद्धारपाठः। न्यायतत्त्वालोकस्य पाठस्तु बहुत्र समुपलभ्यते। अत एव स एव पाठः साधीयान्।

३।२।१७। अत्र बहुसम्मतः पाठो न्यायतत्त्वालोके—'व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम्'। न्यायसूत्रोद्धारस्य पाठस्त्वन्यादृशः—'व्यूहान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तिरनुमानात्' इति।

३।२।३४। एतत्सूत्रानन्तरं न्यायसूत्रोद्धारः सूत्रमेकं पठति—'प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः' इति। कुत्राप्यन्यत्र सूत्रत्वमस्य नास्ति स्वीकृतम्। भाष्यवाक्यतया च परिगृहीतं म० म० तर्कवागीशचरण—म० म० डा० गङ्गानाथझामहाभागाभ्याम्। प्रातिभवत्तु इत्यादिवाक्यं केचित् सूत्रं मन्यन्ते तत्प्रमाणाभावादुपेक्ष्य भाष्यस्थमेवेदमाक्षेपवाक्यमिति निर्धारितमिति खद्योतेऽभिहितमिह। न्यायसूत्रोद्धारे प्रातिभवत्तु इत्यादि सूत्रत्वेन परिगृहीतमस्ति। किन्तु तात्पर्यटीका न्यायसूचीनिबन्धः वृत्तिकृतः वार्तिककृच्च नेदं वाक्यं सूत्रतया स्वीकुर्वन्ति। तस्मान्नैतत्सूत्रमिति तर्कवागीशचरणोऽत्र टिप्पणयति।

३।२।४५। एतत्सूत्रानन्तरं न्यायसूत्रोद्धारे सूत्रमेकमवलोक्यते—'ग्रहणे हेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पात्'। किन्त्वन्यत्र सर्वत्र सूत्रत्वमस्यास्वीकृतमिति न विचारपदवीमधिरोहति। एतद्वाक्यं केचित् सूत्रत्वेनाभिप्रयन्ति तत्र प्रमाणाभावाद् भाष्यस्यैव संक्षिप्तोक्तिरियमिति निर्धारितमित्यत्र खद्योतः।

३।२।४६। अत्रादौ नकारं पठन्ति न्यायसूचीनिबन्धः, म० म० डा० गङ्गानाथझा, म० म० फणिभूषणतर्कवागीशचरणश्च। न्यायसूत्रोद्धारः, गौतमीयसूत्रप्रकाशः, न्यायतत्त्वालोकः, अन्वीक्षातत्त्वपरीक्षा च नकारं न पठन्ति। तर्कवागीशचरणोऽत्र टिप्पणयति—न्यायवार्त्तिके न्यायसूचीनिबन्धे च नकारसहित एव पाठ इति स एवात्र परिगृहीतः। किन्तु केचन नकाररहितमपि सूत्रं पठित्वा व्याख्यावसरे नकाराशयमभिव्यञ्जति। अत एव नकारसहित एव पाठः साधीयानिति। न्यायतत्त्वालोकगौतमीयसूत्रप्रकाशयोस्तु व्याख्यानं तर्कवागीशचरणकथायाः विसंवादं प्रस्तौति। नकाराशयं स्पृशत एव नहि तौ ग्रन्थौ।

३।२।५३। अत्र केशपदं न पठति न्यायरहस्यं, न च किमपि तदर्थं ब्रवीत्यपि। अन्यत्र तु प्रायः सर्वत्र केशपदं सूत्रेऽस्मिन्नुपलभ्यते।

३।२।६८। एतत्सूत्रानन्तरं सूत्रमेकं न्यायसूत्रोद्धारे न्यायतात्पर्यदीपिकायां च दृश्यते—'उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्ते'रिति। नान्यत्र कुत्रापि सूत्रत्वमस्य समर्थितम्। खद्योतोऽत्राभिलपति—'एतद्वाक्यं केचित् सूत्रत्वेनाभिप्रयन्ति। तत्र प्रमाणाभावाद् भाष्यमेवेति निर्धारितम्' इति।

३।२।६९। एतत्सूत्रानन्तर 'न करणाकरणयोरारम्भदर्शनात्' इति सूत्रं न्याय-सूत्रोद्धारे समुपलभ्यते। किन्तु कुत्राप्यस्य समर्थनं न पश्यामः। खद्योतोऽत्र कथयति—'केचिदेतद् वाक्यं सूत्रत्वेनाभिप्रयन्ति। प्रमाणाभावात् तदुपेक्षितमि'ति।

सूत्रमिदं केशवमिश्रः, न्यायतत्त्वालोककृत्, न्यायरहस्यकृत्, वंशधरोपाध्यायश्चो-त्तरार्द्धमात्रं स्वीकुर्वन्ति। तददृष्टकारितमिति चेदित्यंशं सूत्रत्वेन नाभ्युपगच्छन्ति। म० म० तर्कवागीशचरणः म० म० डा० गङ्गानाथझा महाभागश्च न्यायसूचीनिबन्ध-मनुव्रजन्तौ तदंशं सूत्रत्वेन स्वीकुरुतः। सम्प्रदायः पूर्वार्द्धं सूत्रं मनुते।

अत्र रामभद्र एवं ब्रवीति—अन्तिमसूत्रं निराकरिष्यमाणं परमतं दर्शयति भाष्यम्—तददृष्टकारितमिति चेदिति। तच्छरीरमदृष्टम् दर्शनाभावस्तेनैव कृतं न तु गुणविशेषेण। अत्रोत्तरसूत्रम्—पुनस्तत्प्रसङ्गोऽपवर्गे इति। तस्मात् सूत्रत्वेन परिगृहीतस्य पूर्वार्द्धभागो भाष्यमुत्तरार्द्ध भागः सूत्रमिति।

३।२।७०। अत्रान्ते संयोगाव्युच्छेद इति प्रामाणिकपाठ इति न्यायरहस्यकृत् म० म० तर्कवागीशचरणश्च। संयोगाद्यनुच्छेद इति न्यायसूत्रोद्धारः, गौतमीयसूत्रप्रकाशः, गङ्गानाथझा च पठन्ति। न्यायतत्त्वालोके संयोगाद्युच्छेद इति पाठोऽस्ति। सर्वत्र न्यायसूचीनिबन्धानुगामी म० म० तर्कवागीशचरणोऽत्र टिप्पणयति—संयोगाद्यनुच्छेद इति पाठः वार्त्तिके न्यायसूचीनिबन्धे च विद्यते। किन्तु संयोगव्युच्छेदो न स्यादिति भाष्यपंक्त्या संयोगाव्युच्छेद इत्येव सूत्रपाठस्वारस्यं व्यज्यत इति। अत्रादिपदसमावेशस्य नाकलयामः किमपि प्रयोजनमिति।

न्यायतत्त्वालोकेऽपि संयोगाव्युच्छेद इत्येव पाठः साधु सम्भवति। लेखकप्रमादात् व्यु इत्यस्य स्थाने द्यु इति जातमित्यपि भवितुमर्हतीति मम मतिः।

३।२।७२। अणुश्यामतानित्यत्ववदेतत्स्यादिति सूत्रं सर्वत्र निर्विवादतया स्वीकृतम्। किन्तु न्यायरहस्ये एतत्पदमत्र नास्तीति विशेषः।

४।१।४। नैकप्रत्यनीकभावादिति बहुसंमतपाठः।

नैकप्रत्यनीकत्वादिति न्यायसूचीनिबन्धस्तात्पर्यटीका च पठत इति तारानाथ तर्कतीर्थष्टिप्पणयति ।

४।१।७। निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्य इत्यत्र न्यायतत्त्वालोके विश्नाथवृत्तौ न्यायरहस्ये गौतमीयसूत्रप्रकाशे न्यायतत्त्वपरीक्षायाञ्च प्राप्तस्तर्हीति निमित्तपदात्प्रागेव सूत्रे संयुक्तं विद्यते । तारानाथतर्कतीर्थस्तु न्यायदर्शने टिप्पणयति ज पुस्तके प्राप्तस्तर्हीति सूत्रेऽन्तर्भावित इति ।

विश्वनाथोऽत्र स्वकीयवृत्तौ टिप्पणयति प्राप्तस्तर्हीत्यंशस्तु न सूत्रम्, किन्तु भाष्यकृतः पूरणमित्यपि वदन्ति । तावतैवात्र स्वकीयमस्वारस्यं व्यज्यते । म० म० डा० गङ्गानाथझा, म० म० फणिभूषणतर्कवागीशचरणस्तु न तत्पदं सूत्रत्वेन मन्वाते । भाष्य-वार्त्तिकादौ न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च तथैव पाठात् प्राप्तस्तर्हीत्यंशस्य भाष्यवाक्यावधारणाच्च । रामभद्रभट्टाचार्यस्तु किमप्यधिकं भणति सूत्रे मोहपदं निवेश्य । तथा चैतन्मते—प्राप्तस्तर्हि निमित्तनैमिस्तिकभावान्मोहार्थान्तरभावो दोषेभ्य इति ।

४।१।१८। क्रमनिर्देशादप्रतिषेधः न्यायरहस्यकृदत्र कथयति 'अपरे तु व्यूहान्त-राद् द्रव्यनिष्पत्तिरिति चरमं सूत्रमिच्छन्ति इति । तस्माज् ज्ञायते केचन व्याख्यातारः अदः वाक्यं सूत्रतया परिगृह्णन्ति । वस्तुतस्तु भाष्यवाक्यमिदम् । अमुं विषयमधिकृत्य वृत्त्यन्तरेषु काचिदपि वार्ता नावलोक्यते । व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्पत्तिर्नाभावादिति भाष्यवाक्यस्यांशस्तद्वाक्यम् ।

४।१।३६। तल्लक्षणव्यवस्थानादेवाप्रतिषेधः । अत्रादौ तत्पदं वृत्तिकारदृष्ट्या सूत्रांशः । भाष्यवार्त्तिकतात्पर्यादौ न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च तत्पदं सूत्रादौ नावलोक्यते ।

४।१।४५। न सद्यः कालान्तरोपभोग्यत्वात् अस्य सूत्रत्वे विवादः । तर्कवागीश-चरणोऽत्र टिप्पणयति—यद्यपि वृत्तिकृद्भिरेतद्वाक्यं सूत्रत्वेन परिगृहीतम् । वार्त्तिक-तात्पर्यपरिशुद्धयोः सूत्रत्वमस्य समर्थितम् तथापि न्यायसूचीनिबन्धे तात्पर्यटीकायां च सूत्रत्वेन नाङ्गीकृतमिति भाष्यवाक्यतयात्र तस्य परिग्रहः । भाष्यं यद्यपि पूर्वसूत्रोक्तं संशयं निरस्यतीदमिति सूत्रत्व एवैतस्य स्वारस्यं ध्वनयति । म० म० गङ्गानाथ झा महाभागस्य न्यायसूचीनिबन्धे सूत्रमिदं समुपलभ्यत इत्याश्चर्यम् । न्यायवार्त्तिके नास्य सूत्रत्वेन परिग्रहः । रामभद्रः, विश्वनाथः, न्यायतत्त्वालोककारः, गौतमीयसूत्रप्रकाशश्च सूत्रमदः स्वीकुर्वन्ति, न्यायसूत्रोद्धारे सूत्रत्वेनास्ति परिग्रहोऽस्य । तारानाथतर्कतीर्थोऽत्र

टिप्पणयति—'बहुषु पुस्तकेषु वृत्तौ तात्पर्यपरिशुद्धौ च सूत्रत्वेन परिगृहीतमपीदं न्यायसूचीनिबन्धे न गृहीतमिति भाष्येऽन्तर्भावितमिति । वार्तिके सूत्ररूपेण मुद्रितमपीदं वाक्यं भाष्यरूपेणात्र मुद्राप्यत इति' ।

झा महाभागस्तु सूत्रत्वेन सूत्रमिदं मुद्राप्य खद्योते स्वकीये टिप्पणयति —······ सिद्धान्तेनोपक्रमते न सद्य इति सूत्रम् । यद्यप्येतत् सूत्रं न्यासूचीनिबन्धे नोपलभ्यते तात्पर्य टीकाकृता चेदं भाष्यत्वेनैव परिगृहीतं तथापि नानाप्राचीनसूत्रपुस्तकानामनुरोधात्सूत्रमेवेदमिति निर्धारितम् । वार्तिकस्वरसोऽप्येवमेवेति ।

४।१।४६। कालान्तरेणानिष्पत्तिर्हेतुविनाशात् । अत्र न्यायरहस्यकृत् परिवर्तयति किञ्चित् पाठमन्येषां नास्ति विसम्वादः । तदीयपाठस्तु — न कालान्तरे निष्पत्तिर्हेतु विनाशादिति ।

४।१।४९। उत्पादव्ययदर्शनात् सूत्रमिदं न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च यथापाठमुपलभ्यते । किन्तु वृत्तिकर्तारोऽत्र सूत्रारम्भे किमपि संयोज्य सूत्रमेवं पठन्ति— 'प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात्' । अत्र विश्वनाथः, रामभद्रः, द्वितीयवाचस्पतिमिश्रः, केशवमिश्रश्च मतैक्यं भजन्ते । अत्र तर्कवागीशचरणः कथयति —भाष्यकृद् यद्यपि प्रागुत्पत्तेरित्यादि अद्धान्तं वाक्यं महर्षिगौतमस्य सिद्धान्तं प्रकाशयति पश्चादवतारयति चास्य सिद्धान्तस्य साधकतया सूत्रमुत्पादव्ययदर्शनादिति तथापि तात्पर्यपरिशुद्धावुदयचार्यस्य कथनेन वृत्तिकृतां च मतेन सूत्रस्यैव प्रथमोंऽशस्तद्वाक्यम् न तु भाष्यवाक्यमिति । किन्तु स्वकीयं स्वारस्यं विवादपदस्य भाष्यवाक्यतायामेव प्रकाशयति । वार्तिकं चेह प्रमाणतयायं समुल्लिखति । डा० गङ्गानाथझा महाशयो न किमपि ब्रवीति । मन्ये अयमपि तर्कवागीशचरणस्यैव विद्यतेऽनुगामी । तारानाथतर्कतीर्थस्तु तर्कवागीशचरणमत्रानुगच्छति किन्तु टिप्पणयत्यन्यत्—'प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात्' इत्येकमेव सूत्रमिति केचिदिति कखवार्त्तिक पुस्तक सम्पादक' इति ।

४।१।५१। आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः । अत्र विश्वनाथः, रामभद्रश्च वृक्षफलोत्पत्तिवदित्यस्य स्थाने वृक्षफलवदिति पठतः । यद्यपि तर्कवागीशचरणोऽत्र रामभद्रसंमतं पाठं हृदयेन समर्थयति तथापि स्वकीयं पाठं वार्त्तिकतात्पर्य टीकान्यायसूचीनिबन्धादिपाठानुरोधेन तथा निर्धारयति । न्यायतत्त्वालोकः, केशवमिश्रश्च रामभद्रानुमतं पाठं नाङ्गीकुरुतः ।

४।१।५६। न सुखस्याप्यन्तरालनिष्पत्तेरिति बहुसम्मतपाठः, केवलं रामभद्रः °··· प्यन्तरालसिद्धेरिति पठति ।

४।२।६। अत्र सूत्रे तर्हिपदमधिकं वार्त्तिके पठितम् । तदनुसरणं न्यायसूत्रोद्धारे न्यायरहस्ये विश्वनाथवृत्तौ च विद्यते । नान्ये न्यायतत्त्वालोककृद् गौतमीयसूत्रप्रकाश-कारादयश्चेह तर्हिपदमङ्गीकुर्वन्ति । न्यायसूचीनिबन्धेऽप्यत्र तर्हिपदं नास्ति । अत्र म० म० फणिभूषणतर्कवागीशचरण डा० गङ्गानाथझामहाभागौ च नाङ्गीकुरुतस्तर्हि पदम् ।

अनन्तरं न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च दृश्यते सूत्रद्वयम्—कृत्स्नैकदेश-वृत्तित्वादवयवानामवयव्यभावः तेषु चावृत्तेरवयव्यभावः इति । म० म० फणिभूषण तर्कवागीशचरणः म० म० गङ्गानाथझामहाभागश्च परिगृहीतवन्तौ सूत्रे एते । किन्तु नैतयोरुल्लेखो व्याख्या वा विश्वनाथवृत्तौ न्यायतत्त्वालोके गौतमीयसूत्रप्रकाशे न्याय-रहस्ये चेति तैर्वृत्तिकृद्भिरेते सूत्रे न स्वीकृते इति वक्तुं शक्यम् ।

तर्कवागीशचरणोऽत्र टिप्पणयति—वृत्तिकारास्तु विवदमानयोः सूत्रयोर्भाष्य-वाक्यत्वमभ्युपगच्छन्ति । अनेकेषां मते एते सूत्रे एवेति कथयन्ति च । सप्तमसूत्रावतरणि-कायां भाष्यकारस्तद् विभजते इति वाक्यं प्रयुङ्क्तेऽथ च भाष्यारम्भेऽष्टमसूत्रतः अवयव्यभाव इति पदमनुवर्त्य व्याख्याति । तस्मात् भाष्यदृष्टया एते सूत्रे एव न तु भाष्यवाक्ये इति निश्चयं वक्तुं शक्यम् । म० म० गङ्गानाथझामहोदयस्तु मौनमत्र भजते । तस्य समक्षं मन्ये समस्यैवेयं नासीदिति । सूत्रे तु स्वीकृते तेन ।

४।२।१०। अवयवान्तरभावेऽपीत्येवात्र पाठः साधीयानिति तर्कवागीशचरणः । न्यायवार्त्तिके न्यायसूचीनिबन्धे अवयवान्तराभावेऽपीति पाठोऽवलोक्यते । सूत्रार्थपर्या-लोचनया भाष्यकारस्य व्याख्यया च तत्रास्वारस्यं प्रतीयते । वृत्तिकृत्सु न्यायरहस्यकृद् रामभद्रः वार्त्तिकपाठमनुगच्छत्यत्र । द्वितीयवाचस्पतिमिश्रः, केशवमिश्रतर्काचार्यः, गङ्गानाथझामहाशयश्च भाष्यमिहानुसरन्ति ।

४।२।१९। अत्रारम्भे शब्दसंयोगविभवाच्चेति बहुसम्मतपाठः । न्यायसूचीनिबन्ध-न्यायसूत्रोद्धारयोर्वृत्तिकाराणाञ्चात्र स्वारस्यं सन्दृश्यते । वार्त्तिकं तु सर्वसंयोगशब्द विभवाच्चेति पठति । तर्कवागीशचरणः गङ्गानाथझामहाशयश्च प्रथमस्य पाठस्य समर्थकौ किन्तु पाठान्तरेऽप्यर्थं सङ्गमयतः ।

इहान्ते न्यायतत्त्वालोक एव केवलं सर्वगतमिति बहुसम्मतपाठं विहाय सर्वगतत्वमिति पठति ।

४।२।२०। अव्यूहाविष्टम्भेति सर्वत्र पाठः । केवलं न्यायरहस्ये अव्यूहनाविष्टम्भेति पठितम् । नात्र तत्कारणं निर्दिष्टम्, नान्यत्र सङ्केतोऽप्यस्यावलोक्यते ।

४।२।२२। नावान्ते चकारं पठति रामभद्रः । न वा तदर्थं किमपि टिप्पणयति । अन्यत्र तु प्रायः सर्वत्रैव चकारपाठस्य समादरः ।

४।२।३२। स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमान इति सूत्रस्य स्वरूपं भाष्यकारादीनां वृत्तिकृतां चानुमतम् । किन्तु रामभद्रोऽत्र न्यायरहस्ये सूत्रान्ते पूर्वोपलब्ध विषय इति पठत्यधिकम् । कारणं न तत्र निर्दिशति ।

नार्थविशेषप्राबल्यात्, क्षुदादिभिः प्रवर्तनाच्चेति ४।२।३७-३८। सर्वत्र सूत्र-द्वयतयाभ्युपगतमिहैक सूत्रतया परिगृहीतं न्यायतत्त्वालोककृतेति विशेषमिह पश्यामः ।

४।२।४१। पूर्वकृतफलानुबन्धात् तदुत्पत्तिरिति सूत्रं न व्याख्यातं न वा तदनुकूलप्रतिकूले स्वीकृत्यस्वीकृती वाधिकृत्य किमपि भणितं न्यायतत्त्वालोककृता ।

४।२।४२। अरण्यगुहापुलिनादिष्विति सूत्रं वार्त्तिके तात्पर्यटीकायां च न व्याख्यातं न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च सूत्रत्वेन परिगृहीतमिदं सूत्रम् । कचन वृत्तिकृतोऽस्य सूत्रत्वे सन्देहं कुर्वन्ति । तत्त्वालोकस्तु सूत्रमिदं स्वीकरोति ।

४।२।४५। तं शिष्यगुरुसब्रह्मचारीति सूत्रे विशिष्टपदं पठितं किन्तु न्याय-तत्त्वालोके, गौतमीयसूत्रप्रकाशे, न्यायरहस्ये च तत्स्थाने शिष्टपदं प्रयुक्तम् ।

किञ्चात्र न्यायरहस्येऽभिहितं यत् तमिति पदमिह केचन नेच्छन्तीति । स्वयमयन्तु तमिति पदमभ्युपगच्छति ।

ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्ममिति ५।१।३१ सूत्रं सर्वत्र भाष्य-वार्त्तिकादिषु वृत्तिषु च स्वीकृतं न्यायतत्त्वालोके नोपलभ्यते । नात्र तद् व्याख्यातं न वास्यात्रोल्लेखः, न चास्य निराकृतिरेवेति सुधीभिश्चिन्त्यम् । पञ्चमाध्याये विसंवादो-ऽन्यत्र सूत्रमधिकृत्य न दृष्ट इति शम् ।

••

## परिशिष्टम् (२)

# ग्रन्थकृत्कृतलक्षणानां वर्णानुक्रमणी

अज्ञानम्—

१. परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञाताभिधानम् । पृ० ४८५,

२. सम्यग्वाद्यनुवादानन्तरं बोधानाविष्करणम् । ४८६,

अतिप्रसङ्गः—

धर्मसंशयाद्धर्मिसंशयः । ११२,

अतिशयः—

संस्कारः, औपनायनादिः । ३४६,

अतीतत्वम्—

वर्तमानध्वंसप्रतियोगित्वम् । २०४,

अत्यन्ताभावः—

अनादिनिधनः संसर्गाभावः । ५३,

अत्यन्ताभावत्वम्—

अनादिनिधनसंसर्गाभावत्वम् । ५५, २५५,

अधिकम्—

१. अपरकृतार्थाभिधानम् । ४८२,

२. हेतूदाहरणावधिको यत्र । ४८२,

अधिकरणसिद्धान्तः—

उद्देश्यबुद्धिकारणज्ञानाविषयोद्देश्यबुद्धिविषयाभ्युपगमः । ११७,

अधिकारः—

तज्जन्यफलाश्रयत्वयोग्यतारूपम् । ७,

अन्योन्याश्रयः—

स्वापेक्षापेक्षितत्वनिबन्धनः स्वस्यानिष्टप्रसङ्गः । १३८,

अन्वयदृष्टान्तत्वम्—

साध्यसाधनाभिमतव्याप्तिधीकारणैतदुभयसामानाधिकरण्यावच्छेदकधर्मवत्त्वम् ११४,

अन्वयव्यतिरेकी [हेतुः]—

१. पञ्चरूपसंपन्नलिङ्गवचनम् । १२३,

२. पक्षव्यापकं सपक्षसद् विपक्षासदेकरूपम् । ७७,

अन्वयोदाहरणम्—

साधनप्रयुक्तसाध्यधर्मवान् । १२६,

अन्वयोदाहरणत्वम्—

साधनत्वाभिमतवन्निष्ठनियतसाध्यत्वाभिमतसम्बन्धबोधकन्यायावयवत्वम् १३०,

२. साधनप्रयुक्तसाध्यवद्दृष्टान्तवचनत्वम् । १२६,

३. साधनप्रयुक्तसाध्यवद्दृष्टान्तवचनत्वम् । १२६,

अन्विताभिधानम्—

इतरान्वितस्वार्थशक्तत्वेन ज्ञातं पदं स्वार्थान्वयास्वभावकम् । २१०,

अपकर्षः—

विद्यमानधर्मापचयः । ४४१,

अपकर्षसमा—

किञ्चिद्धर्मव्यावृत्त्या हेतुसाध्ययोरन्यतराभावप्रसञ्जनम् । ४४१,

अपरा मुक्तिः—

निरावरणस्याव्यावृत्तसुखदशा स्थितिः । पृ० १६,

अपवर्गः—

१. मिथ्याधीध्वंसः । ८८,

२. स्वभोगध्वंसावच्छिन्नः यथोक्तदुःखध्वंसः । १०६,

३. निरुपप्लवा चित्सन्ततिरित्यन्ये । १०६,

४. बुद्धिद्वारा तृष्णाविच्छेदादिक्रमः । ४०३,

अरूपधातुः—

फलैकरूपः आनन्दरूपः । (बौद्धमतम्) ६६,

अर्थः—

पृथिवीमात्रवृत्तिवृत्तिगुणत्वावान्तरजातिमत्त्वम् । ६५,

अर्थत्वम्—

अनागतगोचरीभूतहेतुप्रत्यासत्त्यजन्यजन्यसाक्षात्कारविषयत्वम् । ६६

अर्थवादः—

विधायकशब्दशून्यवाक्यम् । २३८,

अर्थान्तरम्—

कथाङ्गसमयविषयसंबन्धानुपदर्शकं वचनम् । ४७८,

अर्थापत्तिसमा—

१. प्रतिपक्षस्य प्रतिपिपादयिषितविरोधिनः सिद्धेः प्रत्यवस्थानम् । ४५४,

२. उक्तस्यानुक्ताक्षेपकत्वनियम इत्यभिमानेन दोषाभिधानम् । ४५४,

अवमानः—

अपकारिण्यकिञ्चित्करस्य धिगहमित्यात्मनि द्वेषः । ३६३,

अवयवः—

विशिष्टैकार्थप्रतिपादनपरं वाक्यम् । ११८,

अवयवत्वम्—

अनुमितिकारणचरमलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यत्वम् । ११८,

अवर्ण्यसमा—

सिद्धसाध्यकवृत्तितामात्रेण गमकत्वं हेतोरित्यभिमानेन पक्षेऽप्यसन्दिग्धसाध्यतापादनम् । ४४२,

अविज्ञातार्थम्—

१. त्रिरभिहितमपि वादिना, परिषदा प्रतिवादिना चाविज्ञातार्थम् । ४७६,

२. अवहिताविकलपरिषत्प्रतिवादिबोधानुगुणार्थोपस्थित्यजनकवाचकपदप्रयोगः । ४७६,

अविद्या—

१. मिथ्याज्ञानम् । २०४,

२. अनुपलब्धिः । ४१३,

उद्देश्यम्—

व्यवच्छेदकधर्मत्वेनानुमानतयाश्रयोपस्थापकलक्षणत्वाविषयकलक्षणाभिधानानुकूल जिज्ञासाजनकपदार्थाभिधानम् । ४२,

उद्देश्यत्वम्—

लक्षणत्वादिविषयकलक्षणजिज्ञासाजनकप्रतिपाद्यधर्म्युक्तिः । २०,

उत्पत्तिः—

आद्यक्षणसम्बन्धः । ५३,

उत्सर्गः—

बाधकैकापोद्यो नियमः । १३८,

उपचारच्छलम्—

भक्त्याप्रयुक्तस्य पदस्यार्थान्तरे तात्पर्यसञ्चाराद्दूषणाभिधानम् । १५८,

उपनयः—

व्याप्यसाध्याभावव्यापकाभावान्यतरपक्षधर्मताबोधको न्यायावयवः । १३२,

उपपत्तिसमा—

१. उभयस्य पक्षप्रतिपक्षबोधकस्य कारणोपपत्तेः कारणसद्भावात् प्रत्यवस्थानम् । ४५६,

२. परपक्षे साधनसाधारणधर्मबलेन स्वपक्षसाधनोपपादनाद् दोषाभिधानम् । ४५६,

३. यत्र परपक्षसाधनसाधारण्येन सत्त्वादिना स्वपक्षस्यापि साधनं साधयति । ४५६,

उपमानम्—

१. सामीप्यज्ञानम् । सामीप्यं संज्ञासंज्ञिसम्बन्धः । ४७१,

२. उपमाकरणम् । ४७,

३. संज्ञासंज्ञिसम्बन्धज्ञानफलकम् । २०६,

४. नियतधर्मसामानाधिकरण्येन शब्दप्रवृत्तिनिमित्तधीकरणम् । ८०,

उपमानत्वम्—

उपमितिकरणत्वम् । ८४,

उपमानफलम्—

१ संज्ञासंज्ञिपरिच्छेदः । ८२,

